# नैषधचरितम्।



## दशमः सर्गः।

रथैरथायुः कुलजाः कुमाराः शस्त्रेषु शास्त्रेषु च दृष्टपाराः।
स्वयंवरं शम्बरवैरिकायव्यूहश्रियः श्रीजितयक्षराजाः॥ १॥
नाभूदभूमिः स्मरसायकानां नासीदगन्ता कुलजः कुमारः।
नास्थादपन्था धरणेः कणोऽपि व्रजेषु राज्ञां युगपद् व्रजत्सु॥२॥

---

अथ स्वयंवरवृत्तान्तं वर्णयति रथैरित्यादि। अथ नल-प्रयाणानन्तरं कुलजाः कुमाराः शस्त्रेषु शस्त्रविद्यासु शास्त्रेषु त्रय्यादिषु च दृष्टं पारं यैस्ते दृष्टपाराः पारदृश्वानः शम्बर-वैरिणः कामस्य कायव्यूहस्य शरीरसंस्थानस्य श्रीरिव श्रीः शोभा येषां ते कन्दर्पकल्पा इत्यर्थः। श्रिया सम्पदा जितो यक्षराजः कुबेरो यैस्ते कुमाराः राजकुमाराः कन्या वरयते रूप-मित्याद्युक्तसमग्रगुणसम्पन्नाः इत्यर्थः। रथैः साधनैः स्वयं व्रीयते-ऽस्मिन्निति स्वयंवरस्तं स्वयंवरभुवं तदा आयुः आयाताः आङ् पूर्वात्यातेर्लङि लङः शाकटायनस्यैवेति वैकल्पिको झेर्जुसा-देशः। अस्मिन् सर्गे उपेन्द्रवज्रेन्द्रवज्रातदुपजातयश्च वृत्तानि॥१॥

नेति। कुलजः कोऽपीति शेषः स्मरसायकानामभूमिर-विषयो नाभूत् तथा अगन्ता स्वयंवराप्रयाता च नाभूत्। किञ्च राज्ञां व्रजेषु युगपद् व्रजत्सु सत्सु धरणेः कणोऽपि भूले-शोऽप्यपन्था अपथं विपथी विभाषेति विकल्पात् समासान्ता-भावः। नास्थात् न स्थितः गतिस्थेत्यादिना सिचो लुक्। अत्र

योग्यैर्व्रजद्भिर्नृपजां वरीतुं वीरैरनर्हैः प्रसभेन हर्त्तुम्।
द्रष्टुं परैस्ताननुरोद्धुमन्यैः स्वमात्रशेषाः ककुभो बभूवुः ॥३॥
लोकैरशेषैरवनिश्रियं तामुद्दिश्य दिश्यैर्विहिते प्रयाणे।
स्ववर्त्तितत्तज्जनयन्त्रणार्त्तिविश्रान्तिमापुः ककुभां विभागाः ॥४॥
तलं यथेयुर्न तिला विकीर्णाः सैन्यैस्तथा राजपथा बभूवुः।
भैमीं स लब्धामिव तत्र मेने यः प्राप भूभृद् भवितुं पुरस्तात् ॥५॥

---

राज्ञां कार्त्स्न्येन स्मरेषुविषयत्वगन्तृत्वाभ्यां भूमेः पथित्वेन चासम्बन्धे सम्बन्धोक्तेरतिशयोक्तिभेदः ॥ २ ॥

योग्यैरिति। योग्यैः रूपयौवनादिना सम्बन्धार्हैः नृपजां भैमीं वरीतुं वृतो वेति दीर्घः। अनर्हैः किन्तु वीरैः प्रसभेन बलेन हर्तुं परैः कैश्चिन्निःस्पृहैः केवलं द्रष्टुमेव अन्यस्तु तान् राजन्यादीननुरोद्धुमुपासितुं व्रजद्भिः करणैस्तद्राजन्यैरित्यर्थः ककुभो दिशः स्वमात्रशेषाः स्वरूपमात्रावशिष्टाः बभूवुः। अत्रापि ककुभां स्वमात्रशेषत्वासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिभेदः अनुरोद्धुमित्यत्र उपरोद्धुमिति च पाठः ॥ ३ ॥

लोकैरिति। अवनिश्रियं भूलोकलक्ष्मीं तां भैमीमुद्दिश्याभिसन्धाय दिश्यैर्दिक्षु भवैः दिगादिभ्यो यत्। अशेषैर्लोकैर्जनैः प्रयाणे विहिते सति ककुभां विभागाः प्रदेशाः स्ववर्त्तिनां स्वनिष्ठानां तेषां तेषां जनानां यन्त्रणया सम्बन्धेन आर्त्तेः पीडायाः विश्रान्तिं विरतिमापुः, भाररहित्यात् सुखावस्थानं चक्रुरित्यर्थः। तद्वदलक्ष्यतेत्युत्प्रेक्षा गम्या ॥ ४ ॥

तलमिति। यथा विकीर्णा उपरि क्षिप्तास्तिलास्तलं भूतलं नेयुः नाप्नुयुः सैन्यैः सैनिकैः, सेनायां समवेता ये सेन्यास्ते सैनिकाश्च ते इत्यमरः। सेनायां वेति ण्यप्रत्ययः। राजपथा राजमार्गास्तथा तिलमात्रावकाशरहिता बभूवुः, तादृक्सम्ब-

नृपः पुरःस्थैः प्रतिरुद्धवर्त्मा पश्चात्तनैः कश्चन नुद्यमानः ।
यन्त्रस्थसिद्धार्थपदाभिषेकं लब्ध्वाप्यसिद्धार्थममन्यत स्वम् ॥६॥
राज्ञां पथि स्त्यानतयाऽनुपूर्वीविलङ्घनाशक्तिविलम्बभाजाम् ।
आह्वानसंज्ञानमिवाग्रकम्पैर्दधुर्विदर्भेन्द्रपुरीपताकाः ॥७॥
प्राग्भूय कर्कोटक आचकर्ष सकम्बलं नागबलं यदुच्चैः ।

---

न्धासम्बन्धेऽपि सम्बन्धस्योक्तेरतिशयोक्तिभेदः। किन्तु तत्र समये यो भूभृद्राजा पुरस्तादङ्कवितुं प्राप प्राप्तः स राजा भैमीं लब्धामिव मेने पूर्वागतस्येयं स्वमित्यभि मानादहंपूर्विकया सर्वे समाजग्मुरित्यर्थः ॥ ५ ॥

नृप इति। पुरःस्थैर्जनैः प्रतिरुद्धवर्त्मा निरुद्धमार्गः पश्चात्तनैः पश्चाद्भवैः पृष्ठत आगतैरित्यर्थः, सायं चिरमित्यादिना ट्युप्रत्ययस्तुडागमश्च। नुद्यमानः प्रेर्य्यमाणः कश्चन नृपः यन्त्रस्थस्य तैलाकर्षणयन्त्रलग्नस्य सिद्धार्थस्य सर्षपस्य पदे स्थाने अभिषेकं लब्ध्वापि सर्षपत्वं प्राप्यापीत्यर्थः स्वमात्मानमसिद्धार्थमसर्षपममन्यतेति विरोधः। अपिशब्दो विरोधद्योतनार्थः। असिद्धार्थं सिद्धिरहितममन्यतेत्यविरोधाद्विरोधाभासोऽलङ्कारः। अत्र संमर्दे यन्त्रस्थसर्षपवद्विशीर्णस्य मे कुतोऽर्थसिद्धिरित्यमन्यतेत्यर्थः ॥ ६ ॥

राज्ञामिति। विदर्भेन्द्रपुरी कुण्डिनपुरं तस्यां पताकाः अग्रकम्पैः स्वाग्रचलनैः पथि मार्गे स्त्यानतया संहततया सैन्यसङ्कीर्णतयेत्यर्थः संयोगादेकाचो धातोर्यण्वत इति स्त्यायतेर्निष्ठानत्वम्। आनुपूर्वीविलङ्घनाशक्त्या अक्रमचंक्रमणाशक्त्या विलम्बभाजां राज्ञाम् आह्वानसंज्ञानम् आकारणचेष्टां दधुरिवेत्युत्प्रेक्षा ॥ ७ ॥

प्रागिति। भुवस्तले भूपृष्ठे कुण्डिनगामिनां श्वितादिषु

भुवस्तले कुण्डिनगामिराज्ञां तद्वासुकेश्चाश्वतरोऽन्वगच्छत् ॥८॥
आगच्छदुर्वीन्द्रचमूसमुत्थैर्भूरेणुभिः पाण्डुरिता मुखश्रीः।
विस्पष्टमाचष्ट दिशां जनेषु रूपं पतित्वागदयानुरूपम् ॥९॥

---

गमिगामिनामुपसङ्ख्यानाद् द्वितीयासमासः। राज्ञां सम्बन्धि सकम्बलं सप्रावारमुच्चैर्महद् यन्नागबलं गजबलं कर्म कर्क इति भेदः अटतीत्यटकः शीघ्रं गन्ता बहुलमन्यत्रापीत्यौणादिकः क्वन्प्रत्ययः। कर्कः श्वेताश्वः पृष्ठश्वीरिसितः कर्क इत्यमरः। जातावेकवचनम्। प्राग्भूय प्रागग्रसरो भूत्वा, प्रागिति च्व्यन्तस्य गतित्वाद्गतिसमासे क्त्वो ल्यप्। आचकर्ष आकृष्टवान्। अश्व-पूर्वं गजा गच्छन्तीति प्रसिद्धं तन्नागबलमश्वतरो गर्दभादश्वा-यामुत्पन्नो वेसराख्यो वाहनविशेषः वत्सोक्षाश्वर्षभेभ्यश्च तनुत्व इति तरप्प्रत्ययः तस्य पित्वमन्यपित्वकतेति काशिका। सोऽन्वगच्छत्। अत्रापि जातावेकवचनम्। अग्रतोऽश्वास्ततो गजास्ततोऽश्वतरा जग्मुरित्यर्थः। अन्यत्र भुवस्तले रसातले वासुकेर्वासुकिमहानागस्य सम्बन्धि कुण्डिनगामिनः सकम्बलं कम्बलाख्यनागेन्द्रसहितं, कम्बलो नागराजः स्यात् सान्द्रप्रावा-रयोरपीत्युभयत्रापि विश्वः। यदुच्चैर्नागबलमहिसैन्यं, अहा-वाहि गजे ना इत्युभयत्रापि वैजयन्ती। कर्कोटकनामना-गविशेषः प्राग्भूयाचकर्ष तं नागबलमश्वतरो नाम नागवि-शेषोऽन्वगच्छत्, अश्वतरो वेसरे च नागराजान्तरेऽपि चेत्युभ-यत्रापि विश्वः। कम्बलकर्कोटकाश्वतरादियुक्तो वासुकिश्च सबल आगत इत्यर्थः। अत्रोभयोः कपिनागबलयोः प्रकृतत्वात् केवलप्रकृतश्लेषः ॥ ८ ॥

आगच्छदिति। आगच्छतामुर्वीन्द्राणां राज्ञां चमूसमुत्थै-र्भूरेणुभिः पाण्डुरिता धूसरीकृता दिशां मुखश्रीः पतित्याग-

आखण्डलो दण्डधरः कृशानुः पाशीति नाथैः ककुभां चतुर्भिः ।
भैम्येव बद्धा स्वगुणेन कृष्टैर्ययेे तदुद्वाहरसाव शेषैः ॥१०॥
मन्त्रैः पुरं भीमपुरोहितस्य तद्बद्धरक्षं विशति क्व रक्षः ? ।
तत्रोद्यमं दिक्पतिराततान यातुं ततो जातु न यातुधानः ॥११॥
कर्त्तुं शशाङ्काभिमुखं न भैम्या मृगं दृगम्भोरुहनिर्जितं यत् ।
तस्या विवाहाय ययौ विदर्भान् तद्वाहनस्तेन न गन्धवाहः ॥१२॥

---

दशानुरूपं भर्तृप्रवासावस्थोचितरूपं प्रोषिते मलिना कृशे-त्युक्ताकारं जनेषु विषये विस्पष्टम् आचष्ट जनेभ्यः प्रकटीचका-रेत्यर्थः । अत्रान्यधर्मस्यान्यत्र सम्भवाद्दिशां प्रोषितभर्तृकारूप-मिति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धाख्यो निदर्शनाभेदः । हरिद्वधूनामिति देशान्तरपारे रूपकं व्यक्तम् ॥ ९ ॥

अथेन्द्रादिलोकपालवृत्तान्तमाह आखण्डल इति । आख-ण्डलः इन्द्रः दण्डधरो यमः कृशानुः अग्निः पाशी वरुण इति प्रसिद्धैः चतुर्भिः ककुभां नाथैः भैम्याः स्वगुणेन स्वसौन्दर्यगुणे-नैव गुणरज्ज्वेति श्लिष्टरूपकं, बद्धाकृष्टैरिवेत्युत्प्रेक्षा, तदुद्वाह-रसाद्भैमीपरिणयरागादेव ययेे कुण्डिनं प्रति यातं, यातेर्भावे लिट् । शेषैरवशिष्टैः नैर्ऋतादिभिः षड्भिर्न ययेे ॥१०॥

अथ षड्भिर्नैर्ऋताद्यनागमने कारणमाह मन्त्रैरित्यादि । भीमस्य भीमभूपतेः पुरोहितस्य मन्त्रैरक्षोभयनाशकमन्त्रैर्बद्ध-रक्षं कृतरक्षं तत् पुरं कुण्डिनपुरं रक्षो राक्षसः क्व कुतः विशति ? न क्वापीत्यर्थः । ततो रक्षोबन्धाद्धेतोः यातुधानो दिक्पतिर्नैर्ऋतः जातु कदापि तत्र पुरे यातुं गन्तुमुद्यमं न आततान न चकार ॥११॥

कर्तुमिति । गन्धवाहो वायुः भैम्याः दृगम्भोरुहाभ्यां नयनारविन्दाभ्यां निर्जितं मृगं स्ववाहनमृगमभिमुखीकर्तुं न

नलभ्रमेणापि भजेत भैमी कदाचिदस्मानिति शेषिताशा।
अभूम्महेन्द्रादिचतुष्टयी सा चतुर्नली काचिदलीकरूपा ॥१८॥
प्रयस्यतां तद्भवितुं सुराणां दृष्टेन पृष्टेन परस्परेण।
तदद्वैतसिद्धिर्न वतानुमेने स्वाभाविकात् कृत्रिममन्यदेव ॥१९॥

---

गत्यां मुखेन्दौ च वितत्य विषादात् मन्दगतयो विवर्णमुखाश्च भूत्वेत्यर्थः एतेन सानुभावो विषाद उक्तः, राजसमाजमीयुः किल ॥ १७ ॥

अथोपायान्तरवैफल्यादिन्द्रादयः तां वञ्चयित्वा गृहीतुं प्रवृत्ता इत्याह नलेति। अथ राजसभाप्राप्त्यनन्तरं सा महेन्द्रादीनां चतुष्टयी भैमी कदाचित् कस्याञ्चिद्वेलायां नल इति भ्रमेण भ्रान्त्यापि अस्मान् भजेत वृणीत इत्येव शेषिताशा एतावन्मात्रावशेषितमनोरथा सती उपायान्तरापगमादिति भावः। अलीकरूपा काल्पनिकस्वरूपा अत एव काचिदनिर्वाच्या चतुर्नली नलचतुष्टयी अभूत् चत्वारोऽपि नलरूपं दधुरित्यर्थः। तद्धितार्थेत्यादिना समाहारद्विगावकारान्तोत्तरपदत्वात् स्त्रियां द्विगोरिति ङीप् ॥ १८ ॥

प्रयस्यतामिति। असः स भवितुं तद्भवितुं नलीभवितुं, तच्छब्दादभूततद्भावे च्विः। प्रयस्यतां प्रयतमानानां, यस्यतेः दैवादिकाल्लटः शत्रादेशः। सुराणां सम्बन्धिनि द्वयोर्भावो द्विता द्वितैव द्वैतं, प्रज्ञादित्वात् स्वार्थे प्रत्ययः। तस्य नलस्य द्वैतं तत्सिद्धिर्द्वितीयनलत्वसिद्धिः। तदत्यन्तसारूप्यसिद्धिरिति यावत् सा दृष्टेन पृष्टेन सा नलवदवस्थित इति पुनः पुनः स्पृष्टेन परस्परेण नानुमेने अतिप्रयासेनापि नलतुलां नारोहदेवेत्यर्थः। वतेति खेदे। तथाहि, स्वाभाविकात् स्वभावसिद्धाद्रूपात् क्रियया निर्वृत्तं कृत्रिमं कृतकं रूपं, ड्वितस्त्रिमक् नित्य-

पूर्णेन्दुमास्यं विदधुः पुनस्ते पुनर्मुखीचक्रुरनिद्रमब्जम् ।
स्ववक्त्रमादर्शतलेऽथ दृष्टं दृष्टं बभञ्जुर्न तथातिमञ्जु ॥२०॥
तेषां तथा लब्धुमनीश्वराणां श्रियं निजास्येन नलाननस्य ।
नालं तरीतुं पुनरुक्तिदोषं वह्निर्मुखानामनलाननत्वम् ॥२१॥

---

मिति विक्रमः । अन्यद्विलक्षणमेव हीनमेवेत्यर्थः । सामान्येन विशेष समर्थनरूपोऽर्थान्तरन्यासः ॥ १९ ॥

पूर्णेन्दुमिति । ते देवाः पुनः पूर्णेन्दुं पूर्णचन्द्रमेवास्यं विदधुः आस्ये चक्रुः तथा पुनरनिद्रं विकचमब्जं पद्मं मुखीचक्रुः, नलमुखसाम्यलाभाय पुनश्चन्द्रेण पद्मेन च मुखानि निर्ममुरित्यर्थः । अथानन्तरं स्ववक्त्रमादर्शतले दर्पणान्तर्दर्शन्दर्शं दृष्ट्वा दृष्ट्वा पुनः पुनर्दृष्ट्वेत्यर्थः । आभीक्ष्ण्ये णमुल् द्विर्वचनं च । तथा नलमुखवदतिमञ्जु अतिसुन्दरं नेति बभञ्जुः भग्नं चक्रुः निनिन्दुरित्यर्थः । अत्र पूर्णत्वादिकारणसामान्येऽपि विवक्षितकार्य्यानुत्पत्तिकथनाद्विशेषोक्तिरलङ्कारः । तत्सामग्र्यामनुत्पत्तिर्विशेषोक्तिर्निगद्यत इति लक्षणात् ॥२०॥

तेषामिति । तथा तेन प्रकारेण निजास्येन प्रयोज्येन नलाननस्य श्रियं लब्धुं लम्भयितुमिति णिजर्थो ग्राह्यः । यद्वा निजास्येन साधनेन तां श्रियं लब्धुं प्राप्तुमनीश्वराणां वह्निर्मुखानामग्निवक्त्राणां, अग्निमुखा वै देवा इति श्रुतेः । वह्निर्मुखाः क्रतुभुजो वह्निः शुष्मा कृष्णवर्त्मेति चामरः । तेषामिन्द्रादीनां सम्बन्धि नलस्याननमिव आननं येषां ते नलानना इत्युपमानपूर्वपदो बहुव्रीहिः । ते न भवन्तीत्यनलाननत्वमेवात्रशिष्टं पुनरुक्तिदोषं तरीतुं नालं न समर्थं न तु नलाननत्वसम्भावनापीत्यर्थः । द्वयोरप्यनलाननत्वयोर्भेदेऽपि श्लिष्टकपदोपादानमहिम्ना कत्वाभिमानात्पौनरुक्त्यव्यपदेशः । अत्र नला-

प्रियावियोगक्लथितात् किमैलाचन्द्राद् गृहीतैर्ग्रहपीड़िताच्च।
ध्यातान्भवेन स्मरतोऽपि सारैः स्वङ्कल्पयन्तिस्म नलानुकल्पम्॥२२॥
नलस्य पश्यत्वियदन्तरं तैर्भैमीति भूपान् विधिराह्वताऽस्यै।
स्पर्धां दिगीशानपि कारयित्वा तस्यैव तेभ्यः प्रथिमानमाख्यत्॥२३॥

---

ननश्रीलिप्सूनां तेषां न केवलं तदभावः प्रत्युत दुस्तरतरपुनरुक्तिदोषरूपानर्थोत्पत्तिश्चेति द्वितीया विषमप्रभेदः, यत्रानर्थस्य वा भवेदिति लक्षणात्॥ २१ ॥

प्रियेति। ते देवाः प्रियावियोगेन उर्वशीविरहाग्निना क्लथितात् दग्धात् ऐलादिलात्मजात् पुरूरवसः कर्पूरादेरिवेति भावः। तथा ग्रहपीड़िताद् राहुनिष्पीड़िताच्चन्द्राच्च यन्त्रनिष्पीड़िताच्तिलसर्षपादेरिवेति भावः। भवेन हरेण ध्यातात् मुखमारुतसन्धुचिताग्निदग्धात् स्मरतोऽपि कामाच्च खदिरकाष्ठादेरिति भावः। गृहीतैरुपात्तैः सारैः साधनैः स्वमात्मानं नलस्यानुकल्पं कल्पयन्ति स्म किमित्युत्प्रेक्षा, अन्यथा तदनुकल्पतापि कुत इति भावः। मुख्यः स्यात् प्रथमः कल्पोऽनुकल्पस्तु ततोऽधम इत्यमरः॥ २२ ॥

नलस्येति। विधिर्ब्रह्मा नलस्य तैर्भूपैः इयत् सर्वान्तरं तारतम्यम् इयं भैमी पश्यत्विति हेतोः एतान् भूपानाह्वत आहूतवान्, ह्वयतेर्लुङि तङ्, झलादङ्गादिति तकारलोपः। किञ्च दिगीशानपि स्पर्धाङ्कारयित्वा दिगीशैरपि नलेन सह मत्सरङ्कारयित्वेत्यर्थः। हृक्रोरन्यतरस्यामिति विकल्पादणिकर्तुः कर्मत्वम्। तस्य नलस्यैव तेभ्य इन्द्रादिभ्योऽपि, पञ्चमीविभक्ते इति पञ्चमी। प्रथिमानमाधिक्यमस्यै भैम्यै आख्यदाख्यातवान्, ख्यातेर्लुङि अस्यतिवक्तिख्यातिभ्यो ङिति च्लेरङादेशः। त्रैलोक्यातिशायि लावण्यमस्येति भैमीं प्रत्यायि-

सभा नलश्रीयमकैर्यमाद्यैर्नलं विनाभूतदिव्यरत्नैः ।
भामाङ्गणप्राघुणिके चतुर्भिर्देवद्रुमैर्द्यौरिव पारिजाते ॥२४॥
तत्रागमद्वासुकिरीशभूषाभस्मोपलेपस्फुटगौरदेहः ।
फणीन्द्रवृन्दप्रणिगद्यमानः प्रसीदजीवाद्यनुजीविवादः ॥२५॥
द्वीपान्तरेभ्यः पुटभेदनं तत् क्षणादवापे सुरभूमिपालैः ।
तत्कालमालम्बि न केन यूना स्मरेषुपक्षानिलतूललीला ॥२६॥

---

तुमिव ब्रह्मा स्वयंवरव्याजेन त्रिलोकीमेकत्राचकर्षेत्युत्प्रेक्षा॥२३॥

सभेति । सभा सा राजसभा नलश्रियो यमकैः पुनरुक्ताकारैस्तद्रूपधारिभिरित्यर्थः । धृतानि दिव्यानि रत्नानि यैस्तैः रत्नाभरणभूतैरित्यर्थः । यमाद्यैर्नलं विना तदा नलस्यागमनात्तैर्विनाभूतैरित्यर्थः । अत एव चतुर्भिर्यमाद्यैर्देवैः पारिजाते पारिजाताख्ये देवद्रुमे भामायाः सत्यभामायाः अङ्गणस्य चत्वरस्य प्राघुणिके अतिथौ सति तया उपहृते सतीत्यर्थः । आदेशिकः प्राघुणिक आगन्तुरतिथिः स्मृत इति हलायुधः । धृतरत्नैश्चतुर्भिर्देवद्रुमैर्मन्दारादिभिः,पञ्चैते देवतरवो मन्दारः पारिजातकः । सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनमित्यमरः । द्यौः स्वर्ग एवाभूत् अभादित्यर्थः ॥ २४ ॥

तत्रेति । ईशभूषा ईश्वराभरणभूतः अतएव भस्मनः उपलेपेन उपलेपेन तदङ्गरागभस्मसङ्क्रमणेन स्फुटगौरदेहः शुभ्राङ्गः वासुकिः फणीन्द्रवृन्दैः सर्पराजगणैः प्रणिगद्यमानो व्याक्रियमाणः, नेर्गदनदेत्यादिना णत्वम् । प्रसीदजीवशब्दावादिर्यस्य सोऽनुजीविवादः सेवकजनकोलाहलः यस्य स । आदिशब्दाज्जयादिशब्दसङ्ग्रहः । तत्र स्वयंवरे वासुकिः आगमत् आगतः ॥ २५ ॥

द्वीपान्तरेभ्य इति । तत् पुटभेदनं कुण्डिनपुरं द्वीपान्त-

रम्येषु हर्म्येषु निवेशनेन सपर्य्यया कुण्डिननाकनाथः।
प्रियोक्तिदानादरनम्रताद्यैरुपाचरच्चारु स राजचक्रम् ॥२७॥
चतुःसमुद्रीपरिखे नृपाणामन्तःपुरे वासितकीर्त्तिदारे।
औदार्य्यदाक्षिण्यदयादमानां चतुष्टयी रक्षणसौविदल्ला ॥२८॥

---

रेभ्यः, अपादाने पञ्चमी। सुराश्च भूमिपालाश्च तैः क्षणादवापे अवाप्तम्। तथाहि, तस्मिन् काले तत्कालम्, अत्यन्तसंयोगे द्वितीया। केन यूना स्मरेषूणां पश्चानिलेन तूलस्य कार्पासादेर्लीला नालम्भि नालाभि चिण्वक्कर्मणोरिति लभेः कर्मणि लुङ् विभाषाचिण्णमुलोरित्युपसृष्टाद्वैभाषिकोनुमागमः। अत्राखिलयूनां कामुकत्वेन कुण्डिनप्राप्तिसमर्थनात् कारणेन विना कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः, स च तूलेति निदर्शनासङ्कीर्णः ॥ २६ ॥

रम्येष्विति। सः कुण्डिननाकनाथः कुण्डिनेन्द्रो भीमः राजचक्रं राजमण्डलं रम्येषु हर्म्येषु निवेशनेन सपर्य्यया अर्घ्यपाद्यादिपूजया तथा प्रियोक्तिः प्रियवचनं दानं गन्धमाल्यताम्बूलादिसमर्पणं आदरो बहुकरणं नम्रता विनयाचरणमेवमाद्यैरुपचारैः आद्यशब्दाद्भोजनादिसंविधानसंविग्रहः। चारु सम्यगुपाचरत् उपचरितवान् ॥ २७ ॥

युक्तं चैतदित्याह चतुरिति। चतुःसमुद्रीव परिखा वलयं यस्य तस्मिन् वासिताः स्थापिताः कीर्त्तय एव दाराः कलत्राणि यस्मिन् नृपाणां राज्ञामन्तःपुरे भूवलयरूपे इति शेषः। औदार्य्यं त्यागः दाक्षिण्यं परचित्तानुवर्त्तनं दया कृपा दमः इन्द्रिययमनं तेषां चतुष्टयी एव रक्षणे रक्षणार्थं सौविदल्ला कञ्चुकिनी, सौविदल्लाः कञ्चुकिन इत्यमरः। औदार्य्यादिगुणविहीनस्य कुतः कीर्त्तिरिति भावः। स्वकीर्त्तिरक्षणार्थं

अभ्यागतैः कुण्डिनवासवस्य परोक्षवृत्तेष्वपि तेषु तेषु ।
जिज्ञासितस्वेप्सितलाभलिङ्गं स्वल्पोऽपि नावापि नृपैर्विशेषः॥२९॥
अङ्के विदर्भेन्द्रपुरस्य शङ्के न सम्ममौ नैष तथा समाजः ।
यथा पयोराशिरगस्त्यहस्ते यथा जगद्वा जठरे मुरारेः ॥३०॥
पुरे पथिद्वारगृहाणि तत्र चित्रीकृतान्युत्सववाञ्छयैव ।
नभोऽपि किर्मीरमकारि तेषां महीभुजामाभरणप्रभाभिः ॥३१॥

---

तेन राज्ञा भीमेन ते राजानः सत्कृता इति भावः । रूपकालङ्कारः ॥ २८ ॥

अभ्यागतैरिति । अभ्यागतैर्नृपैः कुण्डिनवासवस्य कुण्डिनेन्द्रस्य भीमस्य सम्बन्धिषु परोक्षवृत्तेषु गूढनिष्पन्नेषु अपि तेषु तेषु उपचारेषु जिज्ञासितस्य ज्ञातुमिष्टस्य प्रयत्नान्वेषणीयस्य इत्यर्थः । सनन्तात् कर्मणि क्तः । स्वेप्सितलाभस्य भैमीलाभस्य लिङ्गं गमकभूतः स्वल्पोऽपि विशेषो नावापि न लब्धः सर्वत्र समं व्यक्तश्चोपचरणाद् गूढोपचारविशेषेणापि दुरूहस्तदभिप्राय इत्यर्थः । भीमेन सर्वेषां राज्ञां तुल्य एव समादरः कृत इति भावः ॥ २९ ॥

अङ्क इति । सर्वेषां राज्ञां कुण्डिननगरे समावेशो जात इत्याह । विदर्भेन्द्रपुरस्य कुण्डिनपुरस्याङ्के अभ्यन्तरे एष समाजो राजसङ्घोऽगस्त्यहस्ते पयोराशिः समुद्रः यथा, मुरारेः नारायणस्य जठरे उदरे जगद्वा यथा, तथा न सम्ममौ न सम्मानितः इति न, किन्तु सम्ममावित्यर्थः । शङ्के इत्युत्प्रेक्षायां मुनिहस्तहरिकुक्ष्यौपम्येन अल्पेऽपि पुरे समाजस्य महतः सम्मानोत्प्रेक्षणादुपमोत्प्रेक्षयोः सङ्करः, तेनाधाराधेययोरानुमान्यलक्षणाधिकालङ्कारस्तत्र महत्त्वमत्यद्भुतं वस्तु च व्यज्यते ॥ ३० ॥

पुर इति । तत्र पुरे उत्सववाञ्छया पन्थानो द्वाराणि

विलासवैदग्ध्यविभूषणश्रीस्तेषां तथाभूत् परिचारकेऽपि।
अज्ञासिषुः स्त्रीशिशुबालिशास्तं यथागतं नायकमेव कश्चित्॥३२
अस्वेदगात्राश्चलचामरौघैरमीलनेत्राः प्रतिवस्तुचित्रैः।
अम्लानमाला विपुलातपत्रैर्देवा नृदेवाश्च भिदां न भेजुः॥३३॥

---

गृहाणि च तान्येव चित्रीकृतानि तेषामभ्यागतानां महीभुजा-माभरणप्रभाभिः नभः अपि किर्मीरं चित्रमकारि, अपिशब्दात् पथिद्वारगृहाणि च किर्मीरितानीत्यर्थः। चित्रकिर्मीरक-ल्माष शबलैताश्च कर्बुरे इत्यमरः। अत्र समृद्धिमद्वस्तुवर्णनादु-दात्तालङ्कारः॥ ३१ ॥

विलासेति। तेषां राज्ञां परिचारके कर्मकरेऽपि विला-सानां शृङ्गारचेष्टानां वैदग्ध्यस्य चातुर्य्यस्य विभूषणानां च श्रीः सम्पत्तिः तथा अभूत् यथा स्त्रियः शिशवो बालिशाः अज्ञाश्च, शिशावज्ञे च बालिश इत्यमरः। तं परिचारकमागतं कञ्चिन्ना-यकं राजानमेव अज्ञासिषुः अमंसत विवेकिनस्तु तत्त्वत एव जानन्तीति भावः। राजभृत्याश्च राजकल्पा इति राज्ञामैश्वर्य्यो-क्तेरतिशयोक्तिः॥ ३२ ॥

अथ श्लोकद्वयेन राज्ञां देवानाञ्च भेदो दुर्लक्ष्य इत्याह अस्वे-देत्यादि। चलचामराणाम् ओघैः अस्वेदानि गात्राणि येषां ते तथोक्ताः, वस्तुनि वस्तुनि प्रतिवस्तु, वीप्सायामव्ययीभावः। चित्रैरद्भुतैः, विस्मयोद्भुतमाश्चर्य्यं चित्रमित्यमरः। मीला मीलका गुरोश्च हल इति स्त्रियामप्रत्यये टाप्। तत् गृहीतानि अनिमिषाणि, यद्वा न मीलन्तीत्यमीलानि, पचाद्यच्। तानि नेत्राणि येषां ते तथोक्ताः अनिमिषदृष्टय इत्यर्थः। तथा विपु-लैः आतपत्रैर्निमित्तैः अम्लानमाला देवाः इन्द्रादयः नृदेवाः रा-जानश्च भिदां भेदं, षिद्भिदादिभ्योऽङ्। न भेजुः, देवपक्षे सर्व्वत्र

अन्योन्यभाषानवबोधभीतेः संस्कृत्रिमाभिर्व्यवहारवत्सु ।
दिग्भ्यः समेतेषु नरेषु वाग्भिः सौवर्गवर्गो न नरैरचिह्नि ॥३४॥
ते तत्र भैम्याश्चरितानि चित्रे चित्राणि पौरैः पुरि लेखितानि ।
निरीक्ष्य निन्युर्दिवसं निशाश्च तत्स्वप्नसम्भोगकलाविलासैः ॥३५॥
सा विभ्रमं स्वप्नगतापि तस्यां निशि स्वलाभस्य ददे यदेभ्यः ।
तदर्थिनां भूमिभुजां वदान्या सती सती पूरयति स्म कामम् ॥३६

---

हेतौ तृतीया, राजपक्षे उपलक्षणे तृतीया। तेषां स्वेदाद्यभावस्य स्वाभाविकत्वात् अत्र स्वेदगात्रादिपदार्थानां विशेषणगत्या देवभेदाभावहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ३३ ॥

अन्योन्येति। दिग्भ्यः समेतेषु समागतेषु नरेषु मनुष्येषु अन्योन्यासां भाषाणाम् अनवबोधेन निमित्तेन भीतेः सङ्कोचात् संस्कारेण निर्वृत्ताः संस्कृत्रिमा ड्वितस्त्रिमक् नित्यम्। ताभिर्वाग्भिर्व्यवहारोऽभिवादनव्यापारः तद्वत्सु देवभाषयैव भाषमाणेष्वित्यर्थः। सौवर्गवर्गो देवसमूहो नरैः कुण्डिनवासिभिर्नाचिह्नि देवत्वेनाज्ञायि, चिह्नशब्दात्तत्करोतीति ण्यन्ताल्लुङि ण्याविष्टवद्भावे विन्मतोर्लुङि मतुपो लुक्। भेदे अभेदलक्षणातिशयोक्तिः ॥ ३४ ॥

त इति। ते सर्वे नृपास्तत्र तस्यां पुरि कुण्डिने पौरैः चित्रे आलेख्ये लेखितानि चित्राणि आश्चर्याणि, आलेख्याश्चर्ययोश्चित्रमित्यमरः। भैम्याश्चरितानि निरीक्ष्य दिवसं निन्युः। तस्याः सम्बन्धिभिः स्वप्ने याः सम्भोगकलाः सुरतचेष्टास्ता एव विलासाः विनोदास्तैर्निशाश्च निन्युः। एतेन जागरावस्थोक्ता ॥ ३५ ॥

सेति। सा भैमी तस्यां निशि स्वयंवरात् पूर्वरात्रौ स्वप्न-

वैदर्भदूतानुनयोपहूतैः शृङ्गारभङ्गीष्वनुभाववद्भिः।
स्वयंवरस्थानजनाश्रयस्ते दिने परत्रालमकारि वीरैः ॥३७॥
भूषाभिरुच्चै रपि संस्कृते यं वीक्ष्याकृत प्राकृतबुद्धिमेव।
प्रसूनबाणे विबुधाधिनाथस्तेनाथ साशोभि सभा नलेन ॥३८॥

---

गतापि अपि सम्भावनायां जागरेऽथ सम्भावितत्वादिति भावः। एभ्यो राजभ्यः स्वलाभस्य स्वप्राप्तेर्विभ्रमं भ्रान्तिमलीकसङ्गतिमित्यर्थः ददे ददानीति यत्तत्तस्मादलीकदानाद्धेतोर्वदान्या दात्री सती भवन्ती स्वप्राप्तिदानाद्वदान्या प्राप्तेति मिथ्यात्वात् पतिव्रता च सतीत्यर्थः अर्थिनां भूमिभुजां कामं मनोरथान् पूरयन्ति स्म एवं स्वकामुकानेकलोकोत्तरयुवसमुदायेऽपि सा नलैकजीवितैव सती स्थितेत्यर्थः ॥ ३६ ॥

वैदर्भेति। परत्र दिने परेऽह्नि वैदर्भस्य भीमनृपतेर्दूतैरनुनयेन प्रार्थनेन उपहूतैः शृङ्गारभङ्गीषु रतिभावविजृम्भणेषु येऽनुभावाः कटाक्षविक्षेपादयः तद्वद्भिः, शृङ्गारभङ्गीषु अनुभाववद्भिरिति पाठे शृङ्गारचेष्टाः प्रकाशयद्भिरित्यर्थः। तैर्दिगन्तागतैर्वीरैः स्वयंवरस्थानभूतो जनाश्रयो मण्डपः, मण्डपोऽस्त्री जनाश्रय इत्यमरः। अलमकारि अलङ्कृतं स्वयंवरस्थानं प्राप्तमित्यर्थः ॥ ३७ ॥

भूषेति। सुराधीशः इन्द्रो यं नलं वीक्ष्य भूषाभिर्भूषणैरुच्चैरतिशयेन संस्कृतेऽलङ्कृतेऽपि प्रसूनबाणे मन्मथे प्राकृतबुद्धिं पृथग्जनबुद्धिमेव, प्राकृतस्तु पृथग्जन इत्यमरः। अकृत कृतवान् न तु सुन्दरबुद्धिमित्यर्थः। कृञः कर्त्तरि लुङि तङ् ह्रस्वादङ्गादिति सकारलोपः। अथ राजागमनानन्तरं तेन नलेन सा सभा अशोभि। शोभां गमिता अलङ्कृतेत्यर्थः, शोभयतेः कर्मणि लुङ् ॥ ३८ ॥

धृताङ्गरागे कलितद्युशोभां तस्मिन् सभां चुम्बति राजचन्द्रे।
गता वताक्ष्णोर्विषयं विलङ्घ्य क्व चत्रनचत्रकुलस्य लक्ष्मीः ॥३९॥
प्रागदृष्टयः क्षोणिभुजाममुष्मिन्नाश्चर्य्यपर्य्युत्सुकिता निपेतुः।
अनन्तरं दन्तुरितभ्रुवान्तु नितान्तमीर्ष्याकलुषा दृगंशाः ॥४०॥
सुधांशुरेष प्रथमो भुवीति स्मरो द्वितीयः किमसाविती मम्।
दस्रस्तृतीयोऽयमिति चितीशाः स्तुतिच्छलान्मत्सरिणो निनिन्दुः
॥ ४१ ॥

---

धृतेति। धृतोऽङ्गरागोऽनुलेपनमेवाङ्गरागो विम्बरक्तता येन तस्मिन् प्रकृते राजचन्द्रे नले कलितद्युशोभां प्रामाकाश-लक्ष्मीं चुम्बति सति चत्राणि चत्रिया एव नचत्राणि तत् कुलस्य लक्ष्मीरक्ष्णोर्विषयं विलङ्घ्य दृष्टिपथमतीत्य गता वर्त-त्याश्चर्यं नचत्रकुलमिव नलोदये सर्वं चत्रकुलं निष्प्रभं जात-मित्यर्थः। द्युशोभेत्यत्र शोभेव शोभेति सादृश्याचेपात् निदर्शना तया सहाङ्गाङ्गिभावेन रूपकस्य सङ्करः ॥ ३९ ॥

प्रागिति। प्राक् पूर्वममुष्मिन्नले क्षोणीभुजां राज्ञां दृष्टयः पूर्णदृष्टयः आश्चर्य्येण विस्मयपारवश्येन पर्य्युत्सुकिताः उत्क-ण्ठिताः सत्यो निपेतुः, अनन्तरं तु दन्तुरितभ्रुवां द्वेषाद्विषमि-तभ्रुवां दृगन्ताः कोणदृष्टयः ते च ते नितान्तमीर्ष्यया कलुषाः सन्तो निपेतुः। अत्रौत्सुक्येर्ष्याप्रयुक्तानां पूर्णापूर्णदृष्टीनां द्वयोर्नां क्रमेणैकस्मिन्नले निपतनोक्तेर्द्वितीयः पर्य्यायभेदः। एकमने-कस्मिन् अनेकमेकस्मिन् वा क्रमेण पर्य्याय इति सूत्रणात्त-थौत्सुक्येर्ष्यालचणविस्मयद्वेषसञ्चारिभावनिबन्धनाद्भावालङ्कारः प्रियोऽपरपर्य्याय इति द्वयोः संसृष्टिः ॥ ४० ॥

सुधांशुरिति। मत्सरिणः परशुभद्वेषिण क्षितीशाः भुवीति सर्वशेषः भुवि भूतले एषः प्रथमः सुधांशुः मुख्यचन्द्रः किमि-

आद्यं विधोर्जन्म स एष भूमौ द्वैतं युवासौ रतिवल्लभस्य।
नासत्ययोर्मूर्त्तिरियं तृतीया इति स्तुतस्तैः किल मत्सरैः सः॥४२॥
इहेदृशाः सन्ति कतीति दुष्टैर्दृष्टान्तितालीकनलावली तैः।
आत्मापकर्षे किल मत्सराणां द्विषः परस्पर्द्धनया समाधिः॥४३॥

---

त्यसौ द्वितीयः स्मरः किमित्ययं तृतीयो दस्रः आश्विनेय इति च, दस्रयोर्द्वित्वेऽप्येकत्वविवक्षया एकवचनं, द्वेरकत्वेऽपि द्वित्वविवक्षायां द्वौ चन्द्रावविरुद्धम्। पुष्पवद्दारादिशब्दवन्नियतवचनत्वाभावादितीमं नलं स्तुतिच्छलान्निनिन्दुः असमानसमीकरणेन स्तुतिर्लोकोत्तरस्य निन्दैवेति भावः। चन्द्रत्वाद्युत्प्रेक्षात्रयस्य संसृष्टिः॥ ४१॥

आद्यमिति। स एष नलो भूमौ भूतले विधोरिन्दोराद्यं जन्म प्रथमावतार इत्यर्थः, युवासौ रतिवल्लभस्य कामस्य द्वैतं द्वित्वं द्वितीयकाम इत्यर्थः, नासत्ययोरश्विनोस्तृतीया मूर्त्तिरित्यर्थः, स नलो मत्सरैर्मत्सरवद्भिः, मत्सरोऽन्यशुभद्वेषस्तद्वत्कृपणयोरपीत्यमरः। अर्श आदिभ्योऽजिति मत्वर्थीयोऽकारः। कैश्चित् स्तुतः किल? स्तुतः खलु? पूर्वश्लोकेन पुनरुक्तमपि कविना लिखितत्वात् स्थितं पूर्ववत्॥ ४२॥

इहेति। दुष्टैः खलैस्तैर्नृपैः इह सभायामीदृशाः कति कियन्तोऽपि सन्तीति इतर इत्यर्थः इतिनैवोक्तार्थत्वादप्रयोगः। अलीकनलावली इन्द्रवरुणयमानलपङ्क्तिः दृष्टान्तिता दृष्टान्तीकृता निदर्श्य साधारण्यापादनाद्दूषयन्नित्यर्थः। तथाहि, मत्सराणां मत्सरिणाम् आत्मनोऽपकर्षे दैन्ये सति द्विषः प्रतिपक्षस्य परेण पुरुषान्तरेण स्पर्धनया सङ्घर्षणया कोट्यन्तरसाधारण्यापादनेनेत्यर्थः। स्वार्थे ण्यन्ताद् युच्। समाधिः किल? आत्मापकर्षपरिहारः खल्वित्यर्थः, एतादृशाः कति न सन्तीति समानको-

गुणेन केनापि जनेऽनवद्ये दोषान्तरोक्तिः खलु तत्खलत्वम् ।
रूपेण तत्संसदद्दूषितस्य सुरैर्नरत्वं यदद्दूषि तस्य ॥४४॥
नलानसत्यानवदत्स सत्यः कृतोपवेशान् सविधे सुरेशान् ।
नोभाग्निनाभ्यु किमु दर्पकश्च भवन्ति नासत्ययुजो भवन्तः ! ॥४५

---

व्यन्तरोद्घाटनेन दूषयित्वा तुष्यन्तीत्यर्थः । अर्थान्तरन्यासः ॥४३॥

गुणेनेति । केनापि गुणेन अनवद्ये अगर्ह्ये सर्वगुणसम्पन्ने इत्यर्थः, अवद्यपण्येत्यादिना निपातनात्साधुः । जने दोषान्तरोक्तिर्यस्य चित्तनिष्ठानवद्यधर्मस्य दोषत्वेनोद्घाटनमित्यर्थः, तदेव तत्खलत्वं तस्य वक्तुर्दुष्टत्वं खलु ? कुतः यद् यस्माद्रूपेण सौन्दर्य्येण तस्यां संसदि तया संसदा वा अदूषितस्य प्रत्युत स्तुतस्यैवेति भावः । तस्य नलस्य सम्बन्धि नरत्वं मनुष्यत्वं सुरैरिन्द्रादिभिः अदूषि दोषत्वेनोद्घाटितमतोऽन्यद्वक्तुमशक्तमित्यर्थः, दूषयतेः कर्मणि लुङ् । सामान्योक्तस्य खलत्वस्य नरत्वदूषणेन समर्थनाद्विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥४४॥

नलानिति । सत्यः स नलो यथार्थनलः असत्यान् नलान् अलीकभूतान् सविधे समीपे कृतोपवेशान् उपविष्टान् सुरेन्द्रादीन् अवदत्, किमिति हे धन्याः भवन्तः ! असत्यौ सत्यरहितौ न भवत इति नासत्यावश्विनौ दस्राविति निपातनान्नञो नलोपाभावः । ताभ्यां युज्येते इति तद्युजौ तद्युक्तौ, सत्सूद्विषेत्यादिना क्विप् । उभाविलायामिलादेव्यां भवति इति इलाभूरैलः पुरूरवाः, क्विप् । दर्पकः कामश्च न भवन्ति किमिति प्रश्नः । शेषे प्रथम इति प्रथमपुरुषः । चत्वारो यूयमश्विनौ पुरूरवाः कामश्च न भवतः किम् इत्यपृच्छदित्यर्थः, तेषु निजरूपादन्येषामिव स्वस्यापि विस्मयावेशाच्च इत्यमद्राक्षीदिति भावः ॥ ४५ ॥

वैदर्भदूतानुनयोपहूतैः शृङ्गारभङ्गीष्वनुभाववद्भिः ।
स्वयंवरस्थानजनाश्रयस्ते दिने परत्रालमकारि वीरैः ॥३७॥
भूषाभिरुच्चैरपि संस्कृते यं वीक्ष्याकृत प्राकृतबुद्धिमेव ।
प्रसूनबाणे विबुधाधिनाथस्तेनाथ साशोभि सभा नलेन ॥३८॥

---

गतापि अपि सम्भावनायां जागरेऽथ सम्भावितत्वादिति भावः । एभ्यो राजभ्यः स्वलाभस्य स्वप्राप्तेर्विभ्रमं भ्रान्तिमलीकसङ्गति-मित्यर्थः ददे ददानीति यत्तत्तस्मादलीकदानाद्धेतोर्वदान्या दात्री सती भवन्ती स्वप्राप्तिदानाद्दान्या प्राप्तेति मिथ्यात्वात् पतिव्रता च सतीत्यर्थः अर्थिनां भूमिभुजां कामं मनोरथान् पूरयन्ति स्म एवं स्वकामुकानेकलोकोत्तरयुवसमुदायेऽपि सा नलैकजीवितैव सती स्थितेत्यर्थः ॥ ३६ ॥

वैदर्भेति । परत्र दिने परेऽहनि वैदर्भस्य भीमनृपतेर्दूतैरनुनयेन प्रार्थनेन उपहूतैः शृङ्गारभङ्गीषु रतिभावविजृम्भणेषु येऽनुभावाः कटाक्षविक्षेपादयः तद्वद्भिः, शृङ्गारभङ्गीषु अनुभाववद्भिरिति पाठे शृङ्गारचेष्टाः प्रकाशयद्भिरित्यर्थः । तैर्दिगन्तागतैर्वीरैः स्वयंवरस्थानभूतो जनाश्रयो मण्डपः, मण्डपोऽस्त्री जनाश्रय इत्यमरः । अलमकारि अलङ्कृतं स्वयंवरस्थानं प्राप्तमित्यर्थः ॥ ३७ ॥

भूषेति । सुराधीशः इन्द्रो यं नलं वीक्ष्य भूषाभिर्भूषणैरुच्चैरतिशयेन संस्कृतेऽलङ्कृतेऽपि प्रसूनबाणे मन्मथे प्राकृतबुद्धिं पृथग्जनबुद्धिमेव, प्राकृतस्तु पृथग्जन इत्यमरः । अकृत कृतवान् न तु सुन्दरबुद्धिमित्यर्थः । कृञः कर्त्तरि लुङि तङ् ह्रस्वादङ्गादिति सकारलोपः । अथ राजागमनानन्तरं तेन नलेन सा सभा अशोभि । शोभां गमिता अलङ्कृतेत्यर्थः, शोभयतेः कर्मणि लुङ् ॥ ३८ ॥

धृताङ्गरागे कलितद्युशोभां तस्मिन् सभां चुम्बति राजचन्द्रे।
गता वताक्ष्णोर्विषयं विलङ्घ्य क्व चत्रनचत्रकुलस्य लक्ष्मी: ॥३८॥
प्राग्दृष्टय: क्षौणिभुजाममुष्मिन्नाश्चर्य्यपर्य्युत्सुकिता निपेतु:।
अनन्तरं दन्तुरितभ्रु वान्तु नितान्तमीर्ष्याकलुषा दृगंशा: ॥४०॥
सुधांशुरेष प्रथमो भुवीति स्मरो द्वितीय: किमसाविनीमम्।
दस्रस्तृतीयोऽयमिति क्षितीशा: स्तुतिच्छलान्मत्सरिणो निनिन्दु:
॥ ४१ ॥

---

धृतेति। धृतोऽङ्गरागोऽनुलेपनमेवाङ्गरागो विम्बरक्तता येन तस्मिन् प्रकृते राजचन्द्रे नले कलितद्युशोभां प्रासाकाश-लक्ष्मीं चुम्बति सति चत्राणि चत्रिया एव नचत्राणि तत् कुलस्य लक्ष्मीरक्ष्णोर्विषयं विलङ्घ्य दृष्टिपथमतीत्य गता वते-त्याश्चर्यं नचत्रकुलमिव नलोदये सर्वं चत्रकुलं निष्प्रभं जात-मित्यर्थ:। द्युशोभेत्यत्र शोभेव शोभेति सादृश्याक्षेपात् निदर्शना तया सहाङ्गाङ्गिभावेन रूपकस्य सङ्कर: ॥ ३८ ॥

प्रागिति। प्राक् पूर्वममुष्मिन्नले क्षौणीभुजां राज्ञां दृष्टय: पूर्णदृष्टय: आश्चर्य्येण विस्मयपारवश्येन पर्य्युत्सुकिता: उत्क-ण्ठिता: सत्यो निपेतु:, अनन्तरं तु दन्तुरितभ्रु वां द्वेषाद्विषमि-तभ्रु वां दृगन्ता: कोणदृष्टय: ते च ते नितान्तमीर्ष्यया कलुषा: सन्तो निपेतु:। अत्रौत्सुक्येर्ष्याप्रयुक्तानां पूर्णापूर्णदृष्टीनां द्वयोनां क्रमेणैकस्मिन्नले निपतनोक्तेर्द्वितीय: पर्य्यायभेद:। एकमने-कस्मिन् अनेकमेकस्मिन् वा क्रमेण पर्य्याय इति सूत्रणात्त-थौत्सुक्येर्ष्यालचणविस्मयद्वेषसञ्चारिभावनिबन्धनाद्भावालङ्कार: प्रियोऽपरपर्य्याय इति द्वयो: संसृष्टि: ॥ ४० ॥

सुधांशुरिति। मत्सरिण: परशुभद्वेषिण: क्षितीशा: भुवीति सर्वशेष: भुवि भूतले एष: प्रथम: सुधांशु: मुख्यचन्द्र: किमि-

आद्यं विधोर्जन्म स एष भूमौ द्वैतं युवासौ रतिवल्लभस्य।
नासत्ययोर्मूर्त्तिरियं तृतीया इति स्तुतस्तैः किल मत्सरैः सः॥४२
इहेदृशाः सन्ति कतीति दुष्टैर्दृष्टान्तितालोकनलावली तैः।
आत्मापकर्षे किल मत्सराणां द्विषः परस्पर्द्धनया समाधिः॥४३॥

---

त्यसौ द्वितीयः स्मरः किमित्ययं तृतीयो दस्रः आश्विनेय इति च, दस्रयोर्द्वित्वेऽप्येकत्वविवक्षया एकवचनं, इन्द्रकत्वेऽपि द्वित्वविवक्षायां द्वौ चन्द्रावविरुद्धम्। पुष्यवद्दारादिशब्दवन्नियतवचनत्वाभावादितीमं नलं स्तुतिच्छलान्निनिन्दुः असमानसमीकरणेन स्तुतिर्लोकोत्तरस्य निन्दैवेति भावः। चन्द्रत्वाद्युत्प्रेक्षात्रयस्य संसृष्टिः॥ ४१॥

आद्यमिति। स एष नलो भूमौ भूतले विधोरिन्दोराद्यं जन्म प्रथमावतार इत्यर्थः, युवासौ रतिवल्लभस्य कामस्य द्वैतं द्वित्वं द्वितीयकाम इत्यर्थः, नासत्ययोरश्विनोस्तृतीया मूर्त्तिरित्यर्थः, स नलो मत्सरैर्मत्सरवद्भिः, मत्सरोऽन्यशुभद्वेषस्तद्वत् कृपणयोरपीत्यमरः। अर्श आदिभ्योऽडिति मत्वर्थीयोऽकारः। कैश्चित् स्तुतः किल? स्तुतः खलु? पूर्वश्लोकेन पुनरुक्तमपि कविना लिखितत्वात् स्थितं पूर्ववत्॥ ४२॥

इहेति। दुष्टैः खलैस्तैर्नृपैः इह सभायामीदृशाः कति कियन्तोऽपि सन्तीति इतर इत्यर्थः:इतिनैवोक्तार्थत्वादप्रयोगः। अलोकनलावली इन्द्रवरुणयमानलपङ्क्तिः दृष्टान्तिता दृष्टान्तीकृता निदर्श्य साधारण्यापादनाद्दूषयन्नित्यर्थः तथाहि, मत्सराणां मत्सरिणाम् आत्मनोऽपकर्षे दैन्ये सति द्विषः प्रतिपक्षस्य परेण पुरुषान्तरेण स्पर्धनया सङ्घर्षणया कोट्यन्तरसाधारण्यापादनेनेत्यर्थः। स्वार्थे ण्यन्ताद् युच्। समाधिः किल? आत्मापकर्षपरिहारः खल्वित्यर्थः, एतादृशाः कति न सन्तीति समानको-

गुणेन केनापि जनेऽनवद्ये दोषान्तरोक्तिः खलु तत्खलत्वम् ।
रूपेण तत्संसदवूषितस्य सुरैर्नरत्वं यददूषि तस्य ॥४४॥
नलाननसत्यानवदत्स सत्यः कृतोपवेशान् सविधे सुरेशान् ।
नोभाविलाभूः किमु दर्पकश्च भवन्ति नासत्ययुजो भवन्तः ! ॥४५॥

---

न्यन्तरोद्घाटनेन दूषयित्वा तुष्यन्तीत्यर्थः । अर्थान्तरन्यासः ॥४३॥

गुणेनेति । केनापि गुणेन अनवद्ये अगर्ह्ये सर्वगुणसम्पन्ने इत्यर्थः, अवद्यपण्येत्यादिना निपातनात्साधुः । जने दोषान्तरोक्तिर्यस्य चित्तनिष्ठानवद्यधर्मस्य दोषत्वेनोद्घाटनमित्यर्थः, तदेव तत्खलत्वं तस्य वस्तुदुष्टत्वं खलु ? कुतः यद् यस्माद्रूपेण सौन्दर्य्येण तस्यां संसदि तया संसदा वा अदूषितस्य प्रत्युत स्तुतस्यैवेति भावः । तस्य नलस्य सम्बन्धि नरत्वं मनुष्यत्वं सुरैरिन्द्रादिभिः अदूषि दोषत्वेनोद्घाटितमतोऽन्यद्वक्तुमशक्तमित्यर्थः, दूषयतेः कर्मणि लुङ् । सामान्योक्तस्य खलत्वस्य नरत्वदूषणेन समर्थनाद्विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥४४॥

नलानिति । सत्यः स नलो यथार्थनलः असत्यान् नलान् अलीकभूतान् सविधे समीपे कृतोपवेशान् उपविष्टान् सुरेन्द्रादीन् अवदत्, किमिति हे धन्याः भवन्तः ! असत्यौ सत्यरहितौ न भवत इति नासत्यावश्विनौ दस्राविति निपातनान्नञो नलोपाभावः । ताभ्यां युज्येते इति तद्युजौ तद्युक्तौ, सत्सूद्विषेत्यादिना क्विप् । उभाविलायामिलादेव्यां भवति इति इलाभूरैलः पुरूरवाः, क्विप् । दर्पकः कामश्च न भवन्ति किमिति प्रश्नः । शेषे प्रथम इति प्रथमपुरुषः । चत्वारो यूयमश्विनौ पुरूरवाः कामश्च न भवतः किम् इत्यपृच्छदित्यर्थः, तेषु निजरूपादन्येषामिव स्वस्यापि विस्मयावेशाच्च इत्थमद्राक्षीदिति भावः ॥ ४५ ॥

अमी तमाहुः स्म: यदत्र मध्ये कस्यापि नोत्पत्तिरभूदिलायाम्
अदर्पकाः स्म: सविधे स्थितास्ते नासत्यतां नापि बिभर्त्ति कश्चि
॥ ४६ ॥

तेभ्यः परान्नः परिभावयस्व श्रिया विदूरीकृतकामदेवान् ।
अस्मिन् समाजे बहुषु भ्रमन्ती भैमी किलास्मासु घटिष्यतेऽसौ
॥ ४७ ॥

---

अमी इति । अथामी देवास्तं नलमाहुः स्म ऊचुः, लट् स्म इति भूते लट् । उत्तरश्लोके तेभ्यः परान्नः परिकल्पयस्वेति वक्ष्यते तत्र हेतुमाह यदिति । यद् यस्मात्कारणात् ये वयं ते तत्र सविधे समीपे स्थिताः, अत्रैतेषु चतुर्षु मध्ये कस्यापि इलायां बुधकलत्रे इलादेव्यां भूमौ चोत्पत्तिर्नाभूत्, अत्र न कोऽप्येकः पुरूरवा इत्यर्थः । न कोऽपि भौमः, किन्तु अदर्पका दर्पशून्या इत्यर्थान्तरं पूर्ववत्समासः । कश्चिन्नासत्यताम् अश्वितां न बिभर्त्तीति न कोऽप्यनासत्य इत्यर्थः । नासत्यावश्विनौ दस्रावित्यमरः । नासत्यतां सत्यतां न बिभर्त्तीति किन्त्वसत्यनला वयमित्यर्थान्तरम् ॥ ४६ ॥

तेभ्य इति । पूर्वश्लोकस्थस्य यच्छब्दापेक्षया तदो व्यवहारः । तत्तस्मादिलाभवनाद्यभावात् श्रिया सौन्दर्य्येण विदूरीकृतकामदेवान् अधरीकृतमन्मथान्नोऽस्मान् तेभ्यः ऐलादिभ्यः परानन्यान् परिकल्पयस्व निश्चिनुष्व, अन्यच्च हे सौम्य ! श्रिया विदूरीकृतकामदेवान्नोऽस्मांस्तेभ्यः परान् उत्कृष्टान् विद्धि । अस्तु किमर्थमागतास्तत्राह अमी भैमी अस्मिन् समाजे राजसंघे बहुषु मध्ये भ्रमन्ती पर्य्यटन्ती अस्मासु घटिष्यते न वेत्स्यतीति तथा बहुषु अस्मासु नलरूपेष्विति भावः, अतएव भ्रमन्ती नल इति भ्रान्तिं विदन्ती अस्मासु घटिष्यते सङ्गच्छते किल इति

असाम यन्नाम तवेह रूपं स्वेनाधिगत्य श्रितमुग्धभावाः।
तन्नो धिगाशापतितान्नरेन्द्र! धिक् चेदमस्मद्विबुधत्वमस्तु ॥४८॥
सा वागवज्ञायितमां नलेन तेषामनाशङ्कितवाक्च्छलेन।
स्वीरत्नलाभोचितयत्नमग्नमेनं न हि स्म प्रतिभाति किञ्चित्॥४९॥

---

सम्भावनायामित्याशयेनेति शेषः। अत्रार्थद्वयस्यापि विवक्षितत्वात् केवलप्रकृतश्लेषः ॥ ४७ ॥

असामेति। हे नरेन्द्र! यद् यस्मात्तव नाम रूपञ्च स्वेन आत्मनाधिगत्य ज्ञात्वापि श्रितमुग्धभावाः स्वीकृतमूढभावाः सन्तः इह स्वयंवरे असाम भवाम नामेति यावत्, अस्तेर्लोट्। तत्तस्मादाशापतितांस्ते तृष्णापतितान्नोऽस्मान् धिक् इदमस्माकं विबुधत्वं विपश्चित्त्वञ्च धिगस्तु, अन्यच्च यत्तव रूपमधिगत्य त्वद्वेशं धारयित्वा आश्रितमुग्धभावाः लब्धसौन्दर्य्याः सन्तः, मुग्धः सुन्दरमूढयोरिति विश्वः। असाम नाम दिव्यामहे खलु। अस गतिदीप्त्यादानेष्विति धातोर्लोट्। तत्तस्मान्नोऽस्माकम् आशापतितां दिक्पतित्वं धिक्, आशा तृष्णादिशोरपीति विश्वः। इदमस्मद्विबुधत्वञ्च धिक् तुच्छव्यापारत्वादिति भावः। विबुधः पण्डिते देवे इति विश्वः। पूर्व्व एवालङ्कारः ॥ ४८ ॥

सेति। अनाशङ्कितवाक्च्छलेन अनाकलितवाक्कपटेन नलेन तेषां देवानां सा वाक् पूर्व्वोक्ता पूज्योक्तिः अवज्ञायितमाम् अतिशयेनावज्ञाता, पुरःस्फूर्त्तिक एवार्थो गृहीतो न तु तात्त्विक इत्यर्थः। जानातेरवपूर्व्वात् कर्म्मणि लुङि तङिति तङ् भूताम् प्रत्ययः। कुतः? हि यस्मात् स्वीरत्नलाभे यः उचितयत्नो योग्यव्यापारो देवतानुध्यानादिः तत्र मग्नम् आसक्तमेनं नलं प्रति किञ्चित् किमप्यन्यत्र प्रतिभाति स्म न स्फुरति स्म, व्यासङ्गो हि महान् विवेकप्रतिबन्धक इति भावः ॥ ४९ ॥

य: स्पर्द्धया येन निजप्रतिष्ठां लिप्सु: स एवाह तदुन्नतत्वम् ।
क: स्पर्द्धितु: स्वाभिहितस्वहाने: स्थानेऽवहेलां बहुलां न कुर्यात्
॥ ५० ॥
गीर्देवतागीतयश:प्रशस्ति: श्रिया तडिल्वल्ललिताभिनेता ।
मुदा तदावैक्षत केशवस्तं स्वयंवराडम्बरमम्बरस्थ: ॥ ५१ ॥
अष्टौ तदाष्टासु हरित्सु दृष्टी: सदोदिदृक्षुर्निदिदेश देव: ।
लेङ्गीमदृष्ट्वापि शिर:श्रियं यो दृष्टौ मृषावादितकेतकीक: ॥ ५२ ॥

---

नन्वसमानस्य तथा मत्सरिण: परस्योपेक्षत्वे कथं स्वपरतारतम्याभिव्यक्तिरित्याकाङ्क्षायामाह य इति । योऽपकृष्टो येनोत्कृष्टेन सह स्पर्द्धया सङ्घर्षणेन निजप्रतिष्ठामुत्कर्षं लिप्सु: लब्धुमिच्छु:, लभे: सनन्तादुप्रत्यय: । स: स्पर्द्धमान एव तस्योत्कृष्टपुरुषस्य उन्नतत्वमुत्कृष्टत्वमाह ब्रवीति तच्चेष्टयैव तयोस्तारतम्यं स्फुटीभवतीत्यर्थ: । तथाहि, क: प्रेक्षावान् स्वेनैवाभिहिता स्वहानि: स्वापकर्षो यस्य तस्य स्पर्द्धितुर्बहुलां भूयसीमवहेलामवज्ञां न कुर्य्यात् कुर्य्यादेवेत्यर्थ: । व्रीडावमाननात्म्नावहेलनमसूयनमित्यत्रावहेलयेति चोरस्वामी । स्थाने युक्तं युक्ते द्वे साम्प्रतं स्थाने इत्यमर: । इन्द्रादिदुश्चेष्टया नलस्य महानुत्कर्ष एव आसीदिति भाव: ॥ ५० ॥

गीरिति । तदा तस्मिन् काले केशवो विष्णु: गीर्देवतया वाग्देवतया गीता यश:प्रशस्ति: कीर्त्तिप्रबन्धो यस्य स:, श्रिया लक्ष्मीदेव्या तडिल्वत: सविद्युतो मेघस्य ललितस्य विलासस्य अभिनेता अनुकर्त्ता सन् अम्बरस्थ: तं स्वयंवराडम्बरं संरम्भं मुदा हर्षेणैक्षत किमुतान्य इति भाव: । लक्ष्मीसरस्वतीसहित: नारायण: स्वयंवरं द्रष्टुमाजगाम इति भाव: ॥ ५१ ॥

अष्टाविति । तदा तस्मिन् काले सद: स्वयंवरसभां दिदृक्षु:

एकेन पर्य्यक्षिपदात्मनाद्रिं चक्षुर्मुरारेरभवत् परेण ।
शेषैर्दशात्मा दशभिस्तु शेषैर्दिशो दशालोकत लोकपूर्णाः ॥५३॥
प्रदक्षिणं दैवतहर्म्म्यमद्रिं सदैव कुर्व्वन्नपि शर्वरीशः ।
द्रष्टा महेन्द्रानुजदृष्टिमूर्त्या न प्राप तद्दर्शनविघ्नतापम् ॥५४॥

---

द्रष्टुमिच्छुः गत इति शेषः। देवश्चतुर्मुखोऽष्टासु हरित्सु दिक्षु अष्टौ दृष्टीः निदिदेश प्रेरयामास। अष्टदिगागतजनतावलोकनार्थमित्यर्थः। यो देवो लैङ्गीं ज्योतिर्लिङ्गसम्बन्धिनीं शिरःश्रियं लिङ्गस्योत्तरावधिमित्यर्थः। अदृष्ट्वापि दृष्टौ लिङ्गशिरोदर्शनविषये मृषा वदतीति मृषावादिनो सा कृता मृषावादिता मृषावादीकृतेत्यर्थः। मृषावादिशब्दात्तत्करोतीति ण्यन्तात् कर्मणि क्तः, पुंवद्भावटिलोपाद्यर्थं णाविष्टवद्भावोपसङ्ख्यानाट्टिलोपः। तथा कृता केतकी येन स कूटसाक्षीकृतकेतकीकुसुम इत्यर्थः। नद्यृतश्चेति कप्समासान्तः। पुरा किल ब्रह्मा ज्योतिर्लिङ्गस्य शिरोदेशमदृष्ट्वाप्यद्राक्षमित्युक्त्वा तत्र शिवशिरः पतितं केतकीकुसुमं कूटसाक्षीचकारेति पौराणिका कथात्रानुसन्धेया। तथा च शिवशिरः पारमिव स्वयंवरागतजनतासागरमदृष्टाभिर्दृष्टिभिः पश्यन्नपि नापश्यदित्यर्थः ॥ ५२ ॥

एकेनेति। द्वादशात्मानो रूपाणि यस्य स द्वादशात्मा सूर्य्यः एकेन रूपेणाद्रिं मेरुं पर्य्यक्षिपत् प्रदक्षिणीकृतवान् परेणात्मना मुरारेर्विष्णोश्चक्षुर्दक्षिणमभवत् शेषैरवशिष्टैर्दशभिस्तैरात्मभिस्तु लोकपूर्णाः जनसम्पूर्णाः दश दिशोऽलोकत आलोकितवान् ॥ ५३ ॥

प्रदक्षिणमिति। शर्वरीशश्चन्द्रो दैवतानां हर्म्म्यं वासस्थानम् अद्रिं मेरुं सदैव प्रदक्षिणं कुर्व्वन्नपि महेन्द्रानुजस्य उपेन्द्रस्य

विलोकमाना वरलोकलक्ष्मीं तात्कालिकीमप्सरसो रसोत्काः।
जनाम्बुधौ तत्र निजाननानि वितेनुरम्भोरुहकाननानि ॥५५॥
न यक्षलक्षैः किमलक्षि नो सा सिद्धैः किमध्यासि सभात्तशोभा
सा किन्नरैः किं न रसादसेवि नादर्शि हर्षेण महर्षिभिश्च ॥५६
वाल्मीकिरश्लाघत तामनेकशाखत्रयीभूरुहराजिभाजा।
क्लेशं विना काव्यपथेन यस्य देवी दिवः प्राग्भुवमागमद्वाक् ॥५७

---

विष्णोरष्टिमूर्त्या वामनेत्ररूपेण द्रष्टा सन् तस्य स्वयंवरस्य दर्श-
नविघ्नेन यस्तापस्तं न प्राप चन्द्रस्य स्वयमनागतत्वेऽपि तत्र
विष्णोरागतत्वात्तद्वामनयनरूपेणाद्राक्षीदेवेति कुतस्तस्यादर्श-
नक्लेश इत्यर्थः ॥ ५४ ॥

विलोकमाना इति। रसेन रागेण उत्का उन्मनसः उत्सुकाः
सत्यः, उत्क उन्मना इति निपातनमभिधानम्। तात्कालिकीं
तत्कालभवां वरलोकलक्ष्मीं परिणेतृजनशोभां विलोक-
मानाः अप्सरसस्तत्र जनाम्बुधौ सभास्थजनरूपार्णवे भूमिस्थै-
र्योगात् निजाननानि स्वमुखानि अम्भोरुहकाननानि
वितेनुः दधुः तदन्तर्गतानि तन्मुखानि पद्मानीव रेजुरित्यर्थः
॥ ५५ ॥

नेति। तदा आत्तशोभा लब्धकान्तिः सा सभा यक्षाणां
लक्षैः शतसहस्रैः नालक्षि नादर्शि किं ? सिद्धैर्वा नाध्यासि
नाध्यासिता किम् ? किन्नरैः रसात् रागात् नासेवि न सेविता
किं ? महर्षिभिः हर्षेण नादर्शि च न दृष्टा किं ? देवाद्यास-
क्तेऽपि अमुख्यासम्भवात् सदंशन्यायेन सर्वेषां दर्शने पर्य्यवसिते
तथा च सर्वैरदर्शीत्यर्थः। सर्वत्र कर्मणि लुङ् ॥ ५६ ॥

वाल्मीकिरिति। तां सभां वाल्मीकिर्मुनिः अश्लाघत अस्तुत
अनेकाः शाखाः कथकाः आश्वलायनादिवेदविभागाः त्रय्या-

प्राशंसि संसद् गुरुणापि चार्वी चार्वाकतासर्वविदूषकेण ।
आस्थानपट्टं रसनां यदीयां जानामि वाचामधिदेवतायाः ॥५८॥
नाकेऽपि दीव्यत्तमदिव्यवाचि वचःस्रगाचार्य्यकवित् कविर्यः ।
ईतेयनीतिः पथि सार्थवाहः काव्यः स काव्येन सभामभाणीत्॥५९॥

---

अवयवविशेषाश्च यस्याः सा अनेकशाखा, त्रयाणां वेदानां समाहारः त्रयी अनेकाः शाखा यस्याः सा शाखा चासौ त्रयी च। सैव भूरुहराजिः तरुपंक्तिः तां भजतीति तद्भाक् तेन, भजो ण्वः। शाखा वेदप्रभेदेषु बाहौ पार्श्वद्रुमाङ्गयोरिति वैजयन्ती। पथिकविश्रामवृक्षवतेत्यर्थः। यस्य कण्ठ एव पन्थाः तेन कण्ठपथेन दैवी वाक् छन्दोमयी सरस्वती क्लेशं विना अनायासेन दिवः स्वर्गात् प्राक् भुवं भूलोकम् आगमत् आगता एव। छन्दोबन्धा सरस्वती येन प्रथमं भूलोकमवतारिता तेनादिकविनापि स्तुतेत्यर्थः ॥ ५७ ॥

प्राशंसीति। चार्वी चारुः रम्या, वोतो गुणवचनादिति ङीप्। संसत् सभा चार्वाकतया चार्वाकसिद्धान्तितया हेतुना सर्वविदूषकेण गुरुणा बृहस्पतिनापि प्राशंसि किमुत अन्यैरिति भावः। यदीयां रसनां जिह्वां वाचामधिदेवतायाः सरस्वत्याः आस्थानपट्टम् आस्थानपीठं सिंहासनं जानामि, आसनान्तरपीठयोः पट्टमिति विश्वः। सर्वविदूषकेण वाचस्पतिनापि स्तूयत इति सभाशोभायाः परमोत्कर्ष इति भावः ॥ ५८ ॥

नाकेऽपीति। यः काव्यः अतिशयेन दीव्यन्त्यः दीव्यत्तमाः देदीप्यमानाः, तसिलादित्वात् कृत्वसुच इति पुंवद्भावः। ताः दिव्यवाचः संस्कृतवाचः यस्मिन् नाके स्वर्गेऽपि वचःस्रजां वाग्गुम्फनानाम् आचार्य्यकम् आचार्य्यकत्वं, योपधाद्गुरूपोत्तमाद् वुञ्। तद्वित् कवितामार्गोपदेष्टा कविः स्वयं कवयिता च,

अमेलयद्भीमनृप: परं न नाकर्षदेतान् दमनस्वसैव।
इदं विधातापि विचित्य यून: स्वशिल्पसर्वस्वमदर्शयन्न: ॥६०॥
एकाकिभावेन पुरा पुरारिर्य: पञ्चतां पञ्चशरं निनाय।
तद्भीसमाधानममुष्य कायनिकायलीला: किममी युवान: ॥६१॥

---

दित्या: अपत्यानि पुमांसो दैतेया:, राक्षसादितिशब्दात् कृदिकारमीषन्तात् स्त्रिभ्यो ढक्, अन्यथा दित्यदित्यादिना ण्यप्रत्ययस्य पूर्वविप्रतिषेधेन टगपुंवादिकत्वाल्लिङ्गविशिष्टपरिभाषात्वनित्येति गति:, भाष्यवार्त्तिकयोरनुरक्तत्वादसाधुरिति केचित् अभियुक्तप्रयोगादभिमौक्तिकप्रसिद्धेश्च तन्नाद्रियन्ते। तेषां नीते: पथि दैत्यनीतिमार्गे सार्थं वहतीति सार्थवाह: अग्रणी:, कर्मण्यण्। स काव्य: कवेरपत्यं शुक्र:, कवादिभ्यो ण्य:। तां सभां काव्येन प्रबन्धेन अभाणीत् अवर्णयत्, काव्यं ग्रन्थे ग्रहे काव्ये इति विश्व: ॥ ५८ ॥

अथ षड्भिस्तत्काव्यमेवाह अमेलयदित्यादि। एतान् यून: युवजनान् भीमनृप एव न अमेलयत् न मेलितवान् तथा दमनस्वसा दमयन्त्येव नाकर्षत् स्वगुणेनेति शेष:। किन्तु विधातापि विचित्य एकत्र संगृह्य इदं पुरोवर्त्ति युवरूपं स्वशिल्पसर्वस्वं स्वनिर्माणकौशलसम्पदं न: अस्माकम् अदर्शयत्। राज्ञ: प्रयत्नात् भैमीसौन्दर्य्यसम्पदा ब्रह्मण: स्वनिर्माणकौशलप्रकाशनव्यसनाच्चेदं युवमेलनं न त्वेकस्मादित्यर्था ॥ ६० ॥

एकाकीति। य: पुरारि: पुरा एकाकिभावेन असहायत्वेन हेतुना पञ्चशरं पञ्चानां भाव: पञ्चता ताञ्च भौतिकस्य शरीरस्य पञ्चधा विशरणं मरणमिति यावत् तां निनाय अमी युवान: अमुष्य कामस्य सम्बन्धिन्या: तस्मात् पुरारे: भिय: समाधानं निवारणं निवारका इत्यर्थ:। कार्य्यकारणयोर-

पूर्णेन्दुबिम्बाननुमासभिन्नानस्थापयत् क्वापि निधाय वेधाः।
तैरेव शिल्पी निरमादमीषां मुखानि लावण्यमयानि मन्ये॥६२॥
मुधार्पितं मूर्द्धसु रत्नमेतैर्यन्नाम तानि स्वयमेत एव।
स्वतः प्रकाशे परमात्मबोधे बोधान्तरं न स्फुरणार्थमर्थ्यम् ॥६३॥
प्रवेक्ष्यतः सुन्दरवृन्दमुच्चैरिदं मुदा चेदितरेतरं तत्।
न शक्ष्यतो लक्षयितुं विमिश्रं दस्रौ सहस्रैरपि वत्सराणाम् ॥६४॥

---

भेदोपचारः। कायनिकायलीलाः शरीरसमूहविलासास्त-द्भेदाः किमिति यावत् एकाकी स हरः संहरिष्यतीति भया-दनेकधा परिणताः कामकायव्यूहाः। इयमुत्प्रेक्षा। सर्वे काम-कल्पा इत्यर्थः॥ ६१॥

पूर्णेति। शिल्पी निर्माणकुशली वेधाः अनुमासं मासि मासि भिन्नान् नानाभूतान् पूर्णेन्दुबिम्बान् संसारस्यानादित्वा-दसङ्ख्यानिति भावः। क्वापि निधाय निक्षिप्य अस्थापयत् स्थापितवान् चिरमरक्षदित्यर्थः। अथ तैः पूर्णेन्दुबिम्बैः अमीषां यूनां लावण्यमयानि मुखानि निरमात् निर्मितवा-निति मन्ये। उत्प्रेक्षा॥ ६२॥

मुधेति। एतैः नृपैः मूर्द्धसु रत्नं मुधा अर्पितं शिरोमणिवृथा धृतः इत्यर्थः। कुतः? यत् यस्मात् एते स्वयमेव नाम रत्नानि खलु तथोत्कृष्टा इत्यर्थः। रत्नं स्वजातौ श्रेष्ठेऽपीत्यमरः। किं रत्नधारणेनेति वाच्यप्रतीयमानयोरभेदाध्यवसायेन वैय-र्थ्योक्तिः। तथाहि, स्वतः प्रकाशे स्वयं प्रकाशे परमात्मनेव बोधः तस्मिन् स्वरूपचैतन्ये विषये स्फुरणार्थं प्रकाशमानार्थं बोधान्तरं न अर्थ्यं नापेक्ष्यम्। दृष्टान्तालङ्कारः॥ ६३॥

प्रवेक्ष्यत इति। दस्रौ अश्विनौ उच्चैः महत् इदं सुन्दरवृन्दं रमणीयवर्गं मुदा कौतुकेन प्रवेक्ष्यतः अन्तःप्रविष्टौ भविष्यतश्चेत्

स्थितैरियद्भिर्युवभिर्विदग्धैर्दग्धेऽपि कामे जगतः क्षतिः का ।
एकाम्बुबिन्दुव्ययमम्बुराशेः पूर्णस्य कः शंसति शोषदोषम् ॥६५॥
इति स्तुवन् हुङ्कृतिवर्गणाभिर्गन्धर्ववर्गेण स गायतैव ।
ओङ्कारभूम्ना पठतैव वेदान् महर्षिवृन्देन तथान्वमानि ॥६६॥

---

तत्तर्हि विमिश्रं मिलितम् इतरेतरम् अन्योन्यं स्वभ्रातृरूपं वत्सराणां सहस्रैरपि लक्षयितुं मदीयः अयमेव भ्राता इति विविक्ततया ग्रहीतुं न शक्यतः शक्तौ न भविष्यतः। तत्र सभायां स्थिताः सर्वे राजानः अश्विनीकुमारतुल्या इति भावः। अत्र द्वयोः सौन्दर्य्यगुणसामान्येन सुन्दरवृन्दैकतादात्म्यात् सामान्यालङ्कारः । सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकतेति लक्षणात्॥ ६४ ॥

स्थितैरिति। विदग्धैः प्रगल्भैः अदग्धैश्च स्थितैः इयद्भिः एतावद्भिः युवभिः परिपूर्णस्येति शेषः। जगतः कामे दग्धेऽपि का क्षतिः? न्यूनता न कापीत्यर्थः। तथाहि, पूर्णस्य अम्बुराशेः एकाम्बुबिन्दुव्ययं कः शोष एव दोषस्तं शंसति? न कोऽपि दोषत्वेन शंसतीत्यर्थः। यथा समुद्रस्य एक जलविन्दुव्यये समुद्रः शुष्कः इति न कोऽपि कथयति। तथा कामसदृशानां बहूनाम् एतेषां विद्यमानतायाम् एकस्य कामस्य नाशे पृथिव्याः का क्षतिः इति भावः। दृष्टान्तालङ्कारः ॥ ६५ ॥

इतीति। इतीत्थं स्तुवन् स काव्यः गायतैव गन्धर्ववर्गेण हुङ्कृतीनां वर्गणाः पुनः पुनरुच्चारणानीत्यर्थः। ताभिः अन्वमानि अनुमोदितः, कर्मणि लुङ्। तथा वेदान् पठतैव महर्षिवृन्देन ओंकारभूम्ना प्रणवभूयस्त्वेन अन्वमानि अनुमोदितः। अत्र गानार्थैर्हुङ्कारैः वेदपाठार्थैः ओंकारैश्च काव्यवाक्यानुमोदनं

न्यवीविशत्तानथ राजसिंहान् सिंहासनौघेषु विदर्भराज:।
शृङ्गेषु यत्र त्रिदशैरिवैभिरशोभि कार्त्तस्वरभूधरस्य ॥६७॥
विचिन्त्य नानाभुवनागतांस्तानमर्त्त्यसंकीर्त्त्यचरित्रगोत्रान्।
कथ्या: कथङ्कारममी सुतायामिति व्यषादि क्षितिपेन तेन ॥६८॥
श्रद्धालुसङ्कल्पितकल्पनायां कल्पद्रुमस्याथ रथाङ्गपाणे:।
तदाकुलोऽसौ कुलदैवतस्य स्मृतिं ततान क्षणमेकतान: ॥६९॥

---

कृतमेवेत्युत्प्रेक्ष्यते। ओमित्यनुमते प्रोक्तं प्रणवे चाप्युपक्रमे इति विश्व: ॥ ६६ ॥

न्यवीविशदिति। अथ विदर्भराज: भीम: तान् राज्ञ: सिंहानिव राजसिंहान् राजश्रेष्ठान् सिंहासनौघेषु न्यवीविशत् उपवेशयामास, विशेर्णौ चङ्। यत्र येषु सिंहासनेषु एभि: राजसिंहै: कार्त्तस्वरभूधरस्य हेमाद्रे: सुमेरो: शृङ्गेषु त्रिदशै: देवैरिव अशोभि, शोभितम्। भावे लुङ् ॥ ६७ ॥

विचिन्त्येति। तेन क्षितिपेन भीमेन नानाभुवनेभ्य: नानाप्रदेशेभ्य: आगतान् तान् यून: मर्त्त्यै: सङ्कीर्त्त्यानि कीर्त्तयितुं शक्यानि चरित्राणि गोत्राणि कुलानि नामानि च येषां ते न भवन्तीति तथोक्ता: तान् तथाविधान् विचिन्त्य अमी युवान: सुतायां विषये कथङ्कारं केन प्रकारेण कथमित्यादिना णमुल्। कथ्या: कथनीया: इति हेतो: व्यषादि विषसेन अभावि, भावे लुङ्। प्राक्सिताड्व्यवायेऽपि सदेरप्रतेरिति षत्वम् ॥६८॥

श्रद्धाल्विति। अथ विषादानन्तरम् आकुल: असौ भीम: तथा श्रद्धालूनां, स्पृहिगृहीत्यादिना आलुच्प्रत्यय:। सङ्कल्पितकल्पनायाम् ईप्सितार्थसम्पादने कल्पद्रुमस्य इच्छापूरकस्य कुलदैवतस्य वंशपरम्परोपासितस्य रथाङ्गपाणे: नारायणस्य

तच्चिन्तनानन्तरमेव देवः सरस्वतीं सस्मितमाह स स्म ।
स्वयंवरे राजकगोत्रवृत्तवक्त्रीमिह त्वां करवाणि वाणि ! ॥७०॥
कुलञ्च शीलञ्च बलञ्च राज्ञां जानासि नानाभुवनागतानाम् ।
एषामतस्त्वं भव वावदूका मूकायितुं कः समयस्तवायम् ॥७१॥
जगत्त्रयीपण्डितमण्डितैषा सभा न भूता न च भाविनी वा ।
राज्ञां गुणज्ञापनकैतवेन सङ्ख्यावतः श्रावय वाङ्मुखानि ॥७२॥

---

स्मृतिं स्मरणं क्षणं व्याप्य एकतानः अनन्यवृत्तिः सन् ततान, एकतानोऽनन्यवृत्तिरित्यमरः ॥ ६८ ॥

तदिति। तस्य भीमस्य चिन्तनानन्तरं स्मरणानन्तरमेव स देवो हरिः। सरस्वतीं सस्मितमाह स्म। लट् स्म इति भूते लट्। किमिति? हे वाणि! अहं त्वां स्वयंवरे राज्ञां समूहो राजकं, गोत्रोक्षेत्यादिना उकञ्। तस्य गोत्राणां नाम्नां कुलानां वृत्तानां चरित्राणाञ्च वक्त्रीम् आख्यात्रीं करवाणि, प्रैषार्थे लोट् ॥ ७० ॥

कुलमिति। हे वाणि! नानाभुवनागतानां राज्ञां कुलञ्च शीलञ्च बलञ्च जानासि, अतः कारणात् त्वम् एषां वावदूका वक्त्री वंशवीर्य्यादिगुणतो वर्णयित्री भव, वावदूकस्तु वक्तरीत्यमरः। जंजपेत्यत्र वदेरनुबन्धकारवाक्यादूक इति स्वामी। तथाहि, तव मूकायितुं मूकवदाचरितुं तूष्णीं स्थातुं, मूकशब्दादाचारार्थे क्यजन्तात् कालसमयवेलासु तुमुन्। अयं कः समयः को वावसरः वाग्मिनाम् अवसर तूष्णींभावो न युक्तः इत्यर्थान्तरन्यासः ॥ ७१ ॥

वागवसरत्वमेवाह जगदिति। जगत्त्रय्यां ये पण्डिताः वाचस्पत्यादयः तैः अशेषैः मण्डिता एषा सभा न भूता न च भाविनी वा, अतो राज्ञां गुणज्ञापनकैतवेन गुणप्रकाशनच्छलेन सङ्ख्या-

इतोरिता तच्चरणात् परागं गीर्वाणचूड़ामणिमृष्टशेषम्।
तस्य प्रसादेन सहाश्रया सा वादाय मूर्ध्नादरिणी बभार ॥७३॥
मध्येसभं सावततार बाला गन्धर्वविद्यामयकण्ठनाला।
त्रयीमयोभूतवलीविभङ्गा साहित्यनिर्वर्त्तितदृक्तरङ्गा ॥७४॥
आसीदथर्वा त्रिवलित्रिवेदोमूलाद् विनिर्गत्य वितायमाना।
नानाभिचारोचितमेचकश्रीः श्रुतिर्यदीयोदररोमरेखा ॥ ७५ ॥

---

वतः पण्डितान्, वाङ्मुखानि उपन्यासान्, सङ्ख्यावान् पण्डितः कविरिति, उपन्यासस्तु वाङ्मुखमिति चामरः। आवय पण्डितमण्डलिविलसिते विदुषां विजृम्भणं स्थानं तत्रापि तूष्णीभावे वाग्विधेयत्वमयोग्यता च स्यादिति भावः ॥ ७२ ॥

इतीति। इति ईरिता आज्ञप्ता असौ वाणी सरस्वती तस्य हरेः नारायणस्य चरणात् गीर्वाणानां देवानां चूड़ामणिभिः शिरोरत्नैः मृष्टस्य शेषं परागं तस्य आज्ञयैव प्रसादेन अनुग्रहेण सह आदाय मूर्ध्ना आदरिणी आदरवती सती बभार ॥ ७३ ॥

मध्येसभमिति। सा वाणी मध्ये सभायाः मध्येसभं पारे मध्ये षष्ठ्या वेत्यव्ययीभावः। अवततार। कीदृशी ? बाला युवतिः गन्धर्वविद्या गानविद्या तन्मयस्तद्विकारः कण्ठनालः यस्याः सा, त्रयीमयीभूताः त्रिधाभूता अन्यत्र वेदविकारीभूता वलिविभङ्गाः त्रिवलीसर्वस्वानि यस्याः सा, साहित्येन कवित्वेन निर्वर्त्तिता निष्पादिता दृशः दृष्टयः तरङ्गा इव यस्याः सा ॥ ७४ ॥

अथ चतुर्दशश्लोक्या वाग्देवीमेव वर्णयति आसीदिति। अथर्वा श्रुतिः अथर्ववेदः तिस्रो वलयः त्रिवलिः त्रिवलिप्रसिद्धिः संज्ञा चेदिति वामनः। तद्रूपा त्रिवेदी सैव मूलं तस्मात् विनि-

शिक्षैव साक्षाच्चरितं यदीयं कल्पश्रिया कल्पविधिर्यदीयः ।
यस्याः समस्तार्थनिरुक्तिरूपैर्निरुक्तविद्या खलु पर्य्यणंसीत् ॥७६
जात्या च वृत्तेन च भिद्यमानं छन्दो भुजद्वन्द्वमभूद् यदीयम् ।
श्लोकार्द्धविश्रान्तिमयीभविष्णु पर्वद्वयीसन्धिसुचिह्नमध्यम् ॥७७

---

गत्य वितायमाना वितन्यमाना, तनोतेरनुनासिकस्य विकल्पा दात्वम् । अथर्वणस्तु तव्युद्धार इति प्रसिद्धिः । नानाविधाना अभिचाराणां हिंसाकर्मणाम् उचिता मेचकश्रीः कृष्णकान्ति र्यस्याः सा अन्यत्र नानाभिचारः नानाभिप्राप्तिरित्यर्थः । तत उचिता सा च सा मेचका श्रीर्यस्याः सा तथोक्ता यदीय यस्याः सम्बन्धिनी उदरे रोमरेखा रोमराजिः आसीत् ॥७५॥

शिक्षेति । शिक्षाग्रन्थ एव साक्षात् स्वयमेव यदीयं चरि तम् अभूत् परोपदेशरूपत्वादिति भावः । यदीयः आकल्पविधि प्रसाधनविधिः कल्पश्रिया कर्मकाण्डभूतया कल्पसूत्रलक्ष्म्या निर्वृत्त इति शेषः । निरुक्तविद्या खलु एव यस्याः समस्तार्थान सर्ववेदार्थानां निरुक्तिरूपैः निर्वचनभङ्गिभिः पर्य्यणंसीत् खल तद्रूपेण आसीदित्यर्थः । यमिरमिनमिनातिस्सिचोऽपृक्ते इतीड़ागम यमरमनमातांसश्चेति सनिड्ड़ागमः, इटईटीति सेड्लोप उपसर्गादसमासे णोपदेशस्येति णत्वम् ॥ ७६ ॥

जात्येति । जात्या मात्रावृत्तरूपेण आर्य्यादिना वृत्ते वर्णवृत्तरूपेण अक्षरसंख्यातेन उक्थादिना च भिद्यमा द्विधाभूतं तथा श्लोकार्द्धे विश्रान्तिमयीभविष्णु विश्रान्ति रूपतामापन्नं छन्दः छन्दोग्रन्थः पर्वणोः कूर्परपूर्वोत्तरभागयो द्वयी तस्याः सन्धिः तेन सुचिह्नं सुव्यक्तं मध्यं कूर्परस्था यस्य तदीयं भुजद्वन्द्वम् अभूत् । द्विविधं छन्दो भुजयुगत्वे श्लोकार्द्धविश्रान्तिः कूर्परत्वेन पर्य्यणंसीदित्यर्थः ॥७७॥

असंशयं सा गुणदीर्घभावकृतां दधाना विततिं यदीया।
विधायिका शब्दपरम्पराणां किन्त्वारचि व्याकरणेन काञ्ची ॥७८॥
स्थितेव कण्ठे परिणम्य हारलता बभूवोदिततारवृत्ता।
ज्योतिर्मयी यद्भजनाय विद्या मध्येऽङ्कमङ्केन भृता त्रिशङ्के ॥७९॥
अवैमि वादिप्रतिवादिगाढ़ स्वपक्षरागेण विराजमाने।

---

असंशयमिति। किञ्च गुणस्य सूत्रस्य दीर्घभावेन दैर्घ्येण कृतां विततिं विस्तारं दधाना अन्यत्र गुणश्च दीर्घश्च भावि-प्रत्ययश्च कृत्प्रत्ययश्च तेषां विततिं दधानेति विपरिणामः। शब्दपरम्पराणां शिञ्जितपरम्पराणां विधायिका जनयित्री अन्यत्र सुप्तिङन्तशब्दपरम्पराणां विधायकेन साधकेनेति विपरिणामः। सा प्रसिद्धा यदीया काञ्ची व्याकरणेन अरचि रचिता असंशयमित्यर्थः अर्थाभावेऽव्ययीभावः ॥ ७८ ॥

स्थितेति। कण्ठे वाचि अन्यत्र ग्रीवायां स्थिता उदिता उक्तास्तारा अश्विन्यादयो येषु तानि वृत्तानि पद्यानि यस्यां सा अन्यत्र उदिततारा निर्जितशुद्धमौक्तिका सा च सा वृत्ता च वर्तुला च तथोक्ता तारो मुक्तादि भं शुद्धौ तरले शुद्धमौक्तिके। वृत्तं पद्ये चरे त्रिष्विति च विश्वामरौ। अङ्गानां शिक्षादीनां अन्यत्र करादीनां मध्ये मध्येऽङ्गं पारे मध्य इत्यादिनाव्ययीभावः। अङ्केन एकद्व्यादिसङ्ख्यया चिह्नेन भृता पूर्णा अन्यत्र अङ्केन क्रोड़ेन भृता भरतेर्विभर्त्तेश्च कर्मणि क्तः। अङ्कं क्रोड़ेऽन्तिके चिह्ने इत्युभयत्रापि वैजयन्ती। ज्योतिर्मयी नक्षत्रप्रधाना अन्यत्र भास्वती ज्योतिस्तारा इरा इभा ज्वाला कृत्पु स्वार्थे-ऽध्वरात्मस्विति च वैजयन्ती। विद्या ज्योतिर्विद्येव यद्भजनाय यस्याः सेवनाय हारलता बभूव त्रिशङ्के इत्युत्प्रेक्षा ॥ ७९ ॥

अवैमीति। वादिप्रतिवादिनोः गाढ़ेन निविडेन स्वपक्षे

तौ पूर्वपचोत्तरपचशास्त्रे रदच्छदौ भूतवती यदीयौ ॥८०॥

ब्रह्मार्थकर्मार्थकवेदभेदाद् द्विधा विधाय स्थितयात्मदेहम्।
चक्रे पराच्छादनचारु यस्या मीमांसया मांसलमूरुयुग्मम् ॥८१॥

उद्देशपर्वण्यपि लक्षणेऽपि द्विधोदितैः षोड़शभिः पदार्थैः।
आन्वीक्षिकीं यद्दशनद्विमालीं तां मुक्तिकामाकलितां प्रतीमः
॥ ८२ ॥

---

रागेण अभिनिवेशेन अन्यतान्तःपार्श्वरक्तत्वेन विराजमाने पूर्वपचोत्तरपचशास्त्रे यदीयौ तौ प्रसिद्धौ रदच्छदौ ओष्ठौ भूतवती बभूवतुः भवतेः क्तवतुप्रत्ययः। अवैमि उत्प्रेचे। अत्र ओष्ठावपि वादिनावभिवन्दनव्यापारवन्तौ पूर्वोत्तरीभूतौ चेति द्रष्टव्यम् ॥ ८० ॥

ब्रह्मेति। पराच्छादनचारु उत्कृष्टवसनाभिरामं मांसमस्यास्तीति मांसलं पीवरं सिध्मादित्वादिलच्। यस्याः ऊरुयुग्मं परेषां प्रतिवादिनाम् आच्छादनेन तिरस्करणेन चारु शोभनम् आत्मदेहं स्वस्वरूपं चाविति विशेषणानपुंसकं ग्राह्यम्। कायो देहः क्लीवपुंसोरित्यमरः। ब्रह्मैवार्थः प्रतिपाद्यार्थो यस्य सः शेषाद्विभाषेति कपि भावप्रधानो निर्देशः। ब्रह्मार्थकर्मार्थकत्वाभ्यां यो यो वेदस्य भेदः द्वैविध्यं तस्माद्धेतोः द्विविधया पूर्वोत्तरमीमांसारूपेण द्विविधं कृत्वा स्थितया प्रतिष्ठितया मीमांसया द्वैविध्यया चक्रे कृतः गम्योत्प्रेचा ॥ ८१ ॥

उद्देशेति। यस्याः दशनानां द्वयोर्मालयोः समाहारो द्विमाली, वादावन्त इति स्त्रीत्वे द्विगोरिति ङीप्। तामेव आकलितां गुम्फितां मुक्तैव मुक्तिका, मुक्ताशब्दात् स्वार्थे कप्रत्ययेन इति कृते तस्या भाषितपुंस्काच्चेति कात् पूर्वस्येत्यन्तं मुक्तावलीम् इत्यर्थः। उद्देशो नामतः कीर्त्तनं तस्य पर्वणि

तर्का रदा यद्वदनस्य तर्क्या वादेऽस्य शक्तिः क्व तथान्यथा तैः।
पत्रं क्व दातुं गुणशालिपूगं क्व वादतः खण्डयितुं प्रभुत्वम् ॥८३

---

अवसरेऽपि समानजातीय व्यवच्छेदो लक्षणं तत्पर्वणीत्यर्थः। द्विधोदितैः द्विर्वारमुक्तैरित्यर्थः अन्यत्र लक्षणे सामुद्रिकलक्षणे द्विधोदितैः द्वैगुण्येनोक्तैरित्यर्थः। उभयषोडशदशनत्वस्य भाग्यलक्षणत्वादिति भावः। षोडशभिः पदार्थैः प्रमाणादिनिग्रहस्थानान्तैः उपलक्षितां मुक्तिं मोक्षं कामयन्ते इति मुक्तिकामाः मुमुक्षवः, शिलिवामिशिक्षाचरेभ्यो ण इति णप्रत्ययः। तैराकलिताम् अभ्यस्तां प्रमाणादिसूत्रेण पदार्थानां तत्त्वज्ञानात् निश्रेयसाधिगम इत्युक्तत्वादिति भावः। तां प्रसिद्धां प्रत्यक्षागमाभ्यामीक्षितस्य पश्चादीक्षणमन्वीक्षा सा प्रयोजनमस्यामित्यान्वीक्षिकी तर्कविद्या, प्रयोजनमिति ठक्। तां प्रतीमः जानीमः, प्रतिपूर्वादिणो लट्। द्विरावृत्तषोडशपदोदिततद्दन्तपङ्क्तियुगलत्वेन परिणतेत्युत्प्रेक्षार्थः प्रतिपाद्यप्रतिपादकयोरभेदोपचारत्वादान्वीक्षिक्येव तथा परिणतेत्युक्तं दशनद्विमालीमेवाकलितां मुक्तिकामिति श्लिष्टपदोपात्तेन रूपकत्वेनोत्प्रेक्षायाः सङ्करः ॥ ८२ ॥

पुनर्दन्तानेव तर्कत्वेनापि उत्प्रेक्षते तर्का इति। यद्वदनस्य सम्बन्धिनः रदाः दन्ताः रदना दशना दन्ता इत्यमरः। तर्काः ऊहाख्याः प्रमाणानुमापकज्ञानविशेषाः तन्मयाः तर्क्याः उत्प्रेक्ष्याः अन्यत्र तर्कवत् कर्कशा इत्यर्थः। तथाहि, अस्य वदनस्य तैस्तथाभूतैर्विना वादे कथायामभिवदनव्यापारे च तथा तादृशी शक्तिः क्व। पत्रं पत्रिकां दातुं पत्रालम्बनं कर्तुं अन्यत्र ताम्बूलीदलादिकं दातुं खण्डयितुं शक्तिः क्व? यतस्स

सपल्लवं व्यासपराशराभ्यां प्रणीतभावादुभयीभविष्णु।
तन्मत्स्यपद्माद्युपलक्ष्यमाणं यत्पाणियुग्मं वहते पुराणम् ॥८४॥
आकल्पविच्छेदविवर्जितो यः स धर्मशास्त्रव्रजएव यस्याः।
पश्यामि मूर्द्धा श्रुतिमूलशाली कण्ठे स्थितः कस्य मुदे न वृत्तः
॥ ८५ ॥

---

तुमुन्। तदा गुणशालिनां प्रतिभादिगुणवतां वावदूकानां पूगं वृन्दं वादतो वादेन खण्डयितुं भङ्क्तुं अन्यत्र वा इति छेदः अदतो भक्षयतः गुणशालिरसाढ्यं पूगं पूगीफलं, पूगः क्रमुक वृन्दयोरित्यमरः। खण्डयितुं शकलयितुं प्रभुत्वं सामर्थ्यं क श्लेष ध्वनितेयं दन्तानां तर्कपरिणतत्वेन उत्प्रेक्षेति सङ्करः ॥८

सपल्लवमिति। व्यासपराशराभ्यां प्रणीतभावात् प्रणीत त्वादुभयीभविष्णु द्विगुणीभावुकं, भुवश्चेतीष्णुच्। यद्यप्यष्टा दशपुराणानां कर्त्ता सत्यवतीसुतः। तथापि पुराणं वैष्ण चक्रे यस्तं वन्दे पराशरमित्यादि प्रसिद्धमेवमुक्तम्। तत् प्रसि मत्स्यपद्मपुराणादिसंज्ञादिरादिशब्दात् कूर्मस्कन्दादिसङ्ग्रह अन्यत्र मत्स्यपद्मादिरेखादिरादिशब्दात् ध्वजकलशादिसङ ग्रहः। उपलक्ष्यमाणम् अतर्कि तर्कितमित्यर्थः। सपल्लवं सविस्त पल्लवं तस्त्री प्रकोष्ठे चापि विस्तृताविति वैजयन्ती। अन्य सह सदृशं पल्लवेन सपल्लवम् अव्ययं विभक्त्यादिना सहशब्द गुणीभूतसादृश्यार्थेऽव्ययीभावः। अव्ययीभावे चाकाल इ सहशब्दस्य सभावः। सहसादृश्यसाकल्ययौगपद्यसमृद्धिष्वि विश्वः। पुराणं पद्मादि यस्याः पाणियुग्मं वहते पाणि पल्लवेन परिणामीत्यर्थः। उत्प्रेक्षा ॥ ८४ ॥

आकल्पेति। आकल्पं कल्पान्तपर्यन्तं विच्छेदेन वि र्जितः अविच्छिन्नसम्प्रदायीत्यर्थः। अन्यत्र प्रसादनविच्छेद

भ्रुवौ दलाभ्यां प्रणवस्य यस्यास्तद्बिन्दुना भालतमालपत्रम् ।
तदर्द्धचन्द्रेण विधिर्विपञ्ची-निक्वाणनाकोणधनुः प्रणिन्ये ॥८६॥
द्विकुण्डली वृत्तसमाप्तिलिप्याः कराङ्गुली काञ्चनलेखनीनाम् ।
कैश्यं मसीनां स्मितभाः कठिन्याः काये यदीये निरमायि सारैः
॥ ८७ ॥

---

स्थितो नित्यभूषित इत्यर्थः श्रुतिर्वेदः एकः मूलं मूलप्रमाणं तेनान्यत्र श्रुतिमूलाभ्यां च शालते इति तथोक्ताः, वेदे श्रवसि च श्रुतिरित्यमरः । कण्ठे स्थितो मुखस्थितः अन्यत्र गलस्थः यो धर्मशास्त्राणां मन्वादिस्मृतीनां व्रजः स एव यस्याः देव्याः मूर्द्धा वृत्तः संवृत्तः परिणत इत्यर्थः । अन्यत्र वर्तुलः कस्य मुदे न ? सर्वस्यापि स्यादेवेत्यर्थः पश्यामि उत्प्रेक्षे ॥ ८५ ॥

अथोङ्काराक्षरस्य नागरलिप्यक्षरभेदमाश्रित्योत्प्रेक्षते भ्रुवाविति । विधिः ब्रह्मा प्रणवस्य ओङ्कारस्य दलाभ्याम् उभयप्रान्तरेखाभ्यां यस्याः देव्याः भ्रुवौ तथा तस्य बिन्दुना बिन्द्वाकाररेखया भाले तमालपत्रं तिलकं तमालपत्रतिलकचित्रकाणि विशेषकम् इत्यमरः । तस्य प्रणवस्य अर्द्धचन्द्रेण अर्द्धचन्द्राकाररेखया विपञ्च्याः वीणायाः वीणा तु वल्लकी विपञ्ची इत्यमरः निक्वाणनायै वादनार्थं कोणधनुः कोणभूतं धनुराकारं वाद्यसाधनञ्च, कोणो वीणादिवादनमित्यमरः । प्रणिन्ये निर्ममे । उपसर्गादसमासेऽपि णोपदेशस्येति णत्वम् । उत्प्रेक्षा ॥८६॥

द्विकुण्डलीति । यदीये काये देहे द्वयोः कुण्डलयोः समाहारो द्विकुण्डली कर्णकुण्डलीद्वयं वृत्तायाः वर्त्तुलायाः समाप्तिलिप्या अवसानरेखाया बिन्दुद्वयरूपायाः विसर्गाकाराया इति यावत् । लेख्यान्ते समाप्तिव्यञ्जको विसर्गः लिख्यते स एव कुन्तलद्वयत्वेन परिणत इत्यर्थः । विसर्गस्य

या सोमसिद्धान्तमयाननेव शून्यात्मतावादमयोदरेव।
विज्ञानसामस्त्यमयान्तरेव साकारतासिद्धिमयाखिलेव ॥८८॥

रूपं यथा। शृङ्गवत् बालवत्सस्य बालिकाकुचयुग्मवत्। नेत्रवत् कृष्णसर्पस्य स विसर्ग इति स्मृतः। सारैः सारांशैः निरमायि निर्मिता, माङो लुङि आतो युक् चिण्कृतोरिति युगागमः। कराङ्गुली कराङ्गुल्यः, जातावेकवचनम्। काञ्चनलेखनीनां स्वर्णकणिकानां सारैः तथा केशानां समूहः कैश्यं केशाश्वाभ्यां यञ् चान्यतरस्यामिति यञ्प्रत्ययः। मसीनां सारैः, तथा स्मितभा मन्दहासकान्तिः कठिन्याः खटिकायाः, खटिकायान्तु कठिनीति विश्वः। सारैः निरमायि इत्युत्प्रेक्षा ॥ ८७॥

येति। या देवी सोमसिद्धान्तः कापालिकदर्शनं सोमस्य इन्दोः सिद्धान्तः अखण्डरूपश्च तन्मयम् आननं यस्या सा इव स्थिता तथा शून्यस्यैव आत्मतावादः माध्यमिकबौद्धविशेषदर्शनम्, तन्मयं तदेव उदरं यस्याः सा तादृशीव अथच शून्यात्मता निस्स्वरूपता तद्वादो नास्तिवादस्तन्मयमुदरं यस्याः, सा अतिकृशोदरीत्यर्थः सर्वनासिकोदरेत्यादिना विकल्पादनिकारः। विज्ञानस्य निराकारविज्ञानमात्रस्य सामस्त्यं साकल्यम् इति योगाचारबौद्धविशेषमतं तन्मयं तदेव अन्तरं यस्याः सा इव अथच विज्ञानसामस्त्यमशेषविशिष्टज्ञानसम्पत्तिश्च तन्मयमन्तरं यस्याः सैव, तथा साकारज्ञानवादी सौत्रान्तिकः ज्ञानानां नीलपीताद्याकारता साकारता तत्सिद्धिस्तन्मतं अथ च शोभनाकारतासम्पत्तिश्च तन्मयाः अखिला सर्वाः यस्याः सैव स्थितेति सर्वत्रोत्प्रेक्षेति एवम्भूता सरस्वती मध्येसभम् अवततार इति ७४ श्लोकोक्तक्रियापदेन अन्वयः ॥ ८८॥ कुलकम्।

भीमस्तयागद्यत मोदितुं ते वेला किलेयं तदलं विषद्य ।
मया निगाद्यं जगतीपतीनां गोत्रं चरित्रं च यथाऽद्यैषाम् ॥८९॥
अविन्दतासौ मकरन्दलीलां मन्दाकिनी यच्चरणारविन्दे ।
अत्रावतीर्णा गुणवर्णनाय राज्ञां तदाज्ञावशगास्मि कापि ॥९०॥
तत्कालवेद्यैः शकुनस्वराद्यैरासामवाप्तां नृपतिः प्रतीत्य ।
तां लोकपालैकधुरीण एष तस्यै सपर्य्यामुचितां दिदेश ॥९१॥

---

भीम इति। अथ तया देव्या सरस्वत्या भीमो भीमभूपतिः अगद्यत उक्तः। किमिति ? हे राजन् ! इयं ते तव मोदितुं हर्षं कर्त्तुं वेला किल ? समयः खलु ? कालसमयवेलासु तुमुन्। तत्तस्मात् विषद्य खेदित्वा अलं विषादो न कर्त्तव्य इत्यर्थः। अलंखल्वोरित्यादिना क्त्वाप्रत्ययः। कुतः ? एषां जगतीपतीनां राज्ञां गोत्रं कुलं नाम च, गोत्रं नाम्नि कुलेऽपि चेति विश्वः। चरित्रञ्च मया निगाद्यं वक्तव्यमहं वक्ष्यामीत्यर्थः। ऋहलोर्ण्यत् गदमदेत्यादिसूत्रे अनुपसर्ग एव यतो विधानात्॥ ८९ ॥

का त्वं किमर्थमागता चेत्याकाङ्क्षायामाह। अविन्दतेति। असौ प्रसिद्धा मन्दाकिनी यस्य पुंसः चरणारविन्दे पादपद्मे मकरन्दलीलां पद्ममधुविलासम् अविन्दत तस्य पुंसः आज्ञया वशगा वशवर्त्तिनी कापि या काचित् अस्मि अहं, किं विशेषचिन्तयेति भावः। राज्ञां गुणवर्णनाय अत्र स्वयंवरसभायामवतीर्णास्मि॥९०॥

तत्कालेति। लोकपालैः इन्द्रादिभिः सह एकधुरं वहतीत्येकधुरीणः समानस्कन्धः एकधुराल्लुक् चेति खप्रत्ययः। लोकपालसदृशः एष नृपतिर्भीमः तत्काले वेद्यैः वेदयितुं शक्यैः शकुनः पक्षी स्वरः नासानिलः आद्यशब्दादक्षिस्पन्दादिसंग्रहः। तैरुपायैः अवाप्ताम् अकस्मात् सभायां प्राप्तां तां वाग्देवीम्

*दिगन्तरेभ्यः पृथिवीपतीनामाकर्षकौतूहलसिद्धविद्याम् ।*
*ततः क्षितीशः स निजां तनूजां मध्येमहाराजकमाजुहाव ॥८२॥*

दासीषु नासीरचरीषु जातं स्फीतं क्रमेणालिषु वीक्षितासु ।
स्वाङ्गेषु रूपोत्थमथाद्भुताब्धिमुद्वेलयन्तीमवलोककानाम् ॥८३॥

---

आप्तां हितां प्रतीत्य निश्चित्य तस्यै उचितां सपर्य्यां पूजां दिदेश समर्पयामास ॥ ८१ ॥

दिगिति । ततो देवीपूजानन्तरं सः क्षितीशः भीमो दिगन्तरेभ्यः पृथिवीपतीनाम् आकर्षकौतूहले आकर्षणकर्मणि सिद्धविद्यां सिद्धमन्त्रस्वरूपाम् अमोघवृत्तिमित्यर्थः सौन्दर्य्येण सर्वाकर्षणकारिणीमिति भावः। निजां तनूजां मध्येमहाराजकम् महतो राजसमूहस्य मध्ये आजुहाव आहूतवान्, ह्वयतेर्लिटि अभ्यस्तस्य चेति द्विर्भावात्प्राक्सम्प्रसारणे रूपसिद्धिः। भीमः सभायां दमयन्तीम् आनयामास इति भावः ॥८२॥

अथ षोडशश्लोक्या दमयन्तीं वर्णयति। दासीष्वित्यादि। कीदृशीं ? नासीरे चरन्तीति नासीरचारिणीषु अग्रेसरीषु, चरेष्टत्वात् ङीप्। दासीषु परिचारिकासु वीक्षितासु सतीषु जातम् उत्पन्नं क्रमेण आलिषु सखीषु वीक्षितासु स्फीतं प्रवृद्धं स्फायः स्फीनिष्ठायामितिस्फीभावः। [illegible]पोत्थं सौन्दर्य्यजन्य अवलोककानां प्रेक्षकाणाम् अद्भुताब्धिं विस्मयसागरं स्वाङ्गेषु दमयन्त्या अवयवेषु वीक्षितेषु, सत्सु उद्वेलयन्तीं उद्वेलं कुर्वतीं वेलामतिलङ्घयन्तीमित्यर्थः। भैमीं पपावपाङ्गै र[illegible] राजराजिः इति १०८ श्लोकोक्तेन अन्वयः। उद्वेलशब्दात् तत्करोतीति ण्यन्ताच्छतरि ङीप्। अत्र एकस्मिन्नद्भुताब्धौ क्रमेणानेकेषाञ्जातत्वस्फीतत्वोद्वेलत्वानां वृत्तिकथ[illegible]

स्निग्धत्वमायाजललेपलोप-सयत्नरत्नांशुसृजांशुकाभाम्।
नेपथ्यहीरद्युतिवारिवर्त्तिस्वच्छायसच्छायनिजालिजालाम् ॥८४॥
विलेपनामोदमुदागतेन तत्कर्णपूरोत्पलसर्पिणा च।
रतीशदूतेन मधुव्रतेन कर्णे रहः किञ्चिदिवोच्यमानाम् ॥८५॥

---

नात् पर्य्यायालङ्कारभेदः। एकस्मिन्ननेकमनेकस्मिन्नेकमिति लक्षणात् ॥ ८३ ॥

स्निग्धत्वेति। पुनः किम्भूताम्, स्निग्धत्वाय मासृण्यगुणाय मायाजलं जलगर्भताख्यो दोषः लेखारागाख्यदोषः, इति यावत् रागस्त्रासश्च विन्दुश्च रेखा च जलगर्भता। सर्वरत्नेष्वमी पञ्च दोषाः साधारणा मताः॥ इति वग्भटः। तथा लेपः वर्णोत्कर्षकारो द्रव्यविशेषसंयोगः तयोः लोपः अभावः। ताभ्यां सयत्नानि कृतप्रयासानि कथमपि तानि अनङ्गीकुर्वाणानि यानि रत्नानि उपलक्षणमेतत्, गुणसम्पत्तिदोषविरहाभ्यां शुद्धानीत्यर्थः, यतिप्रयत्न इति धातोः नश्वोदितोनिष्ठायामितीट्प्रतिषेधः। तेषां रत्नानाम् अंशुसृजा किरणप्रसादः सैव अंशुकाभा वस्त्रप्रभा यस्यास्तां पुनः नेपथ्यहीरद्युतिवारिवर्त्ति स्वच्छायम् आभरणवज्रप्रभाम्बुगतस्वप्रतिविम्बं, विभाषा सेनेत्यादिना छायाशब्दस्य नपुंसकत्वम्। तेन सच्छायं सवर्णं निजालिजालं स्वसखीकुलं यस्यास्ताम्। अत्र भूषामणिप्रभाझरमग्नेन स्वप्रतिविम्बेन सह सखीजनसादृश्योत्प्रेक्षया तासामपि तत्समानसौन्दर्य्यं वस्तु व्यज्यते ॥ ८४ ॥

विलेपनेति। पुनः किम्भूताम्, विलेपनस्य चन्दनाद्यङ्गरागस्य आमोदे सौरभे मुदा प्रीत्या आगतेन तथा तस्याः दमयन्त्याः कर्णपूरोत्पलं सर्पतीति तत्सर्पिणा तद्गन्धाकृष्टेन

विरोधिवर्णाभरणाश्मभासां मल्लाजिकौतूहलमीक्षमाणाम् ।
स्मरस्वचापभ्रमचालिते नु भ्रुवौ विलासाद् वलिते वहन्तीम् ॥ ८६ ॥

सामोदपुष्पाशुगवासिताङ्गीं किशोरशाखाग्रशयालिमालाम् ।
वसन्तलक्ष्मीमिव राजभिस्तैः कल्पद्रुमैरप्यभिलष्यमाणाम् ॥८७॥

---

च रतीशदूतेन तदुद्दीपकेनेत्यर्थः । मधुव्रतेन भ्रमरेण कर्णे किञ्चित् रहः रहस्यं उच्यमानामिव कामदेवसन्दिष्टं किमप्युपदेश्यमानामिव स्थिताम्, उत्प्रेक्षा । एतेन तस्यास्तदा किलकिञ्चितादिशृङ्गारचेष्टाविर्भावो व्यज्यते ॥ ८५ ॥

विरोधीति । पुनः किम्भूताम्, विरोधिवर्णानां नानावर्णानाम् आभरणाश्मनां भूषणमणीनां या भासः तासां मल्लाजिकौतूहलं मल्लयुद्धकौतुकं परस्पराक्रमणसंरम्भम् ईक्षमाणां पुनर्विलासात् वलिते स्त्रीस्वभावाल्लीलाचलिते तत्रोत्प्रेक्षा । स्मरेण स्वचापभ्रमाच्चालिते नु आदातुं कम्पिते इव स्थिते इत्यर्थः । चलकम्पने इति मित्त्वेऽपि ज्वलह्वलह्मलचलानामनुपसर्गाद्वेति विकल्पनाद्ध्रस्वाभावः । एवम्भूते भ्रुवौ वहन्तीम् ॥ ८६ ॥

सामोदेति । पुनः किम्भूताम्, सामोदं सहर्षं यथा तथा पुष्पाशुगेन कामेन वासितम् अधिष्ठितम् अङ्गं वपुर्यस्यास्तां जगत्त्रयजिगीषोः कामस्य अमोघवाणेन स्वाभीकृताङ्गीम्, आमोदो हर्षगन्धयोराशुगौ वायुविशिखाविति विश्वामरौ । पुनः किशोरशाखाः कोमलाङ्गुलयो अग्रशया अग्रपाणयो यासां ताः आलिमालाः सखीपङ्क्तयो यस्यास्तां, पञ्चशाखः शयः पाणिरित्यमरः । अन्यत्र किशोरशाखानाम् अग्रेषु ये शेरते इति तच्छयाः, अधिकरणे शेतेरित्यच्प्रत्ययः । ताः अलिमालाः भृङ्गश्रेणयः यस्यां तां तैः राजभिः कल्पद्रुमैरपि

पीतावदातारुणनीलभासां देहोपलेपात् किरणैर्मणीनाम्।
गोरोचनाचन्दनकुङ्कुमैण-नाभीविलेपान् पुनरुक्तयन्तीम् ॥९८॥
स्मरं प्रसूनेन शरासनेन जेतारमश्रद्दधतीं नलस्य।
तस्मै स्वभूषाष्टशदंशुशिल्पं बलद्विषः कार्मुकमर्पयन्तीम् ॥९९॥

---

सर्वाभिलाषपूरकैरपीति भावः। वसन्तलक्ष्मीमिव अभिलष्यमाणां यथा सर्वाभिलाषपूरकैरपि कल्पवृक्षैर्वसन्तलक्ष्मीमुपेक्ष्यते तद्वद्राजभिरपीति सात्त्विकोक्तिः॥ ९७ ॥

पीतेति। पुनः किम्भूताम्, पीता गौरा अवदाताः शुक्लाः अरुणा रक्ताः नीलाः कृष्णाश्च भासो दीप्तयो येषां तेषां मणीनां किरणैः देहस्य शरीरस्य उपलेपात् अनुलेपनात् गोरोचनादिचतुष्टयलेपान् पुनरुक्तयन्तीं सावर्ण्यात् पुनरुक्तान् कुर्वतीम्। एणनाभिः कस्तूरी। दमयन्त्याः पीतादिमणिप्रभया गोरचनाद्यनुलेपनानां विफलत्वमिति भावः। अत्र गोरोचनाद्यनुलेपचतुष्टयस्य यथासङ्ख्यसम्बन्धेन पीतादिमणिकिरणैःनवकथनाद् यथासङ्ख्यसङ्कीर्णसामान्यालङ्कारः। लक्षणमुक्तम् ॥ ९८ ॥

स्मरमिति। पुनः किम्भूताम्, प्रसूनेन पुष्पमयेण शरासनेन धनुषा पुष्पचापेन करणेन नलस्य जेतारं जैत्रं स्मरम् अश्रद्दधतीम् अविश्वसतीम् अतएव तस्मै स्मराय स्वभूषाष्टशदंशूनां निजाभरणमणिकिरणानां शिल्पं निर्माणं र्लिब्निमित्तमित्यर्थः। बलद्विषः कार्मुकम् इन्द्रचापम् अर्पयन्तीं वीरधौरेयः नलः पुष्पचापदुर्जय इति मत्वा जयाय स्वाभरणमणिकिरणकल्पितम् ऐन्द्रं धनुः दृढीयस्तस्मै कन्दर्पाय ददानामिव स्थितामित्युत्प्रेक्षा च। व्यञ्जकाप्रयोगाद्गम्या ॥९९॥

विभूषणेभ्यो वरमंशुकेषु ततो वरं सान्द्रमणिप्रभासु।
सम्यक् पुनः क्वापि न राजकस्य पातुं दृशा धावकृतावकाशाम्
॥ १०० ॥
प्राक् पुष्पवर्षैर्वियतः पतद्भिर्द्रष्टुं न दत्तामथ तद्द्विरेफैः।
तद्भीतिभुग्नेन ततो मुखेन विधेरहो वाञ्छितविघ्नयत्नः॥१०१॥
एतद्वरं स्यामिति राजकेन मनोरथातिथ्यमवापिताय।

---

विभूषणेभ्य इति। पुनः किम्भूताम्, विभूषणेभ्यो वरं प्रथमं विभूषणेषु आसज्य ततोऽधिकं यथा तथा अंशुकेषु वस्त्रेषु ततो वरमधिकं सान्द्रमणिप्रभासु सक्तयाइति शेषः। राजकस्य राजसमूहस्य, गोत्रोक्षेत्यादिना उकञ्प्रत्ययः। दृशा दृष्ट्या सम्यक् पातुं पुनः स्थैर्य्येण ईक्षितुं धावता कृतावकाशां न भवन्तीम्। उत्तरोत्तरविषयाकृष्टा पूर्वपूर्वविस्मरणेन राजकदृष्टिर्न क्वापि क्षणमवस्थितेत्यर्थः। तदङ्गसङ्गस्तस्या दवीयानिति भावः। अत्र विभूषणानामुत्तरोत्तरोत्कर्षद्वारेण राजकदृष्टेः क्रमेण विभूषणाद्यनेकाधारसम्बन्धोक्तेः सारालङ्कारः। सङ्कीर्णपर्य्यायभेदः उत्तरोत्तरमुत्कर्षः सारः ॥१००॥

प्रागिति। पुनः किम्भूताम्, प्राक् प्रथमं वियतः अम्बरात् पतद्भिः पुष्पवर्षैरथ तद्द्विरेफैः पुष्पाकृष्टभृङ्गैस्ततोऽनन्तरं तद्भीतिभुग्नेन भृङ्गभयनम्रेण मुखेन च द्रष्टुं न दत्ताम् एतैः प्रतिबद्धदर्शनामित्यर्थः। राजका[illegible]त शेषः। तथाहि आश्चर्य्यं विधेः दैवस्य वाञ्छितविघ्नयत्नो वाञ्छितार्थविघातव्यसनिता इत्यर्थान्तरन्यासः तथा च एकस्या राजदृष्टेः क्रमेण भैमीदर्शनप्रतिबन्धकपुष्पवृष्ट्याद्यनेकाधारसम्बन्धोत्येन पर्य्यायेण सङ्करः॥ १०१ ॥

एतदिति। पुनः किम्भूताम्, राजकेन राजसमूहेन वरं

सखीमुखायोत्सृजतीमपाङ्गात्कर्पूरकस्तूरिकयोः प्रवाहम् ॥१०२॥
स्मितेच्छुदन्तच्छदकम्पकिञ्चिद्दिगम्बरीभूतरदांशुवृन्दैः।
आनन्दितोर्वीन्द्रमुखारविन्दैर्मदं नुदन्तीं हृदि कौमुदीनाम्॥१०३॥
प्रत्यङ्गभूषाच्छमणिच्छलेन यत्नग्नतन्निश्चललोकनेत्राम्।
हाराग्रजाग्रन्नरुडाश्मरश्मि-पीनाभनाभीकुहराम्बकाराम्॥१०४॥

---

अहं सखीमुखं स्यां तदात्मकं भवेयं, प्रार्थनायां लिङ्। इति मनोरथस्य आतिथ्यम् अतिथित्वं, अभिलाषविषयताम् इति भावः ब्राह्मणादित्वात् ष्यङ्प्रत्ययः। अवापिताय प्रापिताय। एतस्य खलु भैमीदृष्टिगोचरत्वसिद्धेरिति भावः। सखीमुखाय अपाङ्गात् नेत्रप्रान्तात् कर्पूरस्य कस्तूरिकायाः, स्वार्थे कः, केनोरिति इकारस्य ह्रस्वः। तस्याश्च प्रवाहम् उत्सृजतीं प्रवर्त्तयन्तीं सखीमुखमेव वीक्षमाणामित्यर्थः। आच्छिन्नद्योर्नुमिति विकल्पान्नुमभावः। दृष्टीनां सितासितत्वेन निर्देशः, अतएव विषयनिगरणेन विषयिमात्रोपनिबन्धाद् भेदे अभेदरूपातिशयोक्त्यलङ्कारः॥ १०२॥

स्मितेति। पुनः किम्भूताम्, आनन्दितानि उर्वीन्द्रमुखारविन्दानि यैस्तैः अतएव स्मितेच्छोः स्मितोद्युक्तस्य दन्तच्छदस्य अधरस्य कम्पेन किञ्चिद्दिगम्बरीभूतैरेव प्रकाशीभूतैः यद्वा दिशाम् अम्बरीभूतैः दिग्व्यापारैः रदांशूनां दन्तकान्तीनां वृन्दैः कौमुदीनां हृदि मदं गर्वं स्थितमिति शेषः। नुदन्तीं खण्डयन्तीम्। कौमुद्योहि पद्मविकासने असमर्थाः, एतैस्तु नृपमुखपद्मानि विकासितानि इति भावः व्यतिरेकालङ्कारश्च। कौमुदीमधुरमन्दहासामित्यर्थः॥ १०३॥

प्रत्यङ्गेति। पुनः किम्भूताम्, प्रत्यङ्गं प्रत्यवयवं ये भूषाच्छमणयः तेषां छलेन येषु अङ्गेषु लग्नानि तेषु अङ्गेषु निश्च-

तद्गौरसारस्मितविस्मितेन्दुप्रभाशिरःकम्परुचोऽभिनेतुम् ।
विपाण्डुतामण्डितचामरालीनानामरालीकृतलास्यलीलाम् ॥ १०५ ॥

*तदङ्गभोगावलिगायनीनां मध्ये निरुक्तिक्रमकुण्ठितानाम् ।*
*स्वयं धृतामप्सरसाम्प्रसादं ह्रियं ह्रदो मण्डनमर्पयन्तीम् ॥१०६॥*

---

लानि हर्षपारवश्यादिति भावः । खञ्जकुञ्जवत्समासः । तानि लोकनेत्राणि नृपनेत्राणि यस्यास्तामिवेति सापह्नवोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या । पुनः हाराग्रे जाग्रतः प्रकाशमानस्य गरुडाश्मनः गरुत्मद्रत्नस्य रश्मिभिः पीनाभं सान्द्रप्रभं नाभीकुहरान्धकारं यस्यास्ताम् अत्र मरकतच्छायस्यान्धकारैः साम्योक्तेः सामान्यालङ्कारः ॥ १०४ ॥

तदिति । पुनः किम्भूताम्, तस्याः भैम्याः गौरसारस्मितेन विशदोत्कृष्टमन्दहासेन विस्मितायाः विस्मयाविष्टायाः इन्दुप्रभायाः चन्द्रिकायाः शिरःकम्परुचोऽभिनेतुम् अनुकर्तुमिवेत्युत्प्रेक्षा । विपाण्डुतामण्डिता धावल्यशोभिता चामरपङ्क्तय एव नानामराल्यः हंस्यः ताभिः कृता लास्यलीला नृत्यचेष्टा यस्यास्तां निजमन्दहासजनितविस्मयकम्पमानचन्द्रिकाशिरःकम्पचारुचामरचयवीज्यमानामित्यर्थः ॥ १०५ ॥

तदङ्गेति । पुनः किम्भूताम्, सैवाङ्गं क[...]र्थतया शरीरं यासां ताः तदङ्गाः तद्विषया इत्यर्थः । शब्द[...] सूक्तिभिः ख्यातावितिलक्षणात् । तासां भोगावलीनां प्रबन्धविशेषाणां गायन्यः गायिकाः कर्तरि ल्युट् ङीप् । तासां मध्ये गानमध्ये निरुक्तिक्रमेषु निकृष्टोच्चारणप्रकारेषु कुण्ठितानां लुप्तप्रतिभानाम् अप्सरसां स्वयं धृतां ह्रदः स्वान्तस्य वक्षसश्च मण्डनम् अलङ्कारभूतां ह्रियं लज्जामेव प्रसादं पारितोषिकम् अर्पयन्तीं प्रयच्छन्तीं तद्दोष-

तारा रदानां वदनस्य चन्द्रं रुचा कचानाञ्च नभो जयन्तीम् ।
आकण्ठमक्ष्णोर्द्वितयं मधूनि महीभृतः कस्य न भोजयन्तीम्१०७
अलङ्कृताङ्गाद्‌भुतकेवलाङ्गीं स्तवाधिकाध्यक्षनिवेद्यलक्ष्मीम् ।
इमां विमानेन सभां विशन्तीं पपावपाङ्गैरथ राजराजिः ॥१०८॥
कुलकम् ।

---

दानेन ताः अपि हेलयन्तीमित्यर्थः । गायकेभ्यः स्वधृतवस्त्रालङ्कारादिकं प्रीत्या प्रयच्छन्तीम् । अत्र तु श्रीदानमेव तद्दानमित्युत्प्रेक्षा क्रियापि स्वयं धृतत्वादलङ्कारत्वात् तदायत्तत्वाच्चेति भावः ॥ १०६ ॥

तारा इति । पुनः किम्भूताम्, रदानां दन्तानां रुचा कान्त्या ताराः नक्षत्राणि वदनस्य रुचा चन्द्रं कचानां केशानां रुचा नभश्च जयन्तीं अतएव कस्य महीभृतोऽक्ष्णोर्द्वितयं चक्षुर्द्वयं मधूनि क्षौद्राणि आकण्ठम् आगलम् अतितरामित्यर्थः । न भोजयन्तीं न पाययन्तीं सर्वस्यापीत्यर्थः । दमयन्तीरूपदर्शनेन राजनेत्राणाम् अमृतेनेव तृप्तिर्जाता । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । गतिबुद्धीत्यादिना अणिकर्तुरक्षिद्वितयस्य कर्मत्वनिगरणचलनार्थेभ्यश्चेति परस्मैपदं सकलराजलोकलोचनासेचनकमासीदित्यर्थः । अत्रोत्तरवाक्यार्थस्य पूर्ववाक्यार्थहेतुकत्वात् काव्यलिङ्गं, तच्च संसृष्टाभिस्ताराद्युपमाभिः सङ्कीर्य्यते, तस्य नभोजयन्तीमिति यमकेन संसृष्टिः ॥ १०७ ॥

अलङ्कृतेति । पुनः किम्भूताम्, अथ आह्वानानन्तरं अलङ्कृताङ्गेभ्यः भूषिताङ्गेभ्यः अद्‌भुतानि आश्चर्य्याणि केवलानि अनलङ्कृतानि अङ्गानि यस्यास्तां स्तवात् स्तुतेः अधिका स्तोतुमशक्या अध्यक्षनिवेद्या प्रत्यक्षगम्या लक्ष्मीः शोभा

आसीदसौ तत्र न कोऽपि भूपस्तन्मूर्त्तिरूपोद्भवदद्भुतस्य ।
उल्लेसुरङ्गानि मुदा न यस्य विनिद्ररोमाङ्कुरदन्तुराणि ॥१०९॥
अङ्गुष्ठमूर्द्ध्रा च निपीड़िताग्रा मध्येन भागेन च मध्यमायाः ।
आस्फोटि भैमीमवलोक्य तत्र न तर्जनी केन जनेन नाम ११०॥
अस्मिन् समाजे मनुजेश्वराणां तां खञ्जनाक्षीमवलोक्य केन ।
पुनः पुनर्लोलितमौलिना न भ्रुवोरुदक्षेपितरां द्वयी वा ॥१११॥

---

यस्यास्तामिति बहुवचनान्तोत्तरपदो बहुव्रीहिः, अन्यथा एकवचनाल्लक्ष्मीशब्दस्य उरःप्रभृतिकत्वात् कप्रसङ्गः शैषिकस्तु वैभाषिकः। विमानेन नरवाह्येन चतुरङ्गयानेन सभां विशन्तीं इमां भैमीं राजराजिः नृपश्रेणी अपाङ्गैः नेत्रप्रान्तैः पपौ अत्यादरेण सविलासमद्राक्षीदित्यर्थः ॥ १०८ ॥ इति कुलकम् ।

अथ तामद्भुतचेष्टां वर्णयति । आसीदिति । तत्र सभायां असौ ईदृशो भूपः कोऽपि नासीत् तस्याः भैम्याः मूर्त्ति रूपेण अङ्गसौन्दर्य्येण उद्भवन् अद्भुतः अद्भुतरसो यस्य एवम्भूतस्य यस्य भूपस्य अङ्गानि मुदा हर्षेण विनिद्रैः उदितैः रोमाङ्कुरैः पुलकैः दन्तुराणि विषमाणि सन्ति न उल्लेसुः न उल्लसितानि सर्वस्यापि अङ्गानि उल्लेसुरेवेत्यर्थः ॥ १०९ ॥

अङ्गुष्ठेति । तत्र सभायां भैमीम् अवलोक्य अङ्गुष्ठस्य मूर्द्ध्रा मध्यमायाः मध्याङ्गुलेः मध्येन भागेन च निपीड़ितम् अग्रं यस्याः सा तर्जनी केन नाम जनेन नास्फोटि न वादिता अभाजीति यावत् । स्फुटभेदन इति धातोः चौरादिकात् कर्मणि लुङ् । सर्वेणापि अदभुताऽनुभावस्फोटिका कृतैवेत्यर्थः ॥११०॥

अस्मिन्निति। अस्मिन् समाजे सभायां खञ्जनस्य इव

स्वयंवरस्याजिरमाजिहानां विभाव्य भैमीमथ भूमिनाथैः ।
इदं मुदा विह्वलचित्तभावादवादि खण्डाक्षरजिह्मजिह्मम् ॥११२
रम्भादिलोभात् कृतकर्मभिर्भूः शून्यैव माभूत् सुरभूमिपान्थैः ।
इत्यं तयालोपि दिवोऽपि पुंसां वैमत्यमत्यप्सरसा रसायाम् ॥११३

पक्षिणी यस्यास्तां भैमीम् अवलोक्य लोलितमौलिना आश्चर्य्यात् कम्पितकिरीटेन केन मनुजेश्वरेण राज्ञा भ्रुवोर्द्दयी भ्रूद्वयं वा पुनः पुनर्न उदक्षेपितरां सर्वेण अतिशयेन उत्क्षिप्ता एवेत्यर्थः, क्षिपेः कर्मणि लुङि तिङ् आम्प्रत्ययः। अत्र शिरःकम्पभ्रूविकारावद्भुतानुभावावुक्तौ ॥ १११ ॥

अथ राज्ञां वागारम्भाः प्रवृत्ता इत्याह स्वयंवरस्येति। अथ अनन्तरं स्वयंवरस्य अजिरं चत्वरप्रदेशम् आजिहानां प्राप्नुवन्तीं हाङः कर्त्तरि शानच्। भैमीं विभाव्य निर्वर्ण्य भूमिनाथैः राजभिः मुदा हर्षेण हेतुना विह्वलचित्तभावात् व्यग्रचित्तत्वाद्धेतोरिदं वक्ष्यमाणं खण्डाक्षरम् अर्द्धोक्तवर्णम् अतएव जिह्मजिह्मं कुण्ठजिह्मं यथा तथा अवादि उक्तं, कर्मणि लुङ् ॥ ११२ ॥

अथ विंशतिश्लोक्या वागारम्भानेव वर्णयति रम्भेत्यादि। रम्भादिषु अप्सरःसु लोभात् कृतं कर्म यागादि यैस्तैः सुरभूमिपान्थैः स्वर्लोकपथिकैः पथो ना नित्यमिति नाप्रत्ययः। भूरेव शून्या माभूदिति हेतोः अत्यप्सरसा तया भैम्या दिवोऽपि पुंसां देवानाम् अपि रसायां भूलोके वैमत्यं वैराग्यम् अलोपि लुप्तम् इवेत्युत्प्रेक्षा व्यञ्जकाप्रयोगाद् गम्या। लुपेः कर्मणि लुङ्। अत्यप्सरसः भैम्याः सौन्दर्य्यात् स्वर्लोकम् अतिशेते भूलोकमिति भावः। अत्रान्त्यपादे मत्यमत्यम् अप्सरसारसेति व्यञ्जकयुग्मवृत्त्या छेकानुप्रासः, अन्यत्र वृत्त्यनुप्रासः, तयाः पूर्वोक्तोत्प्रेक्षयोश्च संसृष्टिः ॥ ११३ ॥

रूपं यदाकर्ण्य जनाननेभ्यस्तत्तद्दिगन्ताद् वयमागमाम: ।
सौन्दर्य्यसारादनुभूयमानादस्यास्तदस्माद् बहुना कनीय: ॥११४॥
रसस्य शृङ्गार इति श्रुतस्य क्व नाम जागर्त्ति महानुदन्वान् ।
कस्मादुदस्थादियमन्यथा श्रीर्लावण्यवैदग्ध्यनिधि: पयोधे: ॥११५॥
साक्षात् सुधांशुर्मुखमेव भैम्या दिव: स्फुटं लाक्षणिक: शशाङ्क: ।
एतद्भ्रुवौ मुख्यमनङ्गचापं पुष्पं पुनस्तद्गुणमात्रवृत्त्या ॥११६॥

---

रूपमिति। वयं जनाननेभ्य: यद्रूपं सौन्दर्य्यम् आकर्ण्य तत्र तत्र असौ दिगन्तस्थ, वीप्सायां द्विर्भाव: । तस्मात् तस्मात् दिगन्तात् प्राच्यादिदिक्प्रान्तात् आगमाम: आगता: स्म:, गमेर्लुङि च्लेरङादेश: । तद्रूपम् अस्मादनुभूयमानात् प्रत्यक्ष-परिदृश्यमानात् सौन्दर्य्यसारात् पञ्चमी विभक्ते इति पञ्चमी। बहुना भूम्ना प्रथिम्ना, भावप्रधानो निर्देश: । कनीय: अल्पीय: युवाल्पयो: कनन्यतरस्यामिति विकल्पात् कनादेश: ॥ ११४ ॥

रसस्येति। शृङ्गार इति श्रुतस्य प्रसिद्धस्य रसस्य शृङ्गार-रसस्येत्यर्थ: । तस्य सम्बन्धे महान् उदन्वान् उदधि:, उदन्वानुदधिश्चेति निपातनात् साधु: । क्व नाम जागर्त्ति कुत्रापि किल प्रकाशत इति विकल्प: सर्वदा क्वाचिदस्त्येवेत्युत्प्रेक्षा। कुत: अन्यथा शृङ्गारार्णवाभावे लावण्यवैदग्ध्ययो: सौन्दर्य्यचातुर्य्ययोर्निधिरियं पुरोवर्त्तिनी श्रीर्लक्ष्मी: कस्मात् पयोधे: उदस्थात् पयोध्यन्तरस्थिताया: तस्या: श्रिय इव अस्या: श्रियो जननसामर्थ्यादिति भाव: । अत्रेयं श्रीरिति विषयनिगरणेन विषयिमात्रनिबन्धनाद्भेदेऽप्यभेदे सातिशयोक्तिरेतन्मूला च पूर्वोक्तशृङ्गार-रससागरसद्भावोत्प्रेक्षेत्यनयोरङ्गाङ्गिभावेन सङ्कर: ॥ ११५ ॥

साक्षादिति। भैम्या: मुखमेव मुखन्तु साक्षात् सुधांशु: मुख्यचन्द्रो दिवोऽन्तरिक्षस्य चन्द्रस्तु लाक्षणिको लक्षणागम्यो

लक्ष्ये धृतं कुण्डलिके सुदत्या ताड़ङ्कयुग्मं स्मरधन्विने किम्।
सव्यापसव्यं विशिखा विसृष्टास्ते नैतयोर्यान्ति किमन्तरेण ११७
तनोत्यकीर्त्तिं कुसुमाशुगस्य सैषा वतेन्दीवरकर्णपूरौ।
यतः श्रवःकुण्डलिकापराद्धशरं खलः ख्यापयिता तमाभ्याम्॥
११८॥

---

लाञ्छनकश्च शैषिकष्ठक्। शशाङ्कः चन्द्रः शशाङ्कत्वादेव लाञ्छनिकत्वमिति भावः। स्फुटमित्युत्प्रेक्षा। तथा एतस्याः भ्रुवावेव मुख्यं प्रधानम् अभिधेयमित्यर्थः। अमोघत्वादिति भावः। दिगादिभ्यो यदिति भावार्थे यत्प्रत्ययः। मुखे भवं शरीरावयवादि अनङ्गचापं कामधनुः पुष्पं पुनः पुष्पन्तु तस्य मुखस्य भ्रूचापस्य गुणः उद्दीपकत्वादिस्तन्मात्रवृत्त्या तस्माद्गुण्यादित्यर्थः। उपमा। व्यामात्रयोगेन च गुणस्त्वावृत्तिशब्दादिज्येन्द्रिया मुख्यतन्तुष्विति वैजयन्ती। अत्रापि स्फुटमित्यनुषङ्गादुत्प्रेक्षेति द्वयोर्निरपेक्षत्वात् संसृष्टिः॥ ११६॥

लक्ष्येति। सुदत्याः भैम्याः ताड़ङ्कयोः कर्णवेष्टनयोः युग्मं स्मर एव धन्वी, ब्राह्मणादित्वादिनिः। तस्मै, तादर्थ्ये चतुर्थी। लक्ष्ये शरव्यभूते कुण्डल्यावेव कुण्डलिके चक्रे सति धृतं किं? ताड़ङ्कयुग्ममेव शरव्यचक्रत्वेन धृतवती किमित्युत्प्रेक्षा। अतएव तेन स्मरधन्विना सव्यम् अपसव्यञ्च यथा तथा विसृष्टाः विमुक्ताः विशिखाः बाणाः तयोः शरव्यचक्रयोरन्तरेणैव यान्ति प्रसरन्ति किम्? इत्युत्प्रेक्षा सापेक्षत्वात् सङ्करः। सव्यसाचिनो धानुष्काः शरव्यद्वये शरान् मुञ्चन्तीति भावः॥११७॥

तनोतीति। सैषा भैमी इन्दीवरकर्णपूरावेव कुसुमाशुगस्य अकीर्त्तिम् अपकीर्त्तिं तनोति ताभ्यां तस्याकीर्त्तिं जनयतीत्यर्थः। आयुर्घृतमितिवत्कार्य्यकारणयोरभेदोपचारः कारण-

इहेच्यते तन्न गृहं श्रियः कैर्न गीयते वा कर एव लोकैः ॥१२३

छद्मैव तच्छम्बरजं विसिन्यास्तत्पद्ममस्यास्तु भुजाग्रसद्म।
उत्कण्टकादुद्गमनेन नालादुत्कण्टकं शातशिखैर्नखैर्यत् ॥१२

जागर्त्ति मर्त्त्येषु तुलार्थमस्या योग्येति योग्यानुपलम्भनं नः।
यद्यस्ति नाके भुवनेऽथवाधस्तदा न कौतस्कुतलोकबाधः ॥१२

अस्या इति। अस्याः भैम्याः भुजाभ्यां विजेतृभ्यां विजितात् विसात् मृणालात् पृथक् एकैकेनैव तत्प्रसूनं विसप्रसूनं पद्ममिव करौ बलिर्हस्तश्च अगृह्यत गृहीतं किमित्युत्प्रेक्षा। बलिहस्तांशवः करा इत्यमरः। जेतुर्जितात्करग्रहणमेव तत्करस्य पद्मत्वं चोचितमिति भावः। तथाहि, इहास्या भुजयोस्तत्करत्वेन गृहीतं पद्मं कैर्लौकिकैर्जनैः श्रियो लक्ष्म्याः शोभाया गृहम् आलयो नेष्यते कार एव कर इत्येव न गीयते नोच्यते वा, सर्वैरपि तथा क्रियत इत्यर्थः। एतद्धस्तस्य श्रीगृहत्वात् पद्मत्वं करत्वप्रसिद्धेर्विसात्मकत्वेन ग्रहणं सिद्धमित्युत्प्रेक्षा युक्तेत्यर्थः ॥ १२३ ॥

छद्मेवेति। विसिन्याः सम्बन्धि यत्पद्मं शम्बरदनुजमायाजन्यं छद्मैव मायैव न तु पारमार्थिकमित्यर्थः। दैत्ये ना शम्बरोऽम्बुनीति वैजयन्ती। अस्याः भैम्याः भुजाग्रं सद्म स्थानं यस्य तत् पद्मं पारमार्थिकं पद्ममित्यर्थः। कुतः? यत् यस्मात् उद्गताः कण्टकाः सूचयः पुलकाश्च यस्य तस्मात् नालात् पद्मदण्डात् भुजदण्डाच्च उद्गमनेन हेतुना शातशिखैः तीक्ष्णाग्रैः नखैश्छलेनेत्यर्थः। उत्कण्टकं विसपद्मन्तु सोत्कण्टकं कारणगुणानुविधायि कार्य्यत्वादिति भावः। भैमी पाणिपद्मस्य प्रसिद्धपद्मव्यतिरेकोक्त्या व्यतिरेकालङ्कारः ॥ १२४ ॥

जागर्त्तीति। अस्याः भैम्याः तुलायै तुलार्थम् औपम्याय

नमः करेभ्योऽस्तु विधेर्न वास्तु स्पृष्टं धियाप्यस्य न किं पुनस्तैः ।
स्पर्शादिदं स्याल्लुलितं हि शिल्पं मनोभुवोऽनङ्गतयानुरूपम् १२६
इमां न सृष्टीमसृजत् कराभ्यां वेधाः कुशाभ्यासनकर्कशाभ्याम् ।
शृङ्गारधारां मनसा न शान्तिविश्रान्तिधन्वाध्वमहीरुहेण ॥
१२७ ॥

---

योग्यार्हा काचिन्मर्त्त्येषु अस्तीति अत्र नः अस्माकं योग्यानुपलम्भनं योग्यानुपलब्धिरेव बाधकप्रमाणं जागर्त्ति विलसति । अथ नाके स्वर्गे अधोभुवने पाताले चास्ति यदि तर्हि कौतस्कुतानां कुतः कुतः स्वर्गादिलोकात् आगतानां, तत आगत इत्यण्, प्रत्ययः, अव्ययात् टिलोपः । बाधः सम्बाधो न स्यात् तत्रत्या नागच्छेयुरित्यर्थः । अहो अनुपलब्ध्यर्थापत्तिभ्यामस्यास्त्रिलोक्यामपि तुलाभावो निश्चित इत्यर्थः । अतएवोपमानलोपात्तुप्तोपमालङ्कारः ॥ १२५ ॥

नम इति । विधेः स्रष्टुः करेभ्यः हस्तेभ्यः नमः नमस्कारोऽस्तु, यैरिदं शिल्पमकल्पीति भावः । नमःस्वस्तीत्यादिना चतुर्थी । अथ नमो नास्तु वा कुतः अस्य विधेः धिया मनसापि न स्पृष्टं तैः करैः किं पुनः ? हि यस्मात् स्पर्शात् करस्पर्शात् इदं शिल्पं लुलितं तत्र तत्र मृदितं स्यात् किन्तु अनङ्गतया मनोभुवः कामस्य अनुरूपं युक्तम् अस्पृष्टैव निर्माणासम्भवात् त्रैलोक्यविजयिनः तस्य अनङ्गत्वे विनिर्माणशक्तिसम्भवाच्चेति भावः । अत्र भैमीशिल्पस्य विधिकरणसम्बन्धेऽपि असम्बन्धोक्तेरतिशयोक्तिस्तत्सापेक्षा चेयम् अनङ्गसृष्टित्वोत्प्रेक्षेति सङ्करः ॥ १२६ ॥

कुतोऽपि हेतोर्न वेधःसृष्टिरियमित्याह, इमामिति । वेधाः स्रष्टा सृष्टीं कोमलाङ्गीम् इमां कुशाभ्यासेन कुशाक्रमणेन

उल्लास्य धातुस्तुलिता करेण श्रोणी किमेषा स्तनयोर्गुरुर्वा ।
तेनान्तरालैस्त्रिभिरङ्गुलीनामुदीतमध्यत्रिवलीविलासा ॥१२८॥
निजामृतोद्यन्नवनीतजाङ्गीमेतां क्रमोन्मीलितपीतिमानम् ।
कृत्वेन्दुरस्या मुखमात्मनाभून्निद्रालुना दुर्घटमम्बुजेन ॥१२९॥

---

कर्कशाभ्यां कराभ्यां नास्पृजत् अयोग्यत्वादिति भावः। तथा शृङ्गारधारां शृङ्गाररसवाहिनीम् इमाम्। शान्तैः विषयविरतैः विश्रान्त्यै धन्वाध्वमहीरुहो मरुमार्गवृक्षः तेन विविक्तेन विषयरसानभिज्ञेन मनसापि नास्पृजत् स्वयमशृङ्गारिणः शृङ्गारिणीस्पर्शाशक्तेरिति भावः। अत्र विधिकरमनःसम्बन्धाभावेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिसंसृष्टिः ॥ १२७ ॥

उल्लास्येति। श्रोणी गुरुः गुर्वी, वीतो गुणवचनादिति विकल्पादनिकारः। स्तनयोः कुचयोः वेति संशय्येति शेषः। इतिनैव गम्यमानार्थत्वादप्रयोगः। धातुः करेण उत्तानपाणिना उल्लास्य नीवीम् अपसार्य उदरे गृहीत्वा उन्नमय्येत्यर्थः। तुलिता समं धारितेत्युत्प्रेक्षा। तेन तुलनेन अङ्गुलीनां चतसृणां त्रिभिः अन्तरालैः अभ्यन्तरे उदीतः उद्गतः इण् गताविति धातोः कर्त्तरि क्तः। मध्ये मध्यदेशे त्रिवलीविलासो वलित्रयशोभा यस्याः सा जाता अतो नूनं तुलितेत्यर्थः ॥ १२८ ॥

निजेति। इन्दुः निजम् आत्मीयम् अमृतं पीयूषं चीरं दध्यादि गोरसश्च अमृतं व्योम्नि देवान्ने मोक्षे हेम्नि च गोरस इति वैजयन्ती। तस्मात् उद्यत् उत्पद्यमानं नवनीतं दधिसारः दधिसारो नवनीतमिति हलायुधः। तज्जमङ्गं यस्यास्ताम् अतएव क्रमोन्मीलितपीतिमानं नवनीतवदेव क्रमाविर्भूतपीतवर्णामेतां भैमीं कृत्वा निर्माय निद्रालुना रात्रौ निमीलनशीलेन अथच अलसेन अम्बुजेन पद्मेन दुर्घटं

अस्याः स चारुर्मधुरेव कारुः श्वासं वितेने मलयानिलेन ।
अमूनि पुष्पैर्विदधेऽङ्गकानि चकार वाचं पिकपञ्चमेन ॥१३०॥
कृतिः स्मरस्यैव न धातुरेषा नास्या हि शिल्पीतरकारुजेयः ।
रूपस्य शिल्पे वयसा च वेधा निर्जीयते स स्मरकिङ्करेण ॥१३१॥
गुरोरपीमां भणतोष्ठकण्ठनिरुक्तिगर्वच्छिदया विनेतुः ।
अमः स्मरस्यैष भवं विहाय मुक्तिं गतानामनुतापनाय ॥१३२॥

---

साधु न साध्यमस्या मुखम् विविच्य इति शेषः आत्मनाभूत् स्वयमेवाभूदित्युत्प्रेक्षा, अन्यथा दमयन्त्याः कथमीदृक् अङ्गलावण्यसम्पत्तिरिति भावः ॥ १२९ ॥

अस्या इति। चारुः चतुरः सः प्रसिद्धो मधुर्वसन्त एव कारुः शिल्पी मलयानिलेन उपादानेनास्याः श्वासं निःश्वासमारुतं वितेने चकार पुष्पैरमूनीति हस्तनिर्देशः। अङ्गकानि विदधे वाचं पिकपञ्चमेन कोकिलस्वरेण पिकः कूजति पञ्चमम् इति वचनात्। चकार ससर्ज इत्युत्प्रेक्षा, अन्यथा कथमेषामोदृशीनि सौरभमार्दवमाधुर्य्याणीति भावः॥ १३ ॥

कृतिरिति। एषा भैमी स्मरस्यैव कृतिः सृष्टिः धातुः कृतिर्न तु हि यस्मात् अस्याः भैम्याः शिल्पी निर्माता इतरकारुभिः शिल्पयन्तरैः जेयो जेय्यो न अपराजितेन भवितव्यमित्यर्थः। ब्रह्मा तु पराजित इत्यत्राह—रूपस्य शिल्पे रूपनिर्माणविद्यायां वेधाः स्मरकिङ्करेण वयसा यौवनेनापि निर्जीयते ब्रह्मसृष्टेरधिकरमणीयत्वादित्यर्थः। अतस्तत्स्वाम्यादसौ स्मरेण जित इति किमु वक्तव्यम् इति युक्ता स्मरकृतिरेषेत्युत्प्रेक्षा स्वभावरमणीयं तद्रूपं यौवनमदनाभ्यां जगन्मोहनं जातम् इति तात्पर्य्यम् ॥ १३१ ॥

गुरोरिति। इमां भैमीं भणत् वर्णयत् गुरोः बृहस्पतेः अथ

आख्यातुमक्षिव्रजसर्वपीतां भैमीं तदेकाङ्गनिखातदृक्षु।
गाथासुधाश्लेषकलाविलासैरलञ्चकाराननचन्द्रमिन्द्रः॥१३३॥
स्मितेन गौरी हरिणीदृशेयं वीणावती सुस्वरकण्ठभासा।
हैमैव कायप्रभयाङ्गशेषैस्तन्वी मतिं क्रामति मे न कापि॥१३४

---

ओष्ठकण्ठम् ओष्ठः कण्ठश्च प्राण्यङ्गत्वादेकवद्भावः न लोकेत्यादिना षष्ठीप्रतिषेधात्कर्मणि द्वितीया। तयोः निरुक्तिगर्वच्छिदया वक्तृत्वाहङ्कारखण्डनेन षिद्भिदादिभ्योऽङ्। विनेतुः शिक्षयितुः ताच्छील्ये तृच्प्रत्ययः। निर्वक्तुम् अशक्यमस्या रूपनिर्माणमेवेति भावः। स्मरस्यैष श्रम ईदृग्रूपनिर्माणप्रयासो भवं संसारबन्धं विहाय मुक्तिगतानामनुतापनाय वृथा मुक्ताः स्म इति पश्चात्तापजननाय भवतीत्युत्प्रेक्षा तया किमुतान्येषामित्यर्थापत्तिर्व्यज्यते दमयन्तीबन्धरहितां मुक्तिं धिगिति भावः॥१३२॥

आख्यातुमिति। अथ इन्द्रो नलरूपधार्यपि निजशक्त्या अक्ष्णां व्रजेण सहस्रेण अक्षिभिः सर्वेषु अङ्गेषु पीताम् आदरदृष्टां भैमीं तस्याः भैम्याः एकस्मिन्नेवाङ्गे निखाते प्रवेशिते दृशौ येषां तेषु द्विनेत्रेषु मनुष्येषु विषये आख्यातुं तेभ्यः कथयितुं सर्वविशेषज्ञोऽहि अङ्गेषु सविस्तारं कथयतीति भावः। गाथासुधायाः श्लोकामृतस्य श्लेषकलायाः श्लेषालङ्कारविद्यायाः विलासैरन्यत्वामृतसम्पर्केण षोड़शभागविलासैश्च आननमेव चन्द्रः तम् अलञ्चकार श्लिष्टार्थेन श्लोकेन चाकथयदित्यर्थः॥१३३॥

तमेव श्लोकमाह स्मितेनेति। इयं भैमी स्मितेन गौरी गौरीसंज्ञा काचिद्देवाङ्गना सिता च गौरोऽरुणे सितपीत इति वैजयन्ती। दृशा दृक्शोभया हरिणी कुरङ्गी काचि-

इति स्तुवानः सविधे नलेन विलोकितः शङ्कितमानसेन ।
व्याकृत्य मर्त्त्योचितमर्थमुक्तेराखण्डलस्तस्य नुनोद शङ्काम् ॥१३५
स्वं नैषधादेशमहो विधाय कार्य्यस्य हेतोरपि नानलः सन् ।
किं स्थानिवद्भावमधत्त दुष्टं तादृक्कृतव्याकरणः पुनः सः ॥१३६

द्वेताङ्गना च सुस्वरकण्ठभासा सुमधुरकण्ठध्वनिसम्पत्त्या वीणावती वीणायुक्ताऽप्सरोविशेषश्च। कायप्रभया अङ्गकान्त्या हेम सुवर्णम् अप्सरोविशेषश्च। अङ्गेषु शेषैः अवशिष्टाङ्गैः कापि तन्वी उपमानार्हा स्त्री मे मतिं न च क्रामति बुद्धिं नारोहति तथा तन्वी मेनकाऽपि अप्सरोविशेषोऽपि मतिं क्रामति। एतस्या अङ्गानि दृष्ट्वा मेनकाप्सरा अपि स्मर्य्यते इति भावः। मर्त्त्यां मर्त्त्योचितार्थद्वयमाश्रित्यावादीत्यर्थः। अत्र एकस्या भैम्या गौरीत्यादिरूपणोल्लेखनादुल्लेखालङ्कारः। नानाधर्मबलादेकं यदि नानेव गृह्यते। नानारूपसमुल्लेखात् स उल्लेख इति स्मृत इति लक्षणात्। स च श्लेषप्रतिभोत्थापित इति सङ्करः। एतावतैव कविनापि श्लेषकलाविलासैरित्युक्तम् अस्य च गृहोत्थभेदात् कारकभेदाच्चोत्थानादत्र स्मितानुकारकभेदादुत्थानमिति सङ्क्षेपः ॥ १३४ ॥

इतीति। इति स्तुवानः आखण्डलः सविधे समीपे शङ्कितमानसेन अमर्त्त्योपचितार्थोपन्यासचकितचित्तेन नलेन विलोकितः सन् उक्तेः स्मितेनेत्यादिना वाक्यस्य मर्त्त्योचितमर्थं गौरीत्यादिशब्दानां सितत्वादिरूपं व्याकृत्य व्याख्याय तस्य नलस्य शङ्कां नुनोद ॥ १३५ ॥

अत्र कविराह स्वमिति। स इन्द्रः स्वं स्वकीयं नैषधस्य नलस्य आदेशं तदुक्तं दमयन्तीपरिवाक्यमेवाहोविधायावधीर्याहो इति पाठे नैषधादेशं दमयन्तीं प्रति नलप्रेषणं विधाय

इयमियमधिरथ्यं याति नैपथ्यमञ्जुः
विशति विशति वैदीमुर्वशी सेयमुर्व्याः।

---

तद्वैफल्ये पुनः कार्य्यस्य हेतोः दमयन्तीप्राप्तिकारणात्। षष्ठी हेतुप्रयोगे। नलो न भवतीत्यनलः, नञ्समासः। अनलो न भवतीति नानलो नल इत्यर्थः। न समानः सोऽपि सन्न-लरूपधारी च सन्नित्यर्थः। पुनः पश्चात्तादृक् तथाकृतं व्याक-रणं रागपारवश्योक्तस्यान्यथाविवरणं येन सोऽपि सन् प्रल-पन्नित्यर्थः। स्थानि प्रसक्तिमान् तद्वत् किं किमर्थम्। दुष्टं पापिष्ठभावं परस्त्रीवाञ्छामधत्त अहो! महेन्द्रस्यापि दुर्व्य-सनितेत्याश्चर्य्यम्। अन्यच्च तादृक्कृतव्याकरणो महेन्द्रव्या-करणकर्त्तापि इन्द्रो नैषधादेशं विधाय तद्रूपधारणेन तदा-देशो भूत्वा न अल् अनलेन् अनल् नानल् पूर्ववत्समासः। अलित्यर्थः तस्य कार्य्यार्थं किम् इति दुष्टमनल्विधाविति निषे-धादयं स्थानिवद्भावमधत्त अहो विरुद्धमित्यर्थः। अन्यच्च तादृक्कृतव्याकरणस्तथाकृतसंस्कारः स इत्ययं शब्दः स्वं स्वकीयमादेशं विधायेति खण्डविश्लेषः ल्यदाद्यत्वं प्राप्येत्यर्थः। नानलः कार्य्यस्य हेतोरल आश्रित हल् ज्यादिलक्षणस्यानि कार्य्यार्थं किम् इति दुष्टमल्विधाविति प्रतिषेधादनुपपन्नं स्थानिवद्भावमधत्त अहो विरुद्धमित्यर्थः। अक्तोक्तस्य विरोधा-दत्र प्राथमिकार्थेनैव समाधानेन विरोधाभासोऽलङ्कारः स च श्लेषप्रतिभोत्थापित इति सङ्करः, तृतीयार्थे नञ् इति विशेष्यस्य अपि सिद्धं तत् मृग्यं तदपि वाच्यस्य विरोधाभासस्यैव साध-कत्वात् वाच्यसिद्ध्यङ्गमित्यनुसन्धेयम्॥ १२६॥

इयमियमिति। नेपथ्येन प्रसाधनेन मञ्जुः मनोज्ञा उर्व्याः पृथिव्याः ऊर्वशी भूतलोर्वशी सेयं दमयन्ती इयम् इयमिति

इति जनजनितैः सानन्दनादैर्विजघ्ने
नलहृदि परभैमीवर्णनाकर्णनाप्तिः ॥१३७॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।
तर्केष्वप्यसमश्रमस्य दशमस्तस्य व्यरंसीन्महा-
काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥१३८॥

---

पुरोनिर्देशः, सम्भ्रमे द्विरुक्तिः। अधिरथ्यं रथ्यायां, विभक्त्यर्थेऽव्ययीभावः। याति रथ्यायां गच्छतीत्यर्थः। वेदीं स्वयंवरवेदिकां विशति विशति इत्येवं जनैः दर्शकजनैः जनितैः कृतैः सानन्दनादैः सहर्षघोषैः कर्तृभिः सा प्रस्तुता नलहृदि परेषां समीपस्थजनानां भैमीवर्णनस्य आकर्णनाप्तिः श्रवणसुखलाभो विजघ्ने विहतः। दमयन्तीसन्दर्शनेन सम्भ्रान्तानां लोकानां कलरवेण अन्यजनकृता दमयन्तीरूपवर्णना नलेन न श्रुता इति भावः। मालिनीवृत्तम् ॥१३७॥

श्रीहर्षमिति। तर्केष्वपीति। न केवलं कवितायामेवेत्यर्थः। गतमन्यत् ॥ १३८ ॥

---

## एकादशः सर्गः ।

तां देवतामिव मुखेन्दुलसत्प्रसादाम्
अक्ष्णा रसादनिमिषेण निभालयन्तीम् ।
लाभाय चेतसि धृतस्य वरस्य भीम-
भूमीन्द्रजा तदनु राजसभां बभाज ॥ १ ॥

तामिति । तदनु तस्मादानन्दनाटोत्थानादनन्तरमित्यर्थः अनुशब्दस्य लक्षणार्थे कर्मप्रवचनीयत्वात् तद्योगे द्वितीया । भीमभूमीन्द्रजा भैमी राज्ञां मुखेन्दुषु देवताया मुखेन्दौ च लसन् प्रसादः प्रसन्नता पक्षे काङ्क्षितं वरय इत्यादि अनुग्रहवचनं यस्यास्तां, प्रसादोऽनुग्रहे काव्यप्राणस्वास्थ्यप्रसन्नताष्विति विश्वः । तथा रसात् अनुरागात् अनिमिषेण निमेषशून्येन अक्ष्णा चक्षुषा निभालयन्तीं ईक्षमाणां दर्शनेक्षणनिध्याननिर्वर्णननिभालनमिति वैजयन्ती । भल निरूपणे इति धातोश्चौरादिकाच्छतरि ङीप् । यद्यपि प्रायेणायं धातुरात्मनेपदी यदाह भट्टमल्लः, निभालयत ईक्षत इति तथापि अस्य भुवादिषु अपि पाठादुभयत्र पठितादुभयपदो इति मतमाश्रित्यायं परस्मैपदप्रयोग इति द्रष्टव्यम् । पक्षे स्वभावतो देवतानाम् अनिमिषेण चक्षुषा रसात् साधकस्य भक्त्यातिशय्यात् भक्तं जनं पश्यन्तीम् । तां राजसभां सभाराजामनुष्यपूर्वेत्यत्र पर्य्यायाणामेवेष्यत इति नियमात्सभाया अनपुंसकत्वम् । देवतामिव चेतसि धृतस्य चिन्तितस्य वरस्य वोढुर्देवदेयार्थस्य च । वरो ना रूपजामात्रोर्देवादेरीप्सिते वृतौ इति वैजयन्ती । लाभाय प्राप्त्यर्थं बभाज प्राप सिषेवे च । अस्मिन् सर्गे वसन्ततिलकावृत्तं, लक्षणमुक्तम् ॥ १ ॥

तन्निर्मलावयवभित्तिषु तद्विभूषा-
रत्नेषु च प्रतिफलन्निजदेहदम्भात् ।
दृष्ट्वा परं न हृदयेन न केवलं तैः
सर्वात्मनैव सुतनौ युवभिर्ममज्जे ॥ २ ॥
द्यामन्तरा वसुमतीमपि गाधिजन्मा
यद्यन्यमेव निरमास्यत नाकलोकम् ।
चारुः स यादृगभविष्यदभूद्विमानैः
तादृक् तदभ्रमवलोकितुमागतानाम् ॥ ३ ॥

---

तदिति । तैर्युवभिः सुतनौ दमयन्त्यां दृष्ट्वा परं दृष्ट्वैव न केवलं ममज्जे न मग्नं भावे लिट् । हृदयेन केवलं हृदयेनैवापि न ममज्जे किन्तु निर्मलासु अवयवभित्तिषु गण्डस्थलादिषु तस्या विभूषारत्नेषु च प्रतिफलतां निजानां देहानां दम्भात् तत्क्षण-प्रतिफलितशरीरव्याजात् कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे इत्यमरः । सर्वात्मना एवा सर्वाङ्गेनैव ममज्जे दृष्टमनोमज्जनं तावदास्तां किन्तु प्रतिबिम्बव्याजेन सर्वाङ्गमज्जनं जातमिति सापह्नवोत्प्रेक्षा ॥ २ ॥

द्यामिति । गाधेर्जन्म यस्य स गाधिजन्मा विश्वामित्रः अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपद इति वामनः । द्यां वसुमतीमपि अन्तरा स्वर्गभूम्योः अन्तराले अन्तरान्तरेण युक्त इति द्वितीया । अन्यमेव नाकलोकं स्वर्गान्तरं निरमास्यत यदि निर्मिमीते चेत् माङः क्रियातिपत्तौ लृङ् । स नाकलोको यादृक् चारुः अभविष्यत् भवेत् पूर्ववल्लृङ् । तद-भ्रम् अन्तरिक्षं कर्तृ स्वयंवरमवलोकितुम् आगतानां देवानां विमानैः तादृक् तथा चारु अभूत् । स्वयंवरसभाया ऊर्द्ध्वमा-काशमण्डलं देवानां विमानैः अन्तरीक्षसृष्टस्वर्गसदृशं शुशुभे

कुर्वद्भिरात्मभवसौरभसम्प्रदानं
भूपालचक्रचलचामरमारुतौघम् ।
आलोकनाय दिवि सञ्चरतां सुराणां
तत्रार्चनाविधिरभूदधिवासधूपैः ॥ ४ ॥

तत्रावनीन्द्रचयचन्दनचन्द्रलेप-
नेपथ्यगन्धमयगन्धवहप्रवाहम् ।
आलोभिरापतदनङ्गशरानुसारी
संरुध्य सौरभमगाहत भृङ्गवर्गः ॥ ५ ॥

---

इति भावः। अत्राभ्रस्यान्तराले नाकलोकासम्बन्धेऽपि सम्भावनया तत्सम्बन्धोक्तेरतिशयोक्तिभेदः अभूतोपमेति केचित् ॥ ३ ॥

कुर्वद्भिरिति। भूपालचक्रस्य राजलोकस्य चलानां चलतां चामराणां मारुतस्यौघं प्रवाहम् आत्मभवसौरभस्य स्वजन्यगन्धस्य सम्प्रदानं सम्प्रदानपात्रं कुर्वद्भिः स्वसौरभं तत्र सङ्क्रामयद्भिरित्यर्थः। अधिवासधूपैः वासनार्थधूपैः आलोकनाय स्वयंवरदर्शनाय दिव्याकाशे सञ्चरतां सुराणां देवानां तत्र स्वयंवरे अर्चनाविधिः पूजाकृत्यम् अभूत्। अत्राधिवासधूपस्य सुरार्चनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिभेदः ॥ ४ ॥

तत्रेति। तत्र स्वयंवरे आलोभिः श्रेणीभिः श्रेणीसम्बन्धात् आपततः आगच्छतः अनङ्गशरानभुसरतीति तदनुसारी तत्सदृशो भृङ्गवर्गः अवनीन्द्रचयस्य राजलोकस्य चन्दनं चन्द्रः कर्पूरश्च। अथ कर्पूरमस्त्रियां घनसारः चन्द्रसंज्ञ इत्यमरः। तयोर्लेपस्तमेव नेपथ्यम् अलङ्कारस्तस्य यो गन्धस्तन्मयस्य तत्प्रचुरस्य गन्धवहस्य वायोः प्रवाहं संरुध्य मध्ये मार्गमावृत्य सौरभम् आमोदम् अगाहत विलोड़ितवान्। सौगन्ध्यलोभात्

उत्तुङ्गमङ्गलमृदङ्गनिनादभङ्गी-
सर्वानुवादविधिबोधितसाधुमेधाः ।
सौधस्रजः प्लुतपताकतयाभिनिन्युः
मन्ये जनेषु निजताण्डवपण्डितत्वम् ॥ ६ ॥

सम्भाषणं भगवती सदृशं विधाय
वाग्देवता विनयबन्धुरकन्धरायाः ।
ऊचे चतुर्दशजगज्जनतानमस्या
तत्राश्रिता सदसि दक्षिणपक्षमस्याः ॥ ७ ॥

---

भ्रमराः श्रेणीभूताः सन्तः सभायां विचरन्ति स्म इति भावः ॥५॥

उत्तुङ्गेति । उत्तुङ्गाः अतितारा: ये मङ्गलमृदङ्गनिनादाः माङ्गलिकविवाहमुरजध्वनयः तद्भङ्गीनां तत्प्रकाराणां सर्वानुवादविधिना प्रतिध्वनिरूपेण कृत्स्नप्रत्युच्चारणेन बोधिता निवेदिता साध्वी उत्कृष्टा मेधा धारणाशक्तिः यासां ताः तथोक्ताः । धीर्धारणावती मेधेत्यमरः । परोक्तसर्वविशेषानुवादस्य मेधाकार्य्यत्वात् तस्याः तल्लिङ्गत्वमिति भावः । सौधस्रजः प्रासादपङ्क्तयः प्लुतपताकतया चलत्पताकतया जनेषु सभास्थितेषु विषये निजताण्डवपण्डितत्वं स्वस्य नृत्यकौशलं ताण्डवं नटनं नाट्यमित्यमरः । अभिनिन्युः व्यञ्जयन्ति स्म मन्ये वाक्यार्थः कर्म । मृदङ्गप्रतिध्वानात्पताकाचलनाच्च नर्त्तकीवत् वाक्यानुवादं हस्ताभिनयञ्चक्रुरिवेत्युत्प्रेक्षा । सौधपंक्तिषु नर्त्तकीव्यवहारसमारोपात् समासोक्तिः अलङ्कारश्च ॥६॥

सम्भाषणमिति । चतुर्दशानां जगतां समाहारश्चतुर्दशजगत् तत्र जनतायाः जनसमूहानां नमस्या नमस्कार्य्या, नमोवरिव इति क्यचि धातुसंज्ञायामचो यत् क्यस्य विभाषेति क्यचो लोपः । भगवती वाग्देवता सरस्वती तत्र सदसि

अभ्यागमन्मखभुजामिह कोटिरेषा
येषां पृथक्कथनमब्दशतानि पाति।
अस्यां वृणीष्व मनसा परिभाव्य कञ्चित्
यं चित्तवृत्तिरनुधावति तावकीना॥ ८॥
एषां त्वदीक्षणरसादनिमेषतैषा
स्वाभाविकानिमिषतामिलिता यथाभूत्।
आस्ये तथैव तव नन्वधरोपभोगैः
मुग्धे! विधावमृतपानमपि द्विधास्तु॥ ९॥

---

विनयेन बन्धुरकन्धरायाः नम्रग्रीवायाः, बन्धुरौ नम्रविषमा-विति वैजयन्ती। अस्याः भैम्याः दक्षिणपक्षं दक्षिणपार्श्वं अथच अनुकूलपक्षं श्रिता आश्रिता पूज्यत्वाद्दक्षिणपार्श्वस्थिता सती सदृशं तत्कालोचितं सम्भाषणं विधाय आयच्छ वत्से! पश्येत्यादि वाक्यमुक्त्वा ऊचे वक्ष्यमाणमुवाच। दक्षिणपक्ष-मित्यनेन दमयन्तीपक्षपातित्वं सूचितम्॥ ७॥

अभीति। हे वत्से! इह स्वयंवरे मखभुजां देवानां एषा कोटिः अनन्तसङ्ख्या अभ्यागमत् अभ्यागता येषां मखभुजां पृथक् प्रत्येकमेव कथनम् अब्दानां वत्सराणां शतानि अतिपतति अतिक्रामतीति तथोक्तं तावता कालेनापि वक्तुमशक्येत्यर्थः। अस्यां सुरकोट्यां मनसा परिभाव्य आलोच्य कञ्चित् वृणीष्व यं सुरं तवेयं तावकीना, युष्मदस्मदोरन्यतरस्यां खञ् चेति खञ्, तवकममकावेकवचन इति तवकादेशः। त्वदीया चित्त-वृत्तिः अनुधावति अनुयाति तं वृणीष्व स्वीकुरु इत्यर्थः॥ ८॥

एषामिति। एषां सुराणां त्वदीक्षणे रसात् अनुरा-गात् एषा प्रत्यक्षपरिदृश्यमाना अनिमेषता निमेषराहित्यं यथा स्वाभाविक्या। स्त्रियाः पुंवदित्यादिना पुंवद्भावः।

एषां गिरिः सकलरत्नफलस्तरुः सः
प्रागदुग्धभूमिसुरभेः खलु पञ्चशाखः।
मुक्ताफलं फलनसान्वयनाम तन्वन्
आभाति विन्दुभिरिव छुरितः पयोभिः ॥१०॥

---

न निमिषतीत्यनिमिषा इगुपधलक्षणं कः। तेषां भावस्तत्ता तया मिलिता सङ्गता सती द्विधा द्विगुणिता अभूत् तथैव ननु अयि। मुग्धे ! सुन्दरि ! विधौ चन्द्रे अमृतपानमपि तवास्ये आस्यचन्द्रे अधरोपभोगैः अधरामृतपानैः मिलितं सत् द्विधास्तु द्विगुणितमस्त्वित्यर्थः। स्वभावतो निमेषरहिता देवा यथा त्वद्दर्शनकार्य्येण निमेषशून्या जाता तथा चन्द्रामृतपायिनोऽपि त्वदधरामृतपायिनो भवन्तु इति भावः। अत्र निमिषत्वामृतपानयोर्द्वैविध्यासम्बन्धोक्तेरतिशयोक्तिः ॥ ९ ॥

एषामिति। सकलानि रत्नान्येव फलानि यस्य स सर्वरत्नप्रसूतिरित्यर्थः। फलनं धारकस्येष्टसम्पादनं फलनिष्पत्ताविति धातोर्ल्युट्। तेन सान्वयम् अन्वर्थं नाम यस्य तन्मुक्ताफलं तन्वन् तादृङ् मुक्ताफलं कुर्वन् एषां सुराणां सम्बन्धी स प्रसिद्धस्तरुः कल्पवृक्षः प्राक् पुरा दुग्धा भूमिरेव सुरभिः गौः गोरूपधरा भूमिर्येन। तदुक्तम्, प्रमाणं श्रूयते दुग्धा पुनर्दिव्यैर्वसुन्धरा। ओषधीश्चैव भास्वन्ति रत्नानि विविधानि च। वत्सस्तु हिमवानासीत् दोग्धा मेरुर्महागिरिः॥ इति। तस्य गिरेर्मेरोः सम्बन्धि पयोभिः चीररूपैः विन्दुभिः छुरितः सर्वतो व्याप्तः पञ्चशाखः शाखापञ्चकविशिष्टः अथ च पाणिरिव आभातीत्युत्प्रेक्षा। पञ्चशाखः शयः पाणिरित्यमरः। दोग्धुः पाणिः दुग्धविन्दुभिर्दिग्धो भवति प्रसिद्धिः सुरवर्णेन कल्पवृक्षः तथा मेरुस्ते हस्तगामी भविष्यतीति भावः ॥ १० ॥

वक्त्रेन्दुसन्निधिनिमीलितदलारविन्द-
द्वन्द्वभ्रमक्षममथाञ्जलिमात्ममौलौ ।
कृत्वापराधभयचञ्चलमीक्षमाणा
सान्यत्र गन्तुममरैः कृपयान्वमानि ॥ ११ ॥

तत्तद्विरागमुदितं शिविकाधरस्थाः
साक्षाद्विदुः स्म न मनागपि यानधुर्य्याः ।
आसन्ननायकविषण्णमुखानुमेय-
भैमीविरक्तचरितानुमया नु जग्मुः ॥ १२ ॥

---

वक्त्रेन्द्विति । अथ सरस्वतीवाक्यानन्तरं वक्त्रेन्दोः सन्निधिना सन्निधानेन निमिलीनि सङ्कुचन्ति दलानि ययोस्तयोः अरविन्दयोर्द्वन्द्वे भ्रमक्षमं भ्रान्तिजननशक्तम् अञ्जलिम् आत्ममौलौ स्वमूर्ध्नि कृत्वा अपराधात् अवरणाद्धेतो यद्भयं सुरेभ्यस्तेन चञ्चलं यथा तथा ईक्षमाणा देवान् पश्यन्ती सा भैमी अमरैः कृपया अन्यत्र गन्तुम् अन्वमानि अनुमता प्रणिपातप्रसाद्याः खलु महान्त इति भावः । अत्राञ्जलौ वक्त्रेन्दुसन्निधिसङ्कुचितारविन्दयुगलभ्रान्तिवर्णनाद्रूपकानुप्राणितो भ्रान्तिमदलङ्कारः इति सङ्करः । कविसम्मतसादृश्याद् वस्त्वन्तरप्रतिबिम्बनं भ्रान्तिमानिति लक्षणात् ॥ ११ ॥

तत्तदिति । शिविकायाः चतुरस्रायाः अधरस्था अधःस्थिताः अतएव ते यानस्य धुर्य्याः धूर्वहाः । शिवभागवत्समासो धुरो यड्ढकाविति यत्प्रत्ययः । उदितम् उत्पन्नं तत्तद्विरागं तस्याः भैम्यास्तेषु तेषु नायकेषु विषये विरागम् अपरागं मनाक् ईषदपि साक्षात् प्रत्यक्षं न विदुः न विन्दन्ति स्म विदो लटो वेति सेर्जुसादेशः लट् स्म इति भूते लट् । किन्तु आसन्नानां पुरोवर्त्तिनां नायकानां विषण्णैः अवसन्नैर्मुखैरनुमेयानां भैम्या विर-

रक्षःस्वरक्षणमवेक्ष्य निजं निवृत्तो
विद्याधरेष्वधरतां वपुषैव भैम्याः ।
गन्धर्वसंसदि न गन्धमपि स्वरस्य
तस्या विमृश्य विमुखोऽजनि यानिवर्गः ॥१३॥

दीनेषु सत्स्वपि कृताफलवित्तरक्षैः
यक्षैरदर्शि न मुखं त्रपयैव तस्याम् ।
ते जानते स्म सुरशाखिपतिव्रतां किं
तां कल्पवीरुधमधिक्षिति नावतीर्णाम् ॥ १४ ॥

---

कृचरितानाम् अपरक्तचेष्टितानामनुमया अनुमानेन नु एव आतश्चोपसर्ग इत्यङ् । जज्ञुः अज्ञासिषुः नायकमुखचेष्टया भैमोवैराग्यमनुमितवन्त इत्यर्थः ॥ १२ ॥

रक्षःस्विति । यानं वाहनमस्तीति यानिनः शिविका-वाहिनः तेषां वर्गः समूहः रक्षःसु राक्षसेषु निजं स्वकीयम् अरक्षणं विनाशनम् अवेक्ष्य विविच्य तेषां हिंस्रत्वात् तेषु गमनमनुचितं निश्चित्येत्यर्थः । निवृत्तः तेभ्यः पराङ्मुखोऽभूत् । राक्षसानां समीपगमने ते यदि अस्मान् भक्षयेयुःइति भयेन तेषां समीपेऽपि न जग्मुः इति भावः । विद्याधरेषु देवयोनि-भेदेषु भैम्याः भैमीतः पञ्चमी विभक्ते : इति पञ्चमी । वपुषा एव अधरतां निकृष्टत्वं विमृश्य निश्चित्य तथा गन्धर्वाणां संसदि सभे तस्याः भैम्याः स्वरस्य न गन्धमपि लेशस्याप्यभावं नञर्थेन नशब्देन सुप्सुपेति समासः । गन्धो लेशे महीगुणे इति वैजयन्ती । विमृश्य विमुखोऽजनि पराङ्मुखो जातः जनेः कर्त्तरि लुङ् दीपजनेत्यादिना कर्त्तरि चिणादेशः ॥ १३ ॥

दीनेष्विति । दीनेषु दरिद्रेषु सत्सु विद्यमानेषु अपि कृता अफला निष्फला वित्तरक्षा धनगुप्तिः यैस्तैः कृपणैर्यक्षैः

जन्यास्ततः फणभृतामधिपं सुरौघात्
माञ्जिष्ठमञ्जिमविगाहिपदौष्ठलक्ष्मीम् ।
तां मानसं निखिलवारिभरात् नवीनाः
हंसावलीमिव घना गमयाम्बभूवुः ॥ १५ ॥
यस्या विभोरखिलवाङ्मयविस्तरोऽयम्
आख्यायते परिणतिर्मुनिभिः पुनः सा ।

त्रपयैव तस्यां भैम्यां विषये मुखं न अदर्शि न दर्शितं दृशेर्ण्य-न्तात्कर्मणि लुङ् । तथाहि ते यज्वास्तां दमयन्तीम् अधिक्षिति क्षितौ विभक्त्यर्थेऽव्ययीभावः । अवतीर्णाम् उत्पन्नां सुरशाखि-पतिव्रतां कल्पवृक्षस्वरूपक-नलपत्नीं कल्पवीरुधं कल्पलतां न जानते स्म किं ? ज्ञातवन्त एव ? अस्या वदान्यतया तेषां युक्ता लज्जेति कारणात्कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः । ततः तेषां निधिगोपकानां कुतो वरणवार्त्ताऽपीति भावः ॥ १४ ॥

जन्या इति । ततोऽनन्तरं जनीं वधूं वहन्तीति जन्याः वधूभृत्याः जन्या भृत्या नवोढ़ाया इति केशवः । संज्ञायां जन्या इति यत्प्रत्ययान्तो निपातः । मञ्जिष्ठायाः रागद्रव्यवि-शेषस्य इमं माञ्जिष्ठं तस्य मञ्जिमानं रामणीयकं विगाहत इति तद्विगाहिनी पदौष्ठस्य पदयोरोष्ठयोश्च लक्ष्मीः शोभा यस्या-स्तां हंसावल्यामपि योज्यम् । ओत्वोष्ठयोः समासे वा पर-रूपं वक्तव्यम् । तां भैमीं नवीनाः घनाः [illegible] हंसावलीं हंस-श्रेणीं निखिलात् वारिभरात् जलप्रवाहात् मानसं मानसाख्यं सर इव सुरौघात् अपादानात् तं विहायेति ल्यब्लोपे पञ्चमी । जलधरसमये मानसं यान्ति हंसाः इति कविसमयप्रसिद्धिः । फणभृतामधिपं वासुकिं गमयाम्बभूवुः निन्युः ॥ १५ ॥

यस्या इति । अयम् अखिलवाङ्मयविस्तरः शब्दप्रपञ्चः मुनि-

उद्गत्वरामृतकरार्द्धपरार्द्ध्यभाला
बालामभाषत सभासततप्रगल्भा ॥ १६ ॥

आश्लेषलग्नगिरिजाकुचकुङ्कुमेन
यः पट्टसूत्रपरिरम्भणशोणशोभः।
यज्ञोपवीतपदवीं भजते स शम्भोः
सेवासु वासुकिरयं प्रसितः सितश्रीः ॥ १७ ॥

पाणौ फणी भजति कङ्कणभूयमैशे
सोऽयं मनोहरमणीरमणीयमूर्त्तिः।
कोटीरबन्धनधनुर्गुणयोगपट्ट-
व्यापारपारगममुं भज भूतभर्त्तुः ॥ १८ ॥

---

भिर्व्यासादिभिः विभोः महाशक्तेर्यस्याः देव्याः सरस्वत्याः परिणतिः रूपान्तरं आख्यायते सभासु सततप्रगल्भा सा देवी, उद्गत्वरम् उदित्वरं गत्वरश्चेति करबन्तो निपातः। तस्य अमृतकरस्य इन्दोरर्द्धमिव परार्द्ध्यमुत्कृष्टं भालं ललाटं यस्यास्तां बालां भैमीं पुनः अभाषत उक्तवती ॥ १६ ॥

आश्लेषेति। यो वासुकिः आश्लेषात् आलिङ्गनात् लग्नेन सक्तेन गिरिजायाः पार्वत्याः कुचयोः कुङ्कुमेन पट्टसूत्रस्य परिरम्भणात् परिवेष्टनादिव शोणशोभः अरुणकान्तिः सन् शम्भोर्यज्ञोपवीतस्य पदवीं पदं भजते सेवासु प्रसितस्तत्परः तत्परं प्रसितासक्तावित्यमरः। सितश्रीः शुभ्रकान्तिः स वासुकिरयमिति पुरोवर्त्तिनिर्देशः ॥ १७ ॥

पाणाविति। उच्चैः उन्नतः फणी वासुकिः ऐशे ईशसम्बन्धिनि पाणौ मनोहरैः मणिभिः रमणीयमूर्त्तिः कङ्कणभूयं कङ्कणत्वं भुवो भाव इति क्यप्। भजति भूतभर्त्तुः कोटीरबन्धनं कपर्दबन्धनं धनुषो गुणो मौर्वी योगपट्टश्च तेषां व्यापारस्य

ह्रीसंकुचत्फणगणादुरगप्रधानात्
तां राजसङ्घमनयन्त विमानवाहाः।
सन्ध्यानमद्दलकुलात् कमलाद् विनीय
कह्लारमिन्दुकिरणा इव हासभासम्॥ २३॥

देव्याभ्यधायि भव भीरु! धृतावधाना
भूमीभुजस्त्यजत भीमभुवो निरीक्षाम्।
आलोकितामपि पुनः पिबतां दृशैताम्
इच्छापगच्छति न वत्सरकोटिभिर्वः॥ २४॥

---

विमानवाहाः दमयन्तीशिविकावाहिनः, कर्मण्यण्। प्रतीपपवनः प्रतिकूलवायुः एव यत् अशकुनम् अद्वानिकचिह्नं तस्मात् हेतोः न जग्मुः दूरत एव परिजह्रुरित्यर्थः। अतएव हाहेति खेदे॥ २२॥

ह्रीति। विमानवाहाः शिविकावाहिनः तां दमयन्तीं ह्रिया संकुचन् फणगणो यस्य तस्मात् उरगप्रधानात् उरगराजात् वासुकेः विनीय अपनीय इन्दुकिरणाः हासभासं विकासलक्ष्मीं सन्ध्यायां नमद्दलकुलात् संकुचत्पत्तचयात् कमलात् पद्मात् विनीय अपनीय कह्लारं सौगन्धिकमिव राजसङ्घं नृपसमूहम् अनयन्त प्रापयन्, ङित्वादात्मनेपदं नीवह्योर्हरतेश्चेति वचनाद् द्विकर्मकत्वम्। उपमालङ्कारः॥ २३॥

देव्येति। देव्या वाग्देव्या सरस्वत्या अभ्यधायि अभिहितम् किं तदाह। हे भीरु! भयशीले! भीरुशब्दादूङ् इत्यूङ्प्रत्यये सम्बुद्धौ नदीह्रस्वः। धृतमवधानं यया सा भव अवहिता शृण्वित्यर्थः। हे भूमिभुजः! भूपाः! यूयञ्च भीमभुवः भैम्याः निरीक्षाम् ईक्षणं, गुरोश्च हल इति स्त्रियामप्रत्ययः। त्यजत मा कुरुत, कुतः? युष्माकं पश्यतां दमयन्ती

लोकेशकेशवशिवानपि यश्चकार
शृङ्गारसान्तरभृशान्तरशान्तभावान् ।
पञ्चेन्द्रियाणि जगतामिषुपञ्चकेन
संक्षोभयन् वितनुतां वितनुर्मुदं वः ॥ २५ ॥
पुष्पेषुणा भुवममूनिषुवर्षजन्म-
झङ्कारमञ्जुबलभञ्जितशान्तिशक्तीन् ।
शृङ्गारसर्गरसिकद्व्यणुकोदरि ! त्वं
ह्रीपाधिपान् नयनयोर्नय गोचरत्वम् ॥ २६ ॥

---

ह्रीपारवश्यात् युष्मान् प्रति दर्शनं न दास्यति अतो नैनां विलोकयत इति भावः । आलोकिताम् ईक्षितां दृष्टामपि एतां पुनर्दृशा पिबताम् आस्थया पश्यतां वो युष्माकं वत्सरकोटिभिः अनन्ताब्दैरपि इच्छा दर्शनेच्छा न अपगच्छति अतो महाक्य-मवहिताः शृणुतेत्यर्थः ॥ २४ ॥

लोकेशेति । योऽनङ्गो लोकेशकेशवशिवान् ब्रह्मविष्णु-महेशानपि शृङ्गारेण शृङ्गाररसेन सान्तरः सावकाशो विरलो भृशो गाढः आन्तरः आभ्यन्तरः शान्तभावः शान्तरसो येषां तान् रागजर्जरितवैराग्यान् चकार। पञ्चानां सङ्घः पञ्चकं, सङ्ख्यायाः संज्ञा सङ्घसूत्राध्ययनेषु इति कन्प्रत्ययः । इषूणां पञ्चकेन जगतां पञ्चेन्द्रियाणि चक्षुरादीनि सङ्क्षोभयन् व्याकु-लयन् स वितनुः अनङ्गो वो युष्माकं मुदं वितनुतां विस्तारयतु विश्वविजयिनो भगवतः कामदेवस्य प्रसादः कस्य न श्लाघ्य इति भावः ॥ २५ ॥

पुष्पेषुणेति । रसोऽस्यास्तीति रसिकम्, अत इनिठना-विति ठन्प्रत्ययः । द्व्यणू कारणत्वेनास्यास्तीति द्व्यणुकम् अणुद्वयारब्धद्रव्यं, शैषिकः कप्रत्ययः । शृङ्गारस्य सर्गे निर्माणे

स्वादूदके जलनिधौ सवनेन सार्द्धं
भव्या भवन्तु तव वारिविहारलीलाः ।
द्वीपस्य तं पतिममुं भज पुष्करस्य
निस्तन्द्रपुष्करतिरस्करणक्षमाक्षि ! ॥ २७ ॥
सावर्त्तभावमवदद्भुतनाभिकूपे !
स्वर्भौममेतदुपवर्त्त नमात्मनैव ।
स्वाराज्यमर्जयसि न श्रियमेतदीयाम्
एतद्गृहे परिगृहाण शचीविलासम् ॥ २८ ॥

---

रमितं प्रवृत्तं यत् द्व्यणुकं तदेवोदरं यस्यास्तस्याः सम्बुद्धिः । द्व्यणुकादिप्रक्रमेण कार्य्यद्रव्यारम्भ इति तार्किकाः । शृङ्गारभावोद्दीपका अतिकृशोदरीति भावः । त्वं पुष्पेषुणा भुवं सत्यम् इषुवर्षे बाणमोचकाले जप्तः उच्चारितो यो हुङ्कारः कोपप्रयुक्तः स एव मन्त्रस्तस्य बलेन सामर्थ्येन भस्मिता भस्मीकृता; तत्करोतीति ण्यन्तात्कर्मणि क्तः । शान्तिशक्तिः इन्द्रियनिग्रहसामर्थ्यं येषां तान् अमून् द्वीपाधिपान् पुष्करादिद्वीपपालकान् राज्ञः नयनयोर्गोचरत्वं दृष्टिविषयत्वं नय पश्येत्यर्थः ॥ २६ ॥

स्वाद्विति । हे निस्तन्द्रपुष्करतिरस्करणक्षमाक्षि ! उन्निद्रपद्मविजयसमर्थनेत्रे ! कमलायताक्षीत्यर्थः पुष्करस्य पुष्कराख्यस्य द्वीपस्य पतिं सवनम् अमुं भज वृणीष्व । ततः स्वादूदके जलनिधौ मधुरोदकसमुद्रे सवनेन सवनाख्येन राज्ञा सार्द्धं तव भव्याः मनोहराः वारिविहारलीलाः जलक्रीडाविनोदाः भवन्तु सन्तु ॥ २७ ॥

सावर्त्तेति । रोम्णाम् अम्भसाञ्च भ्रमः आवर्त्तः आवर्त्तेन सह वर्त्तमानः सावर्त्तः तेन सावर्त्तभावेन

देवः स्वयं वसति तत्र किल स्वयम्भूः
न्यग्रोधमण्डलतले हिमशीतले यः ।
स त्वां विलोक्य निजशिल्पमनन्यकल्पं
सर्वेषु कारुषु करोतु करेण दर्पम् ॥ २८ ॥
न्यग्रोधनादिव दिवः पतदातपादेः
न्यग्रोधमात्मभरधारमिवावरोहैः ।

---

मावर्त्तत्वेन भवन् अद्भुतो विस्मयो यस्मिन् स चित्रोयमाणो नाभिरेव कूपो यस्याः सा तस्याः सम्बुद्धिः सावर्त्तत्वादि कूपे सावर्त्तत्वं चित्रमिति भावः। एतस्य राज्ञः सवनस्य उपवर्त्तनं देशः, नीवृज्जनपदौ देशविषयौ तूपवर्त्तनमित्यमरः। आत्मनैव भौमं भूमिभवं स्वः स्वर्गः एतदीयां श्रियं स्वाराज्यं स्वर्गराज्यं द्रोरिति रेफलोपे द्रलोपे पूर्वस्य दीर्घोऽण इति दीर्घः। नार्जयसीति काकुः अर्जयस्येवेत्यर्थः। एतद्गृहे शचीविलासं शचीसौभाग्यं परिगृहाण स्वीकुरु एतद्भूरेव स्वर्गः एतद्राज्यमेव स्वाराज्यम् अयमेवेन्द्रस्त्वमेवेन्द्राणी भवेति रूपकालङ्कारः ॥ २८ ॥

देव इति। तत्र पुष्करद्वीपे हिमवच्छीतले न्यग्रोधः वटवृक्षः, न्यग्रोधो बहुपादटः इत्यमरः। तस्य मण्डले मण्डलाकारे तले अधस्तले यः स्वयम्भूः ब्रह्मा देवः स्वयं साक्षाद्वसति किल खलु? स देवः ईषदसमाप्तमन्यदन्यकल्पम् अन्यसदृशं तन्न भवतीत्यनन्यकल्पम् अनन्यसाधारणम् ईषदसमाप्तौ कल्पप्रत्ययः। निजशिल्पं स्वनिर्माणं त्वां विलोक्य सर्वेषु कारुषु शिल्पिषु मध्ये करेण करकौशलेन दर्पं करोतु गर्वङ्करोतु इत्यर्थः। स्रष्टुः कीर्त्तिकरं ते रूपनिर्माणशिल्पमिति भावः ॥ २९ ॥

तं तस्य पाकिफलनीलदलद्युतिभ्यां
द्वीपस्य पश्य शिखिपत्रजमातपत्रम्॥ ३०॥
न श्वेततां चरतु वा भुवनेषु राज-
हंसस्य न प्रियतमा कथमस्य कीर्त्तिः।
चित्रन्तु तद्विशदिमाद्वयमादिशन्ती
क्षीरञ्च नाम्बु च मिथः पृथमातनोति॥ ३१॥

---

न्यग्रोधनादिति। दिवः अन्तरीक्षात् पततः आपततः आतपादेः आदिशब्दात् वर्षादेश्च न्यग्भूय अधःस्थित्वा रोधनान्निवारणादिव न्यग्रोधं न्यग्रोधशब्दवाच्यमित्युत्प्रेक्षेयम्। उत्तरार्द्धे वक्ष्यमाणातपत्रत्वोत्प्रेक्षोपयोगिनी वस्तुतस्तु न्यग्रोधः पचाद्यच् हकारस्य धत्वनिपातनात्साधुः तथा अवरोहन्तीत्यवरोहाः अधोमुखाः शाखाः शाखाशिफावरोहः स्यादित्यमरः। तैरवष्टम्भैः आत्मनो भारं शाखाभारं धरतीति तद्धारकमिव स्थितमित्युत्प्रेक्षा। धरतेः कर्मण्यण्प्रत्ययः। किञ्च पाकः एषामस्तीति पाकिनां पक्वानां फलानां नीलदलानां नीलपलाशानाञ्च द्युतिभ्यां रक्तश्यामकान्तिभ्यां निमित्तेन तस्य द्वीपस्य पुष्करद्वीपस्य सम्बन्धि शिखिपत्रजं मयूरपिच्छोद्भवं तत् प्रसिद्धम् आतपत्रं तद्वत् स्थितमिति निमित्तगुणजातिस्वरूपोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या अस्याश्च प्रथमोत्प्रेक्षयाऽङ्गाङ्गिभावेन सजातीयसङ्करः। द्वितीयया सजातीयसंसृष्टिः। वटवृक्षमिति शेषः पश्य एतद्राजवरणादेवंविधोऽद्भुतदर्शनोत्सवलाभो भविष्यतीति भावः॥ ३०॥

नेति। राजहंसस्य नृपश्रेष्ठस्य कलहंसस्य च राजहंसो नृपश्रेष्ठे कादम्बकलहंसयोरिति विश्वः। अस्य सवनस्य प्रियतमा इष्टतमा तत्कान्ता वरटा च कीर्त्तिः कथं न श्वेततां न धव-

शूरेऽपि सूरिपरिषत्प्रथमार्चितेऽपि
शृङ्गारभङ्गिमधुरेऽपि कलाकरेऽपि।
तस्मिन्नवद्यमियमाप तदेव नाम
यत् कोमलं न किल तस्य नलेति नाम ॥ ३२ ॥

---

लोभवतु अपितु श्वेतैव भवतु, श्वेतवर्ण इति घृतादौ पश्यते। तस्माल्लोट्। भुवनेषु लोकेषु सलिलेषु च,भुवनं सलिलं लोक इति विश्वः। कथं वा न चरतु किन्तु विशदिमाद्वयं धावल्याद्वैतम् आदिशन्ती क्षीरं चाम्बु च मिथोऽन्योन्यं पृथग्विभक्तं नातनोतीति न करोति यत्तच्चित्रं हंसानां क्षीरनीरविवेकस्य जातिधर्मत्वात्तदभावो विरुद्ध इति भावः। स चाविवेको धावल्यगुणतो न स्वरूपत इति विरोधसमाधानाद्विरोधाभासोऽलङ्कारः। तथा विशदिमाद्वयमादिशन्तीत्यनेन सामान्यालङ्कारः। सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता इति तस्य विशेषणगत्या क्षीरनीराविवेकहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गं, पूर्वार्द्धे च श्वैत्यभुवनचारित्वराजहंसप्रियतमात्वाद्यैश्लिष्टैः श्लिष्टप्रस्तुतकीर्त्तिविशेषणसाम्यादप्रस्तुतराजहंसप्रतीतेः श्लेषसङ्कीर्णार्थसमासोक्तिरित्येतैस्त्रिभिः सहाङ्गाङ्गिभावेन पूर्वोक्तस्य विरोधाभासस्य सङ्करः ॥ ३१ ॥

शूरे इति। इयं दमयन्ती शूरे वीरे सूरिपरिषत्सु विद्वत्सभासु प्रथमार्चिते अग्रपूज्येऽपि शृङ्गारभङ्गिमधुरे शृङ्गारविलासकान्तेऽपि कलाकरे सकलविद्यानिदानेऽपि तस्मिन् सवनाख्ये राज्ञि कोमलं कर्णामृतं नलेति नाम नामधेयं तस्य न किल नास्ति हीति यत् तन्नलनामराहित्यमेव अवद्यं दूषणम् आप नाम जग्राह खल्वित्यर्थः। अनलत्वातिरिक्तमरुचिकारणं

भ्रूवल्लिकिञ्चननिकुञ्चितमिङ्गितं सा
लिङ्गं चकार तदनादरणस्य विज्ञा ।
राज्ञोऽपि तस्य तदलाभजतापवह्नेः
चिह्नीबभूव मलिनच्छविभूमधूमः ॥ ३३ ॥

राजान्तराभिमुखमिन्दुमुखीमथैनां
जन्याजना हृदयवेदितयैव निन्युः ।
अन्यानपेक्षितविधौ न खलु प्रधान-
वाचां भवत्यवसरः सति भव्यभृत्ये ॥ ३४ ॥

---

किञ्चिदपि नाभूदित्यर्थः । नलानुरागात् हि एव गुणवन्तमपि तं नृपतिं न स्वीकृतवती इति भावः ॥ ३२ ॥

भ्रूवल्लीति । विशेषेण जानातीति विज्ञा, अभिज्ञा इगुपधज्ञाप्रीकिरः कः । सा दमयन्ती भ्रूवल्ल्याः किञ्चन किञ्चिन्निकुञ्चितं किञ्चनेति किञ्चिदर्थेऽव्ययन्तस्य विशेषणसमासः । तदेवेङ्गितं चेष्टितं तस्मिन् सवने अनादरणस्य लिङ्गं चकार भ्रूनिकोचनेनैव तदनादरं सूचितवतीत्यर्थः । तस्य राज्ञोऽपि मलिनच्छविभूमा वैवर्ण्यभूयस्त्वं स एव धूमस्तस्याः दमयन्त्याः अलाभेन जातस्तज्जः तस्य तापवह्नेः सन्तापाग्नेः चिह्नीबभूव अनुमापकं जातमित्यर्थः । अन्यत्र धूमं दृष्ट्वा वह्निरनुमीयते अत्र तु सवनराज्ञि देहस्य श्यामवर्णरूपधूमं दृष्ट्वा अप्राप्तिजन्यतापवह्निरनुमीयते इति भावः । अतएवानुमानालङ्कारः साध्यसाधननिर्देशोऽनुमानमिति लक्षणात् किन्तु इह धूमाग्न्योरूपकशब्दात्मकयोरलङ्कारगर्भीकरणे विच्छित्तिविशेषाश्रयणात् तर्कानुमानाद्भेदः ॥ ३३ ॥

राजान्तरेति । अथ जन्याजनाःभृत्यजनाः, जन्या व्याख्याता हृदयवेदितया चित्तज्ञतयैव प्रेरणां विनैवेत्यर्थः ।

ऊचे पुनर्भगवती नृपमन्यमस्यै
निर्दिश्य दृश्यतमतावमताश्विनेयम् ।
आलोक्यतामयमये ! कुलशीलशालो
शालीनतानतमुदस्य निजास्यविम्बम् ॥ ३५ ॥
एतत्पुरःपठदपश्रमवन्दिवृन्द-
वागडम्बरैरनवकाशतराम्बरेऽस्मिन् ।

---

इन्दुमुखीम् एनां भैमीम् अन्यो राजा राजान्तरं, सुप्सुपेति समासः । तस्य अभिमुखं यथा तथा निन्युः । स्वामिप्रेरणं विना कथं निन्युरत आह—अन्यानपेक्षितः अनपेक्षितान्यः स्वाम्यादेशनिरपेक्षेण इत्यर्थः । बहुव्रीहौ सर्वनाम सङ्ख्ययोरुपसङ्ख्यानादन्यशब्दस्य पूर्वनिपातः । कार्य्यस्य विधिः तस्मिन् स्वतः समर्थे भव्ये अकपटे भृत्ये कर्मकरे सति प्रधानवाचां स्वाम्यादेशानामवसरो न भवति न अस्ति खलु इत्यर्थान्तरन्यासः ॥ ३४ ॥

ऊचे इति । भगवती भारती पुनः भूयः दृश्यतमतया दर्शनीयतमत्वेन सौन्दर्य्यातिशयेन अवमतौ अवधीरितौ आश्विनेयौ अश्विनीकुमारौ येन तमन्यं नृपम् अस्यै भैम्यै निर्दिश्य हस्तेन प्रदर्श्य अये ! भैमि ! कुलेन शीलेन सद्वृत्तेन च शालते इति तच्छाली अयं नृपः शालीनतया लज्जया नतं निजास्यविम्बं निजमुखमण्डलम् उदस्य उन्नमय्य आलोक्यताम् इत्यूचे उक्तवती, ब्रूतेः कर्त्तरि लिटि तङ् । लज्जां परित्यज्य अयं दृश्यताम् इति भावः । शालीनकौपीने अधृष्टाकार्य्ययोरिति खप्रत्ययान्तो निपातः ॥ ३५ ॥

एतदिति । एतस्य पुरः अग्रे पठताम् अपश्रमवन्दिनां यथार्थगुणवर्णनया प्रयासशून्यानां स्तावकानां वृन्दस्य वागडम्बरैः

उत्पत्तुमस्ति पदमेव न मत्पदानाम्
अर्थोऽपि नार्थपुनरुक्तिषु पातुकानाम् ॥ ३६ ॥
नन्वत्र हव्य इति विश्रुतनाम्नि शाक-
द्वीपप्रशासिनि सुधीषु सुधीभवन्त्याः ।
एतद्भुजाविरुदवन्दिजयानयापि
किं रागि राजनि गिराजनि नान्तरन्ते ? ॥ ३७ ॥

---

वागाटोपैः अनवकाशतरे अत्यन्तनिरवकाशे अस्मिन् अम्बरे अन्तरिक्षे मत्पदानां मद्वाक्यानां, पदं शब्दे च वाक्ये चेति विश्वः । उत्पत्तुमेव पदम् अवकाशो नास्तीत्यतिशयोक्तिः । आकाशगुणः शब्द इति तार्किकाः । कथञ्चिदुत्पत्तौ अपि अर्थपुनरुक्तिषु अभिधेयपौनरुक्त्येषु पातुकानां पततां वन्दिवाक्यैः पुनरुक्तार्थानामित्यर्थः । लषपतेत्यादिना उकञ्प्रत्ययः । मत्पदानाम् अर्थोऽपि प्रयोजनमपि नास्ति गतार्थत्वादिति भावः । अस्य वन्दिकृताः स्तवाः याथार्थ्यतया मम अतीव सम्मताः, अतः एनं वृणीष्व इति भावः ॥ ३६ ॥

नन्विति । ननु भैमि ! अत्र अस्मिन् हव्य इति विश्रुतनाम्नि प्रख्यातनामधेये शाकद्वीपं प्रशास्तीति तत्प्रशासिनि तत्स्वामिनि राजनि विषये सुधीषु विद्वत्सु सुधीभवन्त्याः विदुषीभवन्त्यास्ते तवान्तरम् अन्तरङ्गम् अनया श्रूयमाणया एतस्य भुजाविरुदवन्दिभ्यो बाहुप्रशस्तिस्तोतृभ्यः जाता तज्जा तया गिरापि रागि रागवत् नाजनि ? नाजनिष्ट किम् ? इति प्रश्नः, जनेः कर्त्तरि लुङि दीपजनेत्यादिना विकल्पात् चिण्प्रत्ययः, चिणो लुगिति तस्य लुक् । गद्यपद्यमयी राजस्तुतिर्विरुदमुच्यते ॥ ३७ ॥

शाकः शुकच्छदसमच्छविपत्रमाल-
हारी हरिष्यति तवस्तव तव चित्तम् ।
यत्पल्लवौघपरिरम्भविजृम्भितेन
ख्याता जगत्सु हरितो हरितः स्फुरन्ति ॥ ३८ ॥
स्पर्शेन तत्र किल तत्तरुपत्रजन्मा
यन्मारुतः कमपि सम्मदमाददाति ।
कौतूहलं तदनुभूय विधेहि भूयः
श्रद्धां पराशरपुराणकथान्तरेऽपि ॥ ३९ ॥

---

शाक इति । तत्र शाकद्वीपे शुकच्छदसमच्छवीनां कीर पक्षसदृशदीप्तीनां पत्राणां मालां पङ्क्तिं हरतीति तन्माल-हारी इष्टकेषीका मालानां चिततूलमालहारिषु इति ह्रस्वः । शाकस्तरुः शाकवृक्षः शाकवर्वरवन्दका इत्यमरः । तव चित्तं हरिष्यति हरितो दिशो यस्य शाकतरोः पल्लवस्य ओघानां राशीनां परिरम्भविजृम्भणेन व्याप्तिमहिम्ना हरितः हरिद्वर्णाः हरितो मृगे ना कनके क्लीवं दिशि स्त्री हरिते त्रिषु इति । जगत्सु ख्याताः हरित इति ख्याताः स्फुरन्ति प्रथन्ते दिक्षु हरिच्छब्द-प्रवृत्तेः हरितवर्णनिमित्तायाः शाकतरुपल्लवच्छायाच्छुरणनि-मित्तत्वासम्बन्धेऽपि तत्सम्बन्धोक्तेस्तद्रूपातिशयोक्तिः तया च तस्य तरोः ख्यातिः व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ ३८ ॥

स्पर्शेनेति । तत्र द्वीपे किल तस्य तरोः पत्रेभ्यो जन्म यस्य तज्जन्मा मारुतः स्पर्शेन स्पर्शमात्रेण कमप्यवाच्यं संमद-मानन्दमाददातीति यत् तदानन्ददानरूपं कौतूहलं विनोदं कौतूहलं विनोदः स्यात् कुतुकञ्च कुतूहलमित्यमरः । भूयः पुनरपि पराशरपुराणे विष्णुपुराणे यत् कथान्तरम् अन्या कथा तत्र श्रद्धां विधेहि विश्वासं कुरु तत्रैव सकलभूगोलवृत्तान्त-

क्षीरार्णवस्तव कटाक्षरुचिच्छटानाम्
अध्येतु तत्र विकटायितमायताक्षि ! ।
वेलावनी-वनततिप्रतिबिम्बचुम्बि-
किर्म्मीरितोर्म्मिचयचारिमचापलाभ्याम् ॥ ४० ॥

---

कथनादेकदेशसंवादेन तदुक्तकथान्तराणामपि विश्वसनीयत्वादिति भावः। अत्र विष्णुपुराणवाक्यं—शाकस्तत्र महावृक्षः सिद्धगन्धर्वसेवितः। यत्पत्रवातसंस्पर्शादाह्लादो जायते परः॥ इति ॥ ३८ ॥

क्षीरेति। हे आयताक्षि! तत्र शाकद्वीपे क्षीरार्णवस्तव कटाक्षरुचिच्छटानां कटाक्षकान्तिजालानाम्। वृन्दं जालं चक्रवालं जालकं पेटकं छटा इति वैजयन्ती। विकटायितं विकटभावं विलसितमित्यर्थः विकटशब्दाल्लोहितादिक्यङन्ताद्भावे क्तः लोहितादिराकृतिगणः। वेलावनी कूलरेखा वेला कूलेऽपि वारिधेरिति शाश्वतः। तत्र या वनततिर्वनपङ्क्तिस्तस्याः प्रतिबिम्बं चुम्बति स्पृशतीति तच्चुम्बी तस्य तद्युक्तस्य इति यावत्। अतएव किर्म्मीरितस्य कर्वुरितस्य चित्रकिर्म्मीरकल्माषशवलैताश्च कर्वुरेत्यमरः। ऊर्म्मिचयस्य तरङ्गपङ्क्तेः चारिमा चारुता पृथ्वादित्वादिमनिचि टेरिति लोपः। चापलं चाञ्चल्यं युवादित्वादण्प्रत्ययः। ताभ्यां स्मारकाभ्याम् अध्येतु स्मरतु, अनुकरोतु इति यावत्। इक् स्मरण इत्यस्माल्लोटि शेषत्वविवक्षायामधिगर्थेत्यादिना षष्ठीविधानात्तदभावे कर्म्मणि द्वितीया। तव चक्षुषोः कटाक्षेषु परितः शैत्यं मध्ये नीलत्वं चपलता च अतः क्षीरसमुद्रोऽपि तत्सदृशो भवतु इति भावः अत्र किर्म्मीरितोर्म्मिचयस्य

बालातपैः कृतकगैरिकतां कृतां द्विः
तत्रोदयाचलशिलाः परिशीलयन्तु।
त्वद्विभ्रमभ्रमणजश्रमवारिधारि-
पादाङ्गुलीगलितया नखलाक्षयापि ॥ ४१ ॥
नॄणां करम्बितमुदामुदयन्मृगाङ्क-
शङ्कां सृजत्वनघजङ्घि ! परिभ्रमन्त्याः।
तत्रोदयाद्रिशिखरे तव दृश्यमास्यं
काश्मीरसम्भवसमारचनाभिरामम् ॥ ४२ ॥

---

सितासितत्वसादृश्यात् तद्विलासस्य कटाक्षविलसितस्मारकत्वात् स्मरणालङ्कारः ॥ ४० ॥

बालातपैरिति। तत्र शाकद्वीपे उदयाचलशिलाः बालातपैः तथा तव विभ्रमभ्रमणेन लीलाविहारेण जातं तज्जं श्रमवारि स्वेदाम्बु तद्धारिणीभ्यः पादाङ्गुलिभ्यः गलितया स्रुतया नखलाक्षया द्विर्द्विवारं कृतां द्विगुणीकृतामित्यर्थः। क्रियाभ्यावृत्तिगणने द्वित्रिचतुर्भ्यः सुच्। कृतकानि कृत्रिमाणि यानि गैरिकाणि धातुविशेषाः तत्तां परिशीलयन्तु अनुभवन्तु तथाभूताः सन्तु, उदयाचलविहारे यदि तव रुचिः अस्ति तदा एनं वृणीष्व इति भावः ॥ ४१ ॥

नॄणामिति। हे अनघजङ्घि ! सुन्दरजङ्घाशालिनि ! नासिकोदरेत्यादि विकल्पेन ङीप्प्रत्ययः। तत्र द्वीपे उदयाद्रिशिखरे परिभ्रमन्त्याः विहरन्त्याः तव काश्मीरसम्भवसमारचनेन कुङ्कुमानुलेपनेन अभिरामम् अतएव दृश्यं दर्शनीयं, ऋदुपधाच्च क्लृपिचृतेरिति क्यप्। तवास्यं कर्तृ करम्बितमुदां सम्मिलितानन्दानां नॄणां पुंसां, नृचेति विकल्पात् दीर्घः। उदयन्-

एतेन ते विरहपावकमेत्य तावत्
कामं स्वनाम कलितान्वयमन्वभावि।
अङ्गीकरोषि यदि तत्तव नन्दनाद्यैः
लब्धान्वयं स्वमपि नन्वयमातनोतु॥ ४३॥

लक्ष्मीलतासमवलम्बभुजद्रुमेऽपि
वाग्देवतायतनमञ्जुमुखाम्बुजेऽपि।
सामुत्र दूषणमजीगणदेकमेव
नार्थीबभूव मघवा यदमुष्य देवः॥ ४४॥

---

मृगाङ्कशङ्काम् उदीयमानचन्द्रसन्देहं भ्रान्तिं वा सृजतु करोतु। अलङ्कारोऽपि सन्देहभ्रान्तिमतोरन्यतरोऽस्तु॥ ४२॥

एतेनेति। ननु भैमि! एतेन हव्याख्येन राज्ञा ते तव विरहपावकम् एत्य वियोगाग्निं प्राप्य स्वं स्वकीयं नाम हव्यसंज्ञा कामं प्रकामं कलितान्वयं गृहीतसम्बन्धं सत् अन्वभावि अनुभूतम्। अग्नौ हुतत्वाद्धव्यसंज्ञा सार्थाऽजनीत्यर्थः। नन भो! इत्थम् अनुरक्तं तं नृपम् अङ्गीकरोषि यदि तदा अयं नृपः स्वम् आत्मानमपि तव नन्दनाद्यैः त्वय्युत्पादितपुत्रपौत्रादिभिः लब्धान्वयं लब्धवंशप्रतिष्ठम् आतनोतु धर्मप्रजासम्पत्त्यर्थत्वाद्दारपरिग्रहस्येति भावः॥ ४३॥

लक्ष्मीलतेति। लक्ष्मीरेव लता तस्याः समवलम्बः आधारभूतः भुज एव द्रुमो यस्य तस्मिन्नपि भुजार्जितसम्पद्यपीत्यर्थः। तथा वाग्देवतायाः सरस्वत्याः आयतनं स्थानं मञ्जु मनोज्ञं मुखाम्बुजं यस्य तस्मिन् अपि लक्ष्मीसरस्वत्योरेकाधिकरणेऽपीत्यर्थः। अमुत्र अमुष्मिन् हव्ये राज्ञि सा भैमी एकमेव दूषणम् अजीगणत् गणयामास, गणेर्णौ चङ् ईच् गण इत्यभ्यासस्येकारः। किं दूषणं तदाह—अमुष्य हव्यस्य राज्ञः

लक्ष्मीविलासवसतेः सुमनःसु मुख्यात्
अस्माद् विकृष्य भुवि लब्धगुणप्रसिद्धिम् ।
स्थानान्तरं तदनु निन्यु रिमां विमान-
वाहाः पुनः सुरभितामिव गन्धवाहाः ॥ ४५ ॥

भूयस्ततो निखिलवाङ्मयदेवता सा
हेमोपमेयतनुभासमभाषतैनाम् ।
एनं स्वबाहुबहुवारनिवारितारिं
चित्ते कुरुष्व कुरुविन्दसकान्तिदन्ति ! ॥ ४६ ॥

---

देवो मघवा महेन्द्रोऽपि अर्थी याचकः न बभूव किन्तु नलस्य यत् दूत्यं ययाचे तत् कथमनलमेनं स्वीकारयामि इति भावः ॥ ४४ ॥

लक्ष्मीविलासेति। तदनु तत्परिहारानन्तरं विमानवाहाः भुवि लोके लब्धा गुणेन सौन्दर्य्यादिना अन्यत्र घ्राणतर्पणेन च प्रसिद्धिः यया ताम् इमां तां दमयन्तीं गन्धवाहाः वायवः सुरभितां सौरभसम्पदमिव लक्ष्म्याः सम्पदः अन्यत्र पद्मायाः विलासवसतेः लीलागृहात् सुमनःसु विद्वत्सु अन्यत्र पुष्पेषु मुख्यात् अस्मात् नृपात् पद्माच्च विकृष्य अपनीय पुनः स्थानान्तरं राजान्तरम् अन्यत्र पुष्पान्तरं निन्युः ॥ ४५ ॥

भूय इति। ततः अनन्तरं भूयः पुनरपि निखिलवाङ्मयदेवता सकलवागधिदेवता सा सरस्वती हेम्ना उपमेया तनुभाः शरीरभाः यस्याः ताम् एनां दमयन्तीम् अभाषत, हे कुरुविन्दसकान्तिदन्ति ! पद्मरागसदृशदशने ! नासिकोदरेत्यादिना विकल्पादीकारः। कुरुविन्दः पद्मराग इति विश्वः। सकान्तीत्यत्र समानस्य सभावश्छिन्दस्यः। स्वबाहुना बहुवारं निवारि-

द्वीपस्य पश्य दयितं द्युतिमन्तमेतं
क्रौञ्चस्य चञ्चलदृगञ्चलविभ्रमेण।
यन्मण्डले स किल पाण्डुलसन्निवेशः
पूरश्चकास्ति दधिमण्डमयः पयोधेः ॥ ४७॥

तत्राद्रिरस्ति भवदङ्घ्रिविहारयाची
क्रौञ्चः स्फुरिष्यति गुणानिव यस्त्वदीयान्।
हंसावलीकलकलप्रतिनादवाग्भिः
स्कन्देषुवृन्दविवरैर्विवरीतुकामः ॥ ४८ ॥

---

तारि निर्जितशत्रुम् एनं राजानं चित्ते कुरुष्व अनुमन्यस्वेत्यर्थः ॥ ४६ ॥

द्वीपस्येति। द्युतिमन्तं नाम एतं क्रौञ्चस्य द्वीपस्य दयितम् अधिपतिं चञ्चलस्य दृगञ्चलस्य कटाक्षस्य विभ्रमेण विलासेन पश्य, यन्मण्डले यस्य देशे पयोधेः समुद्रस्य स प्रसिद्धः पाण्डुलसन्निवेशः पाण्डुलः पाण्डुवर्णः सन्निवेशः अवस्थानं यस्य तादृशः दधिमण्डमयः पूरः तोयराशिः चकास्ति किलेत्यैतिह्ये। दध्नो मण्डं मस्तु। मण्डं दधिभवं मस्त्वित्यमरः ॥ ४७ ॥

तत्रेति। तत्र क्रौञ्चद्वीपे भवत्याः ''ङ्घ्रिविहारयाची त्वद्भ्रमणकामुकः क्रौञ्चो नामाद्रिः अस्ति, योऽद्रिः हंसावलीकलकलानां प्रतिनादा एव वाचो वचनानि येषां तैः स्कन्दस्य कुमारस्य इषुवृन्दानां विवरैः तैरेव मुखैरित्यर्थः। त्वदीयान् गुणान् विवरीतुकामो व्याख्यातुकाम इव स्फुरिष्यति प्रकाशिष्यते, स्फुरतेः कुटादित्वाद्गुणाभावः। पुरा कार्त्तिकेयेन बाणैः क्रौञ्चपर्वतस्य विवराणि कृतानि इति पुराणम् ॥ ४८ ॥

वैदर्भि ! दर्भदलपूजनयापि यस्य
गर्भे जनः पुनरुदेति न जातु मातुः।
तस्यार्चनां रचय तत्र मृगाङ्कमौलेः
तन्मात्रदैवतजनाभिजनः स देशः ॥ ४८ ॥

चूडाग्रचुम्बिमिहिरोदयशैलशील-
स्तेनाः स्तनन्धयसुधाकरशेखरस्य।
तस्मिन् सुवर्णरसरूषणरम्यहर्म्य-
भूभृद्घटा घटय हेमघटावतंसाः ॥ ५० ॥

---

वैदर्भीति। हे वैदर्भि ! यस्य दर्भदलैः कुशपत्रैः पूजनयापि किमुत कमलदलादिपूजनयेति भावः। जनो जन्तुः जातु कदापि पुनर्मातुर्गर्भे न उदेति न जायते तत्पूजनस्य मुक्तिरेव फलमित्यर्थः। तत्र तस्य मृगाङ्कमौलेः ईश्वरस्य अर्चनां रचय पूजां कुरु। तथाहि स देशः तन्मात्रं स एवैको दैवतं येषां तेषां जनानाम् अभिजायते अस्मिन्निति अभिजनो जन्मभूमिरित्यर्थान्तरन्यासः। ख्यातः कुलेऽप्यभिजनो जन्मभूम्यां कुलध्वज इति विश्वः। तत्रत्याः सर्वे तदेकशरणास्तत्सेवयोत्पन्नतत्त्वज्ञानान्मुच्यन्तीति भावः ॥ ४८ ॥

चूडाग्रेति। तस्मिन् देशे स्तनं धयतीति स्तनन्धयः नासिकास्तनयोर्ध्माधेटोरिति खश्प्रत्यये मुमागमः। स्तनन्धयसुधाकरशेखरस्य बालेन्दुशेखरस्य शम्भोः चूडाग्रचुम्बिमिहिरस्य शिखराग्रलग्नसूरस्य उदयशैलस्य उदयाद्रेः शीलं स्वभावः तस्य स्तेनाः चौराः तत्तुल्या इत्यर्थः। हेमघटावतंसाः उपरिस्थापितकनककलशा इत्यर्थः। सुवर्णरसरूषणेन हेमद्रवच्छुरणेन रम्याणि हर्म्याण्येव भूभृतः पर्वताः तेषां घटाः

तस्मिन्मलिम्लुच इव स्मरकेलिजन्म-
घर्मोदविन्दुमयमौक्तिकमण्डनं ते ।
जालैर्मिलन् दधिमहोदधिपूरलोल-
कल्लोलचामरमरुत्तरुणि ! छिनत्तु ॥ ५१ ॥

एतद्यशो नवनवं खलु हंसवेशं
वेशन्तसन्तरणदूरगमक्रमेण ।
अभ्यासमर्जयति सन्तरितुं समुद्रान्
गन्तुञ्च निःश्रममितः सकलान् दिगन्तान् ॥५२॥

---

पङ्क्तीः घटय निर्मापय कनककलसंयुक्तानेकसौवर्णप्रासाद-निर्माणेन तं भगवन्तमिन्दुशेखरं भजेत्यर्थः ॥ ५० ॥

तस्मिन्निति। हे तरुणि ! हे उद्भूतयौवने ! तस्मिन् द्वीपे दधिमहोदधेः पूरे प्रवाहे लोलाः चञ्चलाः कल्लोलाः तरङ्गाः एव चामराणि तेषां मरुत् वायुः मलिम्लुचः चोर इव पाटच्चरम-लिम्लुचावित्यमरः। जालैः गवाक्षरन्ध्रैः मिलन् अन्तश्चरः स्मर-केल्या जन्म यस्य तद्घर्मोदविन्दुमयं स्वेदोत्करविन्दुरूपं मन्थौदने-त्यादिना उदकस्य विकल्पादुदादेशः। मौक्तिकमण्डनं मुक्ताभ-रणं स्वार्थे ठक् मौक्तिकमिति विनयादिपाठादिति वामनः। छिनत्तु छित्त्वा हरतु चौरा हि केनचिच्छिद्रेण प्रविश्य हारादिकं छित्त्वादाय पलायन्ते। अस्मिन् वृत्ते सति दधिस-मुद्रवायुना तव रतिश्रमो न भविष्यति इति भावः ॥ ५१ ॥

एतदिति। नवनवं प्रकारे गुणवचनस्येति द्विर्भावः। हंसस्येव वेशः सर्वत्र प्रवेशव्यापारो यस्य तत् एतस्य राज्ञो यशः वेशन्तसन्तरणं पल्वलतरणं वेशन्तः पल्वलञ्चाल्पसर इत्यमरः। दूरगमो दूरगमनं ग्रहवृदृनिश्चिगमश्चेति अप्प्रत्ययः। तयोः क्रमेण रीत्या हंसवदेव इतोऽस्माद्देशात् निःश्रमं यथा तथा

तस्मिन् गुणैरपि भृते गणनादरिद्रैः
तन्वी न सा हृदयबन्धमवाप भूपे ।
दैवे विरुन्धति निबन्धनतां वहन्ति
हन्त प्रयासपरुषाणि न पौरुषाणि ॥ ५३ ॥

ते निन्यिरे नृपतिमन्यमिमाममुष्मात्
अंसावतंसशिबिकांशभृतः पुमांसः ।
रत्नाकरादिव तुषारमयूखलेखां
लेखानुजीविपुरुषा गिरिशोत्तमाङ्गम् ॥ ५४ ॥

---

समुद्रान् सन्तरितुं सकलान् दिगन्तान् गन्तुं चाभ्यासम् अर्जयति खलु ? जिज्ञासायां खलुशब्दः तेन पुनः पुनरेवमभ्यस्यति किम् अन्यथा कथमस्य सकललोकलङ्घित्वमित्युत्प्रेक्षा लभ्यते ॥ ५२ ॥

तस्मिन्निति । तन्वी कृशाङ्गी वोतो गुणवचनादिति विकल्पात् ङीप् । भैमी गणनादरिद्रैः सङ्ख्याशून्यैः असङ्ख्यैः गुणैः भृते पूर्णे तस्मिन् द्युतिमदाख्ये राज्ञि हृदयस्य बन्धं मनःसङ्गं नावाप । तथाहि, दैवे दिष्टे विरुन्धति प्रतिबध्नति सति प्रयासेन दुःखबाहुल्येन परुषाणि दुष्कराणि पौरुषाणि पुरुषकाराः युवादित्वादण्प्रत्ययः । निबन्धनतां कार्य्यहेतुत्वं न वहन्ति इत्यर्थान्तरन्यासः । हन्तेति खेदे । वागुरादि गुणपाशेऽपि हरिणी यत् बन्धनं नाप्नोति तत्र दैवविड़म्बना एव हेतुः इति ध्वनिः ॥ ५३ ॥

त इति । ते प्रकृताः अंसावतंसस्य भुजशिरोभूषणस्य शिबिकायाः अंशभृतः एकदेशधारिणः पुमांसो लेखानुजीविपुरुषाः देवानुचराः लेखा अदितिनन्दना इत्यमरः । तुषारमयूखलेखां चन्द्रलेखां रत्नाकरात् रत्नाकरं विहाय गिरिशोत्त-

एकैकमुन्नतगुणं धुतदूषणञ्च
हित्वान्यमन्यमुपगत्य परित्यजन्तीम् ।
एतां जगाद जगदर्चितपादपद्मा
पद्मामिवाच्युतभुजान्तरविच्युतांसाम् ॥ ५५ ॥
ईशः कुशेशयसनाभिशये ! कुशेन
द्वीपस्य लाञ्छिततनोर्यदि वाञ्छितस्ते ।
ज्योतिष्मता सममनेन वनीघनासु
तत्त्वं विनोदय घृतोदतटीषु चेतः ॥ ५६ ॥

---

माङ्गं शिवगिर इव अमुष्मात् अमुं नृपं विहाय इतरम् अन्यं नृपं निन्यिरे प्रापयामासुः ङित्वादात्मनेपदम् ॥ ५४ ॥

एकैकमिति । जगद्भिः अर्चितपादपद्मा जगद्वन्द्या सरस्वती उन्नतगुणं गुणाढ्यं धुतदूषणं निर्दोषञ्च एकैकम् एकमेकं नृपं वीप्सायां द्विर्भावः। एकं बहुव्रीहिवदिति बहुव्रीहिवद्भावात् सुपो लुक् । हित्वा अन्यम् अन्यं नृपतिं, पूर्ववद्द्विर्भावः । उपगम्य परित्यजन्तीं तमपि परिहरन्तीम् अच्युतस्य विष्णोः भुजान्तरालात् विच्युतांसां पद्मां साक्षाल्लक्ष्मीमिव स्थितामित्युत्प्रेक्षा, एतां भैमीं जगाद ॥ ५५ ॥

ईश इति । हे कुशेशयसनाभिशये ! कमलसदृशकरे ! पञ्चशाखः शयः पाणिरित्यमरः । कुशेन दर्भविशेषेण लाञ्छिततनोः चिह्नितस्वरूपस्य द्वीपस्य कुशद्वीपस्य ईशः स्वामी ते तव वाञ्छितः इष्टो यदि तत्तर्हि त्वं ज्योतिष्मता ज्योतिष्मन्नामकेन अनेन कुशद्वीपेश्वरेण समं सह वनीभिः घनासु वनसान्द्रासु घृतम् उदकं यस्य सः घृतोदः घृतसमुद्रः, उदकस्योदः संज्ञायामित्युदादेशः । तस्य तटीषु तीरेषु चेतः चित्तं विनो-

वातोर्मिलोलनचलद्दलमण्डलाग्र-
भिन्नाभ्रमण्डलगलज्जलजातसेक:।
स्तम्ब: कुशस्य भविताम्बरचुम्बिचूड़:
चित्राय तत्र तव नेत्रनिपीयमान: ॥ ५७ ॥

पाथोधिमन्थसमयोत्थितसिन्धुपुत्री-
पत्पङ्कजार्पणपवित्रशिलासु तत्र।
पत्या सहावह विहारमयैर्विलासै:
आनन्दमिन्दुमुखि! मन्दरकन्दरासु ॥ ५८ ॥

---

दय विनोदं कारय, विपूर्वात् ण्यन्ताद् विनोदशब्दात् तत् करोतीति ण्यन्ताल्लिटि सिप् ॥ ५६ ॥

वातेति। तत्र कुशद्वीपे अम्बरचुम्बिनी गगनतललग्ना चूड़ा अग्रं यस्य स: अभ्रंकषाग्र इत्यर्थ:। अतएव वातस्य वायो: ऊर्मिणा तरङ्गभङ्ग्या लोलनेन कम्पनेन चलद्भि: दलै: पत्रैरेव मण्डलाग्रै: खड्गै: भिन्नात् अभ्रमण्डलात् मेघमण्डलात् गलद्भि: स्रवद्भि: जलै: जात: सेको यस्य स:। कौक्षेयको मण्डलाग्र: करवाल: कृपाणवत् इत्यमर:। कुशस्य स्तम्ब: दर्भगुल्म: अप्रकाण्ड-स्तम्बगुल्माविल्यमर:। नेत्राभ्यां निपीयमान: आदरात् दृश्यमान: सन् तव चित्राय विस्मयाय भविता भविष्यति ॥५७॥

पाथोधीति। हे इन्दुमुखि! तत्र कुशद्वीपे पाथोधिमन्थस्य अब्धिमथनस्य समये उत्थिताया: तादृग्भूताया: सिन्धुपुत्र्या: लक्ष्म्या: पत्पङ्कजयो: चरणकमलयो:, पदङ्घ्रि: चरणोऽस्त्रियामित्यमर:। अर्पणेन पवित्रा: शिला: यासु तासु मन्दरकन्दरासु पत्या भर्त्रा सह विहारमयै: विहाररूपै: विलासै: विनोदै: आनन्दम् आवह धारय ॥ ५८ ॥

आरोहणाय तव सज्ज इवास्ति तत्र
सोपानशोभिवपुरश्मवलिच्छटाभिः।
भोगीन्द्रवेष्टशतघृष्टिकृताभिरब्धि-
क्षुब्धाचलः कनककेतकगोत्रगात्रि! ॥ ५८ ॥
मन्था नगः स भुजगप्रभुवेष्टघृष्टि-
लेखाचलद्धवलनिर्झरवारिधारः।
त्वन्नेत्रयोः स्वभरयन्त्रितशीर्षशेष-
शेषाङ्गवेष्टिततनुर्भ्रममातनोतु ॥ ६० ॥

---

आरोहणायेति। कनककेतकं स्वर्णकेतकदलं गोत्रम् अभिजनो यस्य तत् तस्य गोत्रं सन्ततिर्वा गात्रं यस्याः तस्याः सम्बुद्धिः, तद्गात्रि! तत्सदृशगात्रीत्यर्थः। अङ्गगात्रकण्ठेभ्य इत्यादिना ङीप्। तत्र कुशद्वीपे भोगीन्द्रस्य वासुकेः वेष्टशतघृष्टिभिः वेष्टनशतानां घर्षणैः कृताभिः अश्मसु शिलासु वलीनां वेष्टनमार्गाणां छटाभिः समूहैः हेतुभिः सोपानैः शोभते इति तच्छोभि वपुः यस्य सः वलिकृतसोपानपंक्तिः अब्धेः क्षुब्धाचलः मन्दराद्रिः, क्षुब्धस्वान्तेत्यादिना निपातनात्साधुः। तवारोहणाय सज्जः सज्जित इव अस्ति वर्त्तते इत्युत्प्रेक्षा ॥५८॥

मन्था इति। भुजगप्रभोः वासुकेः वेष्टैः वेष्टनैः याः घृष्टिलेखाः घर्षणमार्गाः तासु चलन्त्यः प्रवहन्त्यः धवलाः निर्झरवारिधाराः यस्य सः प्रसिद्धः मन्था मन्थनदण्डः, नगोऽद्रिर्मन्दराद्रिः वैशाखे मन्थमन्थानमन्थनो मन्थदण्डक इत्यमरः। त्वन्नेत्रयोः तव चक्षुषोः स्वस्य मन्दरस्यैव भरेण भारेण यन्त्रितानि कुञ्चितानि शीर्षाणि यस्य तस्य शेषस्य अनन्तस्य भूभारं वहतः शेषाहेः शेषाङ्गेन अवशिष्टकायेन वेष्टिता तनुः शरीरं यस्य स इति भ्रमम् आतनोतु भ्रान्तिं जनयतु, सर्पो हि शिरसि

एतेन ते स्तनयुगेन सुरेभकुम्भौ
पाणिद्वयेन दिविषद्द्रुमपल्लवानि ।
आस्येन संस्मरतु नीरधिमन्थनोत्थं
स्वच्छन्दमिन्दुमपि सुन्दरि ! मन्दराद्रिः ॥ ६१ ॥
वेदैर्वचोभिरखिलैः कृतकीर्त्तिरत्ने
हेतुं विनैव धृतनित्यपरार्थयत्ने ।
मीमांसयेव भगवत्यमृतांशुमौलौ
तस्मिन् महीभुजि तयानुमतिर्न भेजे ॥ ६२ ॥

---

क्रामतोऽङ्गं स्वाङ्गेन वेष्टयतीति प्रसिद्धिः । शेषस्य शुभ्राङ्गतया वारिधाराणां च धवलत्वात् लेखासु वलयितत्वाच्च भ्रमः सम्भाव्यते इति भावः । अत्र कविसम्मतसादृश्यमूलभ्रान्तिवर्णनाद् भ्रान्तिमदलङ्कारः॥ ६० ॥

एतेनेति । हे सुन्दरि ! एतेनेति सर्वशेषपुरोवर्त्तिनिर्देशः ते तव स्तनयुगेन सुरेभस्य ऐरावतस्य कुम्भौ पाणिद्वयेन दिविषद् द्रुमस्य कल्पवृक्षस्य पल्लवानि आस्येन इन्दुमपि एवं नीरधिमन्थनोत्थं सर्वाणि समुद्रमथनोत्थानि वस्तूनि, नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामिति नपुंसकत्वं वैकल्पिकमेकत्वञ्च । स्वच्छन्दं यथेष्टं स्मरतु । स्वच्छन्दो निरवग्रह इत्यमरः । अत्र कविसम्मतसादृश्यमूलस्मृतिनिबन्धनात् स्मरणालङ्कारः ॥ ६१ ॥

वेदैरिति । अखिलैः समस्तैः अन्यत्र अखिलैः अविच्छिन्नसम्प्रदायैः वेदैः वेदतुल्यैर्वचोभिः सत्पुरुषवाक्यैः अन्यत्र यतो वेति वेदवाक्यैः कृतं व्याकृतं कीर्त्तिरत्नं यस्य तस्मिन् हेतुं विनैव निर्हेतुकमेव नित्यः सदातनः परार्थयत्नः स्वयमवाप्तसकलकामतया परार्थैकप्रवृत्तिः यस्य तस्मिन् ज्योतिषन्नाम्नि मही-

तस्मादिमां नरपतेरपनीय तन्वीं
राजन्यमन्यमथ जन्यजनः स निन्ये ।
स्त्रीभावधावितपदामभिसृत्य याच्ञाम्
अर्थी निवर्त्य विधनादिव वित्तवित्तम् ॥ ६३ ॥

---

भुजि तया भैम्या भगवति अमृतांशुमौलौ ईश्वरे मीमांसया पूर्वमीमांसयेव अनुमतिः अङ्गीकारः न भेजे न प्राप्तः भजेः कर्मणि लिट् । वेदापौरुषेयवादिनी मीमांसा भगवन्तमीश्वरं न सहते इत्याशयः । पूर्णोपमा ॥ ६२ ॥

तस्मादिति । अथ अनन्तरं जन्यजनः यानिवर्गः स्त्रीभावेन स्त्रीलीलया धावितपदां चालितचरणां स्वानुरूपचरणचेष्टयैव अन्यतो गमनमनुजानतीमित्यर्थः । भावो लीलाक्रियाचेष्टाभूत्यभिप्रायजन्तुषु इति वैजयन्ती । अन्यत्र स्त्रीभावे स्त्रीलिङ्गे धावितं पदं याच्ञेति पदं यस्याः तां यजयाचयतविच्छप्रच्छरक्षो नङिति नङ्प्रत्ययस्य यजादिभ्यः पुंसि प्रयोगे प्राप्तेरेव स्त्रीलिङ्गप्रयोगादिति भावः । तन्वीं कृशाङ्गीम् इमां भैमीं तस्मात् नरपतेः अपनीय अर्थी याचकः अभिसृत्य विसृज्य उक्तरूपां याच्ञां याच्ञावृत्तिं विधनात् निर्धनात् पुंसः निवर्त्य वित्तेन धनेन वित्तः प्रतीतः विख्यात इति यावत् वित्तो भोगप्रत्यययोरिति नि[illegible]त्वाभावान्निपातनादुभयत्रोभयं साधु भुज्यत इति भोगो वित्तः प्रत्ययः ख्यातिः । तथाहुः, वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते । विन्नश्च वित्तश्च भोगवित्तेस्तु विन्दतेरिति । तं वित्तवित्तं धनाढ्यमिव अन्यं राज्ञोऽपत्यं राजन्यं राजानं निन्ये राजश्वशुराद् यत् राज्ञोऽपत्ये जातिग्रहणमिति वचनाद्राजन्यं क्षत्रियः ॥ ६३ ॥

देवी पवित्रितचतुर्भुजवामभागा
वागालपत् पुनरिमां गरिमाभिरामाम् ।
अस्यारिनिष्कृपकृपाणसनाथपाणेः
पाणिग्रहादनुगृहाण गणं गुणानाम् ॥ ६४ ॥
द्वीपस्य शाल्मल इति प्रथितस्य नाथः
पाथोधिना वलयितस्य सुराम्बुनाऽयम् ।
तस्मिन् वपुष्मति न विस्मयसे गुणाब्धौ
रक्ता तिलप्रसवनासिकि ! नासि किंवा ? ॥ ६५ ॥
विप्रं धयत्युदधिमेकतमं त्रसत्सु
यस्तेषु पञ्चसु बिभाय न शीधुसिन्धुः ।

---

देवीति । पवित्रितः चतुर्भुजस्य विष्णोः वामभागो यया सा । लक्ष्मीसरस्वत्यौ देवस्य दक्षिणवामपार्श्ववर्त्तिन्याविल्यागमः । वाग्देवी सरस्वती गरिम्णा गुणगौरवेण अन्यत्र अर्थगौरवेण अभिरामां गिरम् आलपत् उवाच । किमिति ? हे वत्से ! अरिषु निष्कृपः यः कृपाणः खड्गः तेन सनाथः सहितः पाणिः यस्य तस्य राज्ञो गुणानां गणं पाणिग्रहणात् अनु विवाहानन्तरं गृहाण जानीहि तदा ज्ञास्यसि महिमानमस्येत्यर्थः ॥ ६४ ॥

द्वीपस्येति । हे तिलप्रसवनासिकि ! तिलकुसुमसमाननासिके ! नासिकोदरेत्यादिना विकल्पात् न ङीष् । यो राजा सुरा मद्यमेव अम्बु यस्य तेन पाथोधिना समुद्रेण वलयितस्य सञ्जातवलयस्य वेष्टितस्येत्यर्थः । शाल्मल इति प्रथितस्य द्वीपस्य नाथः स्वामी गुणाब्धौ वपुष्मति वपुष्मदाख्ये अस्मिन् राज्ञि किं न विस्मयसे ? रक्ता वा अनुरक्ता च किं नासि ? उभयमप्युचितमेवेत्यर्थः ॥ ६५ ॥

तस्मिन्ननेन च निजालिजनेन च त्वं
सार्द्धं विधेहि मधुरा मधुपानकेलीः ॥ ६६ ॥
द्रोणः स तत्र वितरिष्यति भाग्यलभ्य-
सौभाग्यकार्मणमयीमुपदां गिरिस्ते ।
तद्द्वीपदीप इव दीप्तिभिरोषधीनां
चूडामिलज्जलदकज्जलदर्शनीयः ॥ ६७ ॥

---

विप्र इति। शेरते अनेनेति शीधुः आसवः मैरेयमासवः शीधुरित्यमरः। शीङः धुक्प्रत्यय औणादिकः। शीधुमिन्धुः आसवसमुद्रः विप्रे अगस्त्ये एकतम् उदधिं धयति पिबति सति लटः शतृप्रत्ययः। तेषु पञ्चसु समुद्रेषु त्रसत्सु बिभ्यत्सु स्वयं न बिभाय न भीतः ब्राह्मणो न सुरां पिबेदिति निषेधादिति-भावः। तस्मिन् सुराब्धौ अनेन राज्ञा च निजेन आलिजनेन सार्द्धं मधुराः मनोहराः मधुपानकेलीः विधेहि कुरु ॥ ६६ ॥

द्रोण इति। तत्र शाल्मलिद्वीपे ओषधीनां तृणज्योतिषां दीप्तिभिः तस्य द्वीपस्य दीप इव स्थितः अतएव चूडायां शिखरे मिलद्भिः सङ्गच्छमानैः जलदैरेव कज्जलैः दर्शनीयः दृष्टि-प्रियः स द्रोणो द्रोणाख्यो गिरिः ते तव भाग्यैरेव लभ्यं सौभाग्यं पतिवाल्लभ्यं तस्य कार्मणम् औषधसाध्यं वशीकरण-कर्म मूलकर्म तु कार्मणमित्यमरः। वितरिष्यति दास्यति तद्युक्तात् कर्मणोऽणिति स्वार्थेऽण्प्रत्ययः। तन्मयीं तद्रूपाम् उपदाम् उपायनम् उपायनमुपग्राह्यमुपहारस्तथोपदेत्यमरः। वितरिष्यति दास्यति उपलक्षणमेतत् सञ्जीवन्याद्यनेकदिव्यौ-षधिलाभस्ते भविष्यतीति भावः। अत्र कार्मणमयीमुप-दामिति परिणामालङ्कारः आरोप्यमाणो यदीयस्तद्विषय-कार्मणाकारपरिणामेन प्रकृतप्रभुचित्तावर्जनोपयोगित्वात्

तद्द्वीपलक्ष्म पृथुशाल्मलितूलजालैः
क्षौणीतले मृदुनि मारुतचारुकीर्णैः।
लीलाविहारसमये चरणार्पणानि
योग्यानि ते सरससारसकोषमृद्वि! ॥६८॥
एतद्गुणश्रवणकालविजृम्भमाण-
तल्लोचनाञ्चलनिकोचनसूचितस्य।
भावस्य चक्रुरुचितं शिविकाभृतस्ते
तामेकतः क्षितिपतेरपरं नयन्तः॥ ६९ ॥

---

आरोप्यमाणमारोपविषयात्मत्वेन स्थितम्। प्रकृतस्योपयोगित्वे परिणाम उदाहृत इति लक्षणात्। अस्य च दीप इवेत्युपमया संसृष्टिः तस्यास्तु जलदकज्जलेति रूपकेण सङ्करः ॥ ६७ ॥

तद्द्वीपेति। सरसं प्रत्यग्रं यत् सारसं पद्मं तस्य कोषः मुकुलं तद्वत् मृद्वी कोमला तत्सम्बुद्धौ हे सरससारसकोषमृद्वि! प्रत्यग्रकमलकोमले! मारुतेन चारु यथा तथा कीर्णैः तद्द्वीपस्य लक्ष्म चिह्नं पृथुः महान् यः शाल्मलिः वृक्षविशेषः स्थिरायुः शाल्मलिर्द्वयोरित्यमरः। तस्य तूलजालैः तूलसमूहैः मृदुनि कोमले क्षौणीतले तव क्रीड़ाविहारसमये लीलासञ्चरणकाले चरणार्पणानि पादविन्यासा योग्यानि अनुरूपाणि भविष्यन्तीति शेषः। तच्चातिश्लाघ्यमिति भावः। अत्रानुरूपयोगोक्तेः समालङ्कारः। सा समालङ्कृतिर्योगे वस्तुनोरनुरूपयोरिति लक्षणात्॥ ६८ ॥

तदिति। तां भैमीम् एकतः एकस्मात् क्षितिपतेः अपरं क्षितिपतिं नयन्तस्ते शिविकाभृतो जन्याः एतस्य राज्ञो गुणगणश्रवणकाले विजृम्भमाणस्य तस्याः दमयन्त्याः लोचनाञ्च-

तां भारती पुनरभाषत नन्वमुष्मिन्
काश्मीरपङ्कनिभलग्नजनानुरागे।
श्रीखण्डलेपमयदिग्जयकीर्त्तिराजि-
राजद्भुजे भज महीभुजि भैमि! भावम्॥ ७०॥
द्वीपं द्विपाधिपतिमन्दपदे! प्रशास्ति
प्लक्षोपलक्षितमयं क्षितिपस्तदस्य।
मेधातिथेस्त्वमुरसि स्फुर हृष्टसौख्या
साक्षाद् यथैव कमला यमलार्जुनारेः॥ ७१॥

---

लस्य कटाक्षस्य निकोचनेन सङ्कोचनेन सूचितस्य ज्ञापितस्य भावस्य अभिप्रायस्य उचितम् अर्हं कृत्यं चक्रुः अपरागज्ञानानन्तरमपसरणमेव उचितमितिभावः॥ ६९॥

तामिति। भारती तां भैमीं पुनरभाषत। किमिति? ननु भैमि! काश्मीरपङ्कनिभेन कुङ्कुमपङ्कमिषेणेत्यपह्नवः। लग्नो जनानुरागो यस्मिन् तस्मिन् श्रीखण्डलेपः चन्दनलेपनं तन्मयीभिः दिग्जयकीर्त्तीनां राजिभिः राजन्तौ भुजौ यस्य तस्मिन् अमुष्मिन् महीभुजि राज्ञि भावम् अनुरागं भज। अत्र श्रीखण्डलेपे कीर्त्तित्वोत्प्रेक्षा गम्या॥ ७०॥

द्वीपमिति। द्विपाधिपतेः गजेन्द्रस्येव मन्दं पदं गमनं यस्याः तस्याः सम्बुद्धिः। अयं क्षितिपः प्लक्षेण प्लक्षवृक्षेण उपलक्षितं चिह्नितं द्वीपं प्लक्षद्वीपं प्रशास्ति तस्मात् मेधातिथेः मेधातिथिनाम्नोऽस्य राज्ञः उरसि हृष्टसौख्या जनितानन्दा सती यमलयोः अर्जुनवृक्षयोः ककुभवृक्षयोः तद्रूपधारिणोः असुरयोः अरेर्विष्णोः उरसि यथा साक्षात् कमला लक्ष्मीरिव स्फुर भाहि॥ ७१॥

प्लक्षे महीयसि महीवलयातपत्रे
तत्रेक्षिते खलु तवापि मतिर्भवित्री।
खेलां विधातुमधिशाखविलम्बिदोला-
लोलाखिलाङ्गजनताजनितानुरागे ॥ ७२ ॥
पीत्वा तवाधरसुधां वसुधासुधांशुः
न श्रद्दधातु रसमिक्षुरसोदवाराम्।
द्वीपस्य तस्य दधतां परिवेशवेशं
सोऽयं चमत्कृतचकोरचलाचलाक्षि ! ॥ ७३ ॥

---

प्लक्षे इति। तत्र प्लक्षद्वीपे अधिशाखं शाखायां विलम्बिनीभिः दोलाभिः लोलानि अखिलानि समस्तानि अङ्गानि यस्याः तादृशी या जनता जनसमूहः तया जनितोऽनुरागो यस्मिन् तस्मिन् महीवलयस्यातपत्रे महीयसि महत्तरे प्लक्षवृक्षे ईक्षिते सति तवापि खेलां दोलाक्रीड़ां क्रीड़ा खेला च कूर्दनमित्यमरः। विधातुं कर्त्तुं मतिः इच्छा भवित्री भाविनी खलु। परकीयविहारदर्शनात् स्वस्यापि तदभिलाषो भवतीति भावः ॥ ७२ ॥

पीत्वेति। हे चमत्कृतचकोरचलाचलाक्षि ! चकितचकोरचञ्चलाक्षि ! वसुधासुधांशुः भूचन्द्रोऽयं मेधातिथिः तव अधरसुधाम् अधरामृतं पीत्वा यस्य द्वीपस्य परिवेशवेशं परिध्याकारं दधताम् इक्षुरसः एवोदकं यस्य तस्य इक्षुरसाब्धेः वारां वारीणां रसं स्वादं न श्रद्दधातु न अभिलषतु श्रद्धास्तिक्याभिलाषयोरिति वैजयन्ती। अमृतास्वादलोलुपस्य किमिक्षुरसगण्डूषैरिति भावः। चकोरा एव चन्द्रस्य अमृतं पिबन्ति किन्तु चकोराक्ष्याः तव अधरामृतं भूचन्द्रोऽयं पिबति अतः चमत्कृतपदस्य सार्थकता अवगन्तव्या इति निष्कर्षः ॥७३॥

सूरं न सौर इव नेन्दुमवीक्ष्य तस्मिन्
अश्नाति यस्तदितरत्रिदशानभिज्ञः ।
तस्यैन्दवस्य भवदास्यनिरीक्षयैव
दर्शेऽश्नतोऽपि न भवत्ववकीर्णिभावः ॥ ७४ ॥
उत्सर्पिणी न किल तस्य तरङ्गिणी या
त्वन्नेत्रयोरहह तत्र विपाशि जाता ।
नीराजनाय नवनीरजराजिरास्ताम्
अत्रान्वसानुरज राजनि राजमाने ॥ ७५ ॥

---

सूरमिति । तस्मिन् प्लक्षद्वीपे तस्मादिन्दोरितरेषां त्रिदशानाम् अनभिज्ञः इन्दोरन्यं देवमभजमानो यः सूरे भक्तिर्यस्य सौरः सूर्य्यभक्तः भक्तिरित्यण् । सूरं सूर्य्यमिव इन्दुम् अवीक्ष्य नादृष्ट्वा नाश्नाति न भुङ्क्ते तस्य ऐन्दवस्य इन्दुभक्तस्य पूर्ववदण्प्रत्ययः । भवत्याः आस्यनिरीक्षयैव त्वन्मुखदर्शनेनैव सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः । दर्शे अमावास्यायाम् अश्नतो भुञ्जानस्यापि अविकीर्णिभावः क्षतव्रतत्वम् अवकीर्णिक्षतव्रतमित्यमरः । न भवतु । त्वन्मुखस्यैव मुख्येन्दुत्वात्तद्दर्शनादेव इन्दुदर्शनव्रतिनां भोजनाधिकारसिद्धिः । नास्ति च व्रतभङ्गदोष इति भावः । *एतेनैव तन्मुखे मुख्येन्दुभ्रमाद् भ्रान्तिमदलङ्कारो व्यज्यते* इति वस्तुनाऽलङ्कारध्वनिः ॥ ७४ ॥

उत्सर्पिणीति । या विपाट् नाम्नी तरङ्गिणी तस्य द्वीपस्य उत्सृज्य सर्पिणी उद्धतप्रवाहा न किल ? तत्र तस्यां विपाशि विपाशायां नद्यां विपाशा तु विपाट् स्त्रियामित्यमरः । जाता नवा नीरजराजिः पद्मपङ्क्तिः त्वन्नेत्रयोः तव चक्षुषोः नीराजनाय निर्मञ्छनाय आस्तां तिष्ठतु अहहेत्यद्भुते । विपाशायां उत्कटतरङ्गाभावात् पद्मानि सदा जायन्ते अतः तव अक्षिणो-

एतद्यशोभिरखिलेऽम्बुनि सन्तु हंसाः
दुग्धीकृते तदुभयव्यतिभेदमुग्धाः।
क्षीरे पयस्यपि पदे द्वयवाचिभूयं
नानार्थकोषविषयोऽद्य मृषोद्यमस्तु ॥ ७६ ॥

ब्रूमः किमस्य नलमप्यलमाजुहूषोः
कीर्त्तिं स चैष च समादिशतः स्म कर्त्तुम्।

राजनं सन्ततं भविष्यति इति भावः। राजमाने दीप्यमाने अत्र अस्मिन् मेधातिथिनाम्नि राजनि अञ्जसा सत्यम् अनुरज अनुरज्यस्व रञ्जेर्भौवादिकाल्लोटि सिप् रञ्जेश्चेत्युपधानकारस्य लोपः ॥ ७५॥

एतदिति। एतस्य राज्ञो यशोभिः अखिले अम्बुनि जले दुग्धीकृते क्षीरीकृते सति अद्य हंसाः तस्य उभयस्य दुग्धाम्बुद्वयस्य व्यतिभेदे विवेके मुग्धाः मूढाः सन्तु किञ्च क्षीरे पदे पयसि पदेऽपि क्षीरपयःपदयोर्विषय इत्यर्थः। नानार्थकोषस्य क्षीरं नीरे च दुग्धे पयोऽम्भसि च दुग्धे चेत्यादिना अनेकार्थनिघण्टोर्विषयस्तत्प्रतिपाद्यभूतमित्यर्थः। द्वयवाचिभूयमर्थद्वयवाचित्वं भुवो भाव इति क्यप्। क्षीरपदपयःपदयोर्निघण्टोर्विषयस्तत्प्रतिपाद्यभूतं उक्तमर्थद्वयवाचकत्वमद्य मृषोद्यं मिथ्योदितमस्तु सलिलस्यापि दुग्धभावेन द्वितीयार्थासम्भवादिति भावः। राजसूयसूर्य्यमृषोद्येत्यादिना निपातनात् साधुः। अत्राखिलेऽम्बुनि दुग्धीकृते इति सामान्यालङ्कारः तदुपजीवनेन हंसानां क्षीरनीरविवेकसम्बन्धेऽपि क्षीरपयःपदयोरप्यर्थद्वयसम्बन्धे तदसम्बन्धरूपातिशयोक्तिद्वयोत्थापनात् सङ्करः ॥ ७६ ॥

ब्रूम इति। नलं नैषधम् अपि अलम् अत्यर्थम् आजुहूषोः सस्पर्धमाह्वातुमिच्छोः नलसमानस्कन्धस्येत्यर्थः ह्वयतेराङ्पूर्वात्

स्वद्वीपसीमसरिदीश्वरपूरपार-
वेलाबलाक्रमणविक्रममक्रमेण ॥ ७७ ॥
अम्भोजगर्भरुचिराथ विदर्भसुभ्रूः
तं गर्भरूपमपि रूपजितत्रिलोकम्।
वैराग्यरूक्षमवलोकयति स्म भूपं
दृष्टिः पुरत्रयरिपोरिव पुष्पचापम् ॥ ७८ ॥
ते तां ततोऽपि चक्षुर्जगदेकदीपात्
अंशस्थलस्थितसमानविमानदण्डाः।

---

स्पर्द्धायामात्मनेपदिनः सनन्तादुप्रत्ययः न लोकेत्यादिना षष्ठी-प्रतिषेधान्नलम् इति कर्मणि द्वितीया अस्य मेधातिथेर्मा-हात्म्यमिति शेषः। किं ब्रूमः ? वक्तुमशक्यमित्यर्थः। तथाहि, स नलस्य एष मेधातिथिश्च स्वद्वीपयोः प्लक्षजम्बूद्वीपयोः सीमनि सरिदीश्वरपूरस्य अब्धिप्रवाहस्य पारे वेलायां परतीर-रेखायां बलेन आक्रमणमेव विक्रमं पराक्रमं अक्रमेण यौग-पद्येन कर्त्तुं कीर्त्तिं प्रयोज्यकर्त्रीं समादिशतः स्म समादिष्ट-वन्तौ द्वीपान्तरेषु अपि अनयोः कीर्त्तिसञ्चार इति भावः॥७७॥

अम्भोजेति। अथ एतत्वाक्यश्रवणानन्तरम् अम्भोजगर्भवत् रुचिरा रम्या दृष्टिस्तद्वदरुणेत्यर्थः। विदर्भसुभ्रूः वैदर्भी प्रशस्तो गर्भो गर्भरूपस्तं पूर्ववयसं युवानमपीत्यर्थः प्रशंसायां रूपप्। रूपजितत्रिलोकं रूपेण सौन्दर्य्येण जितास्त्रयो लोका येन तं पुष्पचापेऽपीदं योज्यम्। भूपं मेधातिथिं पुष्पचापं कामं पुरत्रयरिपोः ईश्वरस्य दृष्टिरिव वैराग्यरूक्षं वैराग्येण अपरागेण रूक्षं परुषं यथा तथा अवलोकयति स्म अतिसुन्द-रेऽपि तस्मिन् राज्ञि न अनुरक्ता अभूत् इति भावः ॥७८॥

ते इति। अंसस्थलेषु स्थितः समानः एकरूपः विमान-

चण्डद्युतेरुदयिनीमिव चन्द्रलेखां
सोत्कण्ठकैरववनीसुकृतप्ररोहाः ॥ ७९ ॥
भूपेषु तेषु न मनागपि दत्तचित्ता
विस्मेरया वचनदेवतया तयाथ ।
वाणीगुणोदयतृणीकृतपाणिवीणा-
निक्वाणया पुनरभाणि मृगेक्षणा सा ॥ ८० ॥
यन्मौलिरत्नमुदितासि स एष जम्बू-
द्वीपस्त्वदर्थमिलितैर्युवभिर्विभाति ।

---

दण्डो येषां ते समविभक्तभरा इत्यर्थः । ते धुर्याः तां भैमीं सोत्कण्ठायाः चन्द्रलेखोत्सुकायाः कैरववन्याः सुकृतप्ररोहाः भाग्यविलासाः उदयिनीं उदयोन्मुखीं चन्द्रलेखां जगदेकदीपात् चण्डद्युतेः चण्डांशोरिव जगदेकदीपात्ततो मेधातिथेरपि चक्षुः अपनिन्युः । सूर्यस्य तेजस एव चन्द्ररूपेण कुमुदानन्दकरत्वेन प्रसिद्धाः । वराहमिहिरः । यत्तेजः पितृधाम्नि शीतमहसः पाथोमये मण्डले संक्रान्तं कुमुदाकरस्य कुरुते काञ्चिद्विकास श्रियम् इति ॥७९॥

भूपेष्विति । तेषु भूपेषु द्वीपाधिपतिषु मनाक् ईषदपि न दत्तचित्ता असक्तान्तरङ्गा मृगेक्षणा सा भैमी अतएव विस्मेरया विस्मितया सहास्यया वा । न कम्पेत्यादिना रप्रत्ययः । वाणीगुणोदयेन माधुर्यादिवाग्गुणप्रकर्षेण तृणीकृतः तिरस्कृतः पाणिवीणायाः हस्तस्थितविपञ्च्याः निक्वाणः ध्वनिः यया तया वीणाधिकवाणीगुणया वचनदेवतया सरस्वत्या अथ पुनः अभाणि ॥ ८० ॥

यदिति । हे भैमि ! त्वं यस्य जम्बूद्वीपस्य मौलिरत्नं भूत्वा उदिता उत्पन्नासि स एष जम्बूद्वीपः तुभ्यं त्वदर्थं मिलि-

दोलायितेन बहुना भवभीतिकम्प्रः
कन्दर्पलोक इव खात् पतितस्त्रुटित्वा ॥ ८१ ॥
विष्वग्वृतः परिजनैरयमन्तरीपैः
तेषामधीश इव राजति राजपुत्रि ! ।
हेमाद्रिणा कनकदण्डमयातपत्रः
कैलासरश्मिचयचामरचक्रचिह्नः ॥ ८२ ॥

---

तैः युवभिः हेतुभिः विभाति । क इव ? भवभीत्या रुद्रभयेन कम्प्रः कम्पनशीलः अतएव बहुना अनेकेन दोलायितेन दोलनेन त्रुटित्वा खात् स्वर्गात् पतितः खमिन्द्रिये सुखे स्वर्गे शून्यवर्त्मनि विहायसीति विश्वः । कन्दर्पलोकः कामजगदिवेत्युत्प्रेक्षा विभातीत्यन्वयो वा । कम्प्रं वस्तु बहुदोलनेन त्रुटितं शून्यमार्गात् पतति इति प्रसिद्धिः । सभास्थिताः सर्वे राजानः कन्दर्पतुल्या इति भावः ॥ ८१ ॥

विष्वगिति । हे राजपुत्रि ! अन्तर्गताः आपः येषां तानि अन्तरीपाणि प्लक्षद्वीपादीनि द्वीपोऽस्त्रियामन्तरीपमित्यमरः । तैरेव परिजनैः विष्वक् समन्तात् वृतः । हेमाद्रिणा मेरुणा कनकदण्डं कनकमयदण्डम् आतपत्रं कनकातपत्रमेव यस्य सः मेरोः शिरसि विशालत्वादन्यत्र तनुत्वादेकस्यैव दण्डत्वेनातपत्रत्वेन च रूपणम् । कैलासस्य रश्मिचय एव चामरचक्रं चामरजालं तच्चिह्नं यस्य सः अयं जम्बूद्वीपः तेषां द्वीपान्तराणामधीश इव राजतीत्युत्प्रेक्षा । सिंहलद्वीपादयस्तु तस्य चतुर्दिक्षु परिवृता भृत्या इव तिष्ठन्ति । सुमेरुगिरिस्तस्य आतपत्रं कैलासपर्वतस्तु चामरचयरूपं राजचिह्नम् । अतो जम्बूद्वीपः नृपतिचिह्नवत्त्वात् राजा एव ॥ ८२ ॥

एतत्तरुस्तरुणि! राजति राजजम्बूः
स्थूलोपलानिव फलानि विमृश्य यस्याः।
सिद्धस्त्रियः प्रियमिदं निगदन्ति दन्ति-
यूथानि केन तरुमारुरुहुः पथेति॥ ८३॥
जाम्बूनदं जगति विश्रुतिमेति मृत्स्ना
कृत्स्नापि सा तव रुचा विजितश्रि यस्याः।
तज्जाम्बवद्रवभवाम्बु सुधाविधाम्बुः
जम्बूः सरिद्वहति सीमनि कम्बुकण्ठि!॥ ८४॥

---

एतदिति। हे तरुणि! एतस्य जम्बूद्वीपस्य तरुः चिह्नभूतो वृक्षः राजजम्बूः जम्बूविशेषः। अथो राजजम्बूः सुरभिच्छद इति वैजयन्ती। राजति। स्थूलोपलान् गण्डशैलानिव स्थितानि यस्याः जम्ब्वाः फलानि विमृश्य आलोच्य सिद्धस्त्रियः प्रियं स्वदयितं दन्तियूथानि करिघटाः केन पथा तरुमारुरुहुरिति इदं वचो निगदन्ति गजप्रमाणानि तत्फलानीत्यर्थः। ब्रुविशासिरित्यत्र ब्रुवेरर्थग्रहणाद्गदेर्द्विकर्मकत्वम्। अत्र जम्बूफलेषु दन्तिभ्रमोक्त्या भ्रान्तिमदलङ्कारः॥ ८३॥

जाम्बूनदमिति। कम्बोः शङ्खस्य कण्ठ इव कण्ठो यस्यास्तस्याः सम्बुद्धिः। हे कम्बुकण्ठि! अथवा हे रेखात्रयाञ्चितग्रीवे! रेखाञ्चितग्रीवा कम्बुग्रीवेति कथ्यते इति हलायुधः। अङ्गगात्रकण्ठेत्यादिना ङीष्। तेषां पूर्वोक्तानां जाम्बवानां जम्बूफलानां द्रवात् रसाद्भवा तद्भवा जम्बूः स्त्री जम्बु जाम्बवमित्यमरः। फले लुक् जम्बा वेति विकल्पादालुक्। सुधायाः विधेव विधा प्रकारो येषां तानि तद्विधानि तत्प्रकाराणि अम्बु यस्याः सा सुधाविधाम्बुः जम्ब्वाख्या सरित् अस्य जम्बूद्वीपस्य सीमनि वहति प्रवहति किञ्च यस्याः जम्बूनद्याः

तस्मिन् जयन्ति जगती[illegible]थः सहस्रम्
अस्राम्बुसान्द्ररिपुतद्दनितेषु तेषु ।
रम्भोरु ! चारु कतिचित्तव चित्तबन्धि-
रूपान्निरूपय मुदाहमुदाहरामि ॥ ८५ ॥

प्रत्यर्थियौवतवतंसतमालमालो-
न्मीलत्तमःप्रकरतस्करशौर्य्यसूर्य्ये ।
अस्मिन्नवन्तिनृपतौ गुणसन्ततीनां
विश्रान्तिधामनि मनो दमय[illegible] ! किं ते ? ॥८६॥

---

अम्बन्धिनो कृत्स्ना समस्ता सा प्रसिद्धा मृत्स्ना प्रशस्त-मृत्तिका मृण्मृत्तिका प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिका इत्यमरः। सस्नौ प्रशंसायामिति स्नप्रत्ययः। तव रुचा शरीरकान्त्या विजितश्रि निर्जितशोभं नपुंसके ह्रस्वः। जम्बू-नद्यां भवं जाम्बूनदं सुवर्णमिति जगति विश्रुतिं विख्याति-मेति। तथाच विष्णुपुराणम्। तीरभूस्तत्र संप्राप्य शुद्धवातवि-शोधिता। जाम्बूनदाख्यं भवति सुवर्णं देवभूषणम् ॥ ८४ ॥

तस्मिन्निति। रम्भे कदलिस्तम्भाविव ऊरू यस्याः सा रम्भोरूः ऊरूत्तरपदादौपम्य इत्यूङ्प्रत्ययः। तस्याः सम्बुद्धिः। नदी-ह्रस्वः। हे रम्भोरु ! तस्मिन् जम्बूद्वीपे जगतीपत[illegible]यः भूपतयः सहस्रं जयन्ति। अस्रैः शोणितैः अम्बुभिः वा[illegible] यथासङ्ख्य सान्द्राः सिक्ताः रिपवः तद्वनिताश्च येषां तेषु हतारिषु इत्यर्थः। तेषु भूपेषु मध्ये कतिचित् कांश्चित् चित्तबन्धि चित्तग्राहि रूपं येषां तान् मनोहारिसौन्दर्य्यान् भूपान् अहम् उदाह-रामि कथयामि। मुदा हर्षेण चारु निरूपय सम्यगवधारय ॥ ८५ ॥

प्रत्यर्थीति। हे दमयन्ति ! प्रत्यर्थिनां यौवतं युवति-

तत्रानुतीरवनवासितपस्विविप्रा
सिप्रा तवोर्मिभुजया जलकेलिकाले ।
आलिङ्गनानि दधती भविता वयस्या
हास्यानुबन्धरमणीयसरोरुहास्या ॥ ८७ ॥
अस्याधिशय्य पुरमुज्जयिनीं भवानी
जागर्त्ति या सुभगयौवतमौलिमाला ।

---

समूहः भिक्षादित्वादणप्रत्ययः । तस्य वतंसाः शिरोभूषण भूतास्तमालमालाः तमालदलसमूहास्ता एव उन्मीलन्त्यपि उद्गच्छदन्धकाराः तेषां प्रकरस्य समूहस्य तस्करम् अपहारकं यत् शौर्य्यं तत्र सूर्य्ये । सूर्य्यो यथा अन्धकारं अपनयति तथा एष नृपतिः शत्रुपत्नीनां वैधव्यसम्पादनेन कर्णभूषणभूततमालमालां अपनयति । गुणसन्ततीनां गुणसम्पदां विश्रान्तिधामनि विश्रामस्थाने अस्मिन् अवन्तिनृपतौ अवन्तिनाथे ते मनः किम् ? ॥ ८६ ॥

तत्रेति । तत्र अवन्तिदेशे अनुतीरं तीरे विभक्त्यर्थे वायस्य आयाम इति वा अव्ययीभावः । तद्वनानि यावत्तीरमायतानीत्यर्थः । तद्वासिनस्तपस्विनो विप्रा यस्यां सा सिप्रा नदी तव जलकेलिकाले ऊर्मिरेव भुजा तया आलिङ्गनानि दधती कुर्वती तथा हास्यं विकासस्मितञ्च तदनुबन्धेन तद्योगेन रमणीयं सरोरुह मिवान्यत्र तदिति वा आस्यं यस्याः सा सती वयस्या भविता सखी भविष्यति । यथा सहास्यवदना सखी केलिसमये बाहुभ्यां आलिङ्गति तथा शिप्रापि त्वां आलिङ्गिष्यति इति समासोक्तिः अलङ्कारः ॥ ८७ ॥

अस्येति । भवस्य पत्नी भवानी पार्वती इन्द्र वरुण भवेत्यादिना ङीषनुगागमश्च । अस्य अवन्तिनाथस्य उज्जयिनीं

पत्यार्द्धकायघटनाय मृगाक्षि! तस्याः
शिष्या भविष्यसि चिरं वरिवस्ययापि ॥ ८८ ॥
निःशङ्कमङ्कुरितताꣳ रतिवल्लभस्य
देवः स्वचन्द्रकिरणामृतसेचनेन।
तत्रावलोक्य सुदृशां हृदयेषु रुद्रः
तद्दे हदाहफलमाप स किं न विद्मः ॥ ८९ ॥

---

परमधिशय्य अधिष्ठाय अयङ् यिक्ङितीत्ययङ् आदेशः अधिशीङ्स्थासां कर्म्मेति अधिकरणस्य कर्मत्वम्। जागर्त्ति प्रकाशते या भवानी सुभगस्य पतिवल्लभस्य यौवतस्य युवतिसमूहस्य मौलिमाला शिरोभूषणम्। हे मृगाक्षि! पत्या भर्त्रा सह अर्द्धं कायस्यार्द्धकायः अर्द्धं नपुंसकमिति समासः। तस्य घटनाय तस्या भवान्याः चिरं वरिवस्यया परिचर्य्यया नमोवरिवश्चित्रङः क्यच् अप्रत्ययादिति स्त्रिया मकारप्रत्यये टाप्। शिष्यापि भविष्यसि न केवलं पूर्वोक्तसिप्राविहारादि सम्पत्तिरेव किन्तु सर्वसौभाग्यभूतं भवानीशिष्यत्वमपि ते भविष्यतीतित्यर्थः। भवानीवत् पत्या सह तव क्षणमपि विरहो न भविष्यतीति भावः ॥ ८८ ॥

निःशङ्कमिति। तत्र उज्जयिन्यां स देवो रुद्रो महाकालनाथः। सुदृशां तत्रत्यानां स्त्रीणां हृदयेषु अन्तःकरणेषु स्वचन्द्रकिरणामृतसेचनेनैव निजचूडामणिभूतचन्द्रकिरणामृतवर्षणेन रतिवल्लभस्य कामस्य निःशङ्कं निर्भयं यथा तथा अङ्कुरितताꣳ सञ्जाताङ्कुरत्वं पुनरुत्पन्नत्वमिति यावत् चन्द्रभासां स्मरोद्दीपकत्वादिति भावः। अवलोक्य तस्य कामदेहदाहस्य स्वकृतस्य किं फलं आप प्राप? न विद्मः स्वदग्धस्य कामस्य स्वाग्निरचन्द्रिकासेकादेव दग्धवदराादिवत् पुनः सहस्रधा

आगःशतं विदधतोऽपि समृद्धकामा
नाधीयते परुषमक्षरमस्य वामाः ।
चान्द्री न तत्र हरमौलिशयालुरेका
नाध्यायहेतुतिथिकेतुरपैति लेखा ॥ ९० ॥
भूपं व्यलोकत न दूरतरानुरक्ता
सा कुण्डिनावनिपुरन्दरनन्दना तम् ।

---

प्रादुर्भावे स्वप्रयासस्य किं प्रयोजकं वक्ष्यतीत्यर्थः आपद्दत्यत्र आह इति पाठान्तरम् । विषमालङ्कारः ॥ ८९ ॥

आग इति । समृद्धकामाः नित्यप्रदीप्तमन्मथाः । अतएव वामाः वक्रशीला अपि स्त्रियः प्रतीपदर्शिनी वामा इत्यमरः । आगसाम् अपराधानां शतं विदधतः कुर्वाणस्यापि अस्य राज्ञः सम्बन्धे परुषमक्षरं निष्ठुरवाक्यं नाधीयते न पठन्ति न जल्पन्तीत्यर्थः । अत्र हेतुमाह तत्रोज्जयिन्याम् अनध्यायहेतुतिथेः शुक्लप्रतिपदः केतुश्चिह्नभूता हरमौलौ शयालुः स्थायुका आलुचिति शीङ् ग्रहणादालुच् । एका चान्द्री रेखा नापैति तत्र हरशिरोगतैकेन्दुकलानित्ययोगात् सर्वासामपि तिथीनां शुक्लप्रतिपदत्वेन परुषाक्षरश्रुतीनां नित्यानध्यायहेत्वर्थः तत्र नित्यसन्निहितहरशिरश्चन्द्रिकोद्दीपित-मन्मथाग्नितया खण्डितादयोऽपि नायिकाः शतशोऽपराध्यन्तम् अपि एनं परुषम् आभाषितुं नोत्सहन्त इति भावः । प्रतिपत् पाठशीलानां विद्येव तनुतां गता इति वचनात् । प्रतिपदि पाठनिषेधात् तत्र च नगर्य्यां प्रत्यहं हरशिरःस्थितचन्द्रकलैक स्थित्या प्रतिपत्बुद्ध्या स्त्रियः भर्त्तृसमीपे परुषाक्षरपाठं न कुर्वन्ति इति भावः । ॥९०॥

भूपमिति । कुण्डिनावनिपुरन्दरस्य कुण्डिनप्रधानभूमी-

अन्यानुरागविरसेन विलोकनाद्वा
जानामि सम्यगविलोकनमेव रम्यम्॥ ८१॥
भैमीङ्गितानि शिविकामधरे वहन्तः
साक्षान्न यद्यपि कथञ्चन जानते स्म।
जग्मुस्तथापि सविधस्थितसंमुखीन-
भूपालभूषणमणिप्रतिविम्बितेन॥ ८२॥
भैमीमवापयत जन्यजनस्तदन्यं
गङ्गामिव क्षितितलं रघुवंशदीपः।

---

न्द्रस्य भीमभूपस्य नन्दना दुहिता नन्दादित्वात् ल्युट् प्रत्यये टाप्। सा दमयन्ती दूरतरानुरक्तं अत्यनुरागिणमपि तं भूपं न व्यलोकत नैक्षत अत्रैतदेव वरमित्याह। अन्यानुरागात् अन्यस्मिन् अनुरक्ततया विरसेन अपरागेण विलोकनात् अस्य द्वया दर्शनापेक्षया सम्यगत्यन्तमविलोकनमेव अदर्शनमेव रम्यं श्रेष्ठं समीचीनम् इति जानामि॥ ८१॥

भैमिनि। शिविकामधरे अधरप्रदेशे वहन्तो वोढ़ारो भैमीङ्गितानि भैमीचेष्टितानि कथञ्चन कथञ्चिदपि साक्षात् प्रत्यक्षं न जानते स्म यद्यपि न अजानन्त एव यद्यपीत्यवधारणे इति केशवः। तथापि सविधे स्थितेषु सम्मुखं दर्शनमेष्विति सम्मुखीनेषु साम्मुख्यं न प्रतिविम्बग्राहिष्वित्यर्थः, यथामुखसम्मुखस्य दर्शन इति खप्रत्ययः। भूपालस्यावन्तिराजस्य भूषणमणिषु प्रतिविम्बितेन भैमीप्रतिविम्बकारणेन जग्मुः अज्ञासिषुः ऊहितवन्त इति यावत्। जानातेर्लिट्॥ ८२॥

भैमीति। जन्यजनो वाहनजनः गाङ्गेयं हेम तद्वत् पीतं हरिद्रावर्णम् अन्यत्र गाङ्गेयेन भीष्मेण पीतं पानकर्म्मीभूतं पीतं स्यात् पीतगौरयोरिति विश्वः। कर्मेरङ्कोर्गाङ्गेयं

गाङ्गेयपीतकुचकुम्भयुगाश्च हार-
चूड़ासमागमवशेन विभूषिताश्च ॥ ८३ ॥
तां मत्स्यलाञ्छनदराञ्चितचापभासा
नीराजितभ्रुवमभाषत भाषितेशा ।
व्रीड़ाजडे ! किमपि रूपय चेतसा चेत्
क्रीडारसं वहसि गौड़विड़ोजसीह ॥ ८४ ॥
एतद्यशोभिरमलानि कुलानि भासां
तथ्यं तुषारकिरणस्य तृणीकृतानि ।

---

गाङ्गेयो गुह भीष्मयोरिति वैजयन्ती । तादृक् कुचकुम्भयुगं यस्याः तां हाराः मुक्ताहाराः चूड़ा बाहुविभूषणाः चूड़ा बाहु-विभूषण इति विश्वः । अन्यत्र हरस्येयं हारी चूड़ा शिखा हारचूड़ा पुंवत् कर्मधारय जातीयदेशेष्विति पुंवद्भावः । तत्समागमवशेन तद्योगबलेन विभूषिताश्च भैमीं रघुवंशदीपो भगीरथो गङ्गां भागीरथीं चितितलमिव ततोऽन्यं नृपमवा-पयत निनाय आप्नोतेर्ण्यन्ताल्लङि णिचश्चेति तङ् । उपमा-लङ्कारः ॥ ८३ ॥

तामिति । भाषितानां वाचाम् ईशा अधिष्ठात्री वाग्दे-वता सरस्वती मत्स्यलाञ्छनस्य कामस्य दराञ्चितस्य किञ्चि-न्नमितस्य चापस्य भासा कान्त्या नीराजिते निर्मञ्छिते कामो-द्दीपिके भ्रुवौ यस्याः तां भैमीम् अभाषत किमिति हे व्रीड़ा-जडे ! लज्जालसे ! चेतसा इह गौड़विड़ोजसि गौड़देवेन्द्रे गौड़राज्ञि क्रीडारसं क्रीड़ारागं वहसि चेत् किमपि रूपय किञ्चित् सूचय ॥ ८४ ॥

एतदिति । एतस्य राज्ञो यशोभिः तुषारकिरणस्य इन्दोः अमलानि भासां कुलानि कान्तिवृन्दानि तृणीकृतानि नैर्म-

स्थाने ततो वसति तत्र सुधाम्बुसिन्धौ
रङ्कुस्तदङ्कुरवनीकवलाभिलाषात् ॥ ८५ ॥
आलिङ्गितः कमलवत्करकस्त्वयाऽयं
श्यामः सुमेरुशिखयेव नवः पयोदः ।
कन्दर्पमूर्द्धरुहमण्डनचम्पकस्र-
ग्दामत्वदङ्गरुचिकञ्चुकितश्चकास्तु ॥ ८६ ॥
एतेन सम्मुखमिलत्करिकुम्भमुक्ताः
कौक्षेयकाभिहतिभिर्विबभुर्विमुक्ताः ।

---

स्वगुणेन तुच्छीकृतानि तृणत्वं प्रापितानि तथ्यं सत्यम् । ततः तृणीकरणादेव रङ्कुः अङ्कमृगः तृणाङ्कुरवनीकवलेषु तृणाङ्कुर-पूरग्रासेषु अभिलाषादेव सुधाम्बुसिन्धौ अमृतोदकस्थाप्ये इन्दौ वसतीत्युत्प्रेक्षा स्थाने युक्तं युक्ते द्वे साम्प्रतं स्थाने इत्यमरः । तृणोदकसम्पन्नस्थले मृगास्तिष्ठन्तीति ॥८५॥

आलिङ्गित इति । कमलवन्तौ पद्मरेखायुक्तौ करौ पाणी यस्य सः शैषिकः कप् । अन्यत्र कमलवन्तो जलवन्तस्तदा-त्मकाः करका वर्षोपला यस्मिन् सः । सलिलं कमलं जल-मित्यमरः । श्यामः उभयत्र श्यामवर्णः स पयोदः सुमेरोः शिखया शृङ्गरेखयेव त्वयाऽयं नृपः आलिङ्गितः सन् कन्दर्पस्य मूर्द्धरुहाणां केशानां मण्डनं यच्चम्पकस्रगेव दाम गुणस्तदिव त्वदङ्गं यस्य स रुच्या कान्त्या कञ्चुकितः सञ्जातकञ्चुकः चकास्तु प्रकाशतु दीप्यताम् । सुमेरुगिरिः श्यामवर्णं मेघम् प्राप्य यथा शोभते तथा पीतवर्णा त्वं कृष्णवर्णम् एनं नृपतिं स्वीकृत्य शोभिता भविष्यसि इति भावः ॥ ८६ ॥

एतेनेति । एतेन राज्ञा कौक्षेयकाभिहतिभिः असिघातैः कुल कुक्षि ग्रीवाभ्यश्वास्यालङ्कारेष्विति ढकञ् प्रत्ययः । विमुक्ताः

एतद्भुजोष्मभृशनिःसहया विकीर्णाः
प्रस्वेदविन्दव इवारिनरेन्द्रलक्ष्म्या ॥ ८७ ॥
आश्चर्य्यमस्य ककुभामवधीनवापत्
आजानुगाद्भुजयुगादुदितः प्रतापः ।
व्यापत् सदाशयविसारितसप्ततन्तु-
जन्मा चतुर्दश जगन्ति यशःपटश्च ॥ ८८ ॥
औदास्यसंश्रिदवलम्बितशून्यमुद्राम्
अस्मिन् दृशोर्निपतितामवगम्य भैम्याः ।

---

विच्छिप्ताः सम्मुखं यथा तथा मिलतां संगच्छमानानां करिणां कुम्भेषु मुक्ता मौक्तिकानि एतस्य राज्ञो भुजोष्मणो भुजप्रतापस्य भृशं न सहत इति निःसहा असहा पचाद्यच्। तया भुजोष्मसन्तप्तयेत्यर्थः। अरिनरेन्द्राणां लक्ष्म्या विकीर्णा विक्षिप्ताः प्रस्वेदविन्दव इव विवभुरित्युत्प्रेक्षा ॥ ८७ ॥

आश्चर्य्यमिति। अस्य राज्ञः आजानु जानुपर्य्यन्तं गच्छतीति आजानुगात् अदूरगामिन इत्यर्थः। भुजयुगात् उत्थितः प्रतापः ककुभाम् अवधीन् दिगन्तान् अवापत् किञ्च सता शुद्धेन शयेन चित्तेन विसारितेभ्योऽनुष्ठितेभ्यः सप्ततन्तुभ्यः क्रतुभ्यः सप्ततन्तुर्मखः क्रतुरित्यमरः। अन्यत्र सदा सर्वदा शयेन पाणिना विसारितेभ्यः प्रसारितेभ्यः सप्तभ्यः तन्तुभ्यः जन्म यस्य सः यशःपटः चतुर्दश जगन्ति व्यापत् व्यानशे इति आश्चर्य्यम् अत्रात्यन्तादूरगामिनः कारणात् अतिदूरगामियशसः तन्तुसप्तकाच्चतुर्दशभुवनव्यापि-यशःपटस्योत्पत्त्या विरुद्धकार्य्योत्पत्तिलक्षणो विषमालङ्कारः। क्रत्वनुष्ठानं दिगन्तविश्रान्तकीर्त्ति सम्पत्तिश्च जानुबाहुत्वस्य फलमिति भावः ॥ ८८ ॥

औदास्येति। जनीं बधूं वहन्तीति जन्या सा जनता

स्वेनैव जन्यजनतान्यमजीगमत्तां
सूच्यं प्रतीङ्गितविभावनमेव वाचः ॥ ९९ ॥
एतां कुमारनिपुणां पुनरप्यभाणीत्
वाणी सरोजमुखि ! निर्भरमारभस्व ।
अस्मिन्नसंकुचितपङ्कजसख्यशिक्षा-
निष्णातदृष्टिपरिरम्भविजृम्भितानि ॥ १०० ॥

---

जनसमूहश्च षष्ठीसमासे असामर्थ्यात्तदन्तविध्यभावाच्च विशेषणसमासः। अस्मिन् गौड़भूपे निपतितां भैम्या दृशोः चक्षुषोः सम्बन्धिनीं उदास्त इत्युदासा पचाद्यच्। स्त्रियां टाप्। तस्या भाव औदास्यमौदासीन्यं ब्राह्मणादेः आकृतिगणत्वात् ष्यञ्। औदास्यसम्बिदा उपेक्षाबुद्ध्या अवलम्बितां शून्यमुद्रां निःस्पृहावस्थानत्वम् अवगम्य स्वेनैव स्वतएव वाचं विनैव तां भैमीम् अन्यं नृपम् अजीगमत् गमितवती गमेर्णौ चङ्। तथाहि सुज्ञं विज्ञं प्रति इङ्गितविभावनमाकारप्रकटनमेव वाचः प्रेरणानि स्वामीङ्गितज्ञस्य हि किं तद्वाग्भिरित्यर्थः ॥९९॥

एतामिति। वाणी कुमारी च सा निपुणा च तां कुमारनिपुणां कुमारश्रमणादिभिरिति समासः। स्त्रियां पुंवदित्यादिना पुंवद्भावः। अथवा कोः पृथिव्याः मारे कन्दर्पभूते नले इत्यर्थः निपुणां आसक्तां एतां भैमीं पुनरप्यभाणीत् अवोचत् हे सरोजमुखि ! अस्मिन् नृपे असङ्कुचितेन विकसितेन पङ्कजेन सह सख्यशिक्षायां मैत्रीकरणे निष्णातया कुशलया तत्सदृशया इत्यर्थः। निनदीभ्यां स्नातेः कौशल इति षत्वम्। दृष्ट्या परिरम्भविजृम्भितानि आलिङ्गनचेष्टितानि निर्भरं गाढम् आरभस्व कुरु एनं पश्येत्यर्थः ॥ १०० ॥

प्रत्यर्थिपार्थिवपयोनिधिमाथमन्थ-
पृथ्वीधरः पृथुरयं मथुराधिनाथः ।
अश्मश्रुजातमनुयाति न शर्वरीशः
श्यामाङ्ककर्वुरवपुर्वदनाब्जमस्य ॥ १०१ ॥
बाले ! ऽधराधरितनैकविधप्रबाले !
पाणौ जगद्विजयकार्मणमस्य पश्य ।
ज्याघातजेन रिपुराजकधूमकेतु-
तारायमाणमुपरज्य मणिं किणेन ॥ १०२ ॥

---

प्रत्यर्थीति । अयं पुरोवर्त्ती नृपः प्रत्यर्थिपार्थिवपयोनिधिमाथे वैरिभूपाब्धिमन्थने मन्थपृथ्वीधरो मन्थाचलः मन्दरः अतिवीर इत्यर्थः । पृथुर्महान् मथुराधिनाथो मथुरानगरीशः श्मश्रु जातमस्य तज्जातश्मश्रु तन्न भवतीति अश्मश्रुजातम् आहिताग्न्यादित्वान्निष्ठायाः परनिपातः । अस्य राज्ञः अनुत्पन्नश्मश्रु मुखाब्जं मुखपद्मं श्यामेन अङ्केन कलङ्केन कर्वुरवपुः शवलाङ्गः शर्वरीशः चन्द्रः नानुयाति नानुकरोति सकलङ्कनिष्कलङ्कयोः कुतः साम्यमिति भावः । अश्मश्रुजातम् इति वयः सन्धौ वर्त्तमानः एष तव वरणयोग्य इति तात्पर्य्यम् ॥ १०१ ॥

बाल इति । अधरेण ओष्ठेन अधरिता अधरीकृता नैकविधा अनेकविधा नञ् समासः । प्रवालाः विद्रुमपल्लवरूपा यया सा हे तथाविधे ! बाले ! अस्य मथुरेश्वरस्य पाणौ जगद्विजयस्य कार्मणं वशीकरणौषधं ज्याघातजेन किणेन ग्रन्थिना उपरज्य उपरागं प्राप्य रिपोः शत्रुभूतस्य राजकस्य राजसमूहस्य धूमकेतुतारायमाणं धूमकेत्वाख्यनक्षत्रवदाचरन्तं

एतद्भुजारणिममन्थविक्रमाग्नि-
चिह्नं धनुर्गुणकिणः खलु धूमलेखा।
जातं ययारिपरिषन्मशकार्थयाश्रु-
विस्रावणाय रिपुदारदृगम्बुजेभ्यः॥ १०३॥
श्यामीकृतां मृगमदैरिव माथुरीणां
धौतैः कलिन्दतनयामधिमध्यदेशम्।
तत्राप्तकालियमहाह्रदनाभिशोभां
रोमावलीमिव विलोकयितासि भूमेः॥ १०४॥

---

तद्वदुपप्लवायमानमित्यर्थः। आचारक्यङन्तात्लटः शानच्। मणिं कङ्कणमाणिक्यं पश्य॥ १०२॥

एतदिति। एतस्य राज्ञो भुजाया एव अरणेः निर्मन्थ्यकाष्ठात्समुत्पद्भवस्य समुत्पन्नस्य विक्रमाग्नेः चिह्नमनुमापकं लिङ्गं निर्मन्थ्यदारुणि त्वरणिर्द्वयोरित्यमरः। धनुर्गुणकिणो ज्याघातरेखा धूमरेखा खलु? कुतः यया धूमरेखया अरिपरिषदो अरिसङ्घास्ता एव मशकास्तदर्थया तन्निवृत्त्यर्थया जातं भावे क्तः। अर्थोऽभिधेयरैवस्तु प्रयोजननिवृत्तिष्वित्यमरः। अर्थेन सह नित्यसमासः सर्वलिङ्गता च वक्तव्या। किञ्च रिपुदाराणां दृगम्बुजेभ्यो नयनारविन्देभ्योऽश्रुविस्रावणाय वाष्पोद्गमाय जातं धूमकेतूदयाद शोको धूमोत्पीडनादश्रुस्रावश्चेति भावः॥ १०३॥

श्यामीति। माथुरीणां मथुरानगरीजातस्त्रीणां तत्र जात इत्यण्प्रत्यये ङीप्। धौतैर्जलक्रीडासु क्षालितैर्मृगमदैः कस्तूरिकाभिरिवेत्युत्प्रेक्षा। श्यामीकृतां मध्यदेशे अधिमध्यदेशविशेषे अवलग्ने च विभक्त्यर्थेऽव्ययीभावः। आप्ता प्राप्ता कालियस्य कालियनागस्य महाह्रद एव नाभिः तस्याः

गोवर्द्धनाचलकलापिचयप्रचार-
निर्वासिताहिनि घने सुरभिप्रसूने ।
तस्मिन्ननेन सह निर्विश निर्विशङ्कं
वृन्दावने वनविहारकुतूहलानि ॥ १०५ ॥
भावी करः कररुहाङ्कुरकोरकोऽपि
त्वद्दल्लिपल्लवचये तव सौख्यलक्ष्यः ।
अन्तस्त्वदास्यहृतसारतुषारभानु-
शोभानुकारिकरिदन्तजकङ्कणाङ्कः ॥ १०६ ॥

---

शोभा यया ताम् अतएव भूमेः रोमावलिमिव स्थितामित्युत्प्रेक्षा कलिन्दतनयां कालिन्दीं तत्र मथुरायां विलोकयितासि विलोकयिष्यसि ॥ १०४ ॥

गोवर्द्धनेति । गोवर्द्धनाचले ये कलापिचयाः केकिव्रजाः तेषां प्रचारेण सञ्चारेण निर्वासिताहिनि निष्कासितभुजङ्गमण्डले सुखसञ्चार इत्यर्थः । घने सान्द्रे निरातपे इत्यर्थः । सुरभिप्रसूने फलकुसुमसमृद्धया विहारयोग्ये इत्यर्थः । तस्मिन् प्रसिद्धे यत्र पुरा गोपालमूर्त्तिः कृष्णो विजहारेति भावः । वृन्दावने वृन्दाख्ये वने अनेन राज्ञा सह निर्विशङ्कं विस्रब्धं वनविहारकुतूहलानि वनक्रीड़ासुखानि निर्विश भुङ्क्ष्व निर्वेशो भृतिभोगयोरित्यमरः । साभिप्रायविशेषणत्वात् परिकरालङ्कारः ॥ १०५ ॥

भावीति । त्वदास्येनानेन हृतसारस्य हृतकान्तिसर्वस्वस्य तुषारभानोः चन्द्रस्य या शोभा पराजयनिमित्ता पाण्डुच्छाया तदनुसारी तत्सदृशो यः करिदन्तस्तज्जः कङ्कणमङ्कश्चिह्नं यस्य सः तव करः कररुहा नखाः अङ्कुरा इवेत्युपमितसमासः । त एव कोरकाः कलिकाः यस्य सोऽपि सन्नित्यर्थः । तद्दल्लिप-

तज्ज: श्रमाम्बु सुरतान्तमुदा नितान्तम्
उत्कण्टके स्तनयुगे तव सञ्चरिष्णुः ।
खञ्जन् प्रभञ्जनजनः पथिकः पिपासुः
पाता कुरङ्गमदपङ्किलमप्यशङ्कम् ॥ १०७ ॥

पूजाविधौ मखभुजामुपयोगिनो ये
विद्वत्कराः कमलनिर्मलकान्तिभाजः ।
लक्ष्मीमनेन दधताऽनुदिनं वितीर्ण-
स्ते हाटकैः स्फुटवराटकगौरगर्भाः ॥ १०८ ॥

---

त्ववचये वृन्दावनलताकिसलयजाले अन्तर्मध्ये सौख्येन अना-यासेन लब्धोऽदुर्ग्रहो भावी। अत्र पल्लवापचयकाले तत्साद्दृश्यात्सन्दिग्धस्य भैमीकरस्य दन्तवलयेन निश्चयाद्विषयान्तः सन्देहालङ्कारः ॥ १०६ ॥

तज्ज इति। तस्मिन् वृन्दावने जातः तज्जः सप्तम्यां जनेर्डः सुरतान्ते मुदा आनन्देन नितान्तमुत्कण्टके उत्पुलके च तव स्तनयुगे सञ्चरिष्णुः सञ्चरणशीलः खञ्जन् खोडन् विकलं गच्छन्नित्यर्थः। खञ्जेर्गतिवैकल्यार्थाल्लटः शत्रादेशः गतावित्यनुवृत्तौ विकलायान्तु इयं खञ्जति खोडतीति भट्टमल्लः। पिपासुः तृषितः पथिकः सदागतिः अध्वगमनश्रान्तश्च प्रभञ्जनो वायुः स एव जनः कुरङ्गमदेन मृगमदेन पङ्किलं सपङ्कमपि श्रमाम्बु स्वेदोदकम् अशङ्कम् असङ्कोचं निर्विचारं यथा तथा पाता पास्यति स्वेदं हरिष्यतीत्यर्थः। पिबतेः कर्त्तरि लुट्। यथातिश्रान्तः पान्थः कण्टकश्लिष्टदेशस्थमपि पङ्किलमपि जलं प्रायेण स्वोदरपूरं पिबति तद्वदिति भावः ॥ १०७ ॥

पूजेति। मखभुजां देवानां पूजाविधौ यज्ञादिकर्मणि उपयोगिनः प्रतिग्रहोपकारिणो ये विदुषां कराः पाणयः

वैरिश्रियं प्रति नियुद्धमनाप्नुवन् यः
किञ्चिन्न तृप्यति धरावलयैकवीरः ।
स त्वामवाप्य निपतन्मदनेषुवृन्द-
स्यन्दीनि तृप्यतु मधूनि पिबन्निवायम् ॥ १०९ ॥
तस्मादियं क्षितिपतिक्रमगम्यमानम्
अध्वानमैक्षत नृपादवतारिताक्षी ।

कमलानां या निर्मलकान्तिस्तद्व्रजः ते विहतकराः लक्ष्मीं दधता श्रीमता अनेन राज्ञा अनुदिनं वितीर्णैः दत्तैर्हाटकैः सुवर्णैः स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकमित्यमरः । स्फुटाः उज्ज्वलाः वराटकाः कर्णिकाः वीजकोशो वराटकः कर्णिका कर्णिकश्चेति वैजयन्ती । तैः गौराः पीता अरुणा वा गर्भाः अभ्यन्तराणि येषां ते कृता इति शेषः । गौरोऽरुणेऽसिते पीत इति विश्वः । कमलानां कर्णिकावत्पाणिकमलानां हाटकैस्तद्वत्त्वं सम्पादितमित्यर्थः । अति दानशीलोऽयं नृपतिरिति भावः ॥ १०८ ॥

वैरीति । धरावलये भूमण्डले एकवीरो यो मथुरापतिः वैरिश्रियं प्रत्यर्थिलक्ष्मीं शत्रुलक्ष्मीमधिकृत्य नियुद्धं बाहुयुद्धम् आलिङ्गनमिति यावत् नियुद्धं बाहुयुद्धं स्यादित्यमरः । तदनाप्नुवन् किञ्चित् ईषदपि न तृप्यति न तद्विना सन्तुष्यतीत्यर्थः । स नियुद्धप्रियोऽयं राजा त्वाम् अवाप्य निपततां मदनेषूणाम् कन्दर्पबाणभूतानां कुसुमानां वृन्दात् स्यन्दन्ते स्रवन्तीति तत् स्यन्दीनि मधूनि मकरन्दान् पिबन्निव तृप्यतु अत्र मदनेषुभूतकुसुममधुपानोत्प्रेक्षया तेषामिवेषूणां त्वत्समागमात् गाढानन्दकारित्वप्रतीतेः अलङ्कारेण वस्तुध्वनिः ॥ १०९ ॥

तस्मादिति । इयं भैमी तस्मात् नृपात् अवतारिताक्षी

तद्भावबोधबुधतां निजचेष्टयैव
व्याचक्षते स्म शिविकानयने नियुक्ताः ॥ ११० ॥
भूयोऽपि भूपमपरं प्रति भारती तां
त्रस्यत्कुरङ्गचलचक्षुषमाचचक्षे ।
एतस्य काशिनृपतेस्त्वमवेक्ष्य लक्ष्मीम्
अक्ष्णोर्मुदं जनय खञ्जनमञ्जुनेत्रे ! ॥ १११ ॥
एतस्य सावनिभुजः कुलराजधानी
काशी भवोत्तरणधर्मतरिः स्मरारेः ।
यामागता दुरितपूरितचेतसोऽपि
पापं निरस्य चिरजं विरजोभवन्ति ॥ ११२ ॥

---

निवारितदृष्टिः सती क्षितिपतीनां गन्तव्यनृपाणां क्रमेणानुपूर्व्या गम्यमानम् अध्वानम् ऐक्षत अथ शिविकानयने नियुक्ताः शिविकावाहिनः तस्या भावबोधे अभिप्रायज्ञाने बुधतां पाण्डित्यं निजचेष्टया अन्यतो नयनक्रिययैव व्याचक्षते स्म ज्ञापयामासुरित्यर्थः ॥ ११० ॥

भूयोऽपीति। भारती सरस्वती भूयोऽप्यपरं भूपं राजानं प्रति लक्षीकृत्य त्रस्यत्कुरङ्गचलचक्षुषं चकितहरिणचलाक्षीं तां भैमीम् आचचक्षे किमिति ? हे खञ्जनमञ्जुनेत्रे ! खञ्जनाक्षि ! मञ्जुलाक्षीत्यर्थः। एतस्य काशिनृपतेः काशिराजस्य लक्ष्मीं शोभाम् अवलोक्य अक्ष्णोः चक्षुषोः मुदं हर्षं जनय सम्पादय ॥ १११ ॥

एतस्येति। स्मरारेः संसारार्णवकर्णधारस्य सम्बन्धिनी भवोत्तरणे भवाब्धितरणे लोकानां धर्मतरिः मूल्यमगृहीत्वा पारकारिणी। धर्मतरिग्रहणात् केवलं धर्मार्था नौः इत्यर्थः। स्त्रियां नौस्तरणिः तरिरित्यमरः। सा काशी एतस्यावनी-

आलोच्य भाविविधिकर्तृकलोकसृष्टि-
कष्टानि रोदिति पुरा कृपयैव रुद्रः।
नामेच्छयेति मिषमात्रमधत्त यत्तां
संसारतारणतरीमसृजत् पुरीं सः॥ ११३॥
वाराणसी निविशते न वसुन्धरायां
तत्र स्थितिर्मखभुजां भुवने निवासः।

---

भुजः काशीराजस्य कुलराजधानी। दुरितपूरितचेतसोऽपि अतिपापात्मानोऽपि यां काशीम् आगताः चिरजं चिरसञ्चितं पापं निरस्य परित्यज्य अविरजसो विरजसः सम्पाद्यमाना भवन्ति विरजीभवन्ति वीतपापा मुक्ता भवन्तीत्यर्थः। अभूततद्भावे च्विः अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्चेति सकारलोपः॥११२॥

आलोच्येति। रुद्रो हरः भाविन्याः विधिकर्तृकाया ब्रह्मकर्तृकाया लोकसृष्टेः प्राणिजातस्य कष्टानि दुःखानि आलोच्य विचार्य कृपयैव न तूपाध्यन्तरेणेत्यर्थः। पुरा रोदिति अरुदत् पुरा लुङ् च स्म इति चकारात् पुराशब्द-योगे भूतानद्यतनार्थे लट्। ननु रोदनाद्रुद्रनामाकाङ्क्षयाऽरोदीत्। यत् श्रूयते सोऽरोदीत्तद्रुद्रस्य रुद्रत्वमित्याशङ्क्य तद्वाक्यादिमात्रमित्याशङ्क्याह। नामेच्छयेति मिषमात्रं व्याजमात्रम् अधत्त धृतवान् कुतः यत् यस्मात् स रुद्रः संसारतारणतरिं काशीं पुरीम् असृजत्। ततो नूनं कृपयैव अरोदीदित्युत्प्रेक्षा कृपालवो हि परदुःखेन दुःखायन्ते तत् प्रतीकरणोपायञ्च कुर्वन्तीति भावः॥ ११३॥

वाराणसीति। वाराणसी काशी वसुन्धरायां न निविशते भूलोकान्तःपातिनी न भवतीत्यर्थः। अतएव तत्र वारा-

तत्तीर्थमुक्तवपुषामतएव मुक्तिः
स्वर्गात्परं पदमुदेतु मुदे तु कीदृक्?॥ ११४॥
सायुज्यमृच्छति भवस्य भवाब्धियादः
तां पत्युरेत्य नगरीं नगराजपुत्त्राः।
भूताभिधानपटुमद्यतनीमवाप्य
भीमोद्भवे! भवतिभावमिवास्तिधातुः॥ ११५॥
निर्विश्य निर्विरति काशिनिवासि भोगान्
निर्माय नर्म च मिथो मिथुनं यथेच्छम्।

---

यस्यां स्थितिर्निवासो मखभुजां देवानां भुवने लोके निवासः स्वर्लोकनिवासः अतएव स्वर्गत्वादेव तस्मिन् तीर्थे मुक्तवपुषां त्यक्तकलेवराणां मुक्तिरपवर्ग एव। तथा हि स्वर्गात्परमधिकं पदन्तु कीदृक्? अपवर्गादन्यादृशं किं मुदे आनन्दाय उदेतु? उत्पद्यताम्?। न किञ्चिदन्यदित्यर्थः। सम्भावनायां लोट्। भूलोकवासिनां स्वर्गः स्वर्गवासिनान्तु अपवर्ग एव परं पदं न तु स्वर्ग एवोचित इति भावः॥ ११४॥

सायुज्यमिति। हे भीमोद्भवे! भैमि! भवाब्धियादः संसारसागरजजन्तुजातं कर्तृ। यादांसि जलजन्तव इत्यमरः। नगराजपुत्त्र्याः पत्युः पार्वतीपतेः सम्बन्धिनीं तां नगरीं काशीमेत्य अस्तिधातुरसभुवि इत्ययं धातुर्भूताभिधानपटुं भूताभिधानसमर्थाम् अद्यतनीं लुङम् अवाप्य अद्यतनीति लुङ् पूर्वाचार्य्याणां संज्ञा आर्द्धधातुकोपलक्षणमेतत् अस्तेर्भूभावस्यार्द्धधातुकाधिकारात् अद्यतनीग्रहणं तूपमानोपमेययोरभिन्नलिङ्गत्वायेति द्रष्टव्यम्। भवतीतिभावम् इव। अस्तेर्भूरिति विधानाद्भूधातुत्वमिव भवस्य ईश्वरस्य सयुजो भावः सायुज्यं तादात्म्यमृच्छति गच्छति॥ ११५॥

गौरीगिरीशघटनाधिकमेकभावं
शर्मोर्मिकञ्चुकितमञ्चति पञ्चतायाम्॥ ११६॥
न श्रद्दधासि यदि तन्मम मौनमस्तु
कथ्या निजाप्ततमयैव तवानुभूत्या।
न स्यात् कनीयसितरा यदि नाम काश्या
राजन्वती मुदिरमण्डनधन्वना भूः॥ ११७॥

---

निर्विश्येति। काशिः काशी कृदिकारात् अक्तिनो वेति ङीष् भावः। तस्यां निवासि वास्तव्यं मिथुनं स्त्रीपुंसजातं *यथेच्छं भुज्यन्त इति भोगान् विषयान् निर्विशति निर्विच्छेदं यथा तथा निर्विश्य उपभुज्य तथा मिथोऽन्योन्यं रहसि वा* नर्म क्रीडाश्च निर्माय कृत्वा पञ्चतायां मृत्यौ सत्यां गौरीगिरीशयोर्घटनादर्द्धाङ्गसङ्घटनादधिकमुत्कृष्टमेव शर्मोर्मिभिरानन्दलहरीभिः कञ्चुकितं सञ्जातकञ्चुकं निर्वाधमेकभावमेकत्वभावम् अञ्चति प्राप्नोति। अन्यत्र सन्न्यासादिक्लेशात् मुक्तिः इह भोगपूर्वकदेहत्यागेनापि मुक्तिरित्यर्थः॥ ११६॥

नेति। न श्रद्दधासि यदि मद्वाक्यं न विश्वसिसि चेत्तर्हि मम मौनमस्तु अहं तूष्णीमासे तव निजया आत्मीयया आप्ततमया प्रमाणभूतया अनुभूत्या अनुभावेनैव कथ्या कथनीयासि। किं कथ्या तदाह। मुदिरा जीमूताः घनजीमूतमुदिरेत्यमरः। तेषां मण्डनं धनुर्यस्य स तद्धन्वा देवेन्द्रः धनुषश्चेत्यनङादेशः। तेन राजन्वती सुराज्ञी भूः स्वर्गभूः राजन्वान् सौराज्य इति निपातनात्साधुः। काश्याः काशीतः पञ्चमी विभक्ते इति पञ्चमी। अतिशयेन कनीयसी कनीयसितरा युवाल्पयोः कनन्यतरस्यामित्यल्पशब्दस्येति कनादेशः घ॰॰पेत्यादिनाङ्यो ह्रस्वः। न स्यान्नाम यदि स्यादेवेत्यर्थः। दिवः स्वर्गात्

ज्ञानाधिकासि सुकृतान्यधिकाशि कुर्य्याः
कार्य्यं किमन्यकथनैरपि यत्र मृत्योः ।
एकं जनाय सततामयदानमन्यद्
धन्ये ! वहत्यमृतमत्रमवारितार्थि ॥ ११८ ॥

भूभर्त्तुरस्य रतिरेधि मृगाक्षि ! मूर्त्ता
सोऽयं तवास्तु कुसुमायुध एव मूर्त्तः ।
भातञ्च ताविव युवां गिरिशं विरुद्धम्
आराद्धुमाशु पुरि तत्र कृतावतारौ ॥ ११९ ॥

---

अधिका काशी दिवस्पतेरधिकः काशीराज इत्यलं वार्त्ताभिः । एतत्पाणिग्रहणानन्तरमनुभव एव ते कथयिष्यतीति भावः ॥ ११७ ॥

ज्ञानेति । हे धन्ये ! भैमि ! ज्ञानेन अधिका उत्कृष्टासि भवसि अतः अधिकाशि काश्यां विभक्त्यर्थेऽव्ययीभावः । सुकृतानि सत्कर्माणि कुर्य्याः अथवाऽन्यकथनैः कर्त्तव्यान्तरोपदेशैरपि किं कार्य्यं प्रयोजनं न किञ्चिदित्यर्थः । यत्र काश्यां जनाय मृत्योः सकाशात् सततमविच्छिन्नाभयदानम् एकं केवलं वहति वर्त्तते । मृत्युदर्शिनां सद्य एव मृत्युञ्जयत्वप्राप्तेरिति । किञ्चान्यत् यत्र अवारिताः अनिवारिता अर्थिनो याचकाः यस्मिन् तदमृतमत्रं मोक्षदानं गङ्गोदकदानञ्च वहति प्रवर्त्तते सत्रमाच्छादने यज्ञे सदा दाने वनेऽपि चेत्यमरः । अमृतं तूदके मोक्ष इत्यादि । काशिमृतानां शिवसारूप्यममृतत्वञ्च सिद्धमिति अन्यत्र जीवनात् काश्यां मरणमेव वरमिति भावः ॥ ११८ ॥

भूभर्त्तुरिति । हे मृगाक्षि ! त्वमस्य भूभर्त्तुः काशीराजस्य मूर्त्ता मूर्त्तिमती रतिः कामपत्नी एधि भव अस्तेः सिधि ह्वेर्धिरादेशे ध्वसोरेद्धावभ्यासलोपश्चेत्येकारादेशः । सोऽयं राजा

कामानुशासनशते सुतरामधीतो
सोऽयं रहो नखपदैर्महतु स्तनौ ते ।
रुष्टाद्रिजाचरणकुङ्कुमपङ्कराग-
सङ्कीर्णशङ्करशशाङ्ककलाङ्ककारैः ॥ १२० ॥

पृथ्वीश एष नुदतु त्वदनङ्गतापम्
आलिङ्ग्य कीर्त्तिचयचामरचारुचापः ।
संग्रामसङ्गतविरोधिशिरोधिदण्ड-
खण्डिस्फुरप्रसरसंप्रसरत्प्रतापः ॥ १२१ ॥

---

च तव मूर्त्तौ मूर्त्तिमान् कुसुमायुधः कामः कन्दर्पः एवास्तु भवतु किञ्च युवां पुरा विरुद्धं द्विष्टं कोपितं गिरिशमीश्वरं आराद्धुं आराधयितुं तत्र पुण्यां काश्यां कृतावतारौ अवतीर्णौ रतिकामाविव विभातं विराजतं च भातेर्लोटि थमस्तामादेशः ॥ ११९ ॥

कामेति । कामानुशासनानां कामशास्त्राणां शते समूहे सुतरां नितराम् अधीतमनेनेत्यधीती इष्टादिभ्यश्चेति इनि-प्रत्यये सप्तमी विधाने क्तस्येन् विषयस्य कर्मण्युपसङ्ख्यान-मिति सप्तमी । कृताध्ययनः सोऽयं राजा रुष्टा कुपिता अद्रिजा पार्वती तस्याश्चरणकुङ्कुमपङ्करागेण सङ्कीर्णा प्रणाम-काले रूषिता तया शङ्करशशाङ्ककलया अङ्ककारैः कलहका-रिभिः तदनुकारिभिरित्यर्थः । कर्मण्यण् । अङ्कः कलह-चिह्नयोरितिविश्वः । नखपदैस्ते स्तनौ कुचौ रहः निर्जने महतु पूजयतु अलङ्करोतु इत्यर्थः । मह पूजायामिति धातोर्भ्वादि-काल्लोट् ॥ १२० ॥

पृथ्वीश इति । कीर्त्तिचयएव चामरं तेन चारुश्चापो यस्य सः चापलब्धकीर्त्तिरित्यर्थः । अतएव सङ्ग्रामे सङ्गतानां

वक्षस्त्वदुग्रविरहादपि नास्य दीर्णं
वज्रायते पतनकुण्ठितशत्रुशस्त्रम् ।
तत्कन्दकन्दलतया भुजयोर्न तेजो-
वह्निर्नमत्यरिवधूनयनाम्बुनापि ॥ १२२ ॥
किं न द्रुमा जगति जाग्रति लक्षसंख्याः
तुल्योपनीतपिककाकफलोपभोगाः ? ।
स्तुत्यस्तु कल्पविटपी फलसंप्रदानं
कुर्वन् स एष विबुधानमृतैकवृत्तीन् ॥ ॥ १२३ ॥

---

विरोधिनां शत्रूणां शिरोधिदण्डान् कण्ठनालान् खण्डयन्तीति तेषां क्षुरप्राणां शरविशेषाणां सरेण प्रसरेण सम्प्रसरन् सम्यक् प्रसरन् अधिकं वर्द्धमानः प्रतापः यस्य तादृशः । एष पृथ्वीशः भूपतिः आलिङ्ग्य तव अनङ्गतापं कामसन्तापं नुदतु अपनयतु समरसुरतयोः समरस एष इति भावः ॥ १२१ ॥

वक्ष इति । हे भैमि ! तव उग्रात् दुःसहात् विरहादपि न दीर्णम् अविदीर्णं तथा पतनेन कुण्ठितानि प्रतिहतानि शत्रूणां शस्त्राणि आयुधानि यत्र तत् अस्य राज्ञः वक्षो वज्रायते वज्रमिवाचरति वज्रमेवेत्यर्थः । अन्यथा कथमीदृगभेद्यमिति भावः । आचारक्यङन्ताल्लट् । तत् वज्रमेव कन्दोमूलं तस्य कन्दलतया तत्प्ररोहत्वेन हृदयदार्ढ्यमन्वाद्भुजतेजसोऽपि दार्ढ्यता इति भावः । भुजयोस्तेजोवह्निः प्रतापाग्निः अरिवधूनयनाम्बुनापि न नमति न शाम्यतीत्यर्थः । वज्राग्नेरिव अरिनिधनकारित्वादिति भावः । अत्र भुजतेजसोऽनम्बुहार्य्यत्वेन वज्रायितवक्षःकार्य्यताद्वारादन्यतेजस्त्वोत्प्रेक्षणादुत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या ॥१२२॥

किमिति । तुल्यं निर्विशेषं यथा तथा उपनीतः सम्पादितः

अस्मै करं प्रवितरन्तु नृपा न कस्मात्
अस्यैव तत्र यदभूत् प्रतिभूः कृपाणः ।
दैवाद्यदा प्रवितरन्ति न ते तदैव
नेदक्कृपा निजकृपाणकरग्रहाय ॥ १२४ ॥

---

पिकानां काकानाञ्च फलोपभोगो यैस्ते कल्पसंज्ञा द्रुमाः वृक्षा जगति न जाग्रति किं ? न स्फुरन्ति किं ? स्फुरन्त्ये-वेत्यर्थः । किन्त्वमृतैकवृत्तीम् सुधैकजीवनान् विबुधान् देवान् विदुषश्च फलसम्प्रदानम् ईप्सितार्थप्रतिग्राहिणः कुर्वन् सर्वामरमनोरथपूरकः स एष कल्पविटपी कल्पवृक्षः स्तुत्यः । स एक एव स्तोत्रार्हो नान्य इत्यर्थः । कल्पवृक्ष-कल्पोऽयं काश्मिराज इत्यर्थः । अन्ये नृपतयः असत्पात्रेभ्यः दानं कुर्वन्ति, अयं काश्मीराजस्तु पण्डितेभ्य एव ददाति इति भावः । अत्राप्रस्तुतकल्पवृक्षकथनात्प्रस्तुतकाश्मिराजप्रतीते-रप्रस्तुतप्रशंसालङ्कारः । अप्रस्तुतस्य कथनात्प्रस्तुतं यत्र गम्यते । अप्रस्तुतप्रशंसेयं सारूप्यादनियन्त्रितेति लक्षणात् ॥ १२३ ॥

अस्मै इति । अस्मै राज्ञे नृपाः प्रतिनृपाः कस्मात्कार-णात्करं बलिं न प्रवितरन्तु न दद्युः सम्भावनायां लोट् असम्-भावितम् एतदित्यर्थः । कुतः यत् यस्मात् तत्र करदाने अस्यैव राज्ञः कृपाणः खड्गः प्रतिभूर्लग्नकोऽभूत् । स्युर्लग्नकाः प्रतिभुव इत्यमरः । अत्र कृपाणस्य प्रतिभूत्वं व्यनक्ति यदा दैवात्ते नृपाः करं न प्रवितरन्ति तदैव निजकृपाणस्य करेण हस्तेन ग्रहाय ग्रहणाय अन्यच्च निजकृपाणात् प्रतिभूस्वरूपस्य सका-शात् करस्य बलेर्ग्रहणाय । बलिहस्तांशवः करा इत्य-मरः । यस्य कृपा दयाऽक्कृपा सा न निष्कृपः कृपाणं प्रयुङ्क्ते

एतद्बलैः क्षणिकतामपि भूखुराग्र-
स्पर्शायुषां रयवशादसमापयद्भिः।
दृक्पेयकेवलनभःक्रमणप्रवाहैः
वाहैरलुप्यत सहस्रदृगर्वगर्वः॥ १२५॥

तद्वर्णनासमय एव समेतलोक-
शोभावलोकनपरा तमसौ परासे।
मानी तया गुणविदा यदनादृतोऽसौ
तद्भूभृतां सदसि दुर्यशसेव मम्लौ॥ १२६॥

इत्यर्थः। कृपाणपातभीत्यैव करदानात्तस्य प्रातिभाव्यव्यपदेश इति भावः॥ १२४॥

एतदिति। एतद्बलैः एतत्सैन्यभूतैः रयवशात् वेगवशाद् भुवि खुराग्राणाञ्च ये स्पर्शाः संयोगास्तेषां यान्यायूंषि जीवितानि तेषां क्षणिकतां क्षणमात्रावस्थायितामपि असमापयद्भिः अनिवर्त्तयद्भिः क्षणिकत्वादद्दृष्टभूस्पर्शैरित्यर्थः। किन्तु दृक्पेयाः अविच्छिन्नतया दृष्टिग्राह्याः केवला नभःक्रमणप्रवाहाः नभोगतिपरम्परा येषां तैः केवलखेचरैरित्यर्थः। ईदृशैर्वाहैर्वाजिभिः सहस्रदृगर्वणः सहस्राक्षवाजिनः उच्चैःश्रवसो गर्वः वाजिवाहार्व गन्धर्व इत्यमरः। अलुप्यत लोपितः सहस्राक्षस्य त्वेकक एव खेचरोऽश्वः अस्य तु एतादृशाः परःसहस्राः अश्वाः विद्यन्ते इति भावः॥ १२५॥

तदिति। असौ दमयन्ती तस्य काशीराजस्य वर्णनासमये स्तोत्रकाल एव समेतलोकानां मिलितजनानां शोभावलोकनपरा सती तं काशीराजं परासे व्याजेन परिजहारित्यर्थः। उपसर्गादस्यत्यूह्योर्वा वचनमित्यस्यतेस्तङि लिट्। मानी अभिमानी असौ राजा गुणविदा गुणज्ञया तया भैम्या अना-

सानन्तानाप्य तेजःसखनिखिलमरुत्पार्थिवान् दिष्टभाजः
चित्तेनाशापुषस्तान् सममसमगुणान् मुञ्चती गूढभावा ।
पारेवाग्वर्त्तिरूपं पुरुषमनु चिदम्भोधिमेकं शुभाङ्गी
निःसीमानन्दमासीदुपनिषदुपमा तत्परीभूय भूयः ॥ १२७ ॥

---

द्दत इति यत् तत्तस्मादनादरणादेव भूभृतां राज्ञां सदसि दुर्यशसा दुष्कीर्त्येव मन्त्री वैवर्ण्यं गत इत्यर्थः ॥ १२६ ॥

सेति । शुभाङ्गी सुगात्री षडङ्गयुक्ता च सा दमयन्ती अनन्तान् अपरिमितान् दिष्टभाजो भाग्यभाजः चित्तेन आशाम् अभिलाषं पुष्णन्ति इति आशापुषः भैमीं कामयमानानित्यर्थः। तान् प्रसिद्धान् असमगुणान् असाधारणशौर्य्यादिगुणान् तेजसः सखायः तेजःसखाः तेजस्विन इत्यर्थः । राजाहः सखिभ्यष्टच् । ते निखिला मरुतो देवा इन्द्रादयः पार्थिवाश्च तान् आप्य प्राप्य समं युगपत् मुञ्चती परिहरन्ती उपनिषत्पक्षे तु सानन्तान् आकाशसहितान् अनन्तं सुरवर्त्म खमित्यमरः । दिष्टभाजः कालयुक्तान् दिष्टं भाग्ये च काले च इति विश्वः । चित्तेन मनसा सह आशापुषो दिग्युक्तान् आशा दिगतितृष्णयोरिति वैजयन्ती । असमगुणान् न्यूनाधिकसङ्ख्यातरूपरसादिगुणकान् अपां विकारः आप्यम् इ आप्यमम्मयमित्यमरः । आप्येति चान्द्रसूत्रनिपातनात् साधुः । तेजःसखाः तेजोद्रव्यसहिताः मरुद्वायुः मरुतो पवनामरौ इत्यमरः । पार्थिवा पृथिवीविकाराः अत्रापि अपार्थिवशब्दौ तद्भावावपि प्रकरणात् प्रकृत्यर्थमात्रपरौ द्रष्टव्यौ । तान् मुञ्चती तार्किकोक्तपृथिव्यादिनवद्रव्येषु आत्मातिरिक्तद्रव्याष्टकस्य श्रुतिवाक्यैः निषेधं कुर्वतीत्यर्थः । गूढभावा निगूढाभिप्राया पारे वाचां पारेवाक् पारे मध्ये षष्ठ्या वेत्यव्ययीभावः । तद्वर्त्ति रूपं सौन्दर्य्यं यस्य

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
शृङ्गारामृतशीतगावयमगादेकादशस्तन्महा-
काव्येऽस्मिन् निषधेश्वरस्य चरिते सर्गो निसर्गोज्ज्वलः ॥१२८॥

---

तम् अन्यत्र यतोवाच इत्यादि श्रुतेः। वाङ्मनसातीतं चिद-भोधिं ज्ञानाकरम् अन्यत्र तद्रूपम्। एकमद्वितीयं निःसीमा आनन्दो यस्येति बहुव्रीहिः। अन्यत्र कर्मधारयः। तं पुरुषं पुमांसं परमात्मानञ्च अनु तं लक्षयित्वा तं प्रतीत्यर्थः। अनु-र्लक्षण इति कर्मप्रवचनीयत्वात् द्वितीया। भूयो भूयिष्ठम् तत्परा आसक्ता भूत्वा तत्परीभूय उपनिषत् वेदान्तवाक् उपमानं यस्याः तदुपमा तत्कल्पा आसीदिति श्लिष्टविशेषणेय-मुपमा श्लेष एवेति केचित्। स्रग्धरावृत्तम् ॥ १२७ ॥

श्रीहर्षमित्यादि। शृङ्गार एव अमृतं तस्य शीतगौ चन्द्रे शीताः गावः किरणा यस्य सः शीतगुः तस्मिन् गोस्त्रियोः उपसर्जनस्येति ओकारह्रस्वः ॥ १२८ ॥

# द्वादशः सर्गः।



प्रियाह्निया लम्बित विलम्बमाविला
विलासिनः कुण्डिनमण्डनायितम्।
समाजमाजग्मुरथो रथोत्तमाः
समासमुद्रादपरेऽपरे नृपाः॥ १॥

ततः स भैम्या ववृते वृते नृपैर्विनिःश्वसद्भिः सदसि स्वयंवरः।
चिरागतैस्तर्कितत्तद्विरागितैः स्फुरद्भिरानन्दमहार्णवैर्नवैः॥२॥

---

अथास्मिन्नवसरे पुनरन्ये राजानः समायाता इत्याह प्रियेति। अथो अनन्तरं मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथेत्यमरः। प्रियासु स्वकान्तासु विषये ह्रिया सङ्कोचेन दाक्षिण्येनेति यावत् विलम्बं आलम्बित आविलाः व्यग्राः विलासिनो विलसनशीलाः वीकषलसकत्यसन्भ इति घिणुन् प्रत्ययः। रथैरुत्तमाः रथोत्तमाः महारथाः परे श्रेष्ठाः अपरे अन्ये नृपाः आसमुद्रात् समुद्रपर्य्यन्तादपादानात् कुण्डिनस्य कुण्डिननामनगरस्य मण्डनायितं अलङ्कारभूतं मण्डनशब्दादाचारक्यङन्तात् कर्त्तरि क्तः। तं समाजं राजसभाम् आजग्मुः आपुः अत्र विलाविलेत्यादौ नियमेनासकृद्द्वयं ज नयुग्मावृत्त्या छेकानुप्रासः अन्यत्रानियमाद् वृत्त्यनुप्रास इत्युभयोः संसृष्टिः संख्यानियमे पूर्वं छेकानुप्रासः अन्यथा वृत्त्यनुप्रास इति लक्षणात्॥ १॥

तत इति। ततो राजान्तरागमनानन्तरं तर्किता तद्विरागिता भैमीवैराग्यं यैस्तैर्निश्चितभैम्यपरागैः अतएव विषादात् विनिःश्वसद्भिः चिरागतैः पूर्वागतैर्नृपैस्तदा स्फुरद्भिः प्रकाशमानैः

चलत्पदस्तत्पदयन्त्रणेङ्गितस्फुटाशयामासयति स्म राजके।
श्रमं गता यानगतावपीयमित्युदीर्य धुर्यः कपटाज्जनीजनः॥३
नृपानुपक्रम्य विभूषितासनान् सनातनी सा सुषुवे सरस्वती।
विगाहमारभ्य सरस्वतीः सुधासरःस्वतीवार्द्रतनूरनूत्थिताः॥४॥
वृणीष्व वर्णेन सुवर्णकेतकीप्रसूनपर्णाहृतपर्णमाहृतम्।
निजामयोध्यामपि पावनीमयं भवन्मयो ध्यायति नावनीपतिः
॥ ५ ॥

---

आनन्दमहार्णवैर्दमयन्तीप्राप्त्याशया परमानन्दभरितैर्नवैश्च नृपैर्वृते सदसि सः प्रक्रतः स्वयंवरः वव्रुते प्रवृत्तः॥ २॥

*चलदिति। चलत्पदः क्वचित् स्थितिकालेऽप्युत्तमाश्ववदेकत्रानवस्थितचरण इति भारवाहिकस्वभावोक्तिः।* धुरं वहतीति धुर्यो जनो यानिजनः धुरोयड्ठकाविति यण्प्रत्ययः। तस्याः भैम्याः पदयन्त्रणेङ्गितेन पादनोदनचेष्टितेन स्फुटः आशयः उपवेशनाभिप्रायो यस्या स्तां जनीं वधूं जनी सीमन्तिनीवध्वोरिति निश्वः। इयं बाला यानेन गतावपि श्रमं गता श्रान्ता इति उदीर्य कपटात् श्रमव्याजात् राजके राजसमूहे आसयतिस्म उपवेशयामास॥ ३॥

नृपानिति। सनातनी चिरन्तनी सनाशब्दात्सायंचिरमित्यादिना ल्युप्रत्यये ङीप्। सरस्वती वाग्देवता विभूषितासनान् अलङ्कृतसिंहासनान् उपविष्टान् इत्यर्थः। नृपान् उपक्रम्य उद्दिश्य सुधासरःसु अमृतसरसीसु विगाहम् आरभ्य अवगाहं प्राप्य अनु अनन्तरं पश्चात् इत्यर्थः उत्थिता निर्गताः अतीवार्द्रतनूः अमृतार्द्रस्वाङ्गाः सर्वाङ्गाः तद्वदमृतवर्षिणीरित्यर्थः सरस्वतीर्गिरः सुषुवे॥ ४॥

वृणीष्वेति। वर्णेन अङ्गकान्त्या सुवर्णकेतकीप्रसूनस्य पर्णात्

न पीयतां नाम चकोरजिह्वया कथञ्चिदेतन्मुखचन्द्रचन्द्रिका ।
इमां किमाचामयसे न चक्षुषी चिरं चकोरस्य भवन्मुखस्पृशी
॥ ६ ॥

अपां विहारे तव हारविभ्रमं करोतु नीरे पृषदुत्करस्तरन् ।
कठोरपीनोच्चकुचद्वयीतटे त्रुटत्तरः सारवसारवोर्मिजः ॥ ७ ॥

---

दलात् आहृतं ततोऽप्यधिकस्पृहणीयं । ऋतुपर्णं ऋतुपर्णाख्यं नृपं वृणीष्व । भवतो एव भवन्मयस्त्वदात्मकः सन् स्वार्थे मयट् प्रत्ययः । सर्वनाम्नो वृत्तिमात्रे पुंवत् भावः । अयम् अवनीपतिः पृथिवीशः पावनीं पवित्रकारिणीं निजां स्वायत्ताम् अयोध्यां अयोध्यानगरीमपि न ध्यायति न चिन्तयति ॥ ५ ॥

नेति । एतन्मुखचन्द्रचन्द्रिका चकोरस्य जिह्वया कथञ्चिदपि न पीयतां नाम पाययितुमशक्यत्वादिति भावः । तथापि भवन्मुखस्पृशी भवन्मुखवर्त्तिनी त्वच्चक्षुरात्मना परिणते इत्यर्थः स्पृशोऽनुदके क्विप् । चकोरस्य चक्षुषी कर्मणी इमाम् एतन्मुखचन्द्रिकां किं चिरं ? न आचामयसे ? न पाययसे ? जिह्वया चक्षुषाच किमिति न पीयते ? किमित्येनं न पश्यसीत्यर्थः । चमेः प्रत्ययमानार्थत्वाद् गतिबुद्धीत्यादिना चक्षुषोरणिकर्त्तुः कर्मत्वं निगरणचलनार्थेभ्यश्चेति चमेर्णिचि परस्मैपदनियमादात्मनेपदं चिन्त्यम् । अत्र भवन्मुखस्पृशोः चकोरचक्षुषोः अत्यन्तदर्शनविषये निगरणे भैमीचकोरचक्षुषोः अभेदप्रतीतेः भेदे अभेदलक्षणात् अतिशयोक्तिरलङ्कारः ॥ ६ ॥

अपामिति । हे भैमि ! तव अपां विहारे जलक्रीड़ायां नीरे जले तरन् प्लवमानः त्रुटत्तरः अत्यन्तं त्रुटन् अतिभर्झरः सारवेषु आरवसहितेषु सारवेषु सरयुभवेषु ऊर्मिषु जातः

अखानि सिन्धुः समपूरि गङ्गया कुले किलास्य प्रसभं स भंत्स्यते
विलङ्घ्यते चास्य यशःशतैरहो ! सतां महत्सम्मुखधावि पौरुषम्
॥ ८ ॥

एतद्यशःक्षीरधिपूरगाहि पतत्यगाधे वचनं कवीनाम् ।
एतद्गुणानां गणनाङ्कपातः प्रत्यर्थिकीर्त्तीः खटिकाः क्षिणोति ॥९

---

देविकायां सरय्वाञ्च भवेदाविक सारवावित्यमरः। दाक्षिणा-यनेत्यादिना निपातनात् साधुः। पृषदुत्करो जलविन्दुसन्दोहः कठोरे कठिने पीने पीवरे उच्चे उन्नते कुचद्वयीतटे हारविभ्रमं मुक्ताहारभ्रान्तिं करोतु इति भ्रान्तिमदलङ्कारः ॥ ७ ॥

अखानीति। अस्य ऋतुपर्णस्य कुले वंशे जातैरिति शेषः। सिन्धुः उदधिः अखानि खातः खनतेः कर्मणि लुङ्। एतत्कुल्यैः सगरसुतैः उत्पादित इत्यर्थः स सागरो गङ्गया भागीरथ्या समपूरि पूरितः। अगस्त्यकृतसमुद्रपानानन्तरं गङ्गया समुद्रः पूरितः इति पुराणम्। एतत्कुल्येनैव भगीरथेनेति शेषः। स सिन्धुः प्रसभं बलात्कारेण भंत्स्यते एतत्कुल्येनैव रामेण बद्धः करिष्यते। कर्मणि लृट्। कृतयुगापेक्षया त्रेताया भावित्वात् भविष्यत्प्रयोगः। अस्य ऋतुपर्णस्य यशःशतैर्विलङ्घ्यते च। तथाहि सतां सज्जनानां महत्पौरुषं सम्मुखं धावतीति सम्मुखधावि महतामेवं विधपुरुषकारः स्वयमेवाभिमुखमायाति न प्रयाससाध्य इत्यर्थः ॥८॥

एतदिति। एतस्य राज्ञः यशएव क्षीरधिः क्षीराब्धिः तस्य पूरं प्रवाहं गाहत इति तद्गाहि तद्वर्णनप्रवृत्तमित्यर्थः। कवीनां वचनम् अगाधे गम्भीरे पतति मज्जति न तु निःशेषं वर्णयितुं शक्नोतीत्यर्थः। किं च एतद्गुणानां एतन्नृपतेः गुणानां गणनाङ्कपातः संख्यानरेखाविन्यासः प्रत्यर्थिकीर्त्तीः

भास्वद्वंशकरीरतां दधदयं वीरः कथं कथ्यताम् ?
अध्युष्टापि हि कोटिरस्य समरे रोमाणि सत्त्वाङ्कुराः ।
नीतः संयति वन्दिभिः श्रुतिपथं यन्नामवर्णावली-
मन्त्रः स्तम्भयति प्रतिक्षितिभृतां दोस्तम्भकुम्भीनसान् ॥१०॥
तादृग्दीर्घविरिञ्चिवासरविधौ जानामि यत्कर्त्तृतां
शङ्के यत्प्रतिबिम्बमम्बुधिपयःपूरोदरे वाड़वः ।

---

शत्रुयशांसि एव खटिकाः लेखनार्थकठिनीः क्षिणोति कशयति एतद्गुणवृन्दैः प्रत्यर्थिकीर्त्ति तिरोधायकत्वादित्थं निर्देशः ॥ ८ ॥

भास्वदिति । भास्वद्वंशकरीरतां सूर्यकुलाङ्कुरत्वं उज्ज्वलवेणवङ्कुरत्वञ्च दधत् वंशाङ्कुरे करीरोऽस्त्री द्वावंशौ कुलमस्कराविति चामरः । वीरः शूरोऽयमृतुपर्णः कथं कथ्यतां ? कथयितुमशक्य इत्यर्थः । तथाहि अस्य राज्ञः समरे प्रसक्ते अध्युष्टा आधिक्यविशिष्टा कोटिरित्यर्थः तिस्रः कोट्योऽर्द्धकोटी च यानि रोमाणि मानवे इत्यादि स्मरणात् । विंशत्याद्याः सदैकत्वे संख्याः संख्येयसंख्ययोरिति संख्येयेऽप्येकवचनम् । रोमाणि सत्त्वं व्यवसाय उत्साहिवीरस्य स्थायीभावः तस्य अङ्कुरा वहिरुद्गताः वीररसाङ्कुरा एवेत्युत्प्रेक्षा । द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु इत्यमरः । वंशकरीरस्य समन्तात् उपाङ्कुरप्रादुर्भावो युक्त इत्यर्थः अतएव संयति युद्धे वन्दिभिर्वैतालिकैः श्रुतिपथं कर्णपथं नीतः श्रावित इत्यर्थः यस्य ऋतुपर्णस्य नामवर्णावली नामाक्षरपंक्तिरेव मन्त्रः प्रतिक्षितिभृतां शत्रुभूपानां दोःस्तम्भा एव कुम्भीनसाः सर्पाः तान् । कुम्भीनसो लेलिहान इत्यमरः । स्तम्भयति प्रतिबध्नाति ।

व्योमव्यापिविपक्षराजकयशस्तारा: पराभावुक:
कासामस्य न स प्रतापतपन: पारं गिरां गाहते ? ॥११॥
द्वेष्याकीर्त्तिकलिन्दशैलसुतया नन्द्याऽस्य यद्दोर्द्वयी-
कीर्त्तिश्रेणिमयी समागममगाद् गङ्गा रणप्राङ्गणे।
तत्तस्मिन् विनिमज्य बाहुजभटैरारम्भि रम्भापरी-
रम्भानन्दनिकेतनन्दनवनक्रीडादराडम्बर: ॥ १२ ॥

सर्पा हि मान्त्रिककृतगारुड़मन्त्रोच्चारणेन स्तम्भिता: भवन्ति इति प्रसिद्धि: ॥१०॥

तादृगिति। तादृग्दीर्घस्य। चतुर्युगसहस्रन्तु ब्रह्मणो दिनमुच्यते इत्युक्तमहापरिमाणस्य विरिञ्चे: ब्रह्मणो वासरस्य दिवसस्य विधौ विधाने यस्य प्रतापतपनस्य कर्त्तृता न तु प्रसिद्धतपनस्येत्यर्थ: कल्पान्तावस्थायी यस्य प्रताप इति भाव:। तां जानामि इत्युत्प्रेक्षायाम्। अम्बुधिपय:पूरस्य समुद्रजलराशे: उदरे अभ्यन्तरे वाड़वो वड़वानलो यस्य प्रतापतपनस्य प्रतिबिम्बमेव शङ्के इत्युत्प्रेक्षायाम्। व्योमव्यापिन्यो या: विपक्षस्य विरोधिनो राजकस्य राजसमूहस्य यशांस्येव तारा नक्षत्राणि ता: पराभावुक: लषपतेत्यादिना उकञ्प्रत्यये न लोकेत्यादिना षष्ठीप्रतिषेधात् कर्मणि द्वितीया। *सर्वव्यापी अस्य राज्ञ: प्रताप एव तपन: कासां गिरां पारं परभागं न गाहते? सर्वासामपि गाहते न* कासामपि गोचर इत्यर्थ: ॥ ११ ॥

द्वेष्येति। यत् यस्मात् अस्य राज्ञो दोर्द्वयीकीर्त्तिश्रेणिमयी भुजयुगयश:परम्परारूपा नन्दा अलकनन्दा गङ्गा भागीरथी रणप्राङ्गणे युद्धक्षेत्रभूतप्रयागे इति यावत्। द्वेष्याणां द्विषाम् अकीर्त्तिरधर्म इति यावत्। कीर्त्तेर्विरुद्धार्थत्वादपकीर्त्ति: सैव कलि-

इति श्रुतिस्वादिततद्गुणस्तुतिः सरस्वतीवाङ्मयविस्मयोत्थया ।
शिरस्तिरःकम्पनयैव भीमजा न तं मनोरन्वयमन्वमन्यत॥ १३ ॥
युवान्तरं सा वचसामधीश्वरा स्वरामृतन्यक्कृतमत्तकोकिला ।
शशंस संसक्तकरैव तद्दिशा निशाकरज्ञातिमुखीमिमां प्रति ॥१४

न्दतनया कालिन्दी यमुना तया समागमम् अगात् तत्तस्मात् तस्मिन् गङ्गायमुनासङ्गमे विनिमज्ज्य बाहुजभटैः क्षत्रियवीरैः बाहुजः क्षत्रियोविराडित्यमरः । रम्भायाः तदाख्यया प्रसिद्धायाः स्वर्वेश्यायाः परीरम्भानन्दः आलिङ्गनानन्दसुखम् उपसर्गस्य घञ्यमनुष्ये बहुलमिति दीर्घः । तस्य निकेते स्थाने नन्दनवने क्रीड़ादराड़म्बरो विहारेच्छाविजृम्भणम् आरम्भि आरब्धः । एतद्विरोधिनां मरणमेव शरणमिति भावः । अत्र कीर्त्यपकीर्त्योर्गङ्गायमुनारोपाद्रूपकालङ्कारः । सितासिते सरिते यत्र सङ्गते तत्राप्लुतास्ते दिवमुत्पतन्ति वै तन्वां विसृजन्ति धीरास्ते जनास्ते अमृतत्वं भजन्ते इति श्रुतिरत्र प्रमाणम् ॥ १२ ॥

इतीति । भीमजा भैमी दमयन्ती इतीत्थं श्रुतिस्वादिता श्रोत्रग्रहीता तस्य ऋतुपर्णस्य गुणानां स्तुतिः यया सा सती सरस्वत्या देव्या वाङ्मये विषये यो विस्मयः तदुत्थया शिरस्तिरःकम्पनयैव अवज्ञासूचककम्पनेनैव मनोः अन्वयं मनुवंशोद्भवं *मनुसन्तानं तम् ऋतुपर्णं न अन्वमन्यत न्यषेधीत्* इत्यर्थः । विस्मयाभिनयशिरःकम्प एव प्रसङ्गान्निषेधार्थोऽपि संवृत इति भावः ॥ १३ ॥

युवेति । स्वर एवामृतं तेन न्यक्कृतमत्तकोकिला सा वचसामधीश्वरा वाग्देवता सरस्वती अन्यं युवानं युवान्तरं सुप्सुपेति समासः । तस्य यूनो दिशा दिग्भागेन संसक्तकरा व्यापृत-

न पाण्ड्यभूमण्डनमेणलोचने ! विलोचनेनापि नृपं पिपाससि ।
शशिप्रकाशाननमेनमीक्षितुं तरङ्गयाऽपाङ्गदिशा दृशस्त्विषः ॥१५॥
भुवि भ्रमित्वाऽनवलम्बमम्बरे विहर्त्तुमभ्यासपरम्परापरा ।
अहो ! महावंशममुं समाश्रिता सकौतुकं नृत्यति कीर्त्तिनर्त्तकी
॥ १६ ॥

---

*हस्ता हस्तेन तं निर्दिशन्ती एवेत्यर्थः निशापतिज्ञातिमुखीं चन्द्रसदृशमुखीमित्यर्थः ज्ञातिसोदरबन्ध्वादिशब्दाः सादृश्यवा-*चका इत्याहुः। इमां भैमीं प्रति शशंस। दमयन्तीम् आमन्त्र्य आचख्यावित्यर्थः ॥ १४ ॥

नेति। हे एणलोचने ! मृगाक्षि ! पाण्ड्यानां भूमण्डनं चूडामणिं तेषु श्रेष्ठं नृपं विलोचनेनापि न पिपाससि पातुं न इच्छसि ? मुखेन तु कुत इति भावः। किन्तु शशिप्रकाशाननम् इन्दुसुन्दरास्यं एनम् ईक्षितुम् अपाङ्गदिशा कटाक्षमार्गेणापि दृशस्त्विषो दृक्कान्तीः तरङ्गय प्रवर्त्तय ॥ १५ ॥

भुवीति। कीर्त्तिरेव नर्त्तकी लासिकी शिल्पिनो ष्वुन् इत्यत्र नृतिखनिरञ्जनापरिगणनात् नृत्यतेः ष्वुन्प्रत्ययः षिद्गौरादिभ्यश्चेति ङीप्। भुवि भूतले भ्रमित्वा भूचारिणी भूत्वेत्यर्थः अथ अम्बरे आकाशे अनवलम्बम् अनवष्टम्भं विहर्त्तुं नर्त्तितुमभ्यासानां परम्परा परं प्रधानं यस्याः सा सती अम्बरचारिणी भूत्वा अभ्यस्येत्यर्थः महावंशं महाकुलीनं महावेणुञ्च वंशो वेणौ कुले वर्गे इति विश्वः। अमुं पाण्ड्यम् आश्रिता सती सकौतुकं यथा तथा नृत्यति अहो ! आश्चर्य्यं। यथा काचित् नर्त्तकी रज्ज्वोरुपरिभागे वंशखण्डं गृहीत्वा नृत्यति तद्वत् कीर्त्तिरपि नृत्यति। समासोक्तिरलङ्कारः ॥१६॥

इतो भिया भूपतिभिर्वनं वनात्
अटद्भिरुच्चैरटवीत्वमीयुषी ।
निजापि साऽवापि चिरात् पुनः पुरी
पुनः स्वमध्यासि विलासमन्दिरम् ॥ १७ ॥

आसीदासीमभूमीवलयमलयजालेपनेपथ्यकीर्त्तिः
सप्ताकूपारपारीसदनजनघनोद्गीतचापप्रतापः ।
वीरादस्मात्परः कः पदयुगयुगपत्पातिभूपातिभूय-
श्चूडारत्नोडुपत्नीकरपरिचरणामन्दनन्दन्नखेन्दुः ॥ १८॥

इत इति। इतोऽस्मात् राज्ञः भिया भयेन वनात् वनम् अटद्भिः भ्रमद्भिः भूपतिभिः प्रतिभूपैः उच्चैररटवीत्वं कालवशात् महाटवीत्वमीयुषी प्राप्ता सा पूर्वानुभूता निजा स्वकीया पुरी नगरी अपि चिरात् वहोः कालात् पुनरत्रापि प्राप्ता स्वं स्वकीयं विलासमन्दिरं क्रीड़ागृहञ्च पुनरध्यासि अध्यासितं आसेरधिपूर्वात् कर्मणि लुङ् । विलेषु आसते इति विलासा विलेशया सर्पास्तेषां मन्दिरमिति विशेषणत्वेनापि योज्यम् । अत्रैकस्य अरिवर्गस्य क्रमादनेकासु अटवीषु अटवीभूतपुरीषु च विलासमन्दिरत्वेन तथा पुरीष्वपि पुरीत्वाटवीत्वयोः क्रमसम्बन्धोक्त्या च एकम् अनेकस्मिन्ननेकमेकस्मिन् वा क्रमेण पर्याय इत्युक्तलक्षणं पर्य्यायभेदद्वयं द्रष्टव्यम् ॥ १७ ॥

आसीदिति। वीरात् अस्मात् पाण्ड्यात् परोऽन्यः को वीर आसीमात् आसीमान्तात् अभिविधावव्ययीभावः। भूमिवलयस्य मलयजालेपनेपथ्यं चन्दनचर्चा प्रसाधनभूता कीर्त्तिर्यस्य सः सप्तानाम् अकूपारपाराणां समुद्रपरतीराणां समाहारः सप्ताकूपारपारी तद्धितार्थेत्यादिना समाहारद्विगौ ङीप् । सैव सदनं येषां तैः तत्रस्थैर्जनैः घनं निरन्तरमुद्गीतश्चापप्रतापो यस्य सः पद युगे

भङ्गाकीर्त्तिमषीमलीमसतया प्रत्यर्थिसेनाभट-
श्रेणीतिन्दुककाननेषु विलसत्यस्य प्रतापानलः।
अस्मादुत्पतिताः स्फुरन्ति जगदुत्सङ्गे स्फुलिङ्गाः स्फुटं
भालोद्भूतभवाक्षिभानुहुतभुग्जम्भारिदम्भोलयः॥१९॥
एतद्दन्तिबलैर्विलोक्य निखिलामालिङ्गिताङ्गीं भुवं
सङ्ग्रामाङ्गणसीम्नि जङ्गमगिरिस्तोमभ्रमाधायिभिः।
पृथ्वीन्द्रः पृथुरेतदुग्रसमरप्रेक्षोपनम्रामर-
श्रेणीमध्यचरः पुनः क्षितिधरक्षेपाय धत्ते धियम्॥२०॥

---

*युगपत्पातिनां भूपानाम् अतिभूयांसि चूड़ारत्नान्येव उडवः तासामेव पत्नीनां करा अंशवो हस्ताश्च बलिहस्तांशवः करा* इत्यमरः। तेषां परिचरणेन परामर्शेन अमन्दम् अतिमात्रं नन्दन्तः उल्लसन्तः नखा एवेन्दवो यस्य स आसीत् दिगन्तविश्रान्तप्रतापः समस्तराजवन्द्योऽयमेव नान्यः कश्चिदित्यर्थः॥ १८॥

भङ्गेति। अस्य पाण्ड्यस्य प्रताप एवानलः भङ्गेन पराजयेन या अकीर्त्तिः सैव मषी तया मलिमसतया प्रत्यर्थिसेनाभटश्रेण्य एव तिन्दुककाननानि कालस्कन्दवनानि तिन्दुकः स्फूर्जकः कालस्कन्दश्च शितिसारक इत्यमरः। तेषु विलसति प्रज्वलति। भालोद्भूतभवाक्षि हरनिटलनेत्रं तच्च भानुश्च सूर्य्यश्च हुतभुगग्निश्च जम्भारिदम्भोलिः कुलिशश्च ते अस्मात्तिन्दुकाग्नेः उत्पतिता उत्थिताः स्फुलिङ्गाः अग्निकणाः जगदुत्सङ्गे जगदुपरि स्फुरन्ति स्फुटं असंशयमित्युत्प्रेक्षा रूपकसङ्कीर्णा। तिन्दुककाष्ठेभ्यो दह्यमानेभ्यो महान्तः स्फुलिङ्गाश्च उत्तिष्ठन्तीति प्रसिद्धिः॥ १९॥

एतदिति। एतस्य पाण्ड्यस्य उग्रस्य भयङ्करस्य समरस्य

शशंस दासीङ्गितवित् विदर्भजाम्
इतो ननु स्वामिनि ! पश्य कौतुकम् ।
यदेष सौधाग्रनटे पटाञ्चले
चलेऽपि काकस्य पदार्पणग्रहः ॥ २१ ॥

---

प्रेक्षायैव प्रेक्षणाय गुरोश्च हल इति स्त्रियामप्रत्यये टाप् । उपनम्राणाम् उपगतानां अमराणां श्रेण्यां तन्मध्ये चरतीति तथोक्तः स्वयमपि तद्द्रष्टुमागत इत्यर्थः पृथुर्वैण्यो नाम पृथ्वीन्द्रः सङ्ग्रामाङ्गणसीम्नि रणाजिरभूमौ जङ्गमाः सञ्चारिणो गिरीणां स्तोमाः समूहा इति भ्रममादधत इति तथोक्तैस्तथा भ्रान्तिजनकैरित्यर्थः अतएव भ्रान्तिमदलङ्कारः । एतस्य पाण्ड्यस्य दन्तिबलैर्गजघटाभिः आलिङ्गिताङ्गीम् आक्रान्तस्वरूपां निखिलां भुवं विलोक्य पुनः क्षितिधराणां क्षेपाय धनुषा प्रोत्सारणाय धियं धत्ते नूनमिति शेषः । अतो गम्योत्प्रेक्षा पूर्वोक्तभ्रान्तिमदलङ्कारोत्थितेति सङ्करः । तेनैतत्सेनागजाः गिरिसमानसङ्ख्यापरिमाणा इति गम्यते । अत्र पराशरः । तत उत्सारयामास शैलाः शतसहस्रशः । धनुष्कोट्या तथा वैण्यस्तेन शैलविवर्जिता इति ॥ २० ॥

शशंसेति । इङ्गितवित् त्वराभिज्ञा दासी किङ्करी विदर्भजां दमयन्तीं शशंस बभाण किमिति ननु हे स्वामिनि ! इतोऽत्र कौतुकं विनोदं पश्य किं तत्तदाह । सौधाग्रे एव नटे नर्त्तके अतएव चले चलत्यपि पटाञ्चले ध्वजाञ्चले काकस्य एष पदार्पणग्रहः पादन्यासाभिनिवेश इति यत् तत्कौतुकमिति पूर्वेणान्वयः । एतेन भैम्याः तस्मिन् पाण्ड्ये महान् अनादरः सूचितः ॥ २१ ॥

ततस्तदप्रस्तुतभाषितोत्थितैः सदस्तदश्वेति हसैः सदःसदाम्।
स्फुटाऽजनि म्लानिरतोऽस्य भूपतेः सिते हि जायेत शितेःसुलक्षता ॥२२॥

ततोऽनु देव्या जगदे महेन्द्रभूपुरन्दरे सा जगदेकवन्द्यया।
तदार्जवावर्जिततर्जनीकया जनी कयाचित् परचित्स्वरूपया ॥ २३ ॥

स्वयंवरोद्वाहमहे वृणीष्व हे! महेन्द्रशैलस्य महेन्द्रमागतम्।

---

तत इति। ततोऽनन्तरं तथा अप्रस्तुतभाषितेन उत्थितैः सदःसदां सभासदां हसैर्हासैः स्वनहसोर्वेति विकल्पादप्रत्ययः। तत् सदः संसत् सभा अश्वेति सितीकृतं शुभ्रीकृतम् इति यावत्। श्वितिधातोर्ण्यन्तात्कर्मणि लुङ्। अतः सदः श्वैत्यात् हेतोः अस्य पाण्ड्यस्य भूपतेः म्लानिः विवर्णता स्फुटा व्यक्ता अजनि जाता कर्त्तरि लुङ् दीपजनेत्यादिना विकल्पाच्चिण् प्रत्ययः। तथाहि सिते धवलिम्नि शितेर्नीलिम्नः। असितिः शितिकृष्णे च कालं नीलञ्च मेचकमिति हलायुधः। सुलक्षता सुग्रहत्वं जायेत हि स्फुटं दृश्यत इत्यर्थः। अर्थान्तरन्यासोऽलङ्कारः॥ २२॥

ततोऽन्विति। ततोऽनु तदनन्तरं महेन्द्रभूपुरन्दरे महेन्द्रपर्वताधीश्वरे विषये तं लक्षीकृत्येत्यर्थः तदार्जवेन तस्य महेन्द्राधिपस्य आर्जवेन सरलतया आवर्जिता नमिता तर्जनी प्रदेशिनी यया तया तादृक्तर्जनिकया तम् अङ्गुल्या निर्दिश्येत्यर्थः नद्यृतश्चेति कप्। कयाचित् अनिर्वाच्यया परचित्स्वरूपया परज्योतिरात्मिकया जगदेकवन्द्यया देव्या सरस्वत्या सा जनी बधूर्जगदे गदिता॥२३॥

स्वयंवरे इति। हे! इति सम्बोधने। अथ सम्बोधना-

कलिङ्गजानां स्वकुचद्वयश्रिया कलिङ्गजानां शृणु तत्र कुम्भयोः ॥ २४ ॥

अयं किलायात इतीरिपौरवाग्भयादयादस्य रिपुर्वृथा वनम्।
श्रुतस्तदुत्स्वापगिरस्तदक्षराः पठद्भिरत्रासि शुकैर्वनेऽपि सः॥२५

इत स्वसद्विद्रुतभूभृदुज्झिता प्रियाऽत्र दृष्टा वनमानवीजनैः।
शशंस पृष्टाद्भुतमात्मदेशजं शशित्विषःशीतलशीलतां किल ॥२६

---

*घंकाः स्वः स्याप्याङ्ङ्ग हे है भो इत्यमरः। हे भैमि! स्वयंवरेण स्वयंवरकर्मणा य उद्वाहमहो विवाहोत्सवः तस्मिन्* आगतं महेन्द्रशैलस्य महेन्द्रपर्वतस्य महेन्द्रम् अधीशं वृणीष्व तत्र महेन्द्रशैले कलिङ्गजानां कलिङ्गदेशोद्भवानां गजानां कुम्भयोः स्वस्य आत्मनः कुचद्वयश्रिया सह कलिं कलहं शृणु तद्देशस्य गजप्रायत्वात् कुचकुम्भयोः करिकुम्भयोश्च साम्यं व्यक्तीभविष्यतीति भावः॥ २४ ॥

अयमिति। अयं महेन्द्रनाथ आयातः किल इतीरिणाम् ःनित्रादिनां पौराणां वाग्भ्यो जनवादेभ्यः भयात् अस्य रिपुर्वृथा वनम् अयात् वृथात्वमेवाह। श्रुता आकर्णिताः तान्येव अक्षराणि अयमायातः किलेत्येवंरूपाणि यासु ताः तदक्षराः तेषां पौराणां उत्स्वापगिरो वासनायातान् उत्स्वप्नायितप्रलापान् पठद्भिः उच्चारयद्भिः शुकैर्वने सः रिपुः शत्रुः अत्रासि त्रासितः त्रसेर्ण्यन्तात्कर्मणि लुङ्। अत्र सत्यपि त्रासनिवृत्तिकारणे शुकवाक्यनिमित्तेन तदुत्पत्तेः उक्तनिमित्तरूपो विशेषोक्तिभेदः अलङ्कारः। कारणसामग्र्यां कार्य्यानुत्पत्तिर्विशेषोक्तिरिति सामान्यलक्षणात्॥ २५ ॥

इत इति। इतः अस्मात् महेन्द्रनाथात् त्रसता बिभ्यता अतएव विद्रुतेन पलायितेन भूभृता प्रतिपक्षभूभुजा उज्झिता

इतोऽपि किं वीरयसे न कुर्वतो नृपान् धनुर्बाणगुणैर्वशंवदान् ।
गुणेन शुद्धेन विधाय निर्भरं तमेनमुर्वीवलयोर्वशी वशम् ॥२७॥
एतद्भीतारिनारी गिरिबिलविगलद्वासरा निःसरन्ती
स्वक्रीडाहंसमोहग्रहिलशिशुभृशप्रार्थितोद्यिद्रचन्द्रा ।
आक्रन्दद् भूरि यत्तद्वयनजलमिलच्चन्द्रहंसानुबिम्ब-
प्रत्यासत्तिप्रहृष्यत्तनयविहसितैराश्वसीच्छश्वसीच्च ॥२८॥

---

वने त्यक्ता प्रिया तत्कान्ता वनमानवीजनैः किरातीजनैः दृष्टा । अथ दर्शनानन्तरम् आत्मदेशजं त्वद्देशे किमद्भुतमस्तीति पृष्टा सती अप्रधाने दुहादीनामित्यत्र प्रधाने कर्मणि क्तः । शशित्विषः चन्द्रिकायाः शीतलशीलतां शिशिरस्वभावतां शशंस किल ? कथयामास खलु ? अभिनवप्राप्तविरहाया मुग्धायाः चन्द्रकिरणानां विरहे दुःसहत्वमजानन्त्याः स्वदेशे शीतलत्वमत्र वने च उष्णत्वमिति भ्रान्तिरिति भावः ॥ २६ ॥

इतोऽपीति । हे भैमि ! उर्वीवलयोर्वशी भूलोकाप्सरोविशेषा त्वं शुद्धेन अनवद्येन गुणेन सौन्दर्य्यगुणेन मौर्व्या च एकेनैवेति भावः । तमेनं महेन्द्रनाथं निर्भरं नितान्तं वशं विधाय वशीकृत्य धनुर्बाणगुणैः त्रिभिः साधनभूतैः नृपान् वशंवदान् वश्यान् प्रियवशे वदः खच् । कुर्वतः कुर्वाणात् इतोऽस्मादपि पञ्चमी । किं न वीरयसे न पराक्रमसे वीरशूरविक्रान्ताविति चौरादिकाल्लट् । व्यतिरेकालङ्कारः ॥ २७ ॥

एतदिति । एतस्मात् भीतस्य अरेर्नारी गिरिविलेषु पर्वतगुहासु विगलन् वासरो यस्याः सा तत्रैव नीतदिवसेत्यर्थः निःसरन्ती सायं निष्क्रामन्ती स्वक्रीड़ाहंसमोहेन तद्भ्रान्त्या ग्रह आग्रहः तद्वान् ग्रहिलः पिच्छादित्वादिलच्प्रत्ययः । तेन शिशुना बालकेन भृशम् अत्यर्थं प्रार्थितो धृत्वा दीयतामिति

अस्मिन् दिग्विजयोद्यते पतिरयं मे स्तादिति ध्यायति
कम्पं सात्त्विकभावमश्नुति रिपुक्षौणीन्द्रदारा धरा।
अस्यैवाभिमुखं निपत्य समरे यास्यद्भिरूर्द्धं निजः
पन्था भास्वति दृश्यते बिलमयः प्रत्यर्थिभिः पार्थिवैः॥२८॥

---

याचितः उद्भिद्रः चन्द्रो यस्याः सा सती भूरि भूयिष्ठं यथा तथा आक्रन्दत् क्रन्दितवती। यद्यस्मादाक्रन्दनात् तस्या मातुर्नयनजलेन मिलन् संक्रामन् चन्द्र एव हंसः तस्य अनुविम्बस्य प्रत्यासत्त्या समीपप्राप्त्या प्रहृष्यतः तनयस्य विहसितैः अट्टहासैः आश्वसीत् स्तम्भितहृदयत्वात् किन्तु न्यश्वसीच्चेति दुर्दशानुभवसूचकोक्तिः। ह्म्यान्तक्षणश्वसेत्यादिना वृद्धिप्रतिषेधः। *अत्र नारीशिशोः चन्द्रबिम्बे तत्प्रतिबिम्बे च हंसगतसादृश्यात् हंसभ्रान्तिनिबन्धनात् भ्रान्तिमदलङ्कारः* ॥ २८ ॥

अस्मिन्निति। अस्मिन् महेन्द्रनाथे दिग्विजयोद्यते सति रिपुक्षौणीन्द्राणां दाराः कलत्रभूता धरा अयं महेन्द्रनाथ एव मे मम पतिः स्तात् अस्तु अस्तेर्लोटिसिपि सोऽस्तु तत्र देशः श्नसोरल्लोप इति अकारलोपः। इति ध्यायति सङ्कल्पयति कम्पं कम्पाख्यं सात्विकभावम् अश्नुति प्राप्नोति औत्पातिके भूकम्पे सात्त्विकोत्प्रेक्षा व्यञ्जकाप्रयोगाद् गम्या। किं चास्यैव समरे अभिमुखं निपत्य आगत्य ऊर्द्धम् ऊर्द्धलोकं यास्यद्भिः प्रत्यर्थिभिः पार्थिवैः भास्वति सूर्य्यमण्डले बिलमयः छिद्ररूपः निजः पन्था दृश्यते आसन्नमृत्योः आदित्यमण्डलं सच्छिद्रमिव दृश्यते इत्यागमः। अत्र आत्मीयोर्द्धगमनमार्गत्वोत्प्रेक्षा पूर्ववद् गम्या। द्वाविमौ पुरुषौ लोके सूर्य्यमण्डलभेदिनौ। परिव्राड् योगयुक्तश्च रणे चाभिमुखो हत इति॥ २९ ॥

विद्राणे रणचत्वरादरिगणे त्रस्ते समस्ते पुनः
कोपात्कोऽपि निवर्त्तते यदि भटः कीर्त्या जगत्युद्भटः।
आगच्छन्नपि सम्मुखं विमुखतामेवाधिगच्छत्यसौ
द्रागेतच्छुरिकारयेण ठणिति च्छिन्नापसर्पच्छिराः॥३०॥
ततस्तदुर्वीन्द्रगुणाद्भुतादिव स्ववक्त्रपद्मेऽङ्गुलिनालदायिनी।
विधीयतामाननमुद्रणेति सा जगाद वैदग्ध्यमयेङ्गितैव ताम्॥३१॥
अनन्तरं तामवदन्नृपान्तरं तदध्वदृक्तारतरङ्गरिङ्गणा।

---

विद्राण इति। समस्ते अरिगणे त्रस्ते रणचत्वरात् रणाङ्गणात् विद्राणे विद्रुते सति विद्रातेः कर्त्तरि क्तः। संयोगादेः अन्तोयण्वत इति निष्ठातकारस्य णत्वम्। कीर्त्या जगत्युद्भटः प्रसिद्धः कोऽपि भटः कोपात् पुनर्निवर्त्तते यदि सम्मुखम् अभिमुखम् आगच्छन् अपि असौ भटो द्राक् सपदि एतस्याः छुरिकायाः शस्त्रविशेषस्य रयेण ठणिति कश्चिदनुकरणशब्दः। छिन्नम् अपसर्पत् अपगच्छच्छिरो यस्य स सन् विमुखतां पराङ्मुखत्वमेव अधिगच्छतीति विरोधः विगतमुखत्वमिति तत्त्वम् इति विरोधपरिहाराद्विरोधाभासोऽलङ्कारः॥३०॥

तत इति। ततस्तद्दर्शनानन्तरं तस्य उर्वीन्द्रस्य महेन्द्रनाथस्य गुणेषु अद्भुतात् आश्चर्य्यावेशादिव वस्तुतस्तु अनादरादिति भावः। स्ववक्त्रपद्मे अङ्गुलिमेव नालम् अस्य ददातीति न्यस्यति तद्दायिनी पद्मस्य नालाविनाभावादिति भावः। सा दमयन्ती वैदग्ध्यमयं तत्प्रचुरम् इङ्गितं यस्याः सैव सती तां सरस्वतीम् आननमुद्रणा मौनं विधीयतामिति जगाद अङ्गुलिदानरूपा निजमुखमुद्रैव तस्या मौनोपदेशोऽभूदित्यर्थः विदग्धा हि स्वेङ्गितेनैव परं बोधयन्तीति भावः॥३१॥

अनन्तरमिति। अनन्तरं सरस्वती तस्मै अध्वा तदध्वा

तृणीभवत्पुष्पशरं सरस्वती स्वतीव्रतेजःपरिभूतभूतलम् ॥३२॥
तदेव किन्नु क्रियते न का क्षतिर्यदेष तद्दूतमुखेन काङ्क्षति।
प्रसीद काञ्चीमयमाच्छिनत्तु ते प्रसह्य काञ्चीपुरभूपुरन्दरः ॥३३
मयि स्थितिर्नम्रतयैव लभ्यते दिगेव तु स्तब्धतया विलङ्घ्यते।
इतीव चापं दधदाशुगं क्षिपन्नयं नयं सम्यगुपादिशद् द्विषाम्
॥ ३४ ॥

---

नृपान्तराध्वा तस्मिन् दृशोः तारतरङ्गरिङ्गणा प्रौढोर्मिरचना यस्याः सा सती तं दृष्ट्वा निर्दिशन्तीत्यर्थः तां दमयन्तीं तृणीभवन् पुष्पशरो यस्य तत् तृणीकृतमन्मथं स्वस्य तीव्रेण तेजसा परिभूतं भूतलं येन तत् नृपान्तरम् अन्यं नृपम् लक्षीकृत्य इति शेषः। अवदत् ब्रुविसमार्थकत्वाद् द्विकर्मकत्वम् ॥ ३२ ॥

तदिति। हे भैमि! एष काञ्चीपुरभूपुरन्दरः काञ्चीनगरालङ्कृतदेशाधीश्वरो दूतस्य मुखेन यदेव काङ्क्षति तत् काङ्क्षितं किं नु न क्रियते एव? कर्त्तव्यमेव तदित्यर्थः। का क्षतिः? तत्करणे का हानिः? प्रत्युत श्रेय एवेति भावः। अथ तथा काङ्क्षितमेव प्रार्थयते अयं काञ्चीपतिस्ते काञ्चीं मेखलां प्रसह्य बलादाच्छिनत्तु आच्छिद्य गृह्णातु काञ्चीपतेः उचितत्वादिति भावः। अतएव प्रसीद प्रसन्ना भव अनुमन्यस्वेत्यर्थः ॥ ३३ ॥

मयीति। अयं काञ्चीपतिश्चापं दधच्चाशुगं बाणं क्षिपन् द्विषः शत्रून् मयि विषये नम्रतया अवनत्या प्रणत्या च स्थितिः इहावस्थानं प्रतिष्ठा च लभ्यते स्तब्धतया अनम्रतया तु दिगेव लभ्यते न कुत्रापि स्थीयत इति नयं नीतिम् उपादिशदिव ब्रुव्यर्थत्वाद् द्विकर्मकः। धनुर्बाणदृष्टान्तेन द्विषां

अदःसमित्सम्मुखवीरयौवतत्रुटद्भुजाकम्बुमृणालहारिणी ।
द्विषद्गणस्त्रैणदृगम्बुनिर्झरे यशोमरालावलिरस्य खेलति ॥ ३५ ॥
सिन्दूरद्युतिमुग्धमूर्द्धनि धृतस्कन्धावधिश्यामिके
व्योमान्तःस्पृशि सिन्धुरेऽस्य समरारम्भोद्धुरे धावति ।
जानीमो नु यदि प्रदोषतिमिरव्यामिश्रसन्ध्याधिये-
वाऽस्तं यान्ति समस्तबाहुजभुजातेजःसहस्रांशवः ॥ ३६ ॥

---

नम्रत्वे स्थितिः अन्यथा क्षेपे एवेत्युपादिशदिवेत्युत्प्रेक्षा ॥ ३४ ॥

अद इति । अस्य काञ्चीपतेर्यशसामेव मरालानां हंसानाम् आवलिः अमुष्य भूपतेः समित्सु युद्धेषु सम्मुखानां वीराणां *यौवतानि युवतीसमूहाः गार्भिण्यं यौवतञ्च गण इत्यमरः ।* भिक्षापाठात् समूहार्थे ऽण्प्रत्ययः भस्याढे तद्धित इति प्राक् पुंवद्भावाभावश्च । तेषां त्रुट्यन्ति भ्रंश्यन्ति भुजासु कम्बूनि शङ्खवलयानि शङ्खः स्यात्कम्बुरस्त्रियामित्यमरः । तान्येव मृणालानि तानि हरतीति तद्धारिणी सती द्विषद्गणस्य तदीयारिवर्गस्य स्त्रैणे स्त्रीसम्बन्धिनि दृगम्बुनिर्झरे नेत्रजलप्रवाहे खेलति क्रीड़ति स्त्रीणां पुंसाञ्च यत्किञ्चित् स्त्रैणं पौंस्नमिति-क्रमादित्यमरः । स्त्रीपुंनपुंसो हंसाभ्यो भवनादिति नञ् । रूपकालङ्कारः ॥ ३५ ॥

सिन्दूरेति । सिन्दूरं नागसम्भवमित्यमरः । तस्य द्युतिभिः मुग्धमूर्द्धनि सुन्दरमस्तके धृतः स्कन्धोऽवधिः यस्याः सा श्यामिका यस्य तस्मिन् स्कन्धपर्य्यन्तश्यामले तत उपरि सिन्दूरारुणे इत्यर्थः । व्योमान्तःस्पृशि अभ्रंकषे तद्वर्त्तिनि च अस्य काञ्चीपतेः सिन्धुरे गजे समरारम्भेषु उद्धुरे निर्भरे अनर्गले इत्यर्थः ऋक्पूरब्धूरित्यादिना समासान्तः । धावति अभि-

हित्वा दैत्यरिपोरुरः स्वभवनं शून्यत्वदोषस्फुटा-
सीदन्मर्कटकीटकृत्रिमसितच्छत्रीभवत्कौस्तुभम्।
उज्झित्वा निजसद्म पद्ममपि तद् व्यक्तावनद्धीकृतं
लूतातन्तुभिरन्वगस्य भुजयोः श्रीरस्य विश्राम्यति ॥३७॥
सिन्धोर्जैत्रमयं पवित्रमसृजत्तत्कीर्त्तिपूर्त्ताद्भुतं
यत्र स्नान्ति जगन्ति सन्ति कवयः के वा न वाचंयमाः।

---

मुखागते सति अनु अनन्तरं समस्तबाहुजानां समस्तक्षत्रियाणां भुजतेजांसि भुजप्रतापा एव सहस्रांशवः सूर्य्याः प्रदोषतिमिरेण व्यामिश्रसन्ध्याधिया एवास्तं यान्ति यदि श्यामारुणसिन्धुरे तिमिरमिश्र सन्ध्याभ्रान्त्यैव अस्तं यान्ति किमिति जानीमः उत्प्रेक्षालङ्कारः ॥ ३६ ॥

हित्वेति। श्रीः लक्ष्मीः स्वभवनं निजनिवासं दैत्यरिपोः विष्णोरुरः शून्यत्वदोषेण रिक्ततादोषेण स्फुटमासीदन्तः प्रत्यासीदन्तः ये मर्कटकीटास्तन्तुवायकीटाः लूता स्त्री तन्तुवायोर्णनाभिमर्कटकाः समाः इत्यमरः। तेषां सम्बन्धि यत् कृत्रिमसितछत्रं सितछत्राकारं लूतातन्तुवितानमण्डलं तथा भवन् कौस्तुभो यस्मिन् कर्मणि तद्यथा भवति तथा हित्वा निजसद्म नित्यनिवासभवनं तत् प्रसिद्धं पद्ममप्यन्तर्लूतातन्तुभिः व्यक्तम् अवनद्धीकृतं बद्धं यथा तथा उज्झित्वा अद्य सम्प्रति अस्य भुजयोरन्तर्विश्राम्यति अत्रैकस्याः श्रियः क्रमेणानेकाधारवृत्त्युक्त्या पर्य्यायालङ्कारभेदः तेनैव तद्भुजयोः श्रीरञ्जने विष्णूरःपद्माभ्यामप्यधिकं वस्तु व्यज्यते ॥ ३७ ॥

सिन्धोरिति। अयं काञ्चीपतिः सिन्धोरब्धेः जैत्रं जेतृ जयशीलं ततोऽप्यधिकमित्यर्थः जेतृशब्दात् तृन्नन्तात् प्रज्ञादित्वात् स्वार्थेऽण् प्रत्ययः। पवित्रं पावनं तत्तथा प्रसिद्धं कीर्त्तिरेव

यद्विन्दुश्रियमिन्दुरञ्चति जलञ्चाविश्य दृश्येतरो
यस्यासौ जलदेवतास्फटिकभू र्जागर्त्ति यागेश्वरः ॥३८॥
अन्तःसन्तोषवाष्पैः स्थगयति न दृशस्ताभिराकर्ण्यिष्यन्
अङ्के नानस्तिलोमाऽऽरचयति पुलकश्रेणिमानन्दकन्दाम् ।
न क्षोणीभङ्गभीरुः कलयति च शिरःकम्पनं तत्र विघ्नः
शृण्वन्नेतस्य कीर्त्तीः कथमुरगपतिः प्रीतिमाविष्करोति ॥३९॥

---

पूर्त्तं खातं कर्म व्याप्य मूर्च्छिमदामिति निष्ठानत्वप्रतिषेधः ।
तदेवाद्भुतमसृजत् यत्र पूर्त्ते जगन्ति लोकाः स्नान्ति यत्र यस्मिन्
विषये कवयः कवयितारो वाचं यच्छन्तीति वाचंयमा न
सन्ति सर्वेऽपि मौनिनो भवन्ति वर्णयितुमशक्यत्वादित्यर्थः
वाचि यमोव्रत इति खच्प्रत्ययः वाचंयमपुरन्दरौ चेति निपा-
*तनान्मुमागमः । इन्दु र्यस्य पूर्त्तस्य विन्दुश्रियमञ्चति प्राप्नोति
असौ इन्दु र्यस्य जलञ्चाविश्य दृश्येतरः सावर्ण्याद्दृश्यो जल-*
देवता आप्यशरीरदेवताविशेषश्चासौ स्फटिकाद्भवतीति स्फटि-
कभूः स्फटिकोद्भवो यागेश्वरः सन् जागर्त्ति स्फटिकलिङ्ग
यागेश्वर इति प्रसिद्धिः ॥३८॥

अन्तरिति । एतस्य राज्ञः कीर्त्तीः शृण्वन् उरगपतिः शेषः
ताभिः दृग्भिः आकर्णयिष्यन् श्रोष्यन् अतएवान्तःसन्तोष-
वाष्पैः दृशः न स्थगयति नाच्छादयति अन्यथा चक्षुःश्रवसोऽस्य
रूपग्रहणवच्छब्दग्रहणस्यापि तैः प्रतिबन्धादिति भावः । नाङ्गे-
नेति देशान्तरपाठः । अङ्गेन वपुषा येनाङ्गविकार इति
तृतीया । अङ्के नेति पाठे अङ्के वपुषि अस्तिलोमा न भव-
तीति अनस्तिलोमा अविद्यमानलोमा सन् अस्तीत्यव्ययं
विद्यमानपर्यायः । तस्य सम्बन्धि अस्तिक्षीरादिवचनाद्-
बहुव्रीहिः । अतएव आनन्दकन्दाम् आनन्दकारिणीं पुलकश्रेणिं

आचूडाग्रममज्जयज्जयपटुर्यच्छल्यकाण्डानयं
संरम्भे रिपुराजकुञ्जरघटाकुम्भस्थलेषु स्थिरान्।
सा सेवास्य पृथुः प्रसीदसि तया नास्मै कुतस्त्वत्कुच-
स्पर्द्धागर्द्धिषु तान् धृतवते दण्डान् प्रचण्डानपि ॥४०॥
स्मितश्रिया सृक्कणिलीयमानया वितीर्णया तद्गुणशर्मणेव सा।
उपाहसत् कीर्त्त्यमहत्त्वमेव तं गिरां हि पारे निषधेन्द्रवैभवम्॥४१॥

---

न आरचयति, तथा क्षौणीभङ्गभीरुः, च पृथिवीविदारणभीतः शिरःकम्पनं च न कलयति। तत्तस्मात् कथं केन प्रकारेण प्रीतिमाविष्करोति इति न विद्मः वाक्यार्थः कर्म ॥ ३९ ॥

आचूडेति। जये पटुः समर्थोऽयं राजा संरम्भे संग्रामे *रिपुराजकुञ्जरघटानां प्रतिपक्षभूपहयसमूहानां कुम्भस्थलेषु स्थिरान् निश्चलान् शल्यकाण्डान् शरकाण्डान् आचूडाग्रम्* आपुङ्खमुखं अमज्जयत् निखातवानिति यत् सा अस्य राज्ञः कर्त्तुः पृथुर्महती सेवा तवेति शेषः। तया सेवया त्वत्कुचाभ्यां सह स्पर्द्धागर्धिषु मत्सरगृध्नुषु तेषु कुञ्जरकुम्भेषु अपराधिषु प्रचण्डान् उग्रान् तान् दण्डान् धृतवते अस्मै राज्ञे कुतो न प्रसीदसि? एनं वृणीष्व इत्यर्थः ॥ ४० ॥

स्मितेति। सा भैमी तस्य काञ्चीपतेः गुणशर्मणा इव गुणप्रीत्येव वस्तुतस्तु अनादरादिति भावः। वितीर्णया विसृष्टया सृक्कणि अधरान्चले लीयमानया संकुचन्त्या स्मितश्रिया मन्दहासप्रभया कीर्त्त्यमहत्वमेव वाच्यमानमहत्वमेव अतएव तं काञ्चीपतिं उपाहसत् उपहसितवती। तथा हि निषधेन्द्रवैभवं नलमाहात्म्यं गिरां पारे अत्र नलगुणानुरागाख्येन कारणेन एतत् अपरागरूपकार्य्यसमर्थनात् तद्रूपार्थान्तरन्यासः ॥ ४१ ॥

निजाक्षिलक्ष्मीहसितैणशावकामसावभाणीदपरं परन्तपम्।
पुरेव तद्दिग्वलयश्रियो भुवा भ्रुवा विनिर्दिश्य सभासभाजितम् ॥ ४२ ॥

कृपा नृपाणामुपरि क्वचिन्न ते नतेन हाहा शिरसा रसादृशाम्।
भवन्तु तावत्तव लोचनाञ्चला निपेयनेपालनृपालपालयः ॥४३॥

ऋजुत्वमौनश्रुतिपारगामिता यदीयके सन्ति परं विहिंसितुम्।
अतीव विश्वासविधायि चेष्टितं बकुर्महानस्य स दाम्भिकः शरः ॥ ४४ ॥

---

निजेति। असौ सरस्वती सभासु सभाजितं पूजितं परन्तपं रिपुतापकं द्विषत्परयोस्तापेरिति खच्प्रत्ययः खचि ह्रस्वः अरुर्द्विषजन्तस्य मुम्। अपरमन्यं नृपं पुरेव पूर्ववत् तस्य राज्ञो दिशो वलये या श्रीः तस्या भुवा स्थानेन तद्दिग्वलितयेत्यर्थः भ्रुवा दृशः ऊर्ध्वावयवेन। ऊर्ध्वदृग्भ्यां भ्रुवोऽस्त्रियामित्यमरः। विनिर्दिश्य निजाक्षिलक्ष्म्या स्वनेत्रशोभया हसितैणशावका मृगाक्षीं भैमीम् अभाणीत् बभाण ॥ ४२ ॥

कृपेति। हे भैमि! नतेन अवनतेन शिरसा रसां भुवं पश्यन्तीति रसादृशां अधः पश्यतामित्यर्थः नृपाणामुपरि क्वचित् कुत्रापि कृपा न हाहेति खेदे। तावत् तव लोचनाञ्चला कटाक्षा निपेया ग्राह्या नेपालनृपालस्य नेपालभूपतेः पालिः कोटिः तद्दिग्भागो येषां ते भवन्तु। कटाक्षदृष्ट्या तं पश्येत्यर्थः स्त्रियां पाल्यश्च कोटय इत्यमरः ॥ ४३ ॥

ऋजुत्वेति। यदीयके शरे ऋजुत्वं अवक्रता परच्छन्दानुकूलता मौनं निःशब्दता वाचंयमत्वञ्च श्रुतिपारगामिता कर्णान्तगामित्वं वेदपारगत्वञ्च सन्ति तथा परमन्यं शत्रुं च विहिंसितुं हन्तुम् अनपकर्त्तुं च अतीव अत्यन्तं विश्वासान्

रिपूनवाप्यापि गतोऽवकोर्णितामयं न यावज्जनरञ्जनव्रती ।
भृशं विरक्तानपि रक्तवत्तरान् निकृत्य यत्तानसृजासृजद्युधि ॥ ४५ ॥

पतत्येतत्तेजोहुतभुजि कदाचिद्यदि तदा
पतङ्गः स्यादङ्गीकृततमपतङ्गापदुदयः ।
यशोऽमुष्येवोपार्जयितुमसमर्थेन विधिना
कथञ्चित् क्षीराम्भोनिधिरपि कृतस्तत्प्रतिनिधिः ॥ ४६ ॥

---

विगतासून् अथच विश्वासं प्रत्ययं विदधते इति विश्वासविधायि चेष्टितं चरित्रं अस्ति । अस्य राज्ञो बहुरनेकशः जातावेकवचनम् । महानधिकः दम्भः कपटं प्रयोजनमस्येति दाम्भिको लोकवञ्चकः । स तादृग्गुणविशिष्टः शरः अस्ति कपटोऽस्त्रीव्याज दम्भेत्यमरः । अत्र शरे दाम्भिकत्वोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या ॥ ४४ ॥

रिपूनिति । यावज्जनानां साकल्यजनानां रञ्जनमेव व्रतमस्यास्तीति तद्वति सर्वधन्वीतिवदन्नन्तो बहुव्रीहिः । अयं नेपालभूपो रिपून् अवाप्य प्राप्य अपि अवकीर्णितां क्षतव्रतत्वं न गतः कुतः ? यद्यस्माद् भृशं विरक्तान् अरक्तानपि रिपून् शत्रून् युधि समरे निकृत्य छित्वा कृन्ततेः क्त्वोल्यप् । असृजा रक्तवत्तरान् अतिशयेन रक्तवर्णान् अनुरक्तांश्च रञ्जेस्तवत्वन्तात्तरप् । असृजत् अकरोत् रिपूनपि रक्तेन रञ्जयतः कुतोऽपि न रञ्जनव्रतभङ्ग इति भावः ॥ ४५ ॥

पततीति । पतङ्गः सूर्यः एतस्य राज्ञः तेजोहुतभुजि प्रतापाग्नौ कदाचित् पतति यदि तदा अङ्गीकृततमो भृशस्वीकृतः पतङ्गस्य शलभस्य य आपदुदयः स येन स्यात् शलभताम् इयादित्यर्थः । पतङ्गः शलभे साधौ मार्जारेऽर्के खगेश्वरे इति

यावत् पौलस्त्यवास्तूभवदुभयहरिल्लोमरेखोत्तरीये
सेतुप्रालेयशैलौ चरति नरपतेस्तावदेतस्य कीर्त्तिः ।
यावत् प्राक्प्रत्यगाशापरिवृढनगरारम्भणस्तम्भमुद्रा-
वद्रौ सन्ध्यापताकारुचिरचितशिखाशोणशोभावुभौ च ४७

---

वैजयन्ती । किं च अमुष्य राज्ञएव यश उपार्जयितुम् असमर्थेन विधिना ब्रह्मणा कथञ्चित् तस्य यशसः प्रतिनिधिः तत्प्रतिरूपकः चीराम्भोनिधिः चीरसमुद्रः कृतः न तु तादृग्यशो लब्धमित्यर्थः सूर्य्यादधिकप्रतापः चीराब्धेः अधिकयशाश्चेत्यर्थः ॥ ४६ ॥

यावदिति । पौलस्त्ययोर्विभीषणवैश्रवणयोर्वास्तुभवन्तौ वेश्मभूर्वास्तुरस्त्रियामित्यमरः । उभे च ते हरितौ उभयहरितौ दक्षिणोत्तरदेशावित्यर्थः उभादुदात्तो नित्यमित्यत्र पृथग्योगकरणादेवायजादेशस्य नित्यत्वे सिद्धे पुनर्नित्यग्रहणं वृत्तिविषये उभशब्दस्थाने उभयशब्दप्रयोगनियमज्ञापनार्थमिति कैयटः । तयोर्यथासंख्यं लोमरेखा लोमराजिः उत्तरीयश्च ते सन्तौ सेतुप्रालेयशैलौ यावत् यावदवस्थिताविति शेषः । किं च प्राचीप्रतीच्यावाशे प्राक्प्रत्यगाशे स्त्रियाः पुंवदित्यादिना पुंवद्भावः । तयोः परिवृढौ प्रभू द्रवरुणौ । प्रभौ परिवृढ इति निपातः । तयोर्नगरयोरारम्भणे यौ स्तम्भौ मूलस्तम्भौ तयोर्मुद्रा इव मुद्रार्थाविवेशो ययोस्तौ सन्ध्ययोरिव इयोः पताकयोः रुचिभिर्भाभिः रचितयोः शिखयोरग्रयोः शोणशोभा ययोः तावुभौ अद्री उदयास्तशैलौ यावत् तत्पर्यन्तम् एतस्य नरपतेः कीर्त्तिश्चरति चतुर्दिगन्तविश्रान्तकीर्त्तिरयमित्यर्थः ॥ ४७ ॥

युद्ध्वा चाभिमुखं रणस्य चरणस्येवादसीयस्य वा
बुद्ध्वान्त: स्वपरान्तरं निपततामुन्मुच्य बाणावली: ।
छिन्नं वावनतोभवन्निजभिय: खिन्नं भरेणाथवा
राज्ञाऽनेन हठाद्विलोठितमभूद्भूमावरीणां शिर: ॥४८॥

न तूणादुद्धारे न गुणघटनेनाश्रुतिशिखं
समाकृष्टौ दृष्टिर्न वियति न लक्ष्ये न च भुवि ।
नृणां पश्यत्यस्य क्वचन विशिखान् किन्तु पतित-
द्विषद्वक्ष:श्वभ्रैरनुमितिरमून् गोचरयति ॥ ४९ ॥

---

युद्ध्वेति । युद्ध्वा युद्धं कृत्वा रणस्य वा अन्तरन्त:करणे स्वेषां परेषां चान्तरं तारतम्यं बुद्ध्वा बाणावलीरुन्मुच्य आयुधानि परित्यज्य अदसीयस्य अमुष्य सम्बन्धिनश्चरणस्यैव च अभिमुखं सम्मुखे निपतताम् आगच्छताम् अरीणां हठाच्छिन्नं अथवा निजभियो भरेण भारेण खिन्नं श्रान्तम् अतएव अवनतोभवत् नम्रीभवत् शिरो मस्तकं अनेन राज्ञा भूमौ विलोठितं परिवर्त्तितमभूत् एतच्छत्रूणां मरणम् एतच्छरणं वा गति-र्नान्येति भाव: ॥ ४८ ॥

नेति । नृणां रणद्रष्टॄणां पुंसां अन्यच्चेति विकल्पान्नामि चेति दीर्घप्रतिषेध: । दृष्टि: अस्य राज्ञो विशिखान् शरान् तूणात् निषङ्गात् उद्धारे उद्धरणकाले न पश्यति । गुणो मौर्वी । मौर्वी गुणोज्येति धनञ्जय: । तेन घटनेन सन्धानेन आश्रुतिशिखम् आकर्णान्तं समाकृष्टौ गुणाकर्षणे वियति आकाशे न लक्ष्ये वेध्ये भुवि एवं क्वचन कुत्रापि न पश्यतीति सर्वत्रानुषङ्ग: । किन्तु पतितानां द्विषतां वक्ष:सु श्वभ्रै: रन्ध्रै: । रन्ध्रं श्वभ्रं वपासुषिरित्यमर: । अनुमितिरानुमानिकज्ञानं अमून् विशि-खान् गोचरयति विषयीकरोतीति वेगातिशयोक्ति: ॥ ४९ ॥

दमस्वसुश्चित्तमवेत्य हासिका जगाद देवीं कियदस्य वक्ष्यसि ।
भण प्रभूते जगति स्थितै गुणैरिहाप्यते सङ्कटवासयातना ॥५०॥
ब्रवीति दासीह किमप्यसङ्गतं ततोऽपि नीचेयमतिप्रगल्भते ।
अहो सभा साधुरितीरिणः क्रुधा न्यषेधदेतत्क्षितिपानुगान्जनः
॥ ५१ ॥
अथान्यमुद्दिश्य नृपं कृपामयी मुखेन तद्दिङ्मुखसम्मुखेन सा ।
*दमस्वसारं वदति स्म देवता गिरामिलाभूवदतिस्मरश्रियम्*
*॥ ५२ ॥*

---

दमस्वसुरिति । हासयतीति हासिका हासयित्री काचित् दमस्वसुश्चित्तमवेत्य बुद्धा देवीं सरस्वतीं जगाद किमिति हे देवि ! अस्य राज्ञः सम्बन्धि कियद्वक्ष्यसि कियत्प्रपञ्चयमीत्यर्थः । किं तु प्रभूते महति जगति स्थितैर्गुणैः इह अस्मिन् राज्ञि सङ्कटवासेन सङ्कीर्णस्थित्या यातना तीव्रवेदना आप्यते अनुभूयते इति भण सर्वगुणाकरम् अपि एनं दमयन्ती न वृणुते इति भावः ॥ ५० ॥

ब्रवीतीति । इह सभायां दासी किङ्करी किमपि असङ्गतं ब्रवीति नीचा तुच्छा इयं दासी । ततो देवीतोऽपि प्रगल्भते उच्छृङ्खलतया ब्रूते अहो आश्चर्यं सभा साधुः आर्येति सोल्लुण्ठोक्तिः । इतीरयन्तीति ईरिणः आक्रोशत एतस्य क्षितिपस्य अनुगान् अनुचरान् जनः तटस्थजनः क्रुधा क्रोधेन न्यषेधत् ॥ ५१ ॥

अथेति । अथ कृपामयी सा गिरां देवता इलाभुवा ऐलेन पुरूरवसा तुल्यं इलाभूवत् तेन तुल्यं क्रियाचेद्वतिः । क्रियात्र स्मरातिक्रमः । अतिस्मरश्रियं अतिक्रान्तमदनला-

विलोचनेन्दीवरवासवासितैः सितैरपाङ्गाध्वगचन्द्रिकाञ्चलैः ।
त्रपामपाकृत्य निभान्निभालय क्षितिक्षितं मालयमालयं रुचः ॥ ५३ ॥

इमं परित्यज्य परं रणादरिः स्वमेव भग्नः शरणं मुधाविशत् ।
न वेत्ति यत्त्रातुमितः कृतस्मयो न दुर्गया शैलभुवाऽपि शक्यते ॥ ५४ ॥

---

*वर्णयम् अन्यं नृपमुद्दिश्य तस्य नृपस्य दिङ्मुखसम्मुखेन तद्दिग्भागाभिमुखेन मुखेन करणेन तेन उपलक्षिता सती दमस्वसारं दमयन्तीं वदतिस्म ॥ ५२ ॥*

विलोचनेति । विलोचने एव इन्दीवरे तयोर्वासेन स्थित्या वासितैः सुरभितैः लब्धोत्कर्षैरित्यर्थः सितैः अवदातैः अपाङ्गः एव अध्वगचन्द्रिकाञ्चलैः कटाक्षमार्गप्रवृत्तेन्दुकान्तिशिखाभिः करणैः रुचः कान्तेः आलयं आकरं मालयं तदाख्यदेशस्य क्षितिक्षितं क्षितीशं राजानं क्षितिं क्षिणोतीति क्षितिक्षित् क्षितीशः क्षिधातोरैश्वर्य्यार्थात् क्विप् । तं त्रपां लज्जाम् अपाकृत्य त्यक्त्वा निभात् कुतश्चित् व्याजात् निभालय विलोकय ॥ ५३ ॥

इममिति । अरिः एतच्छत्रुः रणात् समरात् भग्नः सन् परम् अरिम् उत्कृष्टं वा इमं नृपं परित्यज्य शरणं न प्राप्य मुधा वृथा स्वं स्वकीयं शरणं गृहमेव शरणं रक्षकम् अविशत् प्रविष्टः । शरणस्य द्विरावृत्त्या सम्बन्धः । कथं वृथा, वृथात्वे कथं तत्कारणं तदाह । यत् यस्मात् कृतस्मयः कृताहङ्कारः सोऽरिः शत्रुः दुर्गया दुर्गमया शैलभुवा शैलप्रदेशेन गिरिदुर्गेणापीत्यर्थः । तथा शैलोद्भवया पर्वतकन्यया दुर्गया दुर्गादेव्यापि पार्वत्यापि इतोऽस्माद्राज्ञः त्रातुं न शक्यते । किं पुनः स्वगृहेण

अनेन राज्ञाऽर्थिषु दुर्भगोकृतो भवन् घनध्वानजरत्नमेदुरः ।
तथा विदूराद्रिरदूरतां गमी यथा स गामी तव केलिशैलताम्
॥ ५५ ॥

नम्रप्रत्यर्थिपृथ्वीपतिमुखकमलम्लानताभृङ्गजात-
छायान्तःपातचन्द्रायितचरणनखश्रेणिरैणेयनेत्रे !
हृन्मारिप्राणवातामृतरसलहरीभूरिपानेन पीनं
भूलोकस्यैष भर्त्ता भुजभुजगयुगं सांयुगीनं बिभर्त्ति ॥५६॥

---

अन्येन वा पुरुषेणापीत्यपिशब्दार्थः । इति न वेत्ति प्राणरक्षणा-शङ्कया वैयर्थ्यम् अज्ञानात् प्रवेशः स्वयादज्ञानञ्चेति भावः ॥५४॥

अनेनेति । अनेन राज्ञा अर्थिषु विषये दुर्भगोकृतः तुच्छी-कृतः यथेच्छम् अर्थिभिः उपादीयमानरत्नोऽपि यः अनेन राज्ञा उपेक्षितः इत्यर्थः । तथा घनध्वानजैः नवमेघशब्दोत्थैः रत्नैः मेदुरः पूर्ण एव भवन् अतिव्ययेऽपि अक्षीणरत्न इत्यर्थः । विदू-राद्रिः वैदूर्य्याचलः तथा तेन प्रकारेण अदूरताम् आसन्नतां गमी गमिष्यन् यथा सोऽद्रिः तव केलिशैलतां गामी गमिष्यन् भविष्यति गम्यादय इति गमिगाम्योः साधुत्वम् । नलोकेत्या-दिना षष्ठीप्रतिषेधात् कर्मणि द्वितीया । अस्य राज्ञः नगर्य्याः अतिसान्निध्यात् वहुरत्नयुतः वैदूर्य्याचलः ते क्रीड़ाशैलो भविष्यति इति तात्पर्य्यम् ॥ ५५ ॥

नम्रेति । एण्या इमे ऐणेयम् एण्याश्चर्मादिमेणस्यै णमुभे त्विष्वित्यमरः । एण्या ढक् । तेच ते नेत्रे च ते इव नेत्रे यस्याः तस्याः संबुद्धिः । हे ऐणेयनेत्रे ! हे मृगशावाक्षि! उपमान-पूर्वपद-बहुव्रीहावुत्तरपदलोपः । नम्राणां प्रत्यर्थिपृथ्वीपतीनां मुखान्येव कमलानि तेषु या म्लानता सैव भृङ्गजातं तस्य च्छाया नील-भा तस्या अन्तःपातेन मध्यगतत्वेन चन्द्रायिता चन्द्रवदाच-

अध्याहारः स्मरहरशिरश्चन्द्रशेषस्य शेष-
स्याहेर्भूयःफणसमुचितः काययष्टीनिकायः।
दुग्धाम्भोधेर्मुनिचुलुकनत्रासनाशाभ्युपायः
कायव्यूहः क्व जगति न जागर्त्त्यदःकीर्त्तिपूरः ? ॥५७॥
राज्ञामस्य शतेन किं कलयतो हेतिं शतघ्नीं ? क्षतं
लक्षैर्लक्षभिदो ? दृशैव जयतः पद्मानि पद्मै रलम् ?।

---

रिता कलङ्कसम्पत्तेरीतिभावः सा चरणनखश्रेणिर्यस्य सः भूलोकस्य भर्त्ता एष राजा दृप्तारिप्राणवाताः गर्वितशत्रुप्राणवायवः एव अमृतरसस्य लहर्य्यः ऊर्मयस्तासां भूरिणा भूयसा पानेन पीनं मांसलम् अत एव संयुगे साधु सांयुगीनं भुजभुजगयुग्मं हस्तरूपपन्नगयुगलं बिभर्त्तीति रूपकालङ्कारः। वायुपानेन तथा अमृतपानेन यथा सर्पाः स्थूला जायन्ते तथा अस्य राज्ञः हस्तौ शत्रूणां प्राणवायुपानेन स्थूलौ सञ्जातौ इति भावः ॥ ५६ ॥

अध्याहार इति। स्मरहरशिरसि चन्द्रशेषस्य चन्द्रखण्डस्य अध्याहारः शेषपूरकः शेषस्य अहेः अनन्तोरगस्य भूयसां फणानां समुचितः काययष्टीनां निकायः समूहभूतः इति यावत्। फणसङ्ख्यकैः कायैः भवितव्यमिति भावः। दुग्धाम्भोधेः क्षीराम्भोधेः मुनेः अगस्त्यस्य चुलुकनात् चुलुकग्रहणात् त्रासस्य नाशे अभ्युपाय उपायभूतः कायव्यूहः कायसङ्घातः क्षीराब्धेः प्रतिनिधिरित्यर्थः। अदःकीर्त्तिपूरः अमुष्य यशोराशिः क्व जगति न जागर्त्ति ? त्रैलोक्येऽपि जागर्त्तीत्यर्थः। अत्र कीर्त्तिपूरस्य त्रैलोक्यासम्बन्धेऽपि तत्सम्बन्धोक्तेः तद्रूपातिशयोक्तिः सा च अस्य चन्द्रे शेषाध्याहारत्वादि रूपकोत्थापितेति सङ्करः ॥ ५७ ॥

कर्त्तुं सर्वपरच्छिदः किमपि नो शक्यं परार्द्धेन वा
तत् सङ्ख्यापगमं विनाऽस्ति न गतिः काचिद्दतैतद्द्विषाम् ॥५८॥
वयस्ययाऽऽकूतविदा दमस्वसुः स्मितं वितत्याभिदधेऽथ भारती।
इतः परेषामपि पश्य याचतां भवन्मुखेन स्वनिवेदनत्वराम् ॥५९

---

राज्ञामिति। शतघ्नीं नाम हेतिम् आयुधं शतघ्नी तु चतुः-शल्या लौहकण्टकसूचितेति यादवः। शतं हन्तीति शतघ्नीति च गम्यते अमनुष्यकर्तृके चेति ठक्प्रत्यये ङीप्। शतघ्नीं हेतिं कलयतो धारयतः अस्य नृपतेः राज्ञां शतेन किं ? न किञ्चित्-करमित्यर्थः। लक्षभिदो लक्षभेदिनो लक्षं संख्यादि हन्तुश्च लक्षं शरव्ये संख्यायामिति च विश्वः। राज्ञां लक्षैः कृतम् ? अलम्। कृतम् इति शब्दः अलमित्यर्थेऽव्ययम्। दृशा दृष्ट्यैव पद्मानि अब्जानि संख्याविशेषान्। पद्मं स्यात् पन्नगे व्यूहे निधौ संख्यान्तरेऽम्बुजम्। इति विश्वः। जयतोऽस्य राज्ञः पद्मैः पद्मसंख्याभिः अलम् ? किं बहुना ?। सर्वपरच्छिदः सम-स्तशत्रुच्छिदोऽस्य राज्ञः राज्ञां परार्द्धेन च संख्यया वा परेषाम् अरीणाम् अर्द्धेन किं किमपि कर्त्तुं नोशक्यम्। तत् तस्मात् वत खेदे एतद्द्विषां अस्य शत्रूणां संख्याया अपगमम् *अपगमसंख्यत्वम् असङ्ख्यत्वमिति यावत्। संख्याद् युद्धात् अपग-मम् अपसरणं विना काचिद् गतिर्नास्ति।* संख्या न स्यात् एक-त्वादि युद्धाख्यानविचारयोरिति विश्वः। अत्रैत ...द्विषद्गतिम-त्वस्य संख्यापगमतदपगमयोः उभयोः प्राप्तस्य पूर्वत्वनिषेधस्य उत्तरत्व नियमनात् परिसंख्या। तथा च सूत्रम् एकस्य अने-कप्राप्तावेकत्र नियमनं परिसंख्येति ॥ ५८ ॥

वयस्ययेति। अथ दमस्वसुः आकूतविदाऽभिप्रायज्ञया वय-स्यया सख्या स्मितं वितत्य कृत्वा भारती वाग्देवी अभिहिता

कृताऽत्र देवी वचनाधिकारिणी
त्वमुत्तरं दासि! ददासि का सती?।
इतीरिणस्तन्नृपपारिपार्श्विकान्
स्वभर्त्तुरेव भ्रुकुटिन्यवर्त्तयत्॥ ६०॥

धराधिराजं निजगाद भारती तत्सम्मुखेषद्वलिताङ्गसूचितम्।
दमस्वसारं प्रति सारवत्तरं कुलेन शीलेन च राजसूचितम्॥६१॥

कुतः कृतैवं नवलोकमागतं प्रति प्रतिज्ञाऽनवलोकनाय वा?।
अपीयमेनं मिथिलापुरन्दरं निपीय दृष्टिः शिथिलास्तु ते वरम्
॥ ६२॥

---

किमिति इतोऽस्मात् राज्ञः परेषाम् अन्येषामपि यावतां राज्ञां भवन्मुखेन त्वद्वाचैव स्वनिवेदने स्वयं कथने त्वरां द्रुतकथनत्वं पश्य परान् आलोकयेति च गम्यते॥ ५८॥

कृतेति। हे दासि! अत्र स्वयंवरे देवी वाग्देवी वचने नृपतिवर्णने अधिकारिणी कर्त्री कृता नियुक्ता त्वं का सती उत्तरं ददासि? इति ईरिणः इति ब्रुवाणान् तस्य नृपस्य परिपार्श्वं वर्त्तन्ते इति परिपार्श्विकान् सेवकान् परिमुखं चेति चकारात् ठक्। स्वभर्त्तुः स्वस्वामिन एव भ्रुकुटिः न्यवर्त्तयत् *तेषां स्वामी एव तान् भ्रूभङ्गेन निवारितवान् इत्यर्थः॥ ६०॥*

धरेति। *भारती सरस्वती कुलेन वंशमर्य्यादया शीलेन* सद्वृत्तेन च राजसु मध्ये उचितं परिचितं सारवत्तरं श्रेष्ठं तस्य सम्मुखं यथा तथा ईषद्वलितेन वक्रितेन अङ्गेन वपुषा सूचितं निर्दिष्टं धराधिराजं भूपतिं लक्षीकृत्य दमस्वसारं प्रति निजगाद तस्यै कथयामासेत्यर्थः॥६१॥

कुतइति। हे भैमि! आगतं नवलोकम् अपूर्वजनं प्रति एवमिति हस्तनिर्देशः। अनवलोकनाय वा अनवलोकितुमेव

न पाहि पाहीति यदब्रवीरमुं मदोष्ठ ! तेनैवमभूदिति क्रुधा ।
रणच्छितावस्य विरोधिमूर्द्धभिर्विदश्य दन्तैर्निजमोष्ठमास्यते ॥ ६३॥
भुजेऽपसर्पत्यपि दक्षिणे गुणं सहेषुणाऽऽदाय पुरः प्रसर्पिणे ।
धनुः परीरम्भमिवास्य सम्मदात् महाहवे दित्सति वामबाहवे
॥ ६४ ॥

---

वा कुतः कस्मात् कारणात् प्रतिज्ञा कृता इति ? न युक्तमिति भावः। किन्तु एनं पुरोवर्त्तिनं मिथिलापुरन्दरमपि मिथिलापतिं वा निपीय सम्यक् निरीक्ष्य ते नव इयम् दृष्टिः शिथिला शिथिलादरा अस्तु इति वरं श्रेष्ठम्। वीक्षित्वा उपेक्षणम् अपि अदर्शनात् किञ्चित्प्रियमित्यर्थः ॥ ६२ ॥

*नेति। हे मदोष्ठ ! मदीयाधर ! यत् यस्मात् पाहि पाहि इति अमुं राजानं न अब्रवीः दुरभिमानादिति शेषः।* ओष्ठस्य अधरप्रायत्वेऽपि च गम्यते। तेनैव पाहि पाहीति अवचनेनैव एवमीदृशी मे दशाऽभूदिति हेतोः क्रुधा क्रोधेन रणच्छितौ अस्य विरोधिमूर्द्धभिः शत्रुशिरोभिः निजमोष्ठं विदश्य आस्यते स्थीयते। अस्य राज्ञः शत्रूणां तच्चरणमेव शरणं अन्यथा मरणमेवेति भावः। अत्र शत्रुशिरसां प्रत्यर्थिविषयक्रोधहेतुकस्य ओष्ठदंशनस्योष्ठविषयक्रोधहेतुकत्वोत्प्रेक्षणात् हेतूत्प्रेक्षा व्यञ्जकाप्रयोगाद् गम्या ॥ ६३ ॥

भुजे इति। महाहवे महारणे अस्य राज्ञो धनुः कर्त्तृ दक्षिणे अपसव्ये हस्ते दक्षे कुशले च इषुणा सह गुणं ज्यामादाय अपसर्पति अपसरत्यपि पुरः प्रसर्पिणे पुरोगामिने इह गुणसहायाभावेऽपीति भावः। वामबाहवे वामहस्ताय सम्मदात् सन्तोषात् परीरम्भम् आलिङ्गनं उपसर्गस्य घञ् मनुष्ये बहुलमिति दीर्घः। दित्सतीव दातुमिच्छतीव इत्युत्प्रेक्षणा-

अस्योर्वीरमणस्य पार्वणविधुद्वैराज्यसज्जं यशः
सर्वाङ्गोज्ज्वलशर्वपर्वतसितश्रीगर्वनिर्वासि यत्।
तत्कम्बुप्रतिबिम्बितं किमु ? शरत्पर्जन्यराजिश्रियः
पर्य्यायः किमु ? दुग्धसिन्धुपयसां सर्वानुवादः किमु ? ॥६५॥
निस्त्रिंशत्रुटितारिवारणघटाकुम्भास्थिकूटाऽवट-
स्थानस्थायुकमौक्तिकोत्करकिरः कैरस्य नायं करः।
उद्बीतश्चतुरङ्गसैन्यसमरत्वङ्गत्तुरङ्गक्षुर-
क्षुण्णासु क्षितिषु क्षिपन्निव यशःक्षौणीजबीजव्रजम् ? ॥६६॥

---

दिति भावः। ददातेः सनन्ताल्लट् सनिमीमेत्यादिना इदादेशः अभ्यासलोपः। दक्षिणोऽपि अपकारी न पूज्यते वामोऽपि अवसरे उपकारी पूज्यते इति भावः॥ ६४॥

अस्येति। अस्य उर्वीरमणस्य भूपतेः सम्बन्धि पर्वणि भवः पार्वणः तस्य विधोः राकाचन्द्रस्य द्वैराज्यं तदद्वितीयकस्वामिकं धावल्यम् इति शेषः। द्विराजशब्दाद्बहुव्रीह्यन्ताद् ब्राह्मणादित्वात् ष्यञ् प्रत्ययः। तत्र सज्जं सन्नद्धं चन्द्रद्वितीयमानमित्यर्थः। सर्वाङ्गे उज्ज्वलस्य धवलस्य शर्वपर्वतस्य कैलासस्य सितः सितिमा धावल्यम्। गुणे शुक्लादयः पुंसीत्यमरः। तस्य श्रिया सम्पदा योगर्वस्तं निर्वासयति लुम्पतीति तन्निर्वासि कैलासस्य शुभ्रताया अधिकं यद्यशः तत् कम्बूनां शङ्खानां प्रतिबिम्बितं प्रतिबिम्बं प्रतिच्छाया किमु ? किं वा शरत्-पर्जन्यराजिश्रियः शरन्मेघावलिधावल्यसम्पदः पर्य्यायो रूपान्तरं किमु ? अथ वा दुग्धसिन्धोः क्षीराब्धेः पयसां क्षीराणां सर्वानुवादः ? सर्वस्यापि पुनरुक्तिः किमु ? कृत्स्नं तत् क्षीरमेवेदं किमित्यर्थः। उत्प्रेक्षात्रयस्य संसृष्टिः॥ ६५॥

निस्त्रिंशेति। निर्गताः त्रिंशद्भ्योऽङ्गुलिभ्यः इति निस्त्रिंशः

अर्थिभ्रंशवहुभवत्फलभरव्याजेन कुब्जायितः
मत्यस्मिन्नतिदानभाजि कथमप्यास्तां स कल्पद्रुमः ।
आस्ते निर्व्ययरत्नसम्पदुदयोदग्रः कथं याचक-
श्रेणीवर्जनदुर्यशोनिविडितव्रीड़स्तु रत्नाचलः ? ॥६७॥

---

खड्गः डप्रकरणे संख्यायास्तत्पुरुषस्योपसंख्यानं निस्त्रिंशा-द्यर्थमिति समासान्तो डप्रत्ययः। तेन त्रुटितेषु खण्डितेषु अरिवारणघटाकुम्भेषु शत्रुगजसमूहकुम्भेषु अस्थिकूटानाम् अस्थिसङ्घातानाम् अवटस्थानेषु गर्त्तप्रदेशेषु स्थायुकाः स्थायिनः लषपतेत्यादिना उकञ्प्रत्ययः। तेषां मौक्तिकोत्क-राणां मुक्तासमूहानां किरतीति किरः क्षेपकः इगुपधज्ञेति कः। अस्य नृपस्य अयं करः चत्वार्य्यङ्गानि हस्त्यादीनि येषां तेषां सैन्यानां समरेषु त्वङ्गद्भिः सञ्चरद्भिः तुरङ्गैः क्षुरैः करणैः क्षुण्णासु क्षुष्टासु क्षितिषु यशःक्षोणीजस्य कीर्त्तिवृक्षस्य वीजानां व्रजं *समूहं क्षिपन् गिरन् वपन्निव स्थित इति कैः जनैः न उन्नीतः? न उत्प्रेक्षितः? इत्युत्प्रेक्षा ॥६६॥*

अर्थीति। अस्मिन् राज्ञि अतिदानभाजि अतिदानशौण्डे सति सः प्रसिद्धः कल्पद्रुमः अर्थिनां भ्रंशेन असद्भावेन वहुभवतः व्ययाभावादुपचीयमानस्य फलभरस्य व्याजेन छलेन कुब्जायितः कुब्जीभूतः सन् वस्तुतस्तु लज्जयैवेति भावः। लो॰तादेराकृति-गणत्वात् कर्त्तरि क्तः। कथमपि कष्टेण आस्तां निम्नतया अन्यैरदृष्टत्वात् कथमपि लज्जावरणसम्भवादिति भावः। किन्तु निर्व्ययाणां व्ययरहितानां रत्नसम्पदाम् उदयेन उदग्र उच्छ्रितः तथापि याचकश्रेणीनां कर्त्रीणां वर्जनेन परिहारेण यत् दुर्यशः तेन निविड़ितव्रीड़ो घनीकृतलज्जः रत्नाचलो रोहणाद्रिस्तु कथमास्ते? कथं

सृजामि किं विघ्नमिदन्नृपस्तुता-
वितीङ्गितैःपृच्छति तां सखीजने।
स्मिताय वक्त्रं यदवक्रयद् वधू-
स्तदेव वैमुख्यमलच्चि तन्नृपे ॥ ६८ ॥

दृशाथ निर्दिश्य नरेश्वरान्तरं
मधुस्वरा वक्तुमधीश्वरा गिराम्।
अनूपयामास विदर्भजाश्रुती
निजास्यचन्द्रस्य सुधाभिरुक्तिभिः ॥ ६९ ॥

स कामरूपाधिप एष हा त्वया
न कामरूपाधिक ईच्यतेऽपि यः।

---

निर्हति? उच्चतया स्थित्या सर्वदृष्टत्वात् लज्जासंवरणोपाया-सम्भवादिति भावः। अत्र द्रुमशैलयोः लज्जाऽसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिभेदः ॥ ६७॥

सृजामीति। अथ सखीजने तां भैमीम् इदन्नृपस्य एत-न्नृपस्य स्तुतौ विघ्नं सृजामि किमितीङ्गितैः चेष्टितैः पृच्छति सति वधूः भैमी स्मिताय स्मितं कर्तुं क्रियार्थेत्यादिना चतुर्थी। वक्त्रम् अवक्रयत् वक्रीचकारेति यत् तत् वक्रीकरणमेव तन्नृपे तस्मिन् नृपे वैमुख्यं नैस्पृह्यम् अलच्चि लच्चितम् ॥ ६८ ॥

दृशेति। अथ मधुस्वरा मधुरकण्ठी गिरामधीश्वरा सर-स्वती नरेश्वरान्तरं राजान्तरं वक्तुं वर्णयितुं दृशा विनिर्दिश्य निरूप्य विदर्भजाया वैदर्भ्याः श्रुती श्रोत्रे निजास्यचन्द्रस्य सुधाभिः उक्तिभिः वचनामृतैरित्यर्थः अनूपयामास सरसी-चकार जलप्रायमनूपं स्यादित्यमरः। अनुगता आपो यस्मि-न्ननूपम् ऋक्पूरब्धूरित्यादिना समासान्तः ऊदनोर्देश इत्यू-कारः तस्मात् तत्करोतीत्यादिना ण्यन्ताल्लिट् ॥ ६९ ॥

त्वमस्य सा योग्यतमा हि वल्लभा
सुदुर्लभा यत्प्रतिमल्लभा परा ॥ ७० ॥
अकर्णधाराशुगसम्भृताङ्गतां
गतैररित्रेण विनास्य वैरिभिः ।
विधाय यावत्तरणेर्भिदामहो
निमज्ज्य तीर्णः समरे भवार्णवः ॥ ७१ ॥

---

स इति। एष पुरोवर्त्ती सः प्रसिद्धः कामरूपाधिपः कामरूपदेशाधीश्वरः कामात् कन्दर्पादपि रूपेणाधिको यः त्वय नेष्यते हा वत नैतद्युक्तमिति भावः। कुतः यस्याः तव इति शेषः। प्रतिमल्ला समाना भाः कान्तिर्यस्याः सा यत्प्रतिमल्लभा परा अन्या रमणी सुदुर्लभा अतिदुर्लभा एवम्भूता सा त्वमस्य राज्ञो योग्यतमा अत्यन्तानुरूपा वल्लभा हि दयिता हि। समानसौन्दर्य्यतया समागमयोग्योऽयं त्वया वीच्चितव्य एवेत्यर्थः ॥ ७० ॥

अकर्णेति। कर्ण इव कर्णः प्रतिमुखशल्यं तद्रहितः अकर्णः। न कर्णिभिर्नापि दिग्धैरिति निषेधादिति भावः। अकर्णा धारा यस्य स अकर्णधारः स चासौ आशुगः विशिखः तैः संभृतानि सम्पूरितानि अङ्गानि येषां ते तदङ्गाः तत्तां गतैः अस्य वैरिभिः शत्रुभिः अरिभ्यः त्रायत इत्यरित्रं वर्मादि तेन विना तद्विहाय समरे निमज्ज्य पतित्वा तरणेः सूर्य्यस्य भिदां भेदं विधाय कृत्वा यावत् सूर्य्यमण्डलं भित्त्वैव भवः संसार एवार्णवः समुद्रः तीर्णः। अहो! आश्चर्य्यम्। द्वाविमौ पुरुषौ लोके सूर्य्यमण्डलभेदिनौ परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः इति। कर्णधारः नाविकः तस्य अभावात् आशुगेन पवनेन सम्भृताङ्गतां चाल्यमानदेहत्वं गतैः प्राप्तैः जनैः अरित्रेण

अमुष्य भूलोकभुजो भुजोष्मभि-
स्तपस्तुरेव क्रियतेऽरिवेश्मनि।
प्रपां न तत्रारिवधूस्तपस्विनी
ददातु नेत्रोत्पलवासिभिर्जलैः? ॥ ७२ ॥

एतद्दत्तासिघातक्षवदसृगसुहृद्दीर्घसार्द्रैन्धनेतद्-
दोरुद्दामप्रतापज्वलदनलमिलद्धूमधूमभ्रमाय।
एतद्दिग्जैत्रयात्रासमसमरभरं पश्यतः कस्य नासीत्
एतन्नासीरवाजिव्रजखुरजरजोराजिराजिस्थलीषु? ॥७३॥

---

*केनिपातेन विना तरणेः नौकायाः भिदां भेदं विधाय कृत्वा समुद्रे निमज्य भवार्णवः तीर्णः उत्तीर्णः इति च गम्यते* ॥ ७१ ॥

अमुष्येति। यत् यस्मात् अमुष्य भूलोकभुजः पृथिवीलोकस्थितस्य राज्ञः नतु सूर्य्यवत् आकाशमार्गचारिणः इति तात्पर्य्यम्। भुजोष्मभिः भुजप्रतापैः अरिवेश्मनि शत्रुगृहे तपस्तुः ग्रीष्मर्त्तुरेव क्रियते नित्यसन्तापः क्रियते इत्यर्थः। तत्तस्मात् तत्र अरिवेश्मनि तपस्विनी शोच्या धर्मशीला च अरिवधूर्नेत्रोत्पलयोर्वसन्तीति तद्वासिभिः उत्पलवासनावद्भिश्च जलैः। पीयते अस्यामिति प्रपा पानीयशालिका पाधातोः ङ्विधानम्। तं न ददातीति काकुः। ददातीत्यर्थः। धार्मिका हि ग्रीष्मकाले वासितोदकप्रायाः प्रपाः प्रवर्त्तयन्तीति भावः ॥ ७२ ॥

एतदिति। वाजिस्थलीषु रणभूमिषु एतस्य राज्ञो नासीरे सेनामुखे वाजिव्रजानां खुरैः जातो रजसां राशिः एतस्य राज्ञः दिशो जैत्रासु द्वन्द्वत्वात् षष्ठीसमासनिषेधः। यात्रासु असमम् असदृशं समरभरं समरव्यापारं पश्यतः अवलोकयतः कस्य जनस्य एतेन राज्ञा दत्तैः प्रयुक्तैः असिघातैः खड्गप्रहारैः

क्षीरोदन्वदपः प्रमथ्य मथितादेशेऽमरैर्निर्मिते
स्वाक्रम्यं सृजतस्तदस्य यशसः क्षीरोदसिंहासनम् ।
केषां नाजनि वा जनेन जगताम् एतत्कवित्वामृत-
स्रोतःप्रोतपिपासुकर्णकलसीभाजाऽभिषेकोत्सवः ? ॥७४॥

---

सवदसुजः स्ववद्रक्ताः असुहृदः शत्रुवर्गाः एव वंशाः वेणवः वंशो वर्गे कुले वेणौ इति विश्वः । त एव सार्द्रेन्धनानि सरसानि इन्धनानि यस्य तस्मिन् एतस्य राज्ञो दोष्णोः भुजयोः उद्दामः गम्भीरः प्रताप एव ज्वलदनलः तस्मिन् मिलतां वर्त्तमानानां भूम्नां धूमानां भ्रमाय भ्रान्त्यै न आसीत् ? सर्वस्यापि आसीदेवेत्यर्थः । अत्र रजोराजौ कविसम्मतसादृश्यात् धूमभ्रमोक्त्या भ्रान्तिमान् अलङ्कारः ॥ ७३ ॥

क्षीरेति । अमरैः देवैः क्षीराणाम् उदन्वतः क्षीराब्धेः आपः क्षीरोदन्वदपः ऋक्पूरित्यादिना समासान्तः । ताः प्रमथ्य विलोड्य मथितं मथनोद्भूतो निर्जलो दधिक्षीरविकारः तक्रं स्युदश्विन्मथितं पादाम्ब्वर्धाम्बुनिर्जलमित्यमरः । तद्भूते आदेशे इवादेशे रूपान्तरे निर्मिते सम्पादिते सति रूपान्तरापादानेन क्षीराब्धौ अभावं गमिते सतीत्यर्थः । तत्तथा क्षीरत्वेन प्रसिद्धं उदकं यस्य स क्षीरोदः क्षीराब्धिः उदकस्योदसंज्ञायाम् इत्युदादेशः । तस्य सिंहासनं स्वेनाक्रम्यम् स्वक्रमम् आक्रमणं सृजतः कुर्वतः स्वयम् आक्रमत इत्यर्थः । अस्य राज्ञो यशसः एतस्य राज्ञः सम्बन्धि कवित्वम् एतद्विषयकं कवित्वमित्यर्थः तदेवामृतं तस्य स्रोतसा प्रवाहेण प्रोते पूरिते पिपासूनां पातुमिच्छूनाम् अत्यादरेण शृण्वतां जनानां कर्णाविव कलस्यौ अभिषेचनकुम्भौ भजतीति तद्भाजा केषां वा जगतां लोकानां सर्व्वात्मना जनेन अभिषेकोत्सवः अभिषेकजन्यः आन-

समिति पतिनिपाताकर्णनद्रागदीर्ण-
प्रतिनृपतिमृगाक्षीलक्षवक्षःशिलासु ।
लिखितलिपिरिवोरस्ताडनन्यस्तहस्त-
प्रखरनखरटङ्कैरस्य कीर्त्तिप्रशस्तिः ॥ ७५ ॥

विधाय ताम्बूलपुटीं कराङ्कगां बभाण ताम्बूलकरङ्कवाहिनी ।
दमस्वसुर्भावमवेत्य भारतीं नयाऽनया वक्त्रपरिश्रमं शमम् ॥७६॥

---

न्दोत्सवः न भजनि न जनितः जनेर्ण्यन्तात् कर्मणि लुङ् ।
पूर्वं लोकान्तरस्था अपि कवयः क्षीराब्धियशः सर्वत्र आनन्दकरं कथयन्ति स्म इत्यर्थः । देवैः क्षीरोदसमुद्रे मथिते सति क्षीरोदसमुद्राभावात् अधुना क्षीरोदसमुद्रपदसिंहासनम् अधिकृतवति अस्मिन् राज्ञि एतद्यशःक्षीरोदस्य वर्णयितारः अखिलाः कवय एव अभिषेक्तारः कवित्वमेव जलं श्रोतृजनकर्णा एव कलसाः तत्सम्बन्धाया: सरितः प्रसर्पणात् स्तुतिः एवाभिषेक इति रूपकालङ्कारः ॥ ७४ ॥

समितीति । अस्य राज्ञः कीर्त्तेः प्रशस्तिः प्रशंसा समिति आजौ पतिनिपातस्य भर्त्तृमरणस्य आकर्णने श्रवणेऽपि द्राक् सद्य एव अदीर्णा अभिन्ना अक्षरविन्यासयोग्या इति यावत् । प्रतिनृपतिमृगाक्षीलक्षाणाम् अरिराजस्त्रीलक्षसङ्ख्यकानां वक्षःशिलासु उरस्ताड़नेन वक्षस्ताड़नेन न्यस्तानां प्रसारितानां हस्तानां ये प्रखरनखाः तीक्ष्णनखाः तैरेव टङ्कैः पाषाणभेदकैः टङ्कः पाषाणभेदक इत्यमरः । रचितलिपिरिव कृताक्षरविन्यास इव भाति इति शेषः । दुःखातिरेकात् वक्षःकृतनखालेखनेषु कीर्त्तिप्रशस्तेः अक्षरत्वोत्प्रेक्षणात् उत्प्रेक्षालङ्कारः ॥ ७५ ॥

विधायेति । ताम्बूलकरङ्कवाहिनी ताम्बूलपात्रधारिणी दमस्वसुः दमयन्त्या भावम् अवेत्य ज्ञात्वा ताम्बूलपुटीं ताम्बूल

समुन्मुखीकृत्य बभार भारती रतीशकल्पेऽन्यनृपे निजं भुजम्।
ततस्त्रसद्बालपृषद्विलोचनां शशंस संसज्जनरञ्जनीं जनीम्॥ ७७॥
अयं गुणौघैरनुरज्यदुत्कलो भवन्मुखालोकरसोत्कलोचनः।
स्पृशन्तु रूपामृतवापि! नन्वमुं तवापि दृक्तारतरङ्गभङ्गयः॥७८॥
अनेन सर्वार्थिकृतार्थताकृता कृतार्थिनौ कामगवीसुरद्रुमौ।
मिथः पयःसेचनपल्लवाशने प्रदाय दानव्यसनं समापतुः॥७९॥

---

वीटिकां कराङ्गगां करतलसंस्थां विधाय कृत्वा अनया वीटिकया वक्तृपरिश्रमं बहुक्षणव्यापिकथनजन्यम् आस्यशोषं शमं शान्तिं नय इति भारतीं बभाण। अस्य! नायमस्यै रोचते कृतं वृथा श्रमेणेति तात्पर्यम्॥७६॥

समुन्मुखीति। अथ भारती सरस्वती रतीशकल्पे कामतुल्ये अन्यनृपे नृपान्तरे विषये निजं भुजं समुन्मुखीकृत्य अभिमुखीकृत्य ततो हस्तोद्यमानन्तरं त्रसद्बालपृषद्विलोचनां चकितबालमृगाक्षीं संसज्जनरञ्जनीं सभास्थजनमनोहारिणीं जनीं वधूं दमयन्तीं शशंस उवाचेत्यर्थः॥७७॥

अयमिति। ननु रूपामृतवापि! सौन्दर्य्यसुधारसदीर्घिके! गुणौघैः अनुरज्यन्त उत्कला जनपदा यस्मिन् सोऽयं राजा भवत्याः तव मुखस्य आस्यस्य आलोकरसेन आलोकनकौतुकेन उत्कलोचन उत्सुकाक्षः तवापि दृशोः ताराः स्थूलाः तरङ्गभङ्गयो वीचीविन्यासा अमुम् उत्कलाधिपतिं स्पृशन्तु स्वानुरागिणि अनुराग उचित इति भावः॥ ७८॥

अनेनेति। सर्वार्थिनां सर्वयाचकानां कृतार्थताकृता पूर्णकामत्वकारिणा अनेन राज्ञा कृतार्थिनौ अर्थिरहितौ कृतौ कामानां धात्री गौः कामगवी कामधेनुः गोरतद्धितलुकीति समासान्तष्टच्। सा च सुरद्रुमः कल्पवृक्षश्च तौ मिथोऽन्योन्यं

नृपः कराभ्यामुदतोलयन्निजे नृपानयं यान् पततः पदद्वये ।
तदीयचूडाकुरुविन्दरश्मिभिः स्फुटेयमेतत्करपादरञ्जना ॥८०॥
यत् कस्यामपि भानुमान्न ककुभि स्थेमानमालम्बते
जातं यद्घनकाननैकशरणप्राप्तेन दावाग्निना ।
एवैतद्भुजतेजसा विजितयोस्तावत्तयोरौचिती
धिक् तं वाडवमम्भसि द्विषि भिया येन प्रविष्टं पुनः ॥८१॥

---

*प्रति पयःसेचनं चीरसेकं पल्लवाशनं पल्लवभोजनञ्च प्रदाय दत्त्वा दानव्यसनं दानासक्तिं समाप्नुतः समापयतः। याचकान्तराभावात् अन्योन्यं प्रति सम्प्रदानीयपयःपल्लवमात्रदानेन कथञ्चिद्दानकण्डूत्यपनोदनं कुरुत इति तात्पर्य्यम् ॥ ७८ ॥*

नृप इति। अयं नृपः निजे पदद्वये पततः प्रणमतः यान् नृपान् कराभ्याम् हस्ताभ्याम् उदतोलयत् उत्तोलयामास कृपयेति शेषः, तदीयासु तेषां राज्ञां सम्बन्धिनीषु चूड़ासु किरीटेषु ये कुरुविन्दाः पद्मरागाः कुरुविन्दस्तु मुस्तायां कुल्माष व्रीहिभेदयोः। हिङ्गुले पद्मरागे च इतिविश्वः। तेषां रश्मिभिः एतस्य राज्ञः करपादस्य करयोः पदयोश्च रञ्जना इयं स्फुटा। स्वाभाविककरपादरागे राजकिरीटमाणिक्यमयूखरञ्जनत्वम् उत्तोलनेन व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ८० ॥

यदिति। भानुमान् भास्वान् सूर्य्यः कस्याम् अपि ककुभि कुत्रापि दिशि स्थेमानं स्थिरत्वं स्थिरशब्दस्य दृढ़ादिपाठादिमण-दृढ़ादिभ्यः ष्यञ्चेति चकारादिमनिच्। प्रिय स्थिरेत्यादिना स्थादेशः। न आलम्बते इति यत् तथा दावाग्निना घनं सान्द्रं काननमेव एकशरणं प्राप्तेन द्वितीयाश्रितेत्यादिना समासः।

अमुष्योर्वीभर्तुः प्रसमरचमूसिन्धुरभवैः
अवैमि प्रारब्धे वमथुभिरवश्यायसमये ।
न कम्पन्तामन्तः प्रतिनृपभटाः ? म्लायतु न तद्-
वधूवक्त्राम्भोजं ? भवतु न स तेषां कुदिवसः ? ॥ ८२ ॥
आत्मन्यस्य समुच्चितोन्नतगुणस्याश्लोतरामौचिती
यद्भावाक्षरवर्जनादजनयद्भूयानिरेष द्विषाम् ।

जातम् । इति यत् जातमिति भावे क्तः । एषा एतदुभयमपीत्यर्थः विधेयप्राधान्यात् स्त्रीलिङ्गता । एतस्य राज्ञः भुजतेजसा भुजप्रतापेन विजितयोः तयोर्भानुदावाग्न्योः औचिती तावत् औचित्यमेव । किन्तु तं वाडवं वडवाग्निं धिक् येन वाडवेन पुनः, भिया भयेन द्विषि सहजद्वेषिणि अम्भसि जले प्रविष्टम् । भावे क्तः । स्वशत्रुसंश्रयणात् वरं पलायनमेवेति भावः । अत्र स्वाभाविकस्य सूर्य्यादिपर्य्यटनादेः एतद्भीहेतुकत्वोत्प्रेक्षणात् उत्प्रेक्षा व्यञ्जकाप्रयोगात् गम्या ॥ ८१ ॥

अमुष्येति । अमुष्य उर्वीभर्त्तुः प्रसमराः प्रसारिणः स्रवन्मदकुरच् । तेभ्यः चमूसिन्धुरेभ्यः सेनागजेभ्यो भवैः वमथुभिः करशीकरैः वमथुः करशीकर इत्यमरः । अवश्यायसमये नीहारकाले प्रारब्धे सति प्रतिभटनृपाः शत्रुभूपा अन्तः अन्तःकरणे न कम्पन्तां ? न कम्पेरन् ? इति सर्वत्र काकुः । तत् रिपूनां शत्रुभूपस्त्रीणां वक्त्रमेवाम्भोजं पद्मं न म्लायतु ; म्लायतु एव इत्यर्थः । स राजा तेषां पद्मानां कुदिवसो दुर्दिनश्च न भवतु ? भवेदेवेत्यर्थः । अवैमि जानामि वाक्यार्थः कर्म अत्र करशीकरादौ नीहारादिरूपणाद्रूपकालङ्कारः ॥ ८२ ॥

आत्मनीति । आत्मनि स्वस्मिन्नेव समुच्चितोन्नतगुणस्य समाहृतगुणस्य अस्य राज्ञः औचिती औचित्यमश्लोतराम् अत्यायर्थं

भूयोऽहङ्क्रियते स्म येन च हृदा स्कन्धो न यश्चानमत्
तन्मर्माणि दलं दलं समिदलंकर्मीणबाणव्रजः ॥८३॥
दूरं गौरगुणैरहङ्कृतिमतां जैत्राङ्ककारि चर-
त्येतद्दोर्यशसि प्रयाति कुमुदं विस्मृत्य निद्रां निशि।
धम्मिल्ले तव मल्लिकासुमनसां माला भिया लीयते।
पीयूषस्रवकैतवाद्धृतदरः शीतद्युतिः स्विद्यति ॥८४॥

---

किमेतदित्यादिना अव्ययादाम् प्रत्ययः औचित्यमेवाह। समिति युद्धे अलंकमणे। अलंकर्मणे अलं कर्मिणः इत्यमरः। पर्य्यादियोगात्तादर्थ्ये चतुर्थी। कृतसमासादलं कर्मशब्दादषड़क्षाशितं ग्वलं कर्मेत्यादिना खङ् प्रत्ययः। समिदलंकर्मीणो युद्धपटुः बाणव्रजो यस्य स तथोक्तः अमोघबाण इत्यर्थः अयं भूर्जाया यस्येति भूजानिः भूपतिः जायाया जानिरादेशः। द्विषां सम्बन्धिनां येन च हृदा हृदयेन भूयो भूयिष्ठमहङ्क्रियतेस्म अहङ्करोतेर्भावे लट् लटस्मे इति भूते लट्। यः स्कन्धो भुजशिरो न अनमत् न प्राणमत् गात्रान्तराणां अवयवान्तराणां वर्जनात् वर्जनं *कृत्वेत्यर्थः तेषाम् अनपराधित्वादितिभावः ल्यब्लोपे पञ्चमी। तस्य हृदयस्कन्धस्य मर्माणि दलं दलं दलयित्वा आभीक्ष्ण्ये* णमुल्चेति णमुल्प्रत्ययः। आभीक्ष्ण्ये द्वे भवत इत्युपसंख्यानाद्द्विर्भावः। यत् अजनयत् यद्दण्डनमकरोदित्यर्थः। तदेतद्दण्डमात्रदण्डनं राज्ञ उचितमाश्चर्य्यतरं चेत्यर्थः। अहङ्कारात् अनम्रम् अरिं समूलघातं हन्तायमिति भावः ॥ ८३ ॥

दूरमिति। एतस्य राज्ञो दोष्णो भुजस्य यशसि गौरैर्धावल्यैरेव गुणैः। गुणे शुक्लादयः पुंसीत्यमरः। दूरमत्यन्तम् अहङ्कृतिमतां असाधारणाभिमानवतां कुमुदादिधवलवस्तूनां जैत्राङ्ककारि चरति तदहङ्कारखण्डनाय जित्वरयुद्धकारिणि भ्रमति

एतद्गन्धगजस्तृषाम्भसि भृशं कण्ठान्तमज्जत्तनुः
फेनैः पाण्डुरितः स्वदिक्करिजयक्रीड़ायशःस्पर्द्धिभिः।
दन्तद्वन्द्वजलानुबिम्बनचतुर्दन्तः कराम्भोवमि-
व्याजादभ्रमुवल्लभेन विरहं निर्वापयत्यम्बुधेः ॥८५॥
अथैतदुर्व्वीपतिवर्णनाद्भुतं न्यमीलदास्वादयितुं हृदीव सा।
मधुस्रजा नैषधनामजापिनी स्फुटीभवद्ध्यानपुरःस्फुरन्नला ॥८

---

मति। अङ्क इत्यनुवृत्तौ च चिन्नयुद्धे विभूषणे इति विश्वः। कुमुदं बिभ्यत् भीतं सत् निशि निद्रां स्वापं मुकुलनञ्च न प्रयाति न प्राप्नोति। मल्लिकासुमनसां माला भिया तव धम्मिल्ले संयतकेश-पाशे धम्मिल्लाः संयताः कचा इत्यमरः। लीयते अन्तर्धत्ते। शीतद्युतिः चन्द्रोऽपि छ्तदरः छ्तत्रासः सन् पीयूषस्रवकैतवात् अमृतस्रावव्याजात् स्विद्यति स्वेदं त्यजति निद्रापरिहारादीनि भीतचिह्नानीति भावः। अत्र दोर्यशःप्रभृतीनाम् अहङ्काराद्य-सम्बन्धोक्तेः अतिशयोक्तिभेदः॥ ८४॥

एतदिति। तृषा पिपासया अम्भसि जले भृशं कण्ठान्तं कण्ठपर्य्यन्तं मज्जन्ती तनुः शरीरं यस्य स स्वेन आत्मना दिक्करीणां जयेन या क्रीड़ा तस्याः यशांसि स्पर्द्धन्ते ये ते तत्स्पर्द्धिभिः तत्सदृशैः फेनैः पाण्डुरितः पाण्डुवर्णीकृतः दन्तद्वन्द्वस्य जले अनुबिम्बनेन प्रतिबिम्बेन चतुर्दन्तो दन्तचतु-ष्टयवान् एतस्य राज्ञो गन्धगजो दुष्टगजः करा[illegible]तां वमिर्वमथुः करशीकर इत्यर्थः। प्रच्छर्दिका वमिः स्त्रीस्यादित्यमरः। औणादिक इकारः। तस्या व्याजात् अम्बुधेः समुद्रस्य अभ्रमुवल्लभेन ऐरावतेन विरहं विरहतापं निर्वापयति शमय-तीति सापह्नवोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या॥ ८५॥

अथेति। अथ मधुस्रजा वरणार्थया मधूकमालया तयै-

प्रशंसितुं संसदुपान्तरञ्जनं श्रिया जयन्तं जगतीश्वरं जिनम् ।
गिरः प्रतस्तार पुरावदेव ता दिनान्तसन्ध्यासमयस्य देवता॥८७॥

तथाधिकुर्य्या रुचिरे चिरेप्सिता
यथोत्सुकः सम्प्रति सम्प्रतीच्छति ।
अपाङ्गरङ्गस्थललास्यलम्पटाः
कटाक्षधारास्तव कीकटाधिपः ॥ ८८ ॥

---

वाक्षमालयेति भावः । मधूके तु गुड़पुष्प-मधुद्रुमावित्यमरः । नैषधस्य नलस्य नाम जपतो इति तज्जापिनो अतएव स्फुटीभवता साक्षात्कारपरिणामिध्यानेन पुरोऽग्रे स्फुरन् प्रत्यक्षीभवन् नलो यस्याः सा सती दमयन्ती एतस्य उर्वीपतेः उत्कलेश्वरस्य वर्णनामेव अद्भुतम् आश्चर्य्यरसं हृदि हृदये आस्वादयितुम् अनुभवितुमिव न्यमीलत् निमीलिताक्षी जाता परमार्थतस्तु नलसाक्षात्कारसुखास्वादनायेवेत्यर्थः ॥ ८६ ॥

प्रशंसितुमिति । दिनान्तसन्ध्यासमयस्य सायंसन्ध्याकालस्य अधिदेवता सा सरस्वती सन्ध्याविध्यर्थे सरस्वतीति श्रुतेः । संसदुपान्तरञ्जनं सभास्थानरञ्जकमित्यर्थः श्रिया सौन्दर्य्येण जिनं जिनाख्यं देवं सोऽतिसुन्दर इति प्रसिद्धेः । तं जयन्तं ततोऽपि सुन्दरम् इत्यर्थः जगतीश्वरं पृथिवीपतिं प्रशंसितुं स्तोतुं पुरा पूर्ववदेव ताः प्रसिद्धा गिरः प्रतस्तार प्रपञ्चयामास ॥ ८७ ॥

तथेति । हे रुचिरे ! हे सुन्दरि ! उत्सुकः उत्कण्ठितः कीकटाधिपो मगधेश्वरः चिरेप्सिताः चिरात् प्रभृति आकाङ्क्षिताः अपाङ्गो नेत्रप्रान्तः स एव रङ्गस्थलं तत्र लास्ये नर्त्तने लम्पटा लालसा ।लोलुपो लोलुभो लोभो लोलुम्पो लालसोऽपि

इदंयशांसि द्विषतः सुधारुचः किमङ्कमेतद्द्विषतः किमाननम्।
यशोभिरस्याखिललोकधाविभिर्विभीषिता धावति तामसी मसी ॥ ८९ ॥

इदन्नृपप्रार्थिभिरुज्झितोऽर्थिभिर्मणिप्ररोहेण विवृध्य रोहणः।
कियद्दिनैरम्बरमावरिष्यते मुधा मुनिर्विन्ध्यमरुद्ध भूधरम् ॥९०॥

---

चेति यादवः। तव कटाक्षधाराः कटाक्षपरम्परा यथा सम्प्रति इदानीं सम्प्रतीच्छति प्रतीच्छते तथा अधिकुर्याः प्रसारय कटाक्षदृष्ट्यापि एनं पश्येत्यर्थः ॥ ८८ ॥

इदमिति। अखिललोकान् धावन्ति गच्छन्तीति तद्धाविभिः अस्य कीकटेश्वरस्य यशोभिः विभीषिता वित्रासिता *तमस इयं तामसी मसी तमोमालिन्यं* इदंयशांसि एतत्कीर्तीः द्विषतो विरुन्धानस्य द्विषोऽमित्र इति शतृप्रत्ययः द्विषः शतुर्वा वचनम् इति विकल्पात् षष्ठी प्रतिषेधे कर्मणि द्वितीया। सुधारुचः सुधांशोः अङ्कं किं धावति? गच्छति किं? तथा एतत्कीर्त्तिद्विषतः एतद्द्विषतः एतच्छत्रोः आननञ्च धावति किं? एतद्यशश्चन्द्रिकाभयात् तमः चन्द्रे कलङ्करूपेण एतच्छत्रुमुखञ्च प्रविष्टमित्युत्प्रेक्षते अन्यथा कथमनयोः अजस्रम् ईदृङ्मालिन्यमिति भावः ॥ ८९ ॥

इदमिति। इदन्नृपप्रार्थिभिः इमं नृपमेव प्रार्थयमानैः अर्थिभिः उज्झितो रोहणो रोहणाद्रिः मणि[illegible]हेण नवरत्नाङ्कुरोद्भेदेन विवृध्य अव्ययीभावात् वर्द्धित्वा कियद्दिनैः कतिपयदिनैः एव अम्बरम् आकाशम् आवरिष्यते आच्छादयिष्यति मुनिः अगस्त्यो मुधा वृथैव विन्ध्यं भूधरम् अरुद्ध स्तम्भयामास रोहणस्य तत्कार्य्यकारित्वादिति भावः। अत्र रोहणाद्रेः ईदृग्विधेः असम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ९० ॥

भूशक्रस्य यशांसि विक्रमभरेणोपार्जितानि क्रमात्
एतस्य स्तुमहे महेभदशनस्पर्द्धीनि कैरक्षरैः।
लिम्पद्भिः कृतकं कृतोऽपि रजतं राज्ञां यशःपारदैः
यस्य स्वर्णगिरिः प्रतापदहनैः स्वर्णं पुनर्निर्मितः ॥८१॥
यद्भर्त्तुः कुरुतेऽभिषेणनमयं शक्रो भुवः सा ध्रुवं
दिग्दाहैरिव भस्मभिर्मघवता सृष्टैर्धृतोद्धूलना।
शम्भोर्मा वत साम्ध्यवेलनटनं भाजि व्रतं द्रागिति
क्षोणी नृत्यति मूर्त्तिरष्टवपुषोऽसृग्वृष्टिसन्ध्याधिया ॥ ८२ ॥

---

भूशक्रस्येति। भूशक्रस्य भूदेवेन्द्रस्य एतस्य राज्ञः सम्बन्धीनि विक्रमभरेण पराक्रमातिशयेन क्रमात् उपार्जितानि महेभदशनस्पर्द्धीनि गजेन्द्रदन्तसवर्णानि यशांसि कैः अक्षरैर्वाग्भिः स्तुमहे ? स्तोतुं न शक्यन्त इत्यर्थः। तथाहि लिम्पद्भिः रञ्जद्भिः राज्ञाम् अरिनृपाणां यशोभिरेव पारदैः रसैः। रसः सूतश्च पारद इत्यमरः। कृतकं कृत्रिमं रजतं कृतोऽपि स्वर्णगिरिः हेमाद्रिः अस्य प्रतापदहनैः पुनः स्वर्णं निर्मितः कृतः रसलिप्तसुवर्णं रजतसुवर्णं भवति तत्पुनरग्निदाहात् प्रकृतिस्थं भवतीति प्रसिद्धमेव अत्राप्युक्तरूपासम्बन्धेऽपि सम्बन्धोक्तेरति-शयोक्तिः ॥ ८१ ॥

यदिति। भुवः शक्रो भूदेवेन्द्रोऽयं राजा यस्याःक्षोण्या भर्त्तुः अभिषेणनं सेनया अभियानं कुरुते यत् सेनयाभिगमनम् अरौ तदभिषेणनमित्यमरः। अष्टवपुषोऽष्टमूर्त्तेः शम्भोर्मूर्त्तिरष्टान्यतमा मूर्त्तिः सा क्षोणी असृग्वृष्टौ सति रक्तवर्षणे सति सन्ध्याधिया सन्ध्याभ्रान्त्या सन्ध्यावेलायां भवं सान्ध्यवेलं सन्ध्यावेलाद्यृतुनक्षत्रेभ्योऽण्। तच्च तन्नटनञ्च तदेव व्रतं सन्ध्या-

प्रागेतद्वपुरामुखेन्दु सृजतः स्रष्टुः समग्रत्विषां
कोशः शेषमगादगाधजगतीशिल्पेऽप्यनल्पायितः ।
निःशेषद्युतिमण्डलव्ययवशादीषल्लभैरेष वा
शेषः केशमयः किमन्धतमसस्तोमैस्ततो निर्मितः ॥ ८३ ॥
तत्तद्दिग्जैत्रयात्रोद्धुरतुरगखुराग्रोद्धतैरन्धकारं
निर्वाणारिप्रतापानलजमिव सृजत्येष राजा रजोभिः ।

नर्त्तनव्रतं माभाजि माभञ्जि भजेः कर्मणि लुङ् भञ्जेश्च चिणि विकल्पान्नलोपे उपधावृद्धिरिति मत्वेति शेषः इति करणाद्देव गम्यमानार्थत्वादप्रयोगः । मघवतः इन्द्रेण सृष्टैर्दिग्दाहैः दिग्दाहोद्भवैरिव स्थितैः भस्मभिः धृतोद्धूलना धृतभस्मानुलेपना सती द्राक् सपदि नृत्यति ध्रुवमित्युत्प्रेक्षा । एवमात्यराष्ट्रेषु दिग्दाहपांशुवर्षरक्तवृष्टिभूकम्पादयो जायन्ते तत्र इयम् उत्प्रेक्षा ॥ ८२ ॥

प्रागिति । एतस्य राज्ञो वपुः प्राक् प्रथमम् आमुखेन्दु मुखेन्दुपर्य्यन्तमित्यर्थः आभिमुख्यार्थेऽव्ययीभावः । सृजतः स्रष्टुः सम्बन्धि अगाधजगतीशिल्पेऽपि अखिलजगन्निर्माणेऽनल्पायितोऽनल्पीभूतोऽक्षीण इत्यर्थः लोहितादिराकृतिगणत्वात् क्यङि कर्त्तरि क्तः । प्रत्युत समग्रः त्विषां कोशः तेजोराशिः शेषं रिक्ततां अगात् ततोऽनन्तरं निःशेषद्युतिमण्डलव्ययवशात् तेजोमात्रनाशवशात् ईषल्लभैः सुलभैः तद्धेतुकत्वात्तदुत्पत्तेरिति भावः । ईषद्दुरित्यादिना खल्प्रत्ययः । अन्धयन्तीत्यन्धानि तमांसि अन्धतमांसि गाढान्धकारा अवसमन्धेभ्यस्तमस इति समासान्तः । तेषां स्तोमैरेव केशमयः केशपाशात्मकः शेषो वपुःशेषो निर्मितः किम् ? इत्युत्प्रेक्षालङ्कारः तेन चास्य लोकातिशयतेजो व्यज्यते ॥ ८३ ॥

भूगोलच्छायमायामयगणितविदुवेयकायो भियाभूत्
एतत्कीर्त्तिप्रतानैर्विधुभिरिव युधे राहुराह्वयमानः ॥ ८४ ॥
आस्ते दामोदरीयामियमुदरदरीं याऽधिशय्य त्रिलोकी
सम्मातुं शक्तिमन्ति प्रथिमभरवशादत्र नैतद्यशांसि ।
तामेतां पूरयित्वा निरगुरिव मधुध्वंसिनः पाण्डुपद्म-
छद्मापद्मानि तानि द्विपदशनसनाभीनि नाभीपथेन ॥८५॥

---

तत्तदिति। एष राजा तासां दिशां जैत्रासु यात्रासु उद्धुराणाम् उच्छृङ्खलानां तुरगाणाम् अश्वानां खुराग्रैः उद्धतैः रजोभिः धूलिभिः करणैः निर्वाणात् शान्तात् अरिप्रतापानलात् जातं तज्जमिव शत्रुप्रतापाग्निनिर्वाणजन्यमिव स्थितमित्यर्थः। तदभावहेतुकत्वादन्धकारस्येति भावः। अन्धकारं सृजति रात्रिं कल्पयतीत्यर्थः। एतस्य कीर्त्तिप्रतानैः कीर्त्तिपटलैरेव विधुभिः चन्द्रैः युधे युद्धाय आह्वयमानः सन् राहुः सैंहिकेयः भिया भयेन भूगोलस्य भूविम्बस्य छाया तच्छायं विभाषा सेनासुरेत्यादिना नपुंसकत्वम्। तदेव माया कपटं तन्मयः स चासौ गणितविदुन्नेयो गणितशास्त्रैकवेद्यः कायो यस्य सोऽभूत्। ज्योतिःशास्त्रप्रमाणकं यत् राहोः भूच्छायात्मकत्वं तदेतत्कीर्त्तिचन्द्रभियेत्युत्प्रेक्षा तया च राहुभीषकत्वेन कीर्त्तिचन्द्राणां प्रसिद्धचन्द्रात् आधिक्येन च अलङ्कारः व्यतिरेकः व्यज्यते ॥ ८४ ॥

आस्त इति। या इयं त्रिलोकी दामोदरस्य इमां वैष्णवीम् उदरदरीं कुक्षिकुहरम् अधिशय्य अधिष्ठाय आस्ते तानि प्रसिद्धानि द्विपदशनसनाभीनि गजदन्तसन्निभानि एतद्यशांसि प्रथिमभरवशात् महिमातिशयवशात्तत्र त्रिलोक्यां सम्मातुं वर्त्तितुं न शक्तिमन्ति अशक्तानि ताम् एतां दामोदरदरीं पूर-

अस्यासिर्भुजगः स्वकोशविवराकृष्टः स्फुरत्कृष्णिमा
कम्पोन्मीलदरालकेलिवलनस्तेषां भिये भूभुजाम्।
सङ्ग्रामेषु निजाङ्गुलिमयमहासिद्धौषधीवीरुधः
पर्वास्ये विनिवेश्य जाङ्गुलिकता यैर्नाम नालम्बत ॥८६॥
यः पृष्ठं युधि दर्शयत्यरिभटश्रेणीषु यो वक्रताम्
अस्मिन्नेव बिभर्त्ति यश्च किरति क्रूरध्वनिं निष्ठुरः।

यित्वा मधुध्वंसिनो विष्णोः पाण्डूनि पद्मच्छद्मापन्नानि नाभिपुण्डरीकव्याजापन्नानि सन्ति निरगुरिव बहिः उत्थितानि इव रेणुः। अत्र पद्मच्छद्मना निरगुरिवेति सापह्नवोत्प्रेक्षा मा च त्रिलोक्यां यशसः आधाराधेययोः आनुरूप्यवैलक्षण्यात् विलक्षणालङ्कारस्य इत्यनयोः सङ्करः ॥ ८५ ॥

अस्येति। स्वकोशात् निजपिधानादेव विवरात् विलाद् आकृष्ट उद्धृतः स्फुरत्कृष्णिमा व्यक्तकृष्णवर्णः कम्पेन धूननेन उन्मीलन्ती अराललीला वक्रविलासा यस्य तद्वलनं सङ्गतिः यस्य सः प्रकटकुटिलगतिः इत्यर्थः। अस्य असिः एव भुजगः तेषामेव भूभुजां राज्ञां भिये भीतये भवति इतिशेषः। यैर्नाम यैः नृपतिभिः किल संग्रामेषु युद्धेषु निजाङ्गुलिमयी स्वाङ्गुलीरूपा महती सिद्धा अमोघा ओषधिवीरुत् ओषधिलता तस्याः पर्व ग्रन्थिम् आस्ये मुखे विनिवेश्य निधाय जाङ्गुलिकता विषवैद्यता न आलम्बत। यथा मुखान्तर्गतौषधं गारुडिकं सर्पो न हन्ति तथा उत्तमाङ्गे प्रणि[illegible]ताञ्जलिम् अकुर्वतः शत्रुनृपान् असौ नृपतिः हन्ति इति भावः। ग्रन्थिर्ना पर्व परुषि। विषवैद्यो जाङ्गुलिक इति चामरः। रूपकालङ्कारो व्यज्यत एव ॥ ८६ ॥

यद्मति। यश्च युधि अरिभटयोः श्रेणीषु पृष्ठं पश्चाद्भागं

दोषं तस्य तथाविधस्य भजतश्चापस्य गृह्णन् गुणं
विख्यातः स्फुटमेक एष नृपतिः सीमा गुणग्राहिणाम् ॥८७॥
अस्यारिप्रकरः शरश्च नृपतेः संख्ये पतन्तावुभौ
सीत्कारश्च न सम्मुखौ रचयतः कम्पञ्च न प्राप्नुतः।
तद्युक्तं न पुनर्निवृत्तिरुभयोर्जागर्त्ति यन्मुक्तयोः
एकस्तत्र भिनत्ति मित्रमपरश्चामित्रमित्यद्भुतम् ॥८८॥

---

दर्शयति अस्मिन्नेव विषये वक्रताम् अनार्जवं बिभर्त्ति ताभ्य इत्यर्थः। योऽस्मिन्नेव निष्ठुरः परुषः सन् क्रूरध्वनिं कर्णकठोरशब्दञ्च किरति दोषं भुजं भजत आश्रयतः भुजबाहू प्रवेष्टो दोरित्यमरः। दोषमकार्य्यमाचरतश्च तथाविधस्य तस्य चापस्य गुणं ज्यां जैत्रत्वादिकञ्च गृह्णन् स्वीकुर्वन्नेष नृपतिः कीकटेन्द्रः एक एव गुणग्राहिणां सीमा अवधिः श्रेष्ठ इति यावत्। स्फुटं व्यक्तं विख्यातः। अत्र गुणग्राहिसीमात्वस्य पूर्ववाक्यार्थहेतुकं काव्यलिङ्गम् अलङ्कारः ॥ ८७ ॥

अस्येति। अस्य नृपतेः अरिप्रकरः शत्रुसङ्घः शरश्च उभौ संख्ये युद्धे युगपत् सम्मुखौ पराभिमुखं पतन्तौ सीत्कारञ्च न रचयतः। दुःखनिर्गत्योरभावादिति भावः। कम्पञ्च न प्राप्नुतः। भयदुष्प्रयोगयोरभावादिति भावः। किं च मुक्तयोः एकत्र संसारात् अन्यत्र चापाच्चेति भावः। उभयोः परशरयोः न पुनर्निवृत्तिः जागर्त्ति तद्युक्तं एकत्र आगमात् अपरत्र प्रत्यञ्चाश्चेति भावः। किन्तु तत्र तयोः मध्ये एकोऽरिसङ्घो मित्रं सूर्यं भिनत्ति अपरः शरश्च अमित्रं शत्रुं भिनत्ति इति अद्भुतं अत्र अमित्रं भिनत्तीत्युक्त्या मित्रं न भिनत्तीति च प्रतीयते ईदृशे अभिमुखपतिते तस्य विरोधादद्भुतम्। द्वाविमौ पुरुषौ

धूलीभिर्दिवमन्धयन् बधिरयन्नाशाः खुराणां रवैः
वातं संयति खञ्जयन् जवजयैः स्तोतॄन् गुणैर्मूकयन्।
धर्माराधनसन्नियुक्तजगता राज्ञाऽमुनाधिष्ठितः
सान्द्रोत्फालमिषात् विगायति पदा स्प्रष्टुं तुरङ्गोऽपि गाम्॥८८

एतेनोत्क्रान्तकण्ठप्रतिसुभटनटारब्धनाट्याद्भुतानां
कष्टं दृष्ट्वेव नाभूद् भुवि समरसमालोकिलोकास्पदेऽपि।

---

लोके सूर्यमण्डलभेदिनौ। परिव्राड्योगयुक्तश्च रणे चाभिमुखो हत इति स्मृतेः। मित्रपदेन सूर्य्यमण्डलभेदनस्य वीरपुरुषाश्रयितत्वेन सम्भवात्। अमित्रपदेन च शत्रून् भिनत्तीत्यविरोधात् विरोधाभासोऽलङ्कारः ॥ ८८ ॥

धूलिभिरिति। संयति युद्धे धूलिभिः खुराणां धूलिभिः दिवम् अन्धयन् अन्तरीक्षचारिणां दृष्टीः प्रतिबध्नन्नित्यर्थः। खुराणां रवैः रजोभिराशास्तत्स्थान् प्राणिन इत्यर्थः बधिरयन् बधिरीकुर्वन् जवजयैः अनिलानां वेगजयैः कारणैः इत्यर्थः। वातं वायुं खञ्जयन् पङ्गूकुर्वन् वायोरप्यधिकवेग इत्यर्थः। गुणैर्लक्षणैः स्तोतॄन् मूकयन् मूकीकुर्वन् स्तोतुमशक्य इत्यर्थः। धर्माराधनसन्नियुक्तजगता जगतो धर्मैकसाधनकारिणा अमुना राज्ञा अधिष्ठितः तुरगोऽपि अश्वोऽपि सान्द्रोत्फालमिषात् वेगातिशयत्वात् निरन्तरम् ऊर्द्ध्वचरणनिक्षेपव्याजात् पदा एकेनापि चरणेनेति वेगातिशयोक्तिः। गां भुवं धेनुञ्च स्प्रष्टुं विगायति निन्दति न स्पृशति इति यावत्। गोब्राह्मणानलान् भूमिं गोच्छिष्टं न पदा स्पृशेदिति निषेधादिति भावः ॥८८॥

एतेनेति। समरसमालोकिलोकास्पदे युद्धप्रेक्षकजना-

अखैरस्वैरवेगैः क्षतखुरखुरलीमंक्षुसंक्षुभ्यमान-
क्ष्मापृष्ठोत्तिष्ठदन्धङ्करणरणधुरारेणुधारान्धकारात् ॥१००॥
उन्मीलल्लीलनीलोत्पलदलदलनामोदमेदस्विपूर-
क्रोडक्रीडद्द्विजालीगरुदुदितमरुत् स्फालवाचालवीचिः ।
एतेनाखानि शाखानिवहनवहरित्पर्णपूर्णद्रुमाली-
व्यालीढोपान्तशान्तव्यथपथिकहृशां दत्तरागस्तडागः ॥१०१॥

---

लयेऽपि भुवि भूतले अस्वैरवेगैः अमन्दवेगैः मन्दसच्छन्दयोः स्वैरम् इत्यमरः । अखैः क्षताभिः खुरखुरलीभिः खुरसञ्चारैः मंक्षु शीघ्रार्थे अव्ययम् । सपदि संक्षुभ्यमानात् सञ्चूर्ण्यमानात् क्ष्मापृष्ठात् भूतलात् उत्तिष्ठताम् उत्पतताम् अन्धाः क्रियन्ते एभिरित्यन्धङ्करणाः तेषां आढ्य सुभगेत्यादिना ख्युङ्प्रत्ययः । रणस्य धूरग्रं रणधुरा ऋक्पूरित्यादिना समासान्तः । तस्यां रेणूनां धारा सन्ततिः सैवान्धकारः तस्माद्धेतोः एतेन राज्ञा उत्कृत्तकण्ठैः छिन्नकण्ठैः प्रतिसुभटैः परवीरैः एव नटैर्नर्त्तकैः आरब्धानाम् आचरितानां नाट्याङ्गतानां नाटकप्रबन्धावयवानाम् इत्यर्थः । कष्टं वत द्रष्टैव दर्शक एव न अभूत् न विद्यते स्म ॥ १००॥

उन्मीलदिति । उन्मीलल्लीलानां स्फुरद्विलासानां नीलोत्पलदलानां दलनेन विकासेन य आमोदस्तेन मेदस्विनि पूरक्रोडे जलराशेः उत्सङ्गे क्रीड़न्तीनां द्विजालीनां पक्षिगणानां गरुदुदितस्य पक्षोत्थस्य मरुतः स्फालेन आस्फालनेन वाचालः मुखरः वीचिः तरङ्गः यस्य स शाखानिवहेन नवैर्हरिद्भिः हरितवर्णैः पर्णैः पूर्णाभिः द्रुमालीभिः व्यालीढैः उपान्तैः प्रान्तैः शान्तव्यथानां शमितसन्तापानां पथिकहृशां दत्तरागो

वृद्धो वार्द्धिरसौ तरङ्गवलिभं बिभ्रद्वपुः पाण्डुरं
हंसालीपलितेन यष्टिकलितस्तावद्वयोबंहिमा।
बिभ्रच्चन्द्रिकया च कं विकचया योग्यस्फुरत्सङ्गतं
स्थाने स्नानविधायिधार्मिकशिरोनत्यापि नित्यादृतः ॥१०२॥
तस्मिन्न तेन यूना सह विहर पयःकेलिवेलासु बाले!
नालेनास्तु त्वदच्चिप्रतिफलनभिदा तत्र नीलोत्पलानाम्।

---

जनिताह्लादः तड़ाग एतेन राज्ञा खातानि निखानितम् इति अस्य धर्मकार्य्येषु अनुरागः सूचितः ॥ १०१ ॥

पुनस्तड़ागमेव वर्णयति वृद्ध इति। तरङ्गैर्वलिभं वलियुक्तं तुन्दिवलिवटेर्भ इति मत्वर्थीयो भप्रत्ययः। हंसाल्येव पलितं शुक्लकेशत्वं पलितं जरसा शौक्ल्यं केशादाविव्यमरः। तेन पाण्डुरं वपुर्बिभ्रत् यष्टिः प्रणालीस्तम्भः आलम्बदण्डश्च तया कलितो, [illegible] वयोवंहिमा पक्षिबाहुल्यं बाल्याद्यवस्थाबाहुल्यञ्च यस्य सः प्रियस्थिरेत्यादिना बहुलशब्दस्य बंहादेशः। खगबाल्यादिनोर्वय इत्यमरः। विकचया स्फुटया विलुप्तकेशयाच चन्द्रिकया ज्योत्स्नया शिरोरोगविशेषेण च सह योग्यं स्फुरच्च सङ्गतं सम्बन्धो यस्य तत् एकत्र तत्सदृशमन्यत्र तद्युक्तञ्चेत्यर्थः। कं जलं शिरश्च बिभ्रत् स्नानविधायिनां स्नानाद्यनुष्ठात्रीणां स्त्रीणां धार्मिकाणां धर्मचारिणां धर्मं चरतीति ठक्। शिरसां नत्या नमनेन निमज्जनेन नमस्कारेण च नित्यमादृतः तत्[illegible] अयं वार्द्धिः तड़ागो वृद्धः स्थविरोऽतिपूज्यश्च स्थाने युक्तं, युक्ते द्वे साम्प्रतं स्थाने इत्यमरः। रूपकालङ्कारः ॥ १०२ ॥

तस्मिन्निति। हे बाले! तस्मिन् तड़ागे यूना तेन राज्ञा

तत्पाथोदेवतानां विशतु तव तनुच्छायमेवाधिकारे
तत्फुल्लाम्भोजराज्ये भवतु च भवदीयाननस्याभिषेकः ॥१०३॥
एतत्कीर्त्तिविवर्त्तधौतनिखिलत्रैलोक्यनिर्वासितैः
विश्रान्तिः कलिता कथासु जरतां श्यामैः समग्रैरपि ।
जज्ञे कीर्त्तिमयादहो भयभरैरस्मादकीर्त्त्या पुनः
सा यत्रास्य कथापथेऽपि मलिनच्छाया बबन्ध स्थितिम् ॥१०४॥

---

सह विहर पयःकेलिलीलासु जलक्रीडाकालेषु तत्र तड़ागे नीलोत्पलानां त्वदक्ष्णोः प्रतिफलनात् प्रतिबिम्बनात् भिदा भेदः *षिद्भिदादिभ्योऽङ् । नालेनास्तु नालमेव भेदकमस्त्वित्यर्थः । तव तनोः छाया तनुच्छायं कायकान्तिः विभाषासेनेत्यादिना नपुंसकत्वम् ।* तस्य तड़ागस्य पाथोदेवतानां जलदेवतानामधिकारे आधिपत्ये विशतु आधिपत्यं करोतु इत्यर्थः । भवदीयाननस्य तस्य फुल्लाम्भोजानां राज्ये अभिषेको भवतु त्वन्नेत्रादिकं तदीयोत्पलादिकम् अतिशय्य वर्त्तिष्यत इत्यर्थः ॥ १०३ ॥

एतदिति । एतस्य राज्ञः कीर्त्तिविवर्त्तैः यशोविलासैः धौतात् क्षालितात् निखिलत्रैलोक्यात् निर्वासितैः निष्कासितैः समग्रैः समस्तैरपि श्यामैः श्यामवस्तुभिः जरतां वृद्धानां पुरुषाणामितिशेषः । प्रवयाः स्थविरो वृद्धोजिनो जीर्णो जरन्नय इत्यमरः । जीर्य्यतेरतृन्नित्यतृन्प्रत्ययः । कथासु विश्रान्तिः कलिता । एतद्यशोव्याप्त्या श्यामवस्तुजातं प्राचीनजनानां कथामात्रेषु शेषमासीदित्यर्थः । अकीर्त्त्या अपकीर्त्त्या कीर्त्तिमयात् कीर्त्त्यात्मकात् अस्मान्नृपात् भयभरैः भयराशिभिः लज्जाभिः पुनः जज्ञे पुनः जातं भावे लिट् । अकीर्त्तिः

अथावदद्भीमसुतेङ्गितात् सखी जनैरकीर्त्तिर्यदि वास्य नेष्यते ।
मयापि सा तत् खलु नेष्यते परं सभाश्रवःपूरतमालवल्लिताम्
॥ १०५ ॥

अस्य क्षौणिपतेः परार्द्धपरया लक्षीकृताः सङ्ख्यया
प्रज्ञाचक्षुरवेक्ष्यमाणतिमिरप्रख्याः किलाकीर्त्तयः ।
गीयन्ते स्वरमष्टमं कलयता जातेन बन्ध्योदरात्
मूकानां प्रकरेण कूर्मरमणीदुग्धोदधेः रोधसि ॥१०६।

---

अस्मात् अभैषीदित्यर्थः। कुतः यत् यस्मादस्य सम्बन्धिनी मलिनच्छाया अपकीर्त्तिः कथापथेऽपि वाङ्मार्गेऽपि स्थितिं न बबन्ध। यतोऽकीर्त्तिकथापि न श्रूयते तदीयभयात् इति भावः। क्वापि यशो न गच्छतीत्युत्प्रेक्षते अकीर्त्तिलेशोऽप्यस्य नास्तीत्यर्थः॥ १०४ ॥

अथेति। अथ सखी भीमसुताया इङ्गितात् इङ्गितज्ञानादवदत् किम् इत्याह। अस्य अकीर्त्तिर्जनैर्नेष्यते नाङ्गीक्रियते यदि। इषेः कर्मणि लट्। तत्तर्हि मया सा तदकीर्त्तिः सभायाः श्रवःपूरः कर्णावतंसो या तमालवल्लिता, तां परं भृशं नेष्यते प्रापयिष्यते खलु? नयतेः कर्मणि लृट् अहमस्य अपकीर्त्तिं सभायां श्रावयिष्यामि इत्यर्थः॥ १०५ ॥

स्वयं श्रावयति अस्येति। परार्धश्च परमा संख्या ततोऽपि परया संख्यया लक्षीकृता विषयीकृताः तत्संख्य ता इत्यर्थः। प्रज्ञैव चक्षुर्येषां ते प्रज्ञाचक्षुषो जात्यन्धाः तै[illegible]क्ष्यमाणं तदेकग्राह्यं यत्तिमिरं तत्प्रख्याः तत्सदृशाः अस्य क्षौणीपतेः अकीर्त्तयः अष्टमं स्वरं षड्जादिस्वरात्परं स्वरं कलयता प्रयुञ्जानेन बन्ध्याया अनपत्याया उदरात् जातेन मूकानां प्रकरेण सङ्घेन

तदक्षरैः सस्मितविस्मिताननां
निपीय तामीक्षणभङ्गिभिः सभाम् ।
इहास्य हास्यं किमभून्नवेति तं
विदर्भजा भूपमपि न्यभालयत् ॥१०७॥
नलान्यवीक्षां विदधे दमस्वसुः
कनीनिकागः खलु नीलिमालयः ।
चकार सेवां शुचिरक्तलोचितां
मिलन्नपाङ्गः सविधे तु नैषधे ॥ १०८ ॥

---

कूर्मरमणीनां कूर्मस्त्रीणां दुग्धानि क्षीराणि तेषामुदधेः अब्धेः रोधसि तीरे गीयन्ते किल । तत्कथं जनैर्नाकर्ण्यन्ते इत्यर्थः । एतेनास्य अकीर्त्तिलेशोऽपि खपुष्पकल्प इति स्तुतेः परकाष्ठोक्तेः कि मित्यलमफलत्वादिति भावः । अत्र निन्दया स्तुतिप्रतीतेर्व्याजस्तुतिभेदालङ्कारः ॥ १०६ ॥

*तदिति । विदर्भजा वैदर्भी तस्या अक्षरैर्वाक्यैः सस्मितानि विस्मितानि आननानि यस्यास्तां सभाम् ईक्षणभङ्गिभिर्दृष्टिप्रकरैः निपीय सस्पृहं दृष्ट्वा इह एतद्वाक्ये अस्य कीकटेश्वरस्यापि हास्यं स्मितमभूत् किं वा न अभूत् इति तं भूपम् अपि न्यभालयत् आलोकयत् ॥ १०७ ॥*

नलेति । नीलिम्नो नैल्यस्य मालिन्यस्य च आलयः आश्रयो दमस्वसुः दमयन्त्याः कनीनिका तारका तारकाक्ष्णः कनीनिकेत्यमरः । नलादन्यस्य पुंसः वीक्षां वीक्षणं गुरोश्च हल इति स्त्रियाम् अप्रत्यये टाप् । तदेवागोऽपराधं पापञ्च विदधे आगः पापापराधयोरित्यमरः । मलिनात्मनो हि मलिन

दृशा नलस्य श्रुतिचुम्बिनेषुणा करेऽपि चक्रच्छलनम्रकार्मुकः
स्मरः पराङ्गैरनुकल्प्य धन्वितां जनीमनङ्गः स्वयमार्दयत्तत
॥ १०९ ॥

उत्कण्टका विलसदुज्ज्वलपत्त्रराजि-
रामोदभागनपरागतराऽतिगौरी ।
रुद्रक्रुधस्तदरिकामधिया नले सा
वासार्थितामधृत काञ्चनकेतकीव ॥ ११० ॥

---

कृत्यमेवाचरन्तीति भावः । अपाङ्गस्तु सविधे समीपस्थे नैषधे अलीकनले मिलन् सक्तः शुचिरक्तः श्वेतरक्तो निर्मलानुरक्तं हृदयंच यस्य तस्य भावस्तत्ता तां तदुचितां सेवां रञ्जनं चकार साधवः साध्वेवाचरन्तीति भावः । एतेन कोकटपताङ्गनु-दृष्टिपातादनुरागाभावो नैषधे तद्वैपरीत्यादनुरागश्चेति गम्यते । अतएव कीकटवीक्षणम् अपि सखीवाक्यनिमित्तस्यानुसन्धा-नलौल्यादित्यदोषः ॥ १०८ ॥

तदा नलोऽपि तां सानुरागम् अवैक्षत इत्याह दृशेति । स्वयम् अनङ्गोऽङ्गरहितः स्मरो नलस्य दृशा दृष्ट्यैव श्रुतिचु-म्बिना कर्णान्ताकृष्टेन इषुणा करणेन तथा करे नलस्यैव करे चक्रच्छलेन चक्ररेखाव्याजेन कार्मुकः कोदण्डो यस्य स अतएव पराङ्गैर्नलाङ्गैः परकीयसाधनैरेव धन्वितां धानुष्कत्वम् अनुकल्प्य कामकुम्भवद्धानुष्कत्वेन सम्पाद्य ततो जनीं वधूम् आर्दयत् अपीडयत् ॥ १०९ ॥

उत्कण्टकेति । उत्कण्टका उद्गतपुलका अन्यच उदग्र-सूचिका विलसन्ती उज्ज्वला पत्त्रराजिः पत्त्ररचना अन्यत्र दल-पंक्तिः यस्याः सा आमोदं गन्धं हर्षं च भजतीति आमोद-

नचालीकनले चलेतरमना: साम्यान्मनागप्यभूत्
अप्यग्रे चतुर: स्थितान् चतुरा पातुं दृशा नैषधान् ।
आनन्दाम्बुनिधौ निमज्ज नितरां दूरं गता तत्तला-
लङ्कारीभवनाज्जनाय ददती पातालकन्याभ्रमम् ॥१११॥

---

*भाक् भजोण्विः। आमोदो गन्धहर्षयोरिति विश्वः। तद्भाक् अपगतरागा न भवतीत्यनपरागा उभयत्राप्यतिशयार्थे* तरप्। गौरीम् अतिक्रान्ता गुणैरित्यतिगौरी अत्यन्तगौरवर्णेति चोभयत्रापि योज्यम्। सा दमयन्ती क्रोधात् इति स्वपरित्यागरोषात् तदरिकामधिया रुद्रशत्रुकामभ्रान्त्या आगता काञ्चनसुवर्णा केतकी काञ्चनकेतकीत्युत्प्रेक्षा नले वासार्थितां निवासाकाङ्क्षां अधृत धृतवती धरतेः कर्त्तरि लुङ् स्वरितेत्वात्तङ् ॥ ११० ॥

नदिति। चतुरा प्रवीणापि सा दमयन्ती तत्र तस्मिन् अलीकनले साम्यादात्यन्तिकसत्यनलसादृश्याच्चलेतरमना निश्चलचित्ता सती आनन्दाम्बुनिधौ निमज्ज नितरां दूरं गता तलं प्राप्ता तस्य तलस्य अलङ्कारीभवनात् आभरणीभावात्तत्रावस्थानादित्यर्थः। जनाय आलोकजनाय पातालकन्याभ्रमं दधती सागरतलस्यैव पातालत्वात्तत्रस्था: तल्लोकस्थितिभ्रान्तिं जनयन्तीत्युक्तम्। अग्रे स्थितानपि चतुरो नैषधानिन्द्रादिमायानलान् सत्यनलस्तु तदन्तरपुरोवर्त्तीति भावः। मनागीषत् अपि दृशा पातुं द्रष्टुं नाभूत् नाकल्पत शकधृषेत्यादिना अस्त्यर्थयोगात्तुमुन् निरन्तरध्यानासादितनलसाक्षात्कारानन्दपारवश्यादिषुकारवत् पुरोवर्त्तिनोऽपि पुरन्दरादिमायानलान् अद्राक्षीदित्यर्थः ॥ १११ ॥

सर्वस्वं चेतसस्तां नृपतिरपि दृशे प्रीतिदायं प्रदाय
प्रापत्तद्दृष्टिमिष्टातिथिममरदुरापामपाङ्गोत्तरङ्गाम् ।
आनन्दान्ध्येन वन्ध्यानकृत तदपराकूतपातान् स रत्याः
पत्या पीयूषधाराबलनविरचितेनाशुगेनाशु लीढः ॥११२॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतम्
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
तस्य द्वादश एष मातृचरणाम्भोजालिमौलेर्महा-
काव्येऽयं व्यगलन्नलस्य चरिते सर्गो निसर्गोज्ज्वलः ॥११३॥

---

एवं दमयन्त्या अलीकनलसाक्षात्कारमुक्त्वा नलस्यापि अलीकदमयन्ती साक्षात्कारमाह, सर्वस्वमिति । अथ नृपतिः अलीकनलोऽपि चेतसो हृदयस्य सर्वस्वं सर्वधनभूतां हृदयात् अनपेतामित्यर्थः । तां दमयन्तीं दृशे स्वचक्षुषे प्रीतिदायं पारितोषिकदानं दायो दाने यौतकादिधने वित्ते च पैतृके इति वैजयन्ती । प्रदाय निरन्तरध्यानेन तां साक्षात्कृत्येत्यर्थः । अथ अमरैरपि दुरापां दुष्प्रापाम् अपाङ्गैः उत्तरङ्गां तरङ्गितां तस्याः कतर्ग्री दृष्टिं तद्दृष्टिमेव इष्टातिथिं प्रियबन्धुं प्रापत् लब्धवान् स्वयं च तया कटाक्षेण वीक्षित इत्यर्थः । अथ स नृपो रत्याः पत्या कामेन पीयूषधाराबलनविरचितेन अमृतधारानिष्यन्दलिप्तेन आशुगेन तद्दृष्टिरूपेणेत्यर्थः । आशु लीढः विद्धः सन् आनन्देन आन्ध्यं मोहं पारवश्यमि ति यावत् । तेन तदपरान् प्रथमदृष्टिपातानन्तरभावि[illegible] आकूतेन पातान् साकूतदृष्टिपातान् वन्ध्यान् अफलान् अकृत कृतवान् प्रथमदृष्टिपातजनितानन्दतरदृष्टिपातात् न विवेदेत्यर्थः ॥११२॥

श्रीहर्षमिति । मातृचरणाम्भोजयोः अलिमौलेः भृङ्गायमानमौलेरित्यर्थः ॥ ११३ ॥

# त्रयोदश: सर्ग: ।

—:○:—

कल्पद्रुमान् परिमला इव भृङ्गमालाम्
आत्माश्रयां निखिलनन्दनशाखिवृन्दात् ।
तां राजकादपगमय्य विमानधुर्य्याः
निन्युर्नलाकृतिधरानथ पञ्च वीरान् ॥ १ ॥
साक्षात्कृताखिलजगज्जनताचरित्रा
तत्राधिनाथमधिकृत्य दिवस्तथा सा ।
ऊचे यथा स च शचीपतिरभ्यधायि
प्राकाशि तस्य न च नैषधकायमाया ॥ २ ॥

---

कल्पद्रुमानिति। अथ कीकटविषयानन्तरं विमानधुर्य्याः शिविकावृतः आत्माश्रयां स्वाधारां तां दमयन्तीं परिमलाः सौरभ्यविशेषाः आत्माश्रयां स्वोपजीविनीं भृङ्गमालां निखिलात् नन्दनशाखिवृन्दात् अपगमय्य कल्पद्रुमान् पञ्चामरतरूनिव राजकात् राजसमूहात् गोत्रोचेत्यादिना उकञ्। अपगमय्य अपनीय नलाकृतिधरान् नलरूपधारिणः पञ्च वीरान् निन्युः प्रापयामासुः ॥ १ ॥

साक्षादिति। अथ पञ्चवीरप्रापणानन्तरं साक्षात्कृतम् अखिलजगत्सु जनताया जनसमूहस्य चरित्रं यया सा सरस्वती तत्र पञ्चसु मध्ये दिवोऽधिनाथम् इन्द्रम् अधिकृत्य निर्दिश्य तथा तेन प्रकारेण उवाच यथा शचीपतिः इन्द्रो नाभ्यधायि नाभिहितो भवति तस्य इन्द्रस्य नैषधकायमाया नलरूपकल्पना च न प्राकाशि न प्रकाशिता ॥ २ ॥

ब्रूमः किमस्य वरवर्णिनि! वीरसेनो-
द्भूतिं द्विषद्बलविजित्वरपौरुषस्य।
सेनाचरीभवदिभाननदानवारि-
वासेन यस्य जनितासुरभी रणश्रीः ॥३॥

शुभ्रांशुहारगणहारिपयोधराङ्क-
कुम्भीन्द्रचापखचितद्युमणिप्रभाभिः।
अन्वास्यते समिति चामरवाहिनीभिः
यात्रासु चैष बहुलाभरणार्चिताभिः ॥४॥

---

अथ लोकपालान् नलञ्च प्रत्येकं चतुर्भिः श्लोकैः श्लेषभङ्ग्या वर्णयति ब्रूम इत्यादि। हे वरवर्णिनि! उत्तमाङ्गने उत्तमा वरवर्णिनीत्यमरः। द्विषः शत्रोर्बलस्य बलासुरस्य अन्यत्र द्विषतो बलानां बलोऽसुरे बलं सैन्य इति वैजयन्ती। विजित्वरपौरुषस्य जित्वरपराक्रमस्य अस्य वरस्य इन्द्रनलयोः सामान्यनिर्देशः। वीरसेनानाम् उद्भूतिम् उज्जृम्भणम् अन्यत्र वीरसेनात् नृपात् उद्भूतिम् उत्पत्तिं किं ब्रूमः कथं वर्णयामः। यस्य वीरस्य रणश्रीः सेनाचरीभवतोः सैनिकायमानयोः इभानन-दानवार्य्योः विनायकविष्णोः वासेनाधिष्ठानेन जनिता असुराणां भीर्यया सा। अन्यत्र सेनाचरीभवतां सेनासञ्चारिणां इभानाम् आननेषु दानवारीणां मदाम्बूनां वासेन वासनया सुरभिः जनितसुगन्धिः कृता। द्रुलोपेपूर्वस्य दीर्घोऽणः॥ ३ ॥

शुभ्रेति। एष वीरः शुभ्रांशुः चन्द्रः हरस्येमे हारा गणा प्रमथाः हरस्यापत्यं पुमान् हारी स्कन्दः पयोधराङ्ककुम्भी मेघोत्सङ्गसङ्गी इन्द्रचापः तैः खचिता स्वतेजोभिः संवृता द्युमणिप्रभाः सूरतेजांसि याभिस्ताभिः बहुरनेको लाभः त्रिलो-

भूमोभृत: समिति जिष्णुमपव्यपायं
जानोहि न त्वमघवन्तममुं कथञ्चित्।
गुप्तं घटप्रतिभटस्तनि! बाहुनेत्वं
नालोकसेऽतिशयमद्भुतमेतदीयम्?॥ ५॥

---

कविजयादि: यस्मिन् तेन रणेन अर्चिताभि: पूजिताभि: अर्च: पूजायां कर्मणि क्त:। अमरवाहिनीभि: सुरसेनाभि: समिति रणे च यात्रासु च अन्वास्यते उपास्यते। अन्यत्र तु शुभ्रांशुभि: उज्ज्वलमयूखै: हारगणै: मुक्ताहारजालै: हारिपयोधराङ्कचुम्बिभि: मनोहरकुचोत्सङ्गसङ्गिभि: इन्द्रचापै: तथाभूतभूषणदीप्तिभि: खचिता मिश्रिता: द्युमणे: प्रभा: सूर्यप्रभा याभि: ताभि: बहुलै: आभरणै: अलङ्कारै: अर्चिताभि: पूजिताभि: चामरवाहिनीभि: समिति सभायां यात्रासु देवतामहोत्सवेषु च अन्वास्यते॥ ४॥

भूमीति। हे घटप्रतिभटस्तनि! हे घटप्रमितकुचे! समिति संयति भूमीभृत: पर्वतान् जिष्णुं जेतारं न लोकेत्यादिना षष्ठीप्रतिषेधात्कर्मणि द्वितीया। अविद्यमान: पवे: वज्रस्य अपायो यस्य तम् अपव्यपायं नित्यवज्रहस्तम् अमुं वीरं कथञ्चित् अपि अमघवन्तं मघवत इन्द्रादन्यं नतु जानीहि नैव विद्धि इन्द्रस्येदृक्षिसहस्रं क्व गतं तत्राह। गुप्तं निगूहितमेतदीयं बाहुनेत्वं बहुनेतृत्वं युवादित्वादण् प्रत्यय:। तदेव अद्भुतम् अतिशयं नालोकसे? न पश्यसि?। अन्यत्र तु भूमीभृतो राज्ञ: जेतारं अपव्यपायं अपगतव्यवायम् अमुं वीरं त्वं अघवन्तं पापवन्तं न जानीहि पुण्यश्लोकत्वादस्येति भाव:। गुप्तं रक्षितम् अक्षतम् इत्यर्थ:। बहूनां नेता तस्य भावस्तत्त्वं बाहुनेत्वं

लेखा नितम्बिनि ! बलादिसमृद्धराज्य-
प्राज्योपभोगपिशुना दधते सरागम् ।
एतस्य पाणिचरणं तदनेन पत्या
सार्द्धं शचीव हरिणा मुदमुद्वहस्व ॥ ६ ॥
आकर्ण्य तुल्यमखिलां सुदती लगन्तीम्
आखण्डलेऽपि च नलेऽपि च वाचमेताम् ।
रूपं समानमुभयत्र विगाहमाना
श्रोतान्न निर्णयमवापदसौ न नेत्रात् ॥७॥

---

राजाधिराजत्वं पूर्ववदण् प्रत्ययः सौभ्रात्रादिवदिनिः । हे दमयन्ति ! नालोकसे किमिति काकुः । अन्यत् समानम् ॥५॥

लेखा इति । हे नितम्बिनि ! प्रशस्तनितम्बे ! प्रशंसायामिनिः । बलादीनां बलाद्यसुराणां यानि समृद्धानि राज्यानि तेषां प्राज्योपभोगस्य प्रभूतानुभवस्य पिशुनाः प्रकाशकाः लेखाः रेखाः एतस्य वीरस्य पाणि चरणं च पाणिचरणौ प्राण्यङ्गत्वादेकवद्भावः । सरागं सानुरागं दधते शिरसा धारयन्ति प्रणमन्तीत्यर्थः । धाञः कर्त्तरि लट्तिङि बहुवचनम् । तत्तस्मादनेन हरिणा देवेन्द्रेण पत्या सार्द्धं शचीव मुदम् उद्वहस्व शच्याः सपत्नी भवेत्यर्थः इत्येकोऽर्थः । अन्यस्तु सरागम् आताम्रम् एतस्य वीरस्य पाणिचरणं कर्त्तृ बलादीनि राज्याङ्गानि स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानीत्यमरः । तैः समृद्धस्य राज्यस्य यः प्राज्योपभोगः तस्य पिशुनाः सूचका लेखाः दधते दधधारणे इति धातोर्भौवादिकाल्लट् तङेकवचनम् । तदनेन वीरेण पत्या सार्द्धं हरिणा शचीव मुदम् उद्वहस्व ॥६॥

आकर्ण्येति । सुदती शोभनदन्ता दन्तस्येत्येतल्लक्षणा-

शक्रः किमेष निषधाधिपतिः स वेति ?
दोलायमानमनसं परिभाव्य भैमीम् ।
निर्दिश्य तत्र पवनस्य सखायमस्यां
भूयोऽसृजत् भगवती वचसां स्रजं सा ॥ ८ ॥

एष प्रतापनिधिरुन्नतिमान् सदायं
किं नाम नार्जितमनेन धनञ्जयेन ।
हेम प्रभूतमधिगच्छ शुचेरमुष्मात्
नास्त्येव कस्यचन भास्वररूपसम्पत् ॥९॥

---

*भावाद्यन्तादिसूत्रे* चकाराद्दादेशः सुदत्यादिशब्दानां योगरूढ़त्वात् स्त्रियां संज्ञायामिति विकल्पादिति केचित् । एतदेवाभिप्रेत्य सुदत्यादयः प्रतिविधेया इत्याह वामनः । उगितश्चेति ङीप् । असौ भैमी आखण्डलेऽपिच इन्द्रेऽपि च नलेऽपि च तुल्यम् अविशेषेण लगन्तीं सम्बध्नतीम् एतां वाचम् आकर्ण्य उभयत्र इन्द्रनलयोः समानं निर्विशेषं रूपम् आकारञ्च विगाहमाना अग्रे दर्शं दर्शम् आलोचयन्ती च श्रोत्रात् निर्णयं न अवापत् आप्नोतेः लुङि च्लेरङादेशः । नेत्रात् स्वानुभावाच्च न निश्चेतुं शशाकेत्यर्थः ॥ ७ ॥

शक्रइति । अथ सा भगवती सरस्वती एष वीरः शक्रः किं ? निषधाधिपतिः स्वप्राणनाथो नलोवेति दोलायमानमनसं देव्याः श्लेषोक्त्या आकारसाम्याच्च सन्दिहानचित्तां भैमीं परिभाव्य समवेक्ष्य तत्र पञ्चवीरमध्ये पवनस्य सखायम् अग्निं निर्दिश्य हस्तेन प्रदर्श्य अस्यां भैम्यां विषये भूयो वचसां स्रजं वाक्यपरम्पराम् असृजत् जगादेत्यर्थः ॥ ८ ॥

एष इति । एष वीरः प्रतापस्य उष्णस्य निधिः अयं सदा उन्नतिमान् ऊर्ध्वज्वलनवान् धनानि विचित्रवस्तूनि जयतीति

अत्यर्थहेतिपटुताकवलीभवत्तत्-
तत्पार्थिवाधिकरणप्रभवस्य भूतिः ।
अभ्यङ्गरागजननाय महेश्वरस्य
सञ्जायते रुचिरकर्णि ! तपस्विनोऽपि ॥१०॥

---

धनञ्जयो धनञ्जयसंज्ञकः पार्थः अर्जुनः इति यावत् । वीतिहोत्रो धनञ्जय इत्यमरः । संज्ञायां भृत्वा वृजीत्यादिना खचि मुमागमः । तेन अनेन अग्निना करणेन किं नाम किं किल नार्जितं ? न लब्धं ? सर्वञ्च उपलब्धमेवेत्यर्थः । किं नाम किं नामधेयमिति केचित् । शुचेः शुचिनामकात् अमुष्मात् अग्नेः शुचिरप्पित्तमित्यमरः । प्रभूतम् उद्भूतम् हेम सुवर्णं अधिगच्छ विद्धि । अग्नेरपत्यं सुवर्णम् इति स्मरणादिति भावः । भास्वररूपस्य रूपान्तरप्रकाशकरूपस्य सम्पत् समृद्धिः कस्यचन इतोऽन्यस्य कस्यचिदपि नास्त्येव । अन्यत्र तु एषः प्रतापस्य तेजोविशेषस्य निधिः सः प्रतापः प्रभावश्च यत्तेजः कोशदण्डजमित्यमरः । अयं स वीरः उन्नतिमान् उदयमान् नित्योदित इत्यर्थः । अनेन कर्त्रा जयेन करणेन किं नाम धनं नार्जितं जयेनैव सर्वं सम्पादितम् इत्यर्थः । क्षत्रियस्य विजितम् इति स्मरणादिति भावः । शुचेः पवित्रादमुष्मात् प्रभूतं प्राज्यं हेम सुवर्णम् अधिगच्छ प्राप्नुहि एतत्परिग्रहात् आढ्या भवेत्यर्थः । भाः कान्तिः स्वरः कण्ठध्वनिः रूपं सौन्दर्य्यं तेषां सम्पत् कस्यचन अन्यत् कस्यापि नास्त्येव ९ ॥

अत्यर्थेति । हे रुचिरकर्णि । कमनीयकर्णे ! नासिकोदरेत्यादिना विकल्पादिकारः । अत्यर्थया अतिमात्रया हेतिपटुतया ज्वालापाटवेन कवलीभवद् ग्रासीभवदिन्धनीभवदिति यावत् । तत्तत्पार्थिवं पार्थिवद्रव्यमेवाधिकरणम्

एतन्मुखा विबुधसंसदसावशेषा-
माध्यस्थ्यमस्य यमतोऽपि महेन्द्रतोऽपि।
एनं महस्विनमुपेहि सदारुणोर्वै-
र्येनामुना पितृमुखि! भ्रियते करश्रीः ॥११॥

---

आश्रयस्तदेव प्रभवत्वस्मादिति प्रभवः कारणं तस्य एवम्भूतस्य अग्नेः सम्बन्धिनी भूतिर्भस्मापि तपस्विनो महेश्वरस्याप्यङ्गरागजननाय अनुलेपसम्पादनाय संजायते भवति। अन्यत्र तु अत्यर्थं हेतिपटुता आयुधसामर्थ्यं हेतिर्ज्वालासुरायुधम् इति वैजयन्ती। तस्याः कवलीभवद्भिः तैः तैः पार्थिवैः राजभिः सह अधिको रणः स एव प्रभवो यस्य तस्य अस्य राज्ञः भूतिः विजयलब्धा सम्पत् भूतिर्भूषित भस्मनो सम्पदित्यमरः। महेश्वरस्य महाप्रभोरपि तपस्विनः अपि निवृत्तरागस्यापि जनस्य रागजननाय सन्तोषणाय संजायतेत्यर्थः। अङ्गेत्यामन्त्रणे ॥१०॥

*एतदिति। पितुर्मुखमिव मुखं यस्याः तस्याः सम्बुद्धिः हे पितृमुखि! धन्या पितृमुखी कन्या धन्यो मातृमुखः सुत इति वचनात्।* असौ अशेषा विबुधसंसत् देवसभा एष एव मुखमास्यं यस्याः सा एतन्मुखा अग्निमुखा वै देवा इति श्रुतेः। वह्निमुखः क्रतुभुज इत्यभिधानाच्च। अस्य यमतो महेन्द्रतोऽपि यमस्य महेन्द्रस्य च षष्ठ्यर्थे सार्वविभक्तिकस्तसिल्। माध्यस्थ्यं दक्षिणपूर्वदिक्पतित्वादिति भावः। महस्विनं तेजस्विनं एनम् उपेहि प्राप्नुहि सदारुणा दारुसहितेन सेन्धनेनेत्यर्थः। येनामुना वीरेण उच्चैर्महती करश्रीः अंशुसम्पत् भ्रियते धार्य्यते। अन्यत्र तु विबुधसंसत् विद्वत्सभा एतन्मुखा एतत्प्रधाना एतदेकशरणेत्यर्थः तदा अस्य यमतो यमान्महे-

नैवाल्पमेधसि पटोः रुचिमत्त्वमस्य ?
मध्येसमिन्निवसतो रिपवस्तृणानि ? ।
उत्थानवानिह पराभवितुं तरस्वी
शक्यः पुनर्भवति केन विरोधिनायम् ? ॥१२॥

---

म्राश्चेत्यर्थः पञ्चम्यास्तसिल् । माध्यस्थ्यं समवर्त्तित्वं महस्विनं तेजस्विनम् उत्सववन्तं वा महस्तूत्सव तेजसोरितिसान्तेष्वित्यमरः । सदा सर्वदा येनामुना वीरेण अरुणा आताम्रा करश्रीर्हस्तशोभा वलिहस्तांशवः करा इत्यमरः ध्रियते ॥११॥

नेति । पटोर्दाहशक्तस्य अस्य वीरस्य एधसि इन्धने रुचिमत्त्वम् अभिलाषित्वम् अल्पं नैव किं ? अनल्पम् इत्यर्थः । समिधां काष्ठानां मध्ये मध्येसमित्पारेमध्ये षष्ठ्या वेत्यव्ययीभावः। निवसतोऽस्य तृणानि रिपवः विद्विषः किं ? इति काकुः । काष्ठानि दहतोऽस्य तृणानि न गण्यानीत्यर्थः । उत्थानवानूर्ध्वगतिमान् तरस्वी तेजस्वी वेगवान् अयं पुनरिह सृष्टौ विरोधिना केन अम्बुना कं शिरोऽम्बुनोरित्यमरः । पराभवितुं शक्यो भवति किं ? इति काकुः न शक्य इत्यर्थः । दिव्यस्य अस्य अनिर्वाणत्वाच्चेति भावः । अन्यत्र पटोः अतिप्रगल्भस्य अल्पमेधसि मन्दप्रज्ञे नित्यमसिच् प्रजामेधयोरित्यत्र नित्यग्रहणसामर्थ्यान्मन्दाल्पाभ्याञ्च मेधाया इति वर्त्तमानव[illegible]नाच्च नञादिभ्योऽन्यत्राप्यसिच् प्रत्ययः । रुचिमत्त्वमाद[illegible] नैव । मध्येसमित् युद्धमध्ये । समित्संयति संसदित्यभिधानात् । रिपवः तृणानि तृणप्राया इत्यर्थः । उत्थानवानुत्साहवान् तरस्वी शूरः वेगि शूरौ तरस्विनावित्यमरः । अयं केन विरोधिना पराभवितुं शक्यः ? न केनापीत्यर्थः ॥ १२ ॥

साधारणीं गिरमुषर्बुधनैषधाभ्याम्
एतां निपीय न विशेषमवाप्तवत्याः।
ऊचे नलोऽयमिति तं प्रति चित्तमेकम्
ब्रूते स्म चान्यदनलोऽयमितीदमीयम् ॥१३॥
एतादृशीमथ विलोक्य सरस्वती तां
सन्देहचित्रभयचित्रितचित्तवृत्तिम्।
देवस्य सूनुमरविन्दविकासिरश्मेः
उद्दिश्य दिक्पतिमुदीरयितुं प्रचक्रे ॥१४॥

---

साधारणीमिति। उषसि बुध्यत इत्युषर्बुधोऽग्निः शोचिष्केश उषर्बुध इत्यमरः। अहरादीनां पत्यादिषु इति रेफादेशः। स च नैषधो नलश्च ताभ्यां साधारणीं समानां साधारणादञ् वक्तव्य इति विकल्पादञि टिड्ढाणञ इत्यादिना ङीप्। एतां गिरं निपीय आकर्ण्य विशेषमस्य तदर्थावधारणं नावाप्तवत्या अनाप्तवत्या अस्या भैम्याः तं पुरोवर्त्तिपुरुषं प्रति एकम् इदमीयं चित्तम् दमयन्तीसम्बन्धिनी एका बुद्धिः अयं नल इत्यूचे अन्यदपरं दमयन्तीसम्बन्धि चित्तम् अयमनलोऽग्निरिति ब्रूतेस्म अनलनलकोटिद्वयावलम्बी संशयो न निवृत्त इत्यर्थः ॥ १३ ॥

एतादृशीति। अथ सरस्वती एतादृशीम् ईदृशीं सन्देहः प्रागुक्तचित्रम् आकस्मिकप्रबन्धोत्थम् आश्चर्य्यं नलत्यागानलस्वीकाराच्च भयं एतैर्भावैश्चित्रिता शबलिता चित्तवृत्तिर्यस्यास्तां तां भैमीं विलोक्य अरविन्दानि विकासयन्ति ये रश्मयो यस्य तस्य देवस्य सूरस्य सूनुं दिक्पतिं यममुद्दिश्य उदीरयितुं व्याहर्त्तुं प्रचक्रे प्रस्तावं चक्रे प्रचक्रमे इत्यर्थः ॥ १४ ॥

दण्डं बिभर्त्ययमहो जगतस्ततः स्यात्
कम्पाकुलस्य सकलस्य न पङ्कपातः।
स्वर्वैद्ययोरपि मदव्ययदायिनीभिः
एतस्य रुग्भिरमरः खलु कश्चिदस्ति ॥१५॥
मित्रप्रियोपजननं प्रति हेतुरस्य
संज्ञा श्रुतासुहृदयं न जनस्य कस्य ?।

---

दण्डमिति। अयं दण्डः दुष्टदमनं गदा च आलम्बयष्टिश्च प्रतीयते तं बिभर्त्ति ततो दण्डभयात्कम्पाकुलस्य सकलस्य जगतः पङ्के पापे कर्दमे च पातो न स्यात् अहो अन्यस्य दण्डधारणादन्यस्य अपतनमित्याश्चर्यम्। अन्यत्राप्यस्य यथापराधदण्डनाज्जगतो निष्पापत्वमित्यर्थः। राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः। निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथेति स्मरणात्। तथा गुरुः आत्मवतां शास्ता शास्ता राजा दुरात्मनाम्। इह प्रच्छन्नपापानां शास्ता वैवस्वतो यम इत्युभयोर्दण्डधारणस्मरणाच्चेति भावः। किं च स्वर्वैद्ययोः अश्विनोरपि मदव्ययदायिनीभिःस्वर्वैद्याहङ्कारहारिणीभिःतयोरप्यसाध्याभिरित्यर्थः। एतस्य रुग्भिः दीप्तिभिः एतत्कृतरोगैश्च स्त्री रुग्रुजोश्चोपतापरोगव्याधि गदामया इत्यमरः। रुजे र्धातोः क्विप्। न म्रियत इत्यमरो मृतप्रायो न भवतीत्यमरः। पचाद्यच् कश्चिदित्यादि पूर्ववत् ॥ १५ ॥

मित्रेति। संज्ञा संज्ञादेवीति श्रुता प्रसिद्धा मित्रप्रिया अर्कदयिता अस्य उपजननम् उत्पत्तिं प्रति हेतुर्जननीत्यर्थः। कस्य जनस्य असून् हरतीति असुहृत् प्राणहरो न। सर्वस्याप्यसुहृत् सर्वान्तकत्वादिति भावः। छाया छायाख्या मित्र-

छायेदृगस्य च न कुत्रचिदध्यगामि
तप्तं यमेन नियमेन तपोऽमुनैव ॥१६॥
किञ्च प्रभावनमिताखिलराजतेजा
देवः पिताऽम्बरमणी रमणीयमूर्त्तिः ।
उत्क्रान्तिदा न कमनु प्रतिभाति शक्तिः
कृष्णत्वमस्य च परेषु गदान्नियोक्तुः ॥१७॥

---

प्रिया अस्य ईदृक् ईदृशी जननीति कुत्रचित् क्वापि शास्त्रे नाध्यगामि न अधिगता सूर्यस्य द्वे भार्ये संज्ञा छाया च तत्र संज्ञैव अस्य जननीति श्रूयते न छायेत्यर्थः । यमेन यमाख्येन अमुनैव नियमेन इन्द्रियनिग्रहेण तपस्तप्तम् । अन्यत्र तु अस्य वीरस्य संज्ञा हस्तादिचेष्टाः संज्ञार्कभार्य्या चैतन्यहस्ताद्यैः सूचनाभिधेति वैजयन्ती । मित्राणां सुहृदां मित्रं सुहृदि मित्रोऽर्क इति विश्वः । प्रियोपजननम् इष्टसम्पादनं प्रति हेतुः श्रुता अयं कस्य जनस्य सुहृत् सखा अस्येदृक् छाया कान्तिः छाया सूर्य्यप्रिया कान्तिरित्यमरः । कुत्रचित् क्वापि न अध्यगामि न अधिगता । अमुना यमेन नियमेन च यमनियमाभ्यां तपस्तप्तमेव अन्यथा कथमयं महिमेति भावः ॥ १६ ॥

किञ्चेति । किञ्च प्रभाभिः अवनमितम् अभिभूतं अखिलं राज्ञः चन्द्रस्य तेजो येन सः रमणीयमूर्त्तिरम्बरमणिः सूर्य्यः ढ्रलोपे पूर्वस्य दीर्घोऽणः । अस्य पिता । अस्य शक्तिः कोसू नामायुधं कमनु कं जनं प्रति उत्क्रान्तिदा प्राणोत्क्रमणप्रदा न प्रतिभाति ? प्रतिभात्येव । परेषु अन्येषु गदान् रोगान्नियोक्तुः तृन्नन्तत्वान्न लोकेत्यादिना षष्ठीप्रतिषेधात् कर्मणि द्वितीया । अस्य कृष्णत्वं यमत्वम् । अन्यत्र अम्बरमणिः

एकः प्रभावमयमेति परेतराजौ
तज्जीवितेशधियमत्र विधेहि मुग्धे ! ।
भूतेषु यस्य खलु भूरि यमस्य वश्य-
भावं समाश्रयति दस्रसहोदरस्य ॥१८॥
गुम्फो गिरां शमननैषधयोः समानः
शङ्कामनेकनलदर्शनजातशङ्के ।

---

सूर्य्यः स्वदिकारादीकारः । तद्वद्रमणीयमूर्त्तिः अस्य पिता वीरसेनः प्रभावेण प्रतापेण नमितान्यखिलानि राज्ञां तेजांसि येन सः राजा चत्त्रियचन्द्रयोरिति विश्वः । प्रभुमन्त्रोत्साह-लक्षणं सामर्थ्यं कोसूसामर्थ्ययोः शक्तिरित्यमरः । शेषं पूर्व-वत् परेषु शत्रुषु गदाम् आयुधविशेषं नियोक्तुरस्य कृष्णत्वं विष्णुत्वम् ॥ १७ ॥

एक इति । अयमेकः परेतानां राजौ पंक्तौ परेत *प्रेतसंस्थिताविव्यमरः । प्रभावं प्रभुत्वमेति दस्रसहोदरस्य* अश्विनीभ्रातुर्यस्य यमस्य भूतेषु प्राणिषु मध्ये भूरि अनेकभूतं वशङ्गतो वश्यः तस्य भावं वश्यत्वं समाश्रयति खलु । हे मुग्धे अस्मिन् पुंसि जीवितेशधियं यमबुद्धिं भूतं पिशाचा-दाविति वैजयन्ती । विधेहि । अन्यत्र तु अयमेकः परेषां शत्रूणामितरेषाञ्च आजौ युद्धे प्रभावं सामर्थ्यमेति दस्रसहो-दरस्य अश्विसदृशस्य यस्य अस्य भूतेषु पृथिव्यादिषु मध्ये इयं भूर्वश्यभावमेति । सममन्यत् । क्ष्मादौ जन्तौ च भूतं क्लीबमिति वैजयन्ती । अत्रास्मिन् जीवितेशधियं प्राणेश्वरबुद्धिं विधेहि जीवितेशो यमे कान्ते इति विश्वः ॥ १८ ॥

गुम्फ इति । शमननैषधयोः यमनलयोः समान एष गिरां गुम्फः सन्दर्भः अनेकेषां नलानां दर्शनेन जातशङ्के विदर्भवसुधा- ,

चित्ते विदर्भवसुधाधिपतेः सुतायाः
यन्निर्ममे खलु तदेव पिपेष पिष्टम् ॥१९॥
तत्रापि तत्रभवती भृशसंशयालो-
रालोक्य सा विधिनिषेधनिवृत्तिमस्याः।
पाथःपतिं प्रति धृताभिमुखाङ्गुलीक-
पाणिः क्रमोचितमुपाक्रमताभिधातुम् ॥२०॥
या सर्वतोमुखतया व्यवतिष्ठमाना
यादोरणैर्जयति नैकविदारका या।

---

धिपतेः सुतायाः वैदर्भ्याश्चित्ते शङ्कां निर्ममे इति यत् तत् पिष्टं पिपेष प्रागेव साशङ्के पुनः शङ्कोत्पादने पिष्टपेषण-प्रायम् इत्यर्थः। अत्र साशङ्कशङ्कोत्पादे पिष्टपेषणवाक्यार्थयोः एकत्वासम्भवेन सादृश्याक्षेपात् असम्भवद्वस्तुसम्बन्धो वाक्यार्थ-*वृत्तिनिदर्शनालङ्कारः ॥ १९ ॥*

*तत्रेति। सा भवती तत्रभवती पूज्या इतरेभ्योऽपि* दृश्यते इति त्रल्प्रत्ययः। सा सरस्वती तत्रापि तस्मिन् पुरुषेऽपि भृशं संशयालोः सांशयिक्याः आलुचि शीङ्ग्रहणे आलुच्। अस्या दमयन्त्या विधिनिषेधयोः प्रवृत्तिनिवृत्त्योर्निवृत्तिमभावमौदासीन्यमालोक्य क्रमोचितं क्रमप्राप्तं पाथःपतिमप्पतिं वरुणं प्रति धृता प्रसारिता अभिमुखा अङ्गुल्यो यस्य स धृताभिमुखाङ्गुलीकः नद्यृतश्चेति कप्। स पाणिर्यस्या सा सती अभिधातुम् उपाक्रमत उपक्रान्तवती क्रमेर्लिङ् प्रोपाभ्यां समर्थाभ्याम् इति तङ् ॥ २० ॥

येति। या चमूः सेना: सर्वतोमुखतया व्यवतिष्ठमाना जलत्वेन व्यवस्थितरूपा नैके अनेके नञर्थस्य नशब्दस्य सुप्-

एतस्य भूरितरवारिनिधिश्चमूः सा
यस्याः प्रतीतिविषयः परतो न रोधः ॥२१॥
नासीरसीमनि घनध्वनिरस्य भूयान्
कुम्भीरवान् समकरः सहदानवारिः।
उत्पद्मकाननसखः सुखमातनोति
रत्नैरलङ्करणभावमितैर्न दीनः ॥ २२ ॥

---

मुपेति समासः। नैकविदारकाः रूपकाख्या जलशोषकाः जलार्थं तीरे कृताः कूपप्रतिकृतयो गर्त्ता यस्यां सा यादसां जलजन्तूनां रणैः शब्दैः जयति प्रकाशते यस्याः परतो रोधः परं तीरं सार्वविभक्तिकस्तसिल्। प्रतीतिविषयो न अदृश्यम् इत्यर्थः। एतस्य सा चमूर्भूरितरो महत्तरो वारिनिधिःसमुद्रो भवति। अन्यत्र तु या चमूः सर्वतोमुखतया सार्वपथिकतया व्यवतिष्ठमाना वर्त्तमाना नैकान् अनेकान् विदारयन्तीति नैकविदाराः कर्मण्यण्। ते काया विग्रहा यस्यां सा या चमूर्दोष्णां रणैर्दोरणैः बाहुयुद्धैः जयति भुजबाहू प्रवेष्टो दोरित्यमरः। तस्याः परतः परेभ्यः रोधो नु रोधः प्रतीतिविषयो न सम्भावित इत्यर्थः। सा एतस्य चमूः भूरीणां तरवारीणाम् आयुधविशेषाणां निधिः आकरः ॥ २१ ॥

नासीरेति। नासीरसीमनि पुरोभागे घनध्वनिः महाघोषः मध्ये निस्तरङ्गत्वादिति भावः। भूयान् कुम्भीरवान् नक्रवान् नक्रस्तु कुम्भीर इत्यमरः। समकरो मकरसहितः दानवारिणा विष्णुना सह वर्त्तत इति सदानवारिः वोपसर्जनस्येति सहशब्दस्य सभावविकल्पः। उत्पद्मकाननानाम् उत्पुल्लपद्मवनानां सखा तत्सखः तत्सहित इत्यर्थः। राजाहः सखि-

सस्यन्दनैः प्रवहणैः प्रतिकूलपातं
का वाहिनी न तनुते पुनरस्य नाम ।
तस्या विलासवति ! कर्कशताश्रिता या
ब्रूमः कथं बहुतया सिकता वयं ताः ॥ २३ ॥

---

-ध्यष्टच् । नदीनाम् इनः पतिः नदीनः समुद्रः अलमत्यर्थं करणभावम् उपकरणत्वं इतैः प्राप्तै रत्नैः श्रेष्ठवस्तुभिः रत्नं श्रेष्ठे मणावपीत्यमरः । अस्य सुखम् आतनोति । अन्यत्र तु घनस्य मेघस्येव ध्वनिर्यस्य सः भूयाननेकः समकरः अन्यूनाधिकहस्तः सहदानवारिः समदाम्बुः उत्पद्मकस्य उद्भूतविन्दुजालकस्य आननस्य सखा तत्सखः पद्मकालङ्कृतानन इत्यर्थः । पद्मकं विन्दुजालकमित्यमरः । अलङ्करणभावम् इतैः अलङ्कारत्वं प्राप्तैः रत्नैः मणिभिः न दीनो न शून्यः अस्य वीरस्य कुम्भी करी कुम्भीकलशदन्तिनोरिति वैजयन्ती । सुखं यथा तथा नासीरसीमनि सेनामुखभागे रवान् बृंहणानि आतनोति ॥ २२ ॥

सस्यन्दनैरिति । हे विलासवति ! भैमि ! अस्य सम्बन्धिनी का पुनर्वाहिनी नदी सस्यन्दनैः सप्रस्रवणैः प्रवहद्भिः इत्यर्थः प्रवहणैः प्रवाहैः प्रतिकूलं कूले कूले पातं न तनुते नाम ? सर्वापि सर्वं कूलं पातयतीत्यर्थः । किं च तस्या वाहिन्याः सम्बन्धिन्यः कर्कशतां कार्कश्यं श्रितायाः सिकता बालुकास्ताबहुतया अपरिमितत्वेन वयं कथं ब्रूमः न शक्नुम इत्यर्थः । अन्यत्र तु अन्या का वाहिनी सेना सस्यन्दनैः सरथैः प्रवहणैः कर्णीरथैः कर्णीरथः प्रवहणम् इत्यमरः । प्रतिकूलानां प्रत्यर्थिनां पातं न तनुते किं च कर्काणां श्वेतानां शतैः आश्रिता याः पृष्ठस्थारिः सितः कर्क इत्यमरः । तस्या

शोणं पदप्रणयिनं गुणमस्य पश्य
किं चास्य सेवनपरैव सरस्वती सा ।
एनं भजस्व सुभगं भुवनाधिनाथं
के वा भजन्ति तमिमं कमलाशया न ॥ २४ ॥
शङ्कालतातितिमनेकनलावलम्बां
वाणी न वर्द्धयतु तावदभेदिकेयम् ।

---

वाहिन्याः ताः प्रसिद्धाः असिकताः खड्गिकत्वानि प्रहरण-मिति ठक् । बहुतया कथं ब्रूमः ॥ २३ ॥

शोणमिति । अस्य वीरस्य पदप्रणयिनं पादोपसर्पिणं गुणं विशेषभूतं शोणं शोणाख्यं नदं पश्य किञ्च सा सरस्वती नदी चास्य सेवनपरैव सकलनदीनदनायकोऽयम् इत्यर्थः । ततः कारणाद् भुवनाधिनाथम् अप्पतिं सुभगं एनं भजस्व समाश्रय तमिमं वीरं के न कमलाशया जलाधाराः न भजन्ति सर्वेऽपि भजन्तीत्यर्थः । अथवा के वा जन्तवः कमलाशया जलाकाङ्क्षया न भजन्तीत्यर्थः । अन्यत्र तु पदप्रणयिनं पाद-तलगतशोणं गुणमारूप्यगुणं पश्य भाग्यलक्षणत्वादिति भावः । किन्तु सा सरस्वती वाग्देवता सेवनपरैव लक्ष्मीसरस्वत्योरय-मेकाधिकरणमिति भावः । सरस्वती सरिद्भेदे गोवाग्देवतयो-र्गिरीति विश्वः । ततो भुवनाधिनाथं भूलोकनाथमेनं सुन्दरं भजस्व समाश्रय भुवनं विष्टपे लोके सलिले पवि यद्यपीति विश्वः । के वा जनास्तमिमं कमलाशया लक्ष्म्याकाङ्क्षया न भजन्ति । कमला श्रीः जले पद्म कमलं कमलो मृग इति विश्वः ॥ २४ ॥

शङ्केति । जलेश्वरे वरुणे नले च तुल्यं यथा तथा प्रयुक्तेति

भीमोद्भवां प्रति नले च जलेश्वरे च
तुल्यं तथापि यदवर्द्धयदत्र चित्रम् ॥ २५ ॥
बालां विलोक्य विबुधैरपि मायिभिस्तै-
रच्छद्मितामियमलीकनलीकृतस्वैः ।
आह स्म तां भगवती निषधाधिराजं
निर्दिश्य राजपरिषत्परिवेषभाजम् ॥ २६ ॥

---

शेषः अतएव भीमोद्भवां भैमीं प्रति अभेदिका अन्यतरार्था परिच्छेदिका सेयं वाणी सरस्वती वाक् अनेके पञ्च नलाः नैषधाः दुरच्छेद्यः तृण इति विशेषस्यावलम्बो विषयः आधारश्च यस्याः तां नलः पोटगले राज्ञीति विश्वः। शङ्का एव लताः तासां ततिं परम्परां तावन्न वर्द्धयतु न छिनत्तु वृधुच्छे-दनपूरणयोरिति चौरादिकाल्लोट्। किन्तु तथापि अवर्धयदिति यत् अत्र चित्रं छेदनार्थत्वे या न छेदिका सैवाच्छिनदिति विरोधात् चित्रं वृध्यर्थत्वे त्वविरोध इति विरोधाभासोऽल-ङ्कारः। वृधुवर्धन इति भौवादिकाण्णिच्। नलाख्यतृणमिश्र-लताततिम् एवानेकनलावलम्बिनाम् अयमयं वेति सन्देह-ततिम् इयं वाणी नाच्छिनत् प्रत्युतावर्धयदेवेत्यहो कष्टम् इत्यर्थः ॥ २५ ॥

बालामिति। अथेयं भगवती देवी मायिभिर्मायाविभिः शैद्यादित्वादिनिः। अत एवालोकनलीकृतानि मायानली-कृतानि स्वानि आत्मानो यैस्तैर्देवैर्विबुधैः अच्छद्मिताम् अप्रता-रितां छद्मशब्दात्तत्करोतीति ण्यन्तात्कर्मणि क्तः। बालां भैमीं विलोक्य राजपरिषदि राजसभायां परिवेषभाजं अव-शिष्टतां गतं निषधाधिराजं नलं निर्दिश्य हस्तेन प्रदर्श्य तां भैमीम् आहस्म उवाच ॥ २६ ॥

अत्याजिलब्धविजयप्रसवस्त्वया किं
विज्ञायते रुचिपदं न महीमहेन्द्रः ।
प्रत्यर्थिदानवशताहितचेष्टयासौ
जीमूतवाहनधियं न करोति कस्य ॥ २७ ॥

येनामुना बहुविगाढ़सुरेश्वराध्व-
राज्याभिषेकविकसन्महसा बभूवे ।
आवर्जनं तमनु तेन नु साधु नाम-
ग्राहं मया नलमुदीरितमेवमत्र ॥ २८ ॥

---

अथ नलमेकैकश्लोकेन क्रमादिन्द्राद्येकैकश्लेषेणाह अत्या-जीति । अत्याजिषु महायुद्धेषु लब्धो विजयप्रसवो जयसम्पत्तिः येन सः रुचिपदं त्वदनुरागास्पदं महीमहेन्द्रो भूदेवेन्द्रोऽसौ त्वया किं न विज्ञायते किञ्च अर्थिषु विषये प्रत्यर्थि विभक्त्यर्थेऽव्ययीभावः । दानस्य वशतया तन्निष्ठतया आहितया कृतया चेष्टया वितरणव्यापारेण कस्य जीमूतवाहनो नाम महात्यागी कश्चित् विद्याधरराजः तद्धियं न करोति न जनयति तस्मात् नलोऽयमिति भावः । अन्यत्र तु अत्याजिषु लब्धो विजयः पार्थ एव प्रसवोऽपत्यं येन सः विजयस्तु जये पार्थे इति विश्वः । अरुचिपदं तु अपरागास्पदं मह उत्सवः तद्वान् महीमहेन्द्रः देवेन्द्रः त्वया अत्याजि त्यक्तः किं न विज्ञायते । किं च प्रत्यर्थिनां प्रतिपक्षाणां दानवानां शतेषु आहितया चेष्टया पौरुषेण कस्य जीमूतवाहनः इन्द्रः जीमूतवाहन इन्द्रः तुराषाण्मेघवाहन इत्यमरः । तद्धियं न करोति ॥ २७ ॥

येनेति । येनामुना बहु यथा तथा विगाढ़ः क्षुण्णः सुरेश्वरस्य इन्द्रस्य अध्वा पालनमार्गो यत्र तस्मिन् राज्ये अभिषे-

यच्चण्डिमा रणविधिव्यसनञ्च तत्त्वं
बुद्धाशयाश्रितममुष्य च दक्षिणत्वम्।
सैषा नले सहजरागभरादमुष्मिन्
नात्मानमर्पयितुमर्हसि धर्मराजे ॥ २९ ॥

---

काधिकसन्ति महांस्युत्सवास्तेजांसि यस्य तेन बभूवे भूतम्। अत्र सभायां मया नामग्राहं नाम गृहीत्वा नाम्ना दृशिग्रहे-रिति णमुल् प्रत्ययः। उदीरितम् उक्तं नलं नलनामानं तमितम् अनु ते तवावर्जनमाकर्षणं साधु ननु? युक्तं खलु? येना मुना बहुविगाढ़ा प्रविष्टाः सुरेश्वराः देवताविशेषाः येषु तेषु अध्वरेषु यज्ञेषु आज्यानामभिषेकात् अन्तःसेकात् करणाधिक-सम्महसा वर्द्धमानतेजसा बभूवे अनलम् अग्निं अन्यत् समा-नम्॥ २८ ॥

यदिति। अमुष्य चण्डस्य भावः चण्डिमा रणेषु अतिकोपनत्वं चण्डस्त्वत्यन्तकोपन इत्यमरः। पृथ्वादित्वादिमनिच् प्रत्ययः। रणविधौ युद्धकर्मणि व्यसनमासक्तिश्च व्यसनन्त्व-शुभे सक्ताविति विश्वः। आशयाश्रितं चित्ताश्रितं दक्षिणत्वं दाक्षिण्यञ्चेति यत् तत्सर्वं चण्डिमादिकं नपुंसकमनपुंसके-नेत्यादिना यत्तदिति नपुंसकैक निर्देशः। बुद्धा विचार्य्य सैषा त्वं धर्मप्रधानो राजा तस्मिन् धर्मराजे नले नलनाम्नि अमुष्मिन् वीरे सहजरागभरात् अकृत्रिमरागातिरेकात् आत्मा-नम् अर्पयितुमर्हसि। अन्यत्र तु हे चण्डि! कोपने! गौरादि-त्वात् ङीष्। अमुष्य मारणविधिव्यसनं मारणकर्मासक्तिं आशया दिशा निमित्तेन श्रितं प्राप्तं दक्षिणत्वं दक्षिणदिक्-पतित्वं च बुद्धा धर्मराजे यमे धर्मराजे अनले नलात् अन्यस्मिन् अमुष्मिन् इत्यादिपूर्ववत् ॥ २९ ॥

किं ते तथा मतिरमुष्य यथाशयः स्यात्
त्वत्पाणिपीडनविनिर्मितयेऽनपाशः ।
कान् मानवानवति नो भुवनं चरिष्णुः
नासावमुत्र न रता भवतीति युक्तम् ॥ ३० ॥

श्लोकादिह प्रथमतो हरिणा द्वितीयात्
धूमध्वजेन शमनेन समं तृतीयात् ।
तुर्यात् नलस्य वरुणेन समानभावं
सा जानती पुनरवादि तया विमुग्धा ॥ ३१ ॥

---

किमिति। हे वत्से ! अमुष्य वीरस्य असौ आशयोऽभिप्रायो यथा त्वत्पाणिपीड़नविनिर्मितये त्वत्पाणिग्रहणकरणाय अपगताशो न भवतीत्यनपाशः साभिलाषः स्यात् ते तव मतिरपि तथा किं ? तद्युक्तमित्यर्थः । भुवनं लोकं चरिष्णुः । अत्यन्तसंयोगे द्वितीया। कान् मानवान् मनुष्यान् नो अवति न रक्षति। असौ इयम् अमुत्र अमुष्मिन् नरता नाभिरतिर्युक्ता। ईदृशे पुरुषे सर्वदा त्वया अभिरन्तव्यमित्यर्थः। अन्यत्र अमुष्य सम्बन्धी शयः पाणित्वात् पाणिग्रहणाय तथा न पाशः पाशरहितः त्वत्पाणिग्रहणार्थं यथा न पाश इत्यर्थः तथा ते मतिश्चेद् युक्तमित्यर्थः। अमुष्मिन् न रता नाभिरतिः न युक्ता। ईदृशे पुरुषे सर्वदा त्वया नाभिरन्तव्यमित्यर्थः। अन्यत्र तु मानवान् उत्साहवान् मानश्चित्तसमुन्नतिरित्यमरः। भुवनम् उदकं चरिष्णुः कान् नो अवति अमुष्य नरता नरत्वं न भवति नास्ति युक्तं तस्य देवत्वादिति भावः ॥ ३० ॥

श्लोकादिति। इह श्लोकचतुष्टये प्रथमतः प्रथमात् श्लोकात् हरिणा इन्द्रेण द्वितीयात् धूमध्वजेन अग्निना तृतीयात् शम-

त्वं यार्थिनी किल नलेन शुभाय तस्या:
क्व स्यान्निजार्पणममुत्र चतुष्टये ते ।
इन्द्रानलार्य्यमतनूजपय:पतीनां
प्राप्यैकरूपमिह संसदि दीप्यमाने ॥ ३२ ॥

देव: पतिर्विदुषि ! नैष धराजगत्या
निर्णीयते न किमु न व्रियते भवत्या ।
नायं नल: खलु तवातिमहा नलाभ:
यद्येनमुज्झसि वर: कतर: पुनस्ते ॥ ३३ ॥

---

मेन यमेन समं तुर्य्याच्च तुर्य्याच्चतुरश्च यतो वाच्यच्चरलोपश्चेति साधु:। वरुणेन नलस्य समानभावं सारूप्यं जानतो गच्छतो अतएव विमुग्धा विमूढ़ा सा भैमी तया देव्या पुन: अवादि उदिता वदे: कर्मणि लुङ् ॥ ३१ ॥

अथ पुनर्देवी देवेषु दाक्षिण्यात् दमयन्तीं श्लेषभङ्ग्यन्तरेण क्लिश्नाति श्लोकद्वयेन त्वमित्यादि। या त्वं शुभाय श्रेयसे नलेन निमित्तेन अर्थिनो अर्थवती किल अर्थाच्चासन्निहितादि इनिति इनिप्रत्यय:। तस्यास्त्वत् प्रार्थिन्या: ते तव अमुत्रामुष्मिन् नलसारूप्येण इह स्वयंवर सभायां दीप्यमाने इन्द्रादिचतुष्टये चतुष्टयमध्ये कस्मिन्निजार्पणं शुभाय सन्तोषाय स्यात् तत् ब्रूहीति प्रश्न: एवम् अर्थद्वयेन क्रमात् नलप्राप्ते: नैराश्यं तन्नैस्तद्रूपेण ताम् अतापयदित्यर्थ: ॥ ३२ ॥

देव इति। हे विदुषि ! विदग्धे ! एष धराजगत्या: भूलोकस्य पति: न किन्तु देव: जातावेकवचनम्। एते न भूपा: किन्तु देवा इत्यर्थ:। भवत्या न निर्णीयते किमु ? न व्रियते किमु ? मर्त्त्यवरणात् वरम् अमर्त्त्यवरणमेवेति भाव:। अयं तव सम्बन्धी नलो न खलु ? किं त्वतिमहा अतितेजा:

इन्द्राग्निदक्षिणदिगीश्वरपाशिभिस्तां
वाचं नले तरलिताऽथ समां प्रमाय।
सा सिन्धुवेणिरिव वाडववीतिहोत्रं
लावण्यभूः कमपि भीमसुताऽऽप तापम् ॥३४॥
प्राप्तुं प्रयच्छति न पक्षचतुष्टये तां
तल्लाभशंसिनि न पञ्चमकोटिमात्रे।
श्रद्धां दधे निषधराड्विमतौ मतानाम्
अद्वैततत्त्व इव सत्यतरेऽपि लोकः ॥ ३५ ॥

---

नलाभः नलकल्पः किन्तु नैते नलाः किन्तु नलप्रतिरूपका इत्यर्थः। यद्येनम् उज्झसि एषाम् अन्यतमं नलं वृणोषि चेदित्यर्थः पुनः पश्चात् व्रियत इति वरो वरणीयः वृञोऽप्। वरः कतरः न कश्चिदस्ति सत्यनलस्य दुर्लभत्वादिति भावः। अन्यत्र एष विबुधो भवत्या एष देवो राजा देवः सुरे नरे राज्ञीति विश्वः। नैषधराजगत्या नलमहाराजरूपेण नैषधमहाराजरूपेण पतिर्भर्त्ता सन् न निर्णीयते किमु? न व्रियते किमु? *अयं ना पुरुषो नलः खलु? एनं नलमुज्झसि यदि तव अति महान् अलाभोऽनर्थ, वर इत्यादि स्पष्टम् ॥ ३३ ॥*

इन्द्रेति। अथ लावण्यभूः सौन्दर्य्यभूमिः अन्यत्र लवणरसाश्रयः सा भीमसुता इन्द्रादिभिः समां साधारणीं तां पूर्वोक्तां नले विषये वाचं प्रमाय अनुभूय तरलिता कम्पिता सती सिन्धुवेणिः समुद्रलहरी वाडववीतिहोत्रं वाडवाग्निमिव कमप्यवाच्यं तापम् आप अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जय इत्यमरः॥ ३४ ॥

प्राप्तुमिति। पक्षचतुष्टये इन्द्रादिमायानलव्यक्तिचतुष्टये तां दमयन्तीं प्राप्तिकर्त्रीं प्राप्तिं सत्यनलं प्राप्तुं न प्रयच्छति

कारिष्यते परिभवः कलिना नलस्य
तां द्वापरस्तु सुतनूमदुनोत् पुरस्तात्।
भैमीनलोपयमनं पिशुनो सहेत
न द्वापरः किल कलिश्च युगे जगत्याम्॥ ३६॥

---

न ददाति सत्यनलसारूप्यात्तत्प्राप्तिप्रतिबन्धके सतीत्यर्थः प्रायेणैवं भाषानुसारिणोदीच्याः प्रयुञ्जते यथा स्मर्तुं दिशन्ति न दिवः सुरसुन्दरीभ्य इति भारती। तल्लाभशंसिनि दमयन्तीप्राप्त्याशंसिनि अन्यत्र विद्यालाभाकाङ्क्षिणि सत्यन्तरेऽप्यत्यन्तपारमार्थिकेऽपि पञ्चमकोटिमात्रे पञ्चमनलैकव्यक्तौ द्वितैव द्वैतं भेदः तद्रहितम् अद्वैतम् अद्वितीयं तत्त्वं ब्रह्मतत्वं तत्स्वरूपं तस्मिन्निव मतानां पञ्चनलीगोचरज्ञानानां निषधराट् नल इति विमतौ अयमेव नलोऽयमेवेति विप्रतिपत्तौ सत्यां लोको जिज्ञासुजनः श्रद्धां दधे सद्विलक्षणत्वेन असद्विलक्षणत्वेन सदसत्समुच्चयविलक्षणत्वेन चतुष्टयाध्यात्मिकशरीरेन्द्रियाद्यसत्प्रपञ्चसंवलनान्नित्यापरोक्षसत्यब्रह्मतत्व इवासत्यनलचतुष्टये सन्निधानात् सत्यनले पञ्चमे प्रतीयमानेऽपि सत्योऽयमिति जनो न विश्वासीत्यर्थः। उपमा॥ ३५॥

अथ भैम्याः सन्देहदुःखं महदभूदित्याह कारिष्यत इति। कलिना नलस्य कलियुगे परिभवः कारिष्यते करिष्यते करोतेः कर्मणि लृट् स्यसिच् युटित्यादिना विकल्पाच्चिण्वदिटि वृद्धिः। द्वापरः संशयो द्वापरयुगञ्च द्वापरौ युगसंशयावित्यमरः। स तु तां नलप्रियां सुतनूं दमयन्तीं पुरस्तात् अद्यैव अदुनोत् पर्य्यतापयत् तथा हि जगत्यां लोके पिशुनौ दुर्जनौ विष्वग्लो जगती लोकः पिशुनो दुर्जनः खल इति चामरः। स प्रसिद्धो द्वापरः

उत्कण्ठयन् पृथगिमां युगपन्नलेषु
प्रत्येकमेषु परिमोहयमाणवाणः
जानीमहे निजशिलीमुखशीलिसङ्ख्या-
साफल्यमाप स तदा यदि पञ्चबाणः ॥३७॥

---

कलियुगे कालविशेषे भैमीनलयोः उपयमनम् उद्वाहं न सहेते किल ? किलेति खल्वर्थे अत्र पूर्वार्धे द्वापर इति वाच्यप्रतीयमानयोरभेदाध्यवसायेन द्वापरस्य स्थानान्तरकलिव्यापारात् प्राक् स्वयं दमयन्तीसन्तापकत्वोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या उत्तरार्द्धे तु तदुपयमनासहिष्णुत्वलक्षणकारणेन तत्समर्थनात्कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यास इत्यनयोः अङ्गाङ्गिभावेन सङ्करः ॥ ३६ ॥

उत्कण्ठयन्निति। स पञ्चवाणः पञ्चवाणत्वेन सः प्रसिद्धः कामो नलेषु पञ्चस्वपि इति शेषः पृथग्गतैः इमां दमयन्तीं युगपदुत्कण्ठयन् उत्सुकयन् तथा एषु नलेषु पञ्चसु प्रत्येकम् एकैकस्मिन् परिमोहयमाणाः प्रत्येकमेतान् संमोहयन्त इत्यर्थः कर्मण्यभिकरणविवक्षया सप्तमी। तस्मिन् प्रजज्ञुरितिवत् अणावकर्मकाच्चित्तवत् कर्तृकत्वेऽपि न पादम् इत्यादिना परस्मैपदनिषेधादात्मनेपदं कृत्ये चणेर्विभाषेति णत्वम्। यस्य स सन् निजशिलीमुखाम् शीलयतीति तच्छीलिन्याः तत्समवायिन्याः संख्यायाः साफल्यमाप यदि तदा जानीमहे साध्वीति मन्यामहे इत्यर्थः अत्रोत्कण्ठासंमोहनपदार्थयोर्विशेषणगत्या साफल्यप्राप्तिहेतुकं काव्यलिङ्गं तच्च साफल्यं यदिशब्दात् सम्भावनामात्रेणोक्तमित्युत्प्रेक्षा काव्यलिङ्गोत्थेति सङ्करः ॥ ३७ ॥

देवानियं निषधराजरुचस्त्यजन्ती
रूपादरज्यत नले न विदर्भसुभ्रूः ।
जन्मान्तराधिगतकर्मविपाकजन्मे-
वोन्मीलति क्व चन कस्यचनानुरागः ॥३८॥

क्व प्राप्यते स पतगः परिपृच्छ्यते यः
प्रत्येमि तस्य हि पुरेव नलं गिरेति ।
सस्मार सस्मरमतिः प्रति नैषधीयं
तन्नामरालयमरालमरालकेशी ॥ ३९ ॥

---

देवानिति । इयं विदर्भसुभ्रूः वैदर्भी निषधराजस्य नलस्येव रुक् सौन्दर्य्यं येषां तान् देवान् त्यजन्ती नले रूपात् सौन्दर्य्यात् न अरज्यत न रक्ता । रञ्जे दैवादिकात् कर्त्तरि लुङि तङ् । किन्तु जन्मान्तरे अधिगतस्य कर्मणो विपाकात् परिणामाज्जन्म यस्य स एव सवर्ण्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपद इति वामनः । अनुरागः कस्यचन कस्यचिज्जनस्य क्व च न कुत्रचिज्जने उन्मीलति उद्भवति रूपसाम्येऽपि देवपरिहारेण नले एवानुरागो अस्याः कर्मायत्तो न रूपायत्तः अन्यथा किमर्थं यथार्थनलान्वेषणमित्युत्प्रेक्षा एतेनास्या दृढ़व्रतत्वम् उक्तम् इति ज्ञेयम् ॥ ३८ ॥

अथास्याश्चिन्तासञ्चारिणीमाह क्वेति । सस्मरमतिः समदनचित्ता अरालकेशी कुटिलकेशी भैमी स्वाङ्गाच्चोपसर्जनादसंयोगोपधादिति विकल्पादीकारः । स महोपकारी पतगो हंसः क्व प्राप्यते ? किमर्थं यो हंसः परिपृच्छ्यते नलम् इति शेषः । प्रश्नफलमाह पुरेव पूर्वमिव तस्य गिरा नलं प्रत्येमि विश्वसिमि च इति प्रियस्य दूतभूतं अमरालयमरालं स्वर्लोक-

एकैकमैक्षत मुहुर्महतादरेण
भेदं विवेद न च पञ्चसु काञ्चिदेषा ।
शङ्काशतं वितरता हरता पुनस्तद्
उन्मादिनेव मनसेयमिदं तदाह ॥ ४० ॥
अस्ति द्विचन्द्रमतिरस्ति जनस्य तत्र
भ्रान्तौ दृगन्तचिपिटीकरणादिरादिः ।
स्वच्छोपसर्पणमपि प्रतिमाभिमाने
भेदभ्रमे पुनरमीषु न मे निमित्तम् ॥ ४१ ॥
किं वा तनोति मयि नैषध एव काय-
व्यूहं विधाय परिहासमसौ विलासी ।

---

हंसं सस्मार दुर्लभार्थप्रार्थकाः खलु कार्य्यकातरा इति भावः ॥ ३८ ॥

एकैकमिति । एषा भैमी महता आदरेणैकाग्र्येण मुहुः एकैकमैक्षत पञ्चसु मध्ये कञ्चिद्भेदं विशेषञ्च न विवेद किन्तु शङ्काशतं वितरता जनयता तच्छङ्काशतं हरता निवर्त्तयता अतएव उन्मादिना उन्मादवतेव मनसा इयमिदं वक्ष्यमाण-विकल्पजातं पुनराह आहस्म पुरा किङ् चस्म इतिभूते लट् ॥ ४० ॥

अथ आसर्गसमाप्तेश्चिन्तानुभावविकल्पानाह अस्तीत्यादि । द्विचन्द्रम् इति द्वौ चन्द्राविति भ्रान्तिरस्ति तत्र द्विचन्द्रग्राहिण्यां भ्रान्त्यां जनस्य भ्राम्यज्जनस्य दृगन्तचिपिटीकरणं कटाक्षाकुलीकरणं तदादिः तत्प्रमुखम् आदिर्मूलमस्ति प्रतिमाभिमाने प्रतिबिम्बभ्रमे स्वच्छोपसर्पणं स्फटिकादिसन्निधानं मूलं अमीषु पञ्चसु विषये भेदभ्रमे तु मे निमित्तं नास्ति तदेतत् महच्चित्रमिति भावः ॥ ४१ ॥

विज्ञानवैभवभृतः किमु तस्य विद्या
सा विद्यते न तुरगाशयवेदितेव ॥ ४२ ॥

एको नलः किमयमन्यतमः किमैलः
कामोऽपरः किमु किमु द्वयमाश्विनेयौ ।
किं रूपधेयभरसीमतया समेषु
तेष्वेव नेह नलमोहमहं वहे वा ॥ ४३ ॥

पूर्वं मया विरहनिःसहयापि दृष्टः
सोऽयं प्रियस्तत इतो निषधाधिराजः ।

---

किमिति । विलासी विलसनशीलः वीकषलसकत्थस्रन्भ इतिघिणुन् प्रत्ययः । असौ नैषधो नल एव कायव्यूहं देहसमूहं विधाय सम्पाद्य मयि परिहासं न तनोति ? नो करोति किं ? विज्ञानं कलापरिज्ञानं विज्ञानं शिल्पशास्त्रयो रित्यमरः । तद्वैभवभृतः तत्समृद्धिमतः तस्य नलस्य तुरगाशयवेदिता अश्वहृदयवेदित्वमिव सा विद्या बहुरूपकल्पना विद्या न विद्यते किमु ? ॥ ४२ ॥

एक इति । इह पञ्चके अयमेको नलः किम् ? अन्यतमोऽपर ऐलः पुरूरवाः किम् ? अपरः कामः किम् ? द्वयं परौ द्वावश्विनेयौ दस्रौ किम् ? किन्तु रूपमेव रूपधेयं सौन्दर्य्यं नाम रूपभागेभ्यो धेयो वक्तव्य इति स्वार्थे धेयप्रत्ययः । तद्भरस्य तत्सम्पदः सीमतया अवधित्वेन समेषु लोकोत्तरसौन्दर्य्यसाम्येन अगृहीतविशेषेषु इत्यर्थः । तेष्वेव सम्प्रत्युक्तेषु नलादिषु एवाहं नलमोहं न वहे वा किम् ? ॥ ४३ ॥

पूर्वमिति । पूर्वम् अपि न सहत इति निःसहा पचाद्यच् । विरहस्य निःसहा असहना तया विरहोऽसत्तया

भूयः किमागतवती मम सा दशेयं
पश्यामि यद्विलसितेन नलानलीकान्॥ ४४ ॥

मुग्धा दधामि कथमित्यमथापशङ्कां
सङ्क्रन्दनादिकपटः स्फुटमीदृशोऽयम्।
देव्याऽनयैव रचिता हि तथा तथैषां
गाथा यथा दिगधिपानपि ताः स्पृशन्ति ॥४५॥

एतन्मदीयमतिवञ्चकपञ्चकस्थे
नाथे कथं नु मनुजस्य चकास्तु चिह्नम्।
लक्ष्माणि तानि किममी न वहन्ति हन्त
वर्हिर्मुखा धुतरजस्तनुतामुखानि ॥ ४६ ॥

---

मया सोऽयं प्रियो निषधाधिराजो नलः तत इतो दृष्टः सेयं दशा मम भूयः पुनरागतवती किं? यस्या उन्मत्तदशाया विलसितेन अलीकान् नलान् पश्यामि ॥ ४४ ॥

मुग्धेति। अथवा कथमित्थं मुग्धा मूढ़ा सती अपशङ्कां दधामि असम्भावितोऽयमिदानीम् ईदृङ् मोह इत्यर्थः। किन्तु संक्रन्दनादीनां कपट एवायम् ईदृशः स्फुटः। तथा हि अनया देव्या तथा तेन प्रकारेण एषामिन्द्रादीनां गीयन्त इति गाथाः श्लोकाः उषिकुषिगादिभ्यः स्थनित्यौणादिकः स्थन् प्रत्ययः। रचिताहि यथा तथा दिगधिपानपि ता गाथाः स्पृशन्ति अतो देवमायैवं न तु मामको मोह [illegible] ॥४५॥

एतदिति। एतेषां मदीयमतिवञ्चकानां मद्बुद्धिप्रतारकाणाम् इन्द्रादीनां पञ्चके तिष्ठतीति तत्स्थे नाथे नले कथं नु मनुजस्य चिह्नं मनुजत्वव्यञ्जकधर्मश्चकास्तु स्फुरतु किन्तु वर्हिर्मुखा अग्निमुखा देवा धुतरजस्तनुतामुखानि

*याचे नलं किममरानथवा तदर्थं*
*नित्यार्चनादपि ममाफलितैरलं तैः ।*
कन्दर्पशोषणपृषत्कनिपातपीत-
कारुण्यनीरनिधिगह्वरघोरचित्तैः ॥ ४७ ॥
ईशा ! दिशां नलभुवं प्रतिपद्य लेखा !
वर्णश्रियं गुणवतामपि वः कथं वा ।
मूर्खान्धकूपपतनादिव पुस्तकानाम्
अस्तं गतं तव परोपकृतिव्रतित्वम् ॥ ४८ ॥

---

धुतं रजो यस्याः सा तनुर्येषां ते तनूनां भावः तनुता तनुतामुखं येषां तानि निर्मलशरीराणि मुखानि निर्मलशरीरत्वप्रमुखानि तानि प्रसिद्धानि लक्ष्माणि चिह्नानि न वहन्ति किम् ? वहन्त्येव। तथाप्यत्र सन्ति नात्रेति विशेषोऽप्यत्यन्तसारूप्यात् तेजोविशेषाच्च दुर्लक्ष्य इति भावः हन्तेति खेदे ॥ ४६ ॥

याच इति। अमरान् इन्द्रादीन् नलं याचे किं ? दुहादित्वाद्द्विकर्मकत्वम्। अथवा तदर्थं नलप्राप्त्यर्थमेव नित्यं यदर्चनं तस्मादपि न दत्तफलैः किञ्च कन्दर्पस्य शोषणाख्यस्य पृषत्कस्य बाणस्य निपातेन पीतः कारुण्यनीरनिधिः कृपाब्धिः यस्मात्तेन गह्वरेण घोरं भीमं चित्तं येषां तैः स्वप्रतिषेधकृच्चित्तैरित्यर्थः। तैः अमरैः अलम् ॥ ४७ ॥

ईशा इति। हे दिशामीशा ! लेखाः ! सुराः ! गुणवतां गुणाढ्यानां सूत्रवतां वा युष्माकं नलान्नैषधाद्भवति इति नलभूस्तां नलभुवं नलनिष्ठां वर्णश्रियं गौररूपश्रियम् अन्यत्र नलाख्यतृणकाण्डभुवमक्षरसम्पदं प्रतिपद्य वर्णौ द्विजादौ शुक्लादौ स्तुतौ वर्णन्तु चाक्षरमित्यमरः। मूर्खा मूढास्त एवान्धयन्ती-

यस्मै ब्रह्मैव यदलेखि ललाटपट्टे
तत् स्यादयोग्यमपि योग्यमपास्य तस्य ।
का वासनाऽस्तु विधयामिह यां हृदाऽहं
नार्कातपैर्जलजमेति हिमैस्तु दाहम् ॥ ४९ ॥

इत्थं यथेह मदभाग्यमनेन मन्ये
कल्पद्रुमोऽपि स मया खलु याच्यमानः ।
सङ्कोचसंज्वरदलाङ्गुलिपल्लवाय-
पाणीभवन् भवति मां प्रति बद्धमुष्टिः ॥ ५० ॥

---

त्यन्धाः कूपाः अन्धकूपाः पुराणकूपास्तेषु पतनात् पुस्तकाना-मिव परोपकृतिव्रतित्वं परोपकारनियत्वं कथं वा ? अस्तं नाशं गतं वर्तते दैवतोपालम्भः ॥ ४८ ॥

यस्येति । यस्य जनस्य ललाटपट्टे भालफलके ईश्वरेण ब्रह्मणा यत्तु शुभमशुभं वा कर्मानुरूपम् अलेखि लिखितं तस्य जनस्य अयोग्यम् अनर्हमपि तत् शुभाशुभं कर्तृ योग्यमनुरूपं फलमपास्य अनादृत्य स्यादेव। एवं स्थिते इह नलप्राप्तिविषये वासना ईश्वरेच्छानुगृहीतकर्मवासना कास्तु सम्भावनायां *लोट् । का वा सम्भाविता तन्न वेद्मीत्यर्थः ।* वासनाफलमाह *यां वासनाम् अहं हृदा हृदयेन विधयाम् अन्यतरनिश्चये सन्दे-*हदुःखं न स्यादित्यर्थः । तत्स्यादयोग्यम् अपीत्यत्र दृष्टान्तमाह जलजं पद्मं अर्कातपैः तपनप्रकाशैर्दाहं न एति हिमैस्तु एति तेनेश्वरेच्छानुगृहीतकर्मवासनानुसारिणी नलप्राप्तिः सा तु दुर्ज्ञेया इति का गतिरिति भावः ॥ ४९ ॥

इत्थमिति । इह समये मम अभाग्यं मन्दभाग्यं यथा यतः इत्थमभूत् अनेन ईदृगभाग्येन सोऽर्थीविधेयः कल्पद्रुमोऽपि मया याच्यमानः सन् सङ्कोचो मुकुलीभावः स एव संज्वरो

देव्याः करे वरणमाल्यमथार्पये वा
यो वैरसेनिरिह तत्र निवेशयेति ।
सैषा मया मखभुजां द्विषतो कृता स्यात्
स्वस्मै तृणाय तु निहन्मि न बन्धुरत्नम् ॥ ५१ ॥
यः स्यादमीषु परमार्थनलः स मालाम्
अङ्गीकरोतु वरणाय ममेति चैताम् ।

---

ज्वरप्रायो विकारो येषां तानि दलान्येवाङ्गुलयो यस्य स पल्लवाग्रमेव पाणिर्यस्य तादृक् पाणीभवन् वाह्वभवन् अभूततद्भावे च्विदीर्घः । सम्प्रति बद्धमुष्टिः कृतमुष्टिबन्धश्च लुब्धश्च भवति खलु भवत्येवेति मन्ये ? दानैकबद्धः स कल्पवृक्षोऽपि मयि प्रतिषेधरूक्ष एव स्यात्तथाविधो मे भाग्यविपर्य्यय इत्यर्थः ॥ ५० ॥

देव्या इति । अथवा इह पञ्चानां मध्ये यो वैरसेनिः नलः तत्र तस्मिन् वरणमाल्यं प्रतिमाल्यं निवेशय निक्षिपेत्युक्त्वा देव्याः करे अर्पये वा तच्च न, कुतः सैषा देवी सरस्वती मया मखभुजां देवानां द्विषतो द्वेषिणी द्विषोऽमित्र इति शतृप्रत्ययः *उगितश्चेति ङीप् द्विषः शतुर्वा वचनम् इति निषेधात् विकल्पात् षष्ठी । कृता स्यात् तथा च स्वयम् अपराधिनी स्याम् इति* भावः । न चैतद्युक्तम् इत्याह । तृणाय तृणकल्पाय स्वस्मै स्वार्थम् इत्यर्थः । निहन्मि । बन्धुरत्नम् इव बन्धुरत्नं परमबन्धुं तु न निहन्मि सरस्वत्याः इति शेषः । बन्धुविरोधकारिणा किं मम कार्य्यसम्पादनेनेति भावः ॥ ५१ ॥

यद्इति । अमीषु पञ्चसु मध्ये यः परमार्थनलः स्यात् स परमार्थनलो वरणाय मालां वरणस्रजमङ्गीकरोतु स्वीकरोतु

तं प्रापयामि यदि तत्र विसृज्य लज्जां
कुर्वे कथं जगति शृण्वति हा विडम्बः ॥ ५२ ॥
इतरनलतुलाभागेषु शेषः सुधाभिः
स्नपयति मम चेतो नैषधः कस्य हेतोः ।
प्रथमचरमयोर्वा शब्दयोर्वर्णसख्ये
विलसति चरमेऽनुप्रासभासां विलासः ॥५३॥
इति मनसि विकल्पानुद्यतः सन्त्यजन्ती
क्वचिदपि दमयन्ती निर्णयं नाससाद ।

---

इति उक्ता वा एतां मालां तं सत्यनलं प्रापयामि यदि तत्र सभामध्ये लज्जां विसृज्य जगति लोके शृण्वति सति कथं कुर्वे हा कष्टं विडम्बः परिहासः ॥ ५२ ॥

इतरेति । इतरेषां नलानां तुलाभाक् सादृश्यभाक् एषु मध्ये शेषः पञ्चमो नैषधः कस्य हेतोः केनापि कारणेन षष्ठीहेतु प्रयोग इति षष्ठी । मम चेतः सुधाभिः स्नपयति । सतां हि सन्देहपदेषु वस्तुषु प्रमाणम् अन्तःकरणप्रवृत्तय इति न्यायादनेनैव नलेन भाव्यमिति भावः । अथवा प्रथमचर[illegible] पूर्वोत्तरयोः द्वयोः शब्दयोर्वर्णसख्ये अक्षरसाम्ये सत्यपि चरमे उत्तरे शब्दे अनुप्रासो वर्णावृत्तिलक्षणः शब्दालङ्कारः तस्य भासां शोभानां विलासः चमत्कारो विलसति स्फुरति यथा तथैवानुप्रासभासां विलास इत्यत्र सर्वसकाराद्यत्वे अनुप्रासस्यान्तिमसकारे स्फुरणमेवमन्तिमबुद्धौ विपरिवर्त्तमानत्वान्नलत्वाभिमानमात्रम् एतावतायमेवेति निश्चयो युक्त इत्यर्थः ॥ ५३ ॥

इतीति । इति मनसि उद्यतः उत्पद्यमानान् उत्पु(ल्ल)वा-

मुखमथ परितापास्कन्दितानन्दमस्या:
मिहिरविरचितावस्कन्दमिन्दुं निनिन्द ॥५४॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीर: सुतं
श्रीहीर: सुषुवे जितेन्द्रियचयं मा मल्लदेवी च यम्।
स्वादूत्पादभृति त्रयोदशतयाऽऽदेश्यस्तदीये महा-
काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वल: ॥५५॥

---

रेण: अचलन्ताच्छसि पुंसि रूपम्। विकल्पान् विचारान् सन्त्य-जन्ती नेति प्रतिषेधन्ती दमयन्ती क्वचिदपि पञ्चसु एकत्रापि निर्णयं नलनिश्चयं न आससाद। अथ संशयानन्तरं परितापेना-स्कन्दितानन्दं निरस्तानन्दम् अस्या मुखं मिहिरेण सवित्रा विरचितावस्कन्दं कृततिरस्कारम् इन्दुं निनिन्द तत्तुल्यं तद्दीनम् अभूदित्यर्थ:। एते च परितापदैन्य शून्यत्वादयश्चिन्ता-नुभावा ज्ञेया: तदुक्तम् इष्टानधिगमात् ध्यानश्चिन्ता शून्यत्वता पृथक् ॥ ५४ ॥

श्रीहर्षमित्यादि। स्वादूत्पादभृति मधुरार्थस्रष्टी इति त्रयोदशतया आदेश्य: त्रयोदशत्वेन सङ्ख्येय:। गतमन्यत् ॥५५॥

---

## चतुर्दशः सर्गः।

अथाधिगन्तुं निषधेश्वरं सा प्रसादनामाद्रियतामराणाम्।
यतः सुराणां सुरभिर्नृणान्तु सा वेधसाऽसृज्यत कामधेनुः ॥१॥
प्रदक्षिणप्रक्रमणालवालविलेपधूपावरणाम्बुसेकैः।
इष्टश्च सृष्टश्च फलं सुवाना देवा हि कल्पद्रुमकाननं नः ॥२॥

---

अथेति। अथ चिन्तानन्तरं सा भैमी निषधेश्वरं नलम् अधिगन्तुं लब्धुम् अमराणाम् इन्द्रादीनां प्रसादनाम् अभिमुखीकरणम् आद्रियत अमोघसाधकत्वेन अवलम्बतेत्यर्थः। अमोघसाधकत्वमेव समर्थयते यतः सुराणां पुरा वेधसा सुरभिः काचन गौः कामानां धेनुः कामधेनुः कामदुघा असृज्यत *नृणां तु सा सुरप्रसाधनैव कामधेनुः असृज्यत या यस्य* कामान् दुग्धे गौरगौर्वा सैवास्य कामधेनुरिति अत्र अमरप्रसादनायाः कामधेनुत्वेन रूपणाद्रूपकालङ्कारः ॥ १ ॥

प्रदक्षिणेति। प्रदक्षिणप्रक्रमणम् एव आलवलं विलेपश्चन्दनादिचर्चा स एव विलेपः पिण्याकादिलेपः धूपो दशाङ्गादिर्धूपः स एव दोहदधूपश्च आवरणमङ्गदेवतापरिवेष्टनं तदेव शाखावरणम् अम्बुसेकोऽभिषेकः स एव मूलेषु [illegible]तेकः तेषां द्वन्द्वः तैः करणैरिष्टं प्रियं सृष्टमवदातश्च फलमीप्सितं वस्तु तदेव *फलं सस्यं सस्ये हेतुकृते फलम् इत्यमरः।* सुवाना जनयन्तः सूतेः कर्त्तरि लटः शानजादेशः। देवा एव नोऽस्माकं नृणां कल्पद्रुमाणां काननं वनं हि तत्र प्रदक्षिणप्रक्रमणाद्याल-

श्रद्धामयीभूय सुपर्वणस्तान् ननाम नामग्रहणाग्रकं सा।
सुरेषु हि श्रद्दधतां नमस्या सर्वार्थनिष्पत्त्यङ्गमिथःसमस्या ॥३॥
यत्तान् निजे सा हृदि भावनाया बलेन साक्षादकृताखिलस्थान्
अभूदभीष्टप्रतिभूस्तदस्या वरं हि दृष्टा ददते परं ते ॥४॥

---

बाल ाद्यवयवरूपणाद्देवेषु कल्पद्रुमरूपणाच्च समस्तवस्तुविवर्त्ति-
त्वावयवरूपकम् ॥ २ ॥

श्रद्धेति। सा दमयन्ती श्रद्धा विश्वासः तन्मयी तद्युक्ता भूत्वा भूय अभूततद्भावे च्वौ समासे क्त्वो ल्यवादेशः। तान् सुपर्वणो देवान् नामग्रहणाग्रकं नामोच्चारणपूर्वकं यथा तथा ननाम प्रणता। तथा हि सुरेषु विषये श्रद्दधतां विश्वसतां नमस्या नमस्कारः श्रद्धापूर्वकनमस्कार इत्यर्थः। सा नमस्यतेः क्यजन्तादप्रत्ययादिति स्त्रियामप्रत्यये टाप्। समस्यते संगृह्यते अनयेति समस्या संज्ञायां समजिनिषधेत्यत्र संपूर्वादस्यतेः क्यप्। सर्वेषामर्थानां निधौ यान्यङ्गानि साधनानि तेषां मिथः समस्या अन्योन्यसंग्रहणकारिका समस्या तु समासार्था मिथोऽन्योन्यं रहस्यपीति चामरः। सति नमस्कारे सर्वसाधनं फलदं नान्यथातिनमस्कारेत्यर्थः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३ ॥

यदिति। सा भैमी अखिलस्थान् सर्वगतान् तान् देवान् निजे हृदि भावनाया बलेन ध्यानदार्ढ्येन साक्षादकृत साक्षात्कृतवतीति यत्। करोतेः कर्त्तरि लङ् तङ् ह्रस्वादङ्गादिति स लोपः। स साक्षात्कार एव तस्या भैम्या अभीष्टे इष्टार्थसिद्धौ *प्रतिभूर्लग्नकोऽभूत् तथा हि ते देवा दृष्टाः प्रत्यक्षाः सन्तः परमवश्यं वरं ददते हि। नदातु देवा वरमर्हन्ति न प्रत्यक्षदृष्टा मनुष्येभ्य इति श्रुतिः* ॥ ४ ॥

सभाजनं तत्र ससर्ज तेषां सभाजने पश्यति विस्मिते सा।
आमुद्यते यत्सुमनोभिरेव फलस्य सिद्धौ सुमनोभिरेव ॥५॥
वैशद्यहृद्यैर्म्रदिमाभिरामैरामोदिभिस्तानथ जातिजातैः।
आनर्च गीत्यन्वितषट्पदैः सा स्तवप्रसूनस्तवकैर्नवीनैः ॥६॥

---

सभाजनमिति। सा भैमी तत्र सभायां सभाजने सभ्यजने विस्मिते पश्यति सति पश्यन्तं तम् अनादृत्येत्यर्थः। षष्ठी चानादर इति चकारादनादरे सप्तमी। तेषां देवानां सभाजनं पूजां मालत्यादिषु संस्कारश्च गम्यते ससर्ज चकारेत्यर्थः। किमर्थं सुरार्चनमित्याशङ्क्य तत्सन्तोषार्थम् इत्याह। यद्यस्मात् *सभाजनात् सुमनोभिर्देवैः मालत्यादिकुसुमैश्च आमुद्यते एव* सन्तुष्यते इव मुद्यतेर्भावे लट्। *मालत्यां पण्डिते पुष्पे हर्षे* च सुमनोभिरिति विश्वः। आमोदो हर्ष गन्धयोरित्यमरः। किमेषामामोदेनेत्याशङ्क्य आमुदिता एव ते फलन्तीत्यर्थान्तरं न्यस्यति। तथा हि फलं हेतु साम्यं सस्यञ्च सस्यं हेतु कृते फलमित्यमरः। तस्य सिद्धौ सिद्धिप्रसङ्गे सुमनोभिः अमरैः अप्यामुद्यते एव पूर्ववच्छ्लेषः। सुमनसां मालत्यादीनां फलदानपुष्पदानदर्शनात् सुरे सुमनस्त्वेन तथात्वनिश्चयात्तदामोदार्थं *तत्सभाजनमन्वतिष्ठदित्यर्थः। अत्रोभयेषाम् अपि सुमनसाम् उभयोरप्यामोदयोश्च फलयोरभेदाध्यवसायेनायमर्थान्तरन्यासः* ॥५॥

वैशद्येति। अथ पूजानन्तरं सा दमयन्ती तान् देवान् वैशद्यमर्थव्यक्तिरन्यत्र विकाशश्च तेन हृद्यैः हृदयप्रियैः हृदयस्य प्रिय इति यत्प्रत्ययः हृदयस्य हृल्लेख यदनलासेषु इति हृदादेशः। म्रदिमा शब्दार्थमाधुर्य्यमन्यत्र सौकुमार्य्यं तेनाभिरामैः

भक्त्या तयैव प्रससाद तस्मात्तुष्टं स्वयं देवचतुष्टयं तत् ।
स्वेनामलस्य स्फुटतां यियासोः फूत्कृत्यपेक्षा कियती खलु स्यात्
॥ ७ ॥

---

आमोदयन्तीत्यामोदिनः सुदेष्णं स्तात्ताच्छील्ये णिनिः । अन्यत्रामोदः सौरभमेषामित्यामोदिनः मत्वर्थीय इनिः । तैरामोदिभिः जातयः छन्दांसि मालत्याम् इति तज्जातैः तद्‌भवैः गीत्यन्विता गानयुक्ताः षट्पदाः गाथाविशेषा येषु तैः अन्यत्र झङ्कारप्रयुक्तैर्भ्रमरैः नवीनैः अभिनवैः स्तवैः स्तोत्रैः प्रसूनस्तवकैः कुसुमगुच्छैश्च आनर्च अर्चयामास पुष्पाञ्जलिं दत्त्वा तुष्टावेत्यर्थः । अर्चेर्भौवादिकाल्लिटि अत आदेरित्यभ्यासदीर्घो तस्मानच् । अत्र स्तवानां प्रसूनस्तवकानां चोभयेषाम् अपि अर्चनसाधनत्वेन प्रकृतानां धर्मतोऽल्येनौपम्यस्य गम्यमानत्वात् केवलप्रकृतविषया तुल्ययोगिता लक्षणन्तु उक्तं प्राक् ॥६॥

भक्त्येति । स्वयं स्वतएव तुष्टं सेवादिक्रयापि तच्चारित्रदार्ढ्यादेव सन्तुष्टं तत् प्रकृतं देवचतुष्टयम् इन्द्रादिदेवचतुष्कं तस्या भैम्याः तया भक्त्या सेवया प्रससादैव अनुजग्राहैव एवकारस्त्वविलम्बसूचनार्थः । तथाहि स्वेनैव स्वतएव स्फुटतां प्रज्वलितत्वं यियासोः यातुमिच्छोः अनलस्य वह्नेः फूत्कृतेः फूत्कृतस्य फूत्कारमारुतस्य अपेक्षा कियती खलु स्यात् ? नात्यन्तम् अपेक्षते इत्यर्थः । स्वतएव प्रसन्नस्य देवगणस्य तत्कृता भक्तिः स्वतएव प्रज्वलिष्यतोऽग्नेः फूत्कृतिरिव झटिति कार्य्यप्रादुर्भावमात्रफला अन्यथापि प्रज्वलनवत् प्रसादावश्यम्भावादिति भावः । अत्र वाक्यद्वये भक्तिफूत्कृत्योः कार्य्यानपेक्षितत्वलक्षणसमानधर्मस्यैव कारको यच्छब्दाभ्यां विम्बप्रतिविम्बतया दृष्टान्तालङ्कारः । विम्बानुविम्बन्या-

प्रसादमासाद्य सुरैः कृतं सा सस्मार सारस्वतसूक्तिसृष्टेः ।
देवा हि नान्यत् वितरन्ति किन्तु प्रसद्य ते साधुधियं ददन्ते ॥८॥
शेषं नलं प्रत्यमरेण गाथा या या समार्था खलु येन येन ।
तां तां तदन्येन सहालगन्तीं तदा विशेषं प्रतिसन्दधे सा ॥९॥

---

येन निर्देशे धर्मधर्मिणाम् । दृष्टान्तालङ्कृति र्येया भिन्नवाक्यार्थसंश्रयेति विद्याचक्रवर्त्तिलक्षणात् ॥ ७ ॥

प्रसादमिति । सा भैमी सुरैः कृतं प्रसादमनुग्रहम् आसाद्य सरस्वत्या इयं सारस्वती तस्याः सूक्तिसृष्टेः अत्याजीत्यादेः पूर्वसर्गोक्तश्लिष्टोक्तिगुम्फस्य सस्मार तदर्थतत्त्वं जज्ञावित्यर्थः । अधीगर्थेत्यादिना कर्मणि शेषे षष्ठी । नलप्राप्तौ तस्याः कोऽयमनुग्रहो यद्गाथापरिज्ञानञ्च तत्राह । तथा हि ते देवाः प्रसद्य अनुगृह्य सदेः क्तोल्यप् । अन्यदवुद्धेः अन्यद्देयं न किन्तु साधुधियं फलप्राप्त्युपायपरिज्ञानं ददन्ते प्रयच्छन्ति दददान इति धातोर्भौवादिकाल्लट् तङ् । तदाहुः न देवा दण्डमादाय रक्षन्ति पशुपालवत् । यं हि रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम् इति ॥ ८ ॥

शेषमिति । सा दमयन्ती शेषं परमार्थं नलं प्रति विरचितेति शेषः या या गाथा अत्याजि लब्धेत्यादिको यो यः श्लोको येन येन अमरेन्द्रेण देवेन समार्थाः समानाभिधेयाः खलु ? अतएव तदन्येन तत इन्द्रादेः अन्येन सत्येन नलेन सह अलगन्तीम् असङ्गतां तत्परत्वेनानिश्चितां तां तां गाथां तदा देवतानुग्रहलब्धस्मृत्युद्बोधकाले विशेषं प्रति सत्यनलं प्रति सन्दधे नलपरत्वेन योजयामासेत्यर्थः । इन्द्रादिपरत्वशङ्कां निरस्य नलपरत्वं निश्चिकायेति तात्पर्य्यार्थः ॥ ९ ॥

एकैकवृत्तैः प्रतिलोकपालं पतिव्रतात्वं जगदुर्दिशां याः ।
वेद स्म गाथा मिलितास्तदासावाशा इवैकस्य नलस्य वश्याः
॥ १० ॥

निश्चित्य शेषं तमसौ नरेशं प्रमोदमेदस्वितरान्तराऽभूत् ।
देव्या गिरा भावितभङ्गिराख्यच्चित्तेन चिन्तार्णवयादसेदम् ॥११॥
सा भङ्गिरस्याः खलु वाचि काऽपि यत् भारती मूर्त्तिमतीयमेव ।

---

एकैकेति। या गाथा अत्याजीत्यादयः श्लोका एकैकस्मिन् लोकपाले वृत्तैर्वर्त्तमानैतैः साम्यात् दिशां प्रतिलोकपालं यत्पतिव्रतात्वं तत् जगदुः प्राच्यादिदिश इव इन्द्राद्येकैकलोकपालपरा बभूवुरित्यर्थः। तदा देवताप्रसादकाले असौ भैमी मिलिताः समस्ता गाथा आशा इवैकस्य नलस्य वश्याः वशङ्गताः वशङ्गत इति यत्प्रत्ययः। वेद स्म लट् स्म इति भूते लट् विदो लटोवेति णलादेशः। आशा इव गाथा अपि आपातत एकैकश एकैकलोकेशपरतया प्रतीता इति सामस्त्येन नलपरा एवेति विवेदेत्यर्थः। तस्य सर्वाशाविजयत्वादाशानां तत्परत्वं गाथानान्तु देव्याः चतुरोक्तिभङ्गिपर्य्यालोचनयेति भावः ॥ १० ॥

निश्चित्येति। असौ दमयन्ती शेषं पञ्चमं तं प्रसिद्धं नरेशं नैषधं निश्चित्य प्रमोदमेदस्वितरम् आनन्दमेदुरतरम् आन्तरम् अन्तरङ्गं यस्याः सा अभूत्। अथ देव्याः गिरा भाविता भङ्गिः प्रयोगचातुरीविशेषः यया सा सती चिन्तार्णवयादसा चिन्तासागरजलग्रहभूतेन चित्तेन इदं वक्ष्यमाणम् आख्यत् अवोचत्, ख्यातेर्लुङि अस्यतिवक्तिख्यातिभ्योऽङि चुरङादेशः ॥११॥

अथ चित्तेन यदाख्यत्तदेवाह सेति। अस्याः देव्याः वाचि सा वक्ष्यमाणा काचित् अपूर्वा भङ्गिः प्रयोगप्रकारः

श्लिष्टं निगद्याहृत वासवादीन् विश्लिष्य मे नैषधमप्यवादीत्
॥ १२ ॥

जग्रन्थ सेयं मदनुग्रहेण वचःस्रजः स्पष्टयितुं चतस्रः।
*द्वे ते नलं लक्षयितुं क्षमेते ममैव मोहोऽयमहो महीयान्* ॥ १३ ॥

श्लिष्यन्ति वाचो यदमूरमुष्याः कवित्वशक्तेः खलु ते विलासाः।
भूपाललीलाः किल लोकपालाः समाविशन्ति व्यतिभेदिनोऽपि
॥ १४ ॥

---

खलु ? यत् यस्मात् भङ्गिविशेषात् इयं पुरोवर्त्तिनी मूर्त्तिमती विग्रहवती सती सत्यवादिनो भारती वाग्देवता श्लिष्टं श्लिष्टार्थं यथा तथा निगद्य उक्त्वा वासवादीन् इन्द्रादीन् आहृत आहृतवती तानेव उपाचरदेवेत्यर्थः, हृञो लुङि झस्वादङ्गादिति सलोपः। अथ च नैषधं नलमपि मे मह्यं विश्लिष्य इन्द्रादिभ्यो विविच्य अवादीत् किन्तु अहमेव न वेद्मीति भावः ॥ १२ ॥

जग्रन्थेति। सा इयं देवी मदनुग्रहेण मदनुग्रहबुद्धा स्पष्टयितुं नलं व्यक्तीकर्त्तुं चतस्रः वचःस्रजः वचनमालिकाः जग्रन्थ ग्रथितवती, तत्र ते इन्द्राग्निप्रत्यायिके आद्ये द्वे एव स्रजौ नलं लक्षयितुम् अभिव्यक्तुं क्षमेते शक्नुतः तत्रैव स्फुटतरं प्रतीतिरन्ये द्वे द्वयेति भावः। किन्तु ममैव अयं महीयान् महत्तरः मोहः अहो यच्चतसृभिरपि न वेद्मीति भावः ॥ १३ ॥

अत्याजीत्यादिश्लोकचतुष्टयेन नलमेवाचष्टे किमिति इन्द्रादिचतुष्टयस्य स्पृशतीत्याशङ्क्याह श्लिष्यन्तीति। अमूः अत्याजीत्यादयो गाथाः अमुष्याः देव्याः वाचः श्लिष्यन्ति नलमिवेन्द्रादीनपि स्पृशन्तीति यत् तच्छ्लेषणमित्यर्थः। विधेयविलास-

त्यागं महेन्द्रादिचतुष्टयस्य किमभ्यनन्दत् क्रमसूचितस्य ।
किं प्रेरयामास नले च तस्मात् का सूक्तिरस्या मम कः प्रमोहः
॥ १५ ॥

*परस्य दारान् खलु मन्यमानैरस्पृश्यमाना ममरैर्धरित्रीम् ।*
*भक्त्येव भर्तुश्चरणौ दधानां नलस्य तत्कालमपश्यदेषा ॥१६॥*

---

प्राधान्यात्तल्लिङ्गसङ्ख्यानिर्देशः । कवित्वशक्तेः विलासाः खलु ? कवित्वधर्मोऽयं यदन्यपरेणापि शब्देन श्लेषभङ्ग्यार्थान्तरप्रत्यायनमलङ्कारत्वान्न तु तात्पर्य्यमिति भावः । तथा च श्लेषमहिम्ना तेषां नलसारूप्याच्च तत्परत्वभ्रान्तिरित्याह । भूपालस्य नलस्य लीला इव लीला येषां ते तद्रूपधारिणो लोकपालाः व्यतिभेदिनः नलात् भेदवन्तोऽपि समाविशन्ति मत्वोत्वबुद्धौ लगन्ति किल ? ततो ममैवायं व्यामोह इत्यर्थः ॥ १४ ॥

स्वव्यामोहमेव प्रकटयति त्यागमिति । क्रमसूचितस्य क्रमनिर्दिष्टस्य महेन्द्रादिचतुष्टयस्य त्यागं पुराकृतं परिहारं किं किमर्थम् अभ्यनन्दत् अन्वमोदत, माञ्च किं किमर्थं नले विषये प्रेरयामास यदीयं मदनुजिघृक्षा न स्यादिति भावः । तत् तस्मादस्याः देव्याः सूक्तिः साधूक्तिः अत्याजीत्यादि सत्योपदेशः का ? मम प्रमोहः कः ? अहो घण्टापथे स्खलितमिति भावः ॥ १५ ॥

अस्पृश्या सा षड्भिर्नलज्ञानप्रकारमाह परस्येत्यादि । परस्य दारान् मन्यमानैरिव परदारा इति बुध्यमानैरिवेत्युत्प्रेक्षा । राजदारत्वाद् भुव इति भावः । भार्य्या जायाथ पुंभूम्नि दारा इत्यमरः । अमरैः अस्पृश्यमानां पराङ्गनास्पर्शनिषेधादिति भावः । भक्त्येव पतिभक्त्या इवेत्युत्प्रेक्षा ।

सुरेषु नापश्यदुदैक्षताक्ष्णोर्निमेषमुर्वीभृति सम्मुखे सा ।
इह त्वमागत्य नले मिलेति संज्ञानदानादिव भाषमाणम् ॥ १७ ॥

नावुद्ध बाला विबुधेषु तेषु क्षोदं क्षितेरैक्षत नैषधे तु ।
पत्ये सृजन्त्याः परिरम्भमस्याः सम्भूतसम्भेदमसंशयं सा ॥ १८ ॥
स्वेदः स्वदेहस्य वियोगतापं निर्वापयिष्यन्निव संसिसृक्षोः ।
ह्रीराङ्कुरस्याकरणि हेमनीव नले तयालोकि न दैवतेषु ॥ १९ ॥

---

भर्त्तुः पत्युः नलस्य चरणौ दधानां धरित्रीम् एषा दमयन्ती तत्कालं तस्मिन् काले, अत्यन्तसंयोगे द्वितीया । अपश्यत् देवा हि भूमिं न स्पृशन्ति अयन्तु स्पृशतीत्येतदेकं तावच्चिह्नमित्यर्थः ॥ १६ ॥

सुरेष्विति । सा दमयन्ती सुरेषु इन्द्रादिषु अक्ष्णोः निमेषं न अपश्यत् निजसम्मुखे स्वाभिमुखे उर्वीभृति नृपे नले त्वम् इह आगत्य इतः एत्य नले मिल सङ्गच्छस्व इति संज्ञानदानात् संज्ञाकरणात् भाषमाणं ब्रुवाणमिव स्थितमित्युत्प्रेक्षा । निमेषमिव ऐक्षत इदमपरं चिह्नमित्यर्थः ॥ १७ ॥

नेति । सा बाला भैमी तेषु विबुधेषु देवेषु क्षितेः क्षोदं रजः न अबुद्ध न ऐक्षतेत्यर्थः, तैजसेषु तदसंक्रमादिति भावः । बुध्यतेर्लुङि तङि सरोमरिति सिच्लोपः । नैषधे नले तु पत्ये स्वभर्त्रे नलाय परिरम्भं सृजन्त्याः आलिङ्गनं ददत्याः अस्याः क्षितेः सकाशात् असंशयं यथा तथा सम्भूतसम्भेदं सञ्जातसंश्लेषम् इत्युत्प्रेक्षा । आलिङ्गनसंक्रान्तं स्थितमित्यर्थः । क्षोदम् ऐक्षत । रजःसम्भेदोऽपरं चिह्नमित्यर्थः ॥ १८ ॥

स्वेद इति । तया दमयन्त्या संसिसृक्षोः नलेन संस्रष्टुं सङ्गन्तुमिच्छोः स्वदेहस्य वियोगतापं नलविरहसन्तापं निर्वाप-

सुरेषु मालाममलामपश्यन्नले तु बाला मलिनीभवन्तीम्।
इमां किमासाद्य नलेऽद्य मृद्वीं श्रद्धास्यते मामिति चिन्तयैव
॥ २० ॥

श्रियं भजन्तां कियदस्य देवाश्छाया नलस्यास्ति तथापि नैषाम्।
इतीरयन्तीव तया निरैचि सा नैषधे न त्रिदशेषु तेषु ॥ २१ ॥

---

यिष्यन् श्रमयिष्यन् इव स्थितः इत्युत्प्रेक्षा। स्वेदः चारुणि शुद्धिमति श्यामिकारहिते हेमनि हेम्नि हीराङ्कुरः वज्राङ्कुरः इव, वज्रो हीरश्च कथ्यते इति हलायुधः। नले आलोकि दृष्टः दैवतेषु सुरेषु न आलोकि ॥ १९ ॥

सुरेष्विति। दमयन्ती भैमी सुरेषु अमलाम् अम्लानां मालां स्रजम् अपश्यत्, नले तु अद्य मृद्वीं सुकुमाराम् इमां दमयन्तीम् आसाद्य किं किमर्थं मां श्रद्धास्यते आदरिष्यते इति चिन्तया एव मलिनीभवन्तीं म्लायन्तीं मालाम् अपश्यत्। म्लानकुसुमत्वमन्यचिह्नमित्यर्थः ॥ २० ॥

श्रियमिति। देवाः इन्द्रादयः अस्य नलस्य श्रियं कान्तिं कियत् अल्पं यथा तथा भजन्तां तथा अस्य हि एषाम् इन्द्रादीनां नलस्य छाया कान्तिः समग्रा इति भावः। अनातपश्च छाया त्वनातपे कान्ताविति वैजयन्ती। नास्ति नलरूपधारित्वेऽपि तेषु तत्कान्तिः ईषदेव न समग्रेत्यर्थः। इतीरयन्ती कथयन्तीव स्थिता छाया कान्तिः अनातपश्च तया दमयन्त्या नैषधे नले निरैचि दृष्टा, ईक्षतेः कर्मणि लुङ्। तेषु त्रिदशेषु इन्द्रादिषु न निरैचि तेषां तैजसत्वात् न तत्र छत्रादिच्छाया लग्ना नले तु लग्ना इत्येकं चिह्नमित्यर्थः। अत्र श्रियमिव श्रियं छायेव छायेति सादृश्याक्षेपान्निदर्शना ताभ्यामङ्गाभ्यामितीरयन्तीवेत्युत्प्रेक्षायाः सङ्करः ॥२१॥

चिह्नैरमीभिर्नलसंविदस्याः संवादमाप प्रथमोपजाता।
सा लक्षणव्यक्तिभिरेव देवप्रसादमासादितमप्यबोधि ॥२२॥
नले विधातुं वरणस्रजं तां स्मरः स्म रामां त्वरयत्यथैनाम्।
अपत्रपा तां निषिषेध तेन इयानुरोधं तुलितं दधौ सा ॥२३॥
स्रजा समालिङ्गयितुं प्रियं सा रसादधत्तैव बहुप्रयत्नम्।
स्तम्भत्रपाभ्याममभवत् तदीये स्पन्दस्तु मन्दोऽपि न पाणिपद्मे
॥ २४ ॥

---

चिह्नैरिति। अस्याः दमयन्त्याः प्रथमोपजाता इतरनलतुलाभाक् एष शेषः इत्युक्ता नलसंवित् नलोऽयमिति चिरम् एभिः चिह्नैः पूर्वोक्तैः भूस्पर्शादिभिः सवादम् ऐकमत्यम् आप दार्ढ्यं प्रापेत्यर्थः। सा दमयन्ती लक्षणानां पूर्वोक्तचिह्नानां व्यक्तिभिः अभिव्यक्तिलक्षणकार्य्यैरेव देवप्रसादं देवतानुग्रहमहितकारणभूतम् आसादितं प्राप्तम् अबोधि कारणं विना कथं कार्य्यं भवेदिति भावः। बुध्यतेः कर्त्तरि लुङ्, दीपजनेत्यादिना विकल्पात् चिण् ॥ २२ ॥

नले इति। स्मरः नले वरणस्रजं विधातुं तां रामां दमयन्तीं त्वरयति स्म त्वरयामास, अथ एनां त्वरावतीं भैमीम् अपत्रपा लज्जा निषिषेध निवारयामास। स्थादिष्वभ्यासेन चाभ्यासस्येति धात्वभ्याससकारलोपयोः षत्वम्। तेन कारणद्वयेन सा भैमी इयानुरोधम् उभयानुरोधं तुलितं समीभूतं यथा तथा दधौ न वत्र्त्त्याणि विररामेत्यर्थः, एतेनास्या मध्यमानायिकात्वमुक्तम्। तुल्यलज्जास्मरा मध्येति लक्षणात् ॥ २३ ॥

स्रजेति। सा भैमी रसात् रागात् प्रियं नलं सृज्यते इति स्रक् संवरणमाला, ऋत्विक् दधृगित्यादिना क्रमार्थं क्विप्, ऋगा-

तस्या हृदि व्रीड़मनोभवाभ्यां दोलाविलासं समवाप्यमाने।
श्रितं धृतैणाङ्ककुलातपत्रे शृङ्गारमालिङ्गदधीश्वरश्रीः ॥२५॥
करः स्रजा सज्जतरस्तदीयः प्रियोन्मुखीभूय पुनर्व्यरंसीत्।
तदाननस्यार्द्धपथं ययौ च प्रत्याययौ चातिचलः कटाक्षः ॥२६॥

---

गमश्च। तया समालिङ्गयितुं समाश्लेषयितुं बहुप्रयत्नं महोद्योगम् अधत्तेव किन्तु तदीये तस्याः सम्बन्धिनि पाणिपद्मे स्तम्भः निष्क्रियत्वलक्षणः सात्त्विकविशेषः स च त्रपा च ताभ्यां हेतुभ्यां मन्दः अल्पोऽपि स्पन्दः व्यापारः न अभवत् ॥२४॥

तस्या इति। व्रीडमनोभवाभ्यां लज्जास्मराभ्यां दोलाविलासं प्रेङ्खणलीलां समवाप्यमाने नीयमाने आन्दोल्यमाने इत्यर्थः। धृतम् एणाङ्ककुलस्य सोमवंशस्य आतपत्रम् आतपत्रभूतः नलः येन तस्मिन् तस्याः हृदि हृदये श्रितम् आश्रित्य स्थितं शृङ्गारम् अधीश्वरश्रीः राजलक्ष्मीः आलिङ्गत् दोलाधिरूढाः स्त्रियो भीताः पुमांसमालिङ्गन्ति इति भावः। नलाधिष्ठिते हृदि भैमी परां कोटिम् आरूढा इत्यर्थः ॥ २५ ॥

कर इति। तदीयो दमयन्तीसम्बन्धी करः स्रजा वरणस्रजा करणेन सज्जतरः अतिसन्नद्धः सन् नलस्य उन्मुखीभूय अभिमुखीभूय पुनः व्यरंसीत् विरराम, रमेर्लुङि व्याङ्परिभ्यो रम इति परस्मैपदं, यमरमनमातां सक्चेति सगिड़ागमौ, अस्ति सिचो व्यक्त इतीड़ागमे ईट ईटीति सलोपे च सवर्णदीर्घः। तथा अतिचलः अत्यन्तचञ्चलः कटाक्षः तदाननस्य नलमुखस्य अर्द्धः पन्था इति विशेषणसमासे समासान्तः। अर्द्धं नपुंसकमिति नैकदेशी समासः समप्रविभागे प्रमाणाभावात्। तम् अर्द्धपथं ययौ च प्रत्याययौ प्रत्यावृत्तश्च उभयत्र लज्जयेति भावः ॥ २६ ॥

तस्याः प्रियं चित्तमुदेतुमेव प्रभूबभूवाक्षि न तु प्रयातुम्।
सत्यीकृतः स्पष्टमभूत् तदानीं तयाक्षिलज्जेति जनप्रवादः॥२७॥
कथंकथञ्चिन्निषधेश्वरस्य कृत्वास्यपद्मं दरवीक्षितश्रि।
वाग्देवताया वदनेन्दुबिम्बं त्रपावती साऽकृत सामिदृष्टम्॥२८॥
*न जानतीवेदमवोचदेनामाकूतमस्यास्तदवेत्य देवी।*
*भावस्त्वपोर्मिप्रतिसीरया ते वितीर्यते लङ्घयितुं न मेऽपि॥२९॥*

---

तस्या इति। तस्याः दमयन्त्याः चित्तं प्रियं नलम् उदेतुं प्राप्तुमेव प्रागेव न इदानीमिति भावः। अक्षि तु प्रयातुं नलं गन्तुं न प्रभूबभूव न शशाकेत्यर्थः, प्रभुशब्दादभूततद्भावे च्वौ दीर्घः। अक्षिण चक्षुषि लज्जा न तु चेतसि इति शेषः इति जनप्रवादः। तन्व्या तया भैम्या स्पष्टं यथा तथा सत्यीकृतोऽभूत् अन्तःकरणवृत्तेरात्मैकसंवेद्यत्वान्न तस्य लज्जा चक्षुषस्तु न तथेति तत्रैव लज्जेति भावः॥ २७॥

कथं कथमिति। त्रपावती लज्जावती सा भैमी कथं कथञ्चिदतिकृच्छ्रेण निषधेश्वरस्य नलस्य आस्यपद्मं मुखारविन्दं दरवीक्षिता ईषद्दृष्टा श्रीः अस्य तत् कृत्वा लेशतो दृष्ट्वेत्यर्थः, शेषिककत्वस्य वैभाषिकत्वादभावः ह्रस्वो नपुंसके प्रातिपदिकस्येति ह्रस्वः। ईषदर्थदरोऽव्ययम्। वाग्देवतायाः सरस्वत्याः वदनेन्दुबिम्बं सामिदृष्टम् अर्द्धदृष्टम् अकृत अकार्षीत् तत्रापि लज्जेति भावः। सामीत्यर्द्धे जुगुप्सित इत्यमरः। नाहं शक्नोमि त्वया कारयितव्यमिति देवीमुखवीक्षणे तात्पर्यमवधार्य्यम्॥ २८॥

न जानतीति। देवी वाग्देवी अस्याः भैम्याः तत् पूर्वोक्तम् आकूतम् अभिप्रायम् अवेत्य ज्ञात्वा न जानतीव बुध्यमानेव

देव्याः श्रुतौ नेति नलार्द्धनाम्नि गृहीत एव त्रपया निपीता।
अथाङ्गुलीरङ्गुलिभिः स्पृशन्ती दूरं शिरः सा नमयाञ्चकार ॥३०॥
करे विधृत्येश्वरया गिरां सा पान्था पथीन्द्रस्य कृता विहस्य।
वामेति नामैव बभाज सार्थं पुरन्ध्रिसाधारणसंविभागम् ॥३१॥

---

*एनां भैमीम् इदं वक्ष्यमाणम् अवोचत्*, वचेर्लुङादेशस्य वा लुङ् वचेरुमित्युमागमः। तदेवाह। त्रपाया: ऊर्मिरिव प्रतिसीरा यवनिका, प्रतिसीरा यवनिका स्यात्तिरस्करणी च सेत्यमरः। तया कवर्त्री ते तव भावः अभिप्रायः मे मम अपि लक्षयितुं ज्ञातुं न वितीर्य्यते न दीयते लज्जान्तर्हितो भावोऽयं न ज्ञायते इत्यर्थः कण्ठोक्तिमन्तरेण दुर्ज्ञेय इत्यर्थः। तुमन्प्रयोगस्तूदीच्यानाम् ॥ २८ ॥

देव्या इति। सा भैमी देव्याः सरस्वत्याः नेति एवं नलस्य अर्द्धनाम्नि नाम्नोऽर्द्धे अर्द्धनामधेये अर्द्धं नपुंसकम् इत्येकदेशी समासः। श्रुतौ श्रोत्रे गृहीते एव उच्चारिते सत्येव त्रपया निपीता ग्रस्ता सती अथ त्रपाव्याप्त्यनन्तरम् अङ्गुलीभिः अङ्गुलीमिषेण अङ्गुलीः स्पृशन्ती सतीत्यर्थः दूरम् अत्यन्तं शिरः नमयाञ्चकार ननाम लज्जातिरेकात् कथननैराश्याच्च इति कर्त्तव्यतामूढ़ा केवलं नता एव स्थितेत्यर्थः ॥३०॥

कर इति। सा भैमी गिराम् अधीश्वरया वाग्देवतया, स्थेशभासपिसकसोवरच्। विहस्य करे विधृत्य गृहीत्वा इन्द्रस्य पथि पन्थानं वा गच्छति नित्यमिति पान्था नित्यपथिकी कृता इन्द्रसमीपं नीता सतीत्यर्थः। पथोऽण्नित्यमित्यण्प्रत्यये पथः पन्थादेशे च ङीप्। पुरन्ध्रीणां सर्वयोषितां साधारणः संविभागः सर्वनामत्वे संविभज्य ग्रहणं यस्य तत् वामेति नामैव

भैमीं निरीक्ष्याभिमुखीं मघोनः स्वाराज्यलक्ष्मीरभजतादभ्यसूयाम्।
दृष्ट्वा ततस्तत्परिहारिणीं तां व्रीडां विडौजःप्रवणाभ्यपादि ॥३२॥
त्वत्तः श्रुतो नेति नले मयातः परं वदस्वेत्युदिताथ देव्या।
क्षौममयद्वैरथरङ्गभूमिर्भैमी दृशा भाषितनैषधाऽभूत् ॥३३॥

---

सार्थं वक्रत्वेनार्थवत् यथा तथा बभाज बभार वक्रा एव अभूत्। वामं सव्ये प्रतीपे च चारौ वक्रे च योषितीत्यजमालः ॥ ३१ ॥

भैमीमिति। मघोनः इन्द्रस्य अभिमुखीं भैमीं निरीक्ष्य स्वः स्वर्गस्य राज्यं स्वरव्ययं स्वर्गनाकेत्यमरः। ढ्लोपे पूर्वस्य दीर्घोऽणः। तस्य लक्ष्मीः अभ्यसूयाम् इन्द्रे भैम्यां चेर्ष्याम् अभृत बभार, भृङ् लङ् तङ् झस्वादङ्गादिति सलोपः। ततः *असूयानन्तरं तत्परिहारिणीम् इन्द्रप्रतिषेधिनीं भैमीं दृष्ट्वा विडौजःप्रवणा पुनरिन्द्रानुरक्ता सती व्रीडाम् अभ्यपादि अभि-* पेदे। यथा मया आशङ्कितं तथा सा तु न गणयतीति ललज्जे इत्यर्थः। पद्यतेः कर्त्तरि लुङि तङि झस्वादङ्गादिति सलोपः, चिण्ते पदः चिणो लुङि तिङि चिस्पपदः चिणो लुङिति प्रत्ययस्य लुक् ॥ ३२ ॥

त्वत्त इति। अथ नले प्रस्तुते सति मया नेति त्वत्त एव श्रुतः श्रुत एवायं त्वच्चेष्टयैव ज्ञात इत्यर्थः। अन्यथा ज्ञात्वापि तं किमिति न वृणोष्व इति भावः। अतः नलात् परम् अन्यं वदस्व नृपान्तरं ब्रूहीत्यर्थः। इति देव्या वाग्देवतया उदिता क्षौममयद्वैरथरङ्गभूमिः लज्जाकामरथद्वयप्रवृत्तयुद्धनाट्यशाला इव भैमी दृशा दृष्ट्या इव भाषितः नैषधः नलः यया साभूत् ह्रिया कुण्ठेन वक्तुमशक्ता वाक्येन वक्तुम् अशक्ता कटाक्ष-दृष्ट्या नलं सानुरागम् ऐक्षतेत्यर्थः ॥ ३३ ॥

हसत्सु भैमीं दिविषत्सु पाणौ पाणिं प्रणीयाप्सरसां रसात् सा।
आलिङ्ग्य नीत्वाऽक्कृत पान्थदुर्गां भूपालदिक्पालकुलाध्वमध्यम्
॥ ३४ ॥

अदेशितामप्यवलोक्य मन्दं मन्दं नलस्येव दिशा चलन्तीम्।
भूयः सुरानर्द्धपथादथासौ तानेव तां नेतुमना नुनोद ॥३५॥

मुखाब्जमावर्त्तनलोलनालं कृत्वालिङ्गुं खुंरवलचलच्चम्।
भीमोद्भवा तां नुनुदेऽङ्गपालीं देव्या नवोढेव हृथा विवोढुः॥३६॥

---

हसत्स्विति। दिवि सीदन्तीति दिविषदः देवाः आदि-तेया दिविषद इत्यमरः। सत्सूद्विषेत्यादिना क्विप्। हृद्युभ्या-ञ्चेत्युपसङ्ख्यानमिति सप्तम्यलुक्, सुषमादिषु चेति षत्वम्। अवग्रहितलक्षणमूर्धन्याः सुषमादिषु द्रष्टव्या इति वचनात्। तेषु रसात् हर्षात् अप्सरसां पाणौ पाणिं प्रणीय हसत्सु अहो *नरासक्ता इति परिहसत्सु सा सरस्वती भैमीम् आलिङ्ग्य भूपालानां दिक्पालानाञ्च कुलयोः वर्गयोः अध्वा तस्य मध्यं* नीत्वा पान्थानां तन्मार्गचारिणां दुर्गां दुर्गां देवीम् अकृत तद्वदलङ्ग्याम् एकलक्ष्यां कृतवतीत्यर्थः, कृञ् कर्त्तरि लुङि ह्रस्वादङ्गादिति सिच् सकारलोपः ॥ ३४ ॥

अदेशितामिति। असौ देवी अदेशिताम् अचोदिताम् अपि, दिशेर्वीरादिकात् कर्मणि क्तः। मन्दं मन्दं नलस्येव दिशा चलन्तीं गच्छन्तीं चलेरात्मनेपदमनित्यज्ञापनादिति वामनः। तां भैमीम् अवलोक्य भूयः तान् इन्द्रादीन् सुरान् एव नेतुं मनो यस्याः सा सती तुंकाममनसोरपीति मकार-लोपः। तदार्द्धपथात् अर्द्धमार्गात् पुरावत् नुनोद प्रेरयामास ॥ ३५ ॥

मुखेति। भीमोद्भवा भैमी मुखाब्जं स्वमुखारविन्दम्

देवी कथञ्चित् खलु तामदेवद्रीचीभवन्तीं विचिन्त्य स्मितसिक्तसृक्का ।
आह स्म मां मय्यपि ते भृशं का शङ्का शशाङ्कादधिकास्यबिम्बे !
॥३७॥

एषामकृत्वा चरणप्रणामं येषामनुज्ञामनवाप्य सम्यक् ।

---

आवर्त्तनेन दिग्वलनेन लोलनालं व्यावृत्तकण्ठनालं तथा आलीनां सखीनां हुं हुं रवाणां हुं हुमिति निवारणशब्दानाम् अन्यत्र अलीनां भृङ्गाणां झङ्कारशब्दानां लक्षैः लक्ष सङ्ख्याविशेषैः लक्ष्यं दर्शनीयं च कृत्वा नवोढ़ा नववधूः विवोढुः परिणेतुः इव तामालिङ्ग्य नीत्वेत्यत्रोक्तां देव्याः सम्बन्धिनीं वृथा अङ्कपालीं परिरम्भणबन्धनम् अङ्कपाली स्मृता कोल्यां दारिका परिरम्भयोरिति विश्वः। नुनुदे तत्याज ॥ ३६ ॥

देवीति। देवी ता भैमीं कथञ्चित् खलु कथञ्चिदपि *देवान् अञ्चतीति देवद्रीची, देवानञ्चतीति देवद्राङित्यमरः। ऋत्विगित्यादिना अञ्चतेः क्विन्प्रत्ययः, विष्वग्देवयोश्च देवद्र्यञ्चतावप्रत्यय इति टेरद्र्यादेशः, अञ्चतेश्चोपसङ्ख्यानमिति* ङीप्। सा न भवन्तीम् इति अदेवद्रीचीं तान् देवान् अनभिगच्छन्तीमित्यर्थः विचिन्त्य विचार्य्य, स्मितेन सिक्ते सृक्कणी ओष्ठप्रान्तौ यस्याः सा सती, प्रान्तावोष्ठस्य सृक्कणीत्यमरः। शशाङ्कात् अधिकम् उत्कृष्टम् आस्यबिम्बं मुखस्वरूपं यस्यास्तस्याः सम्बुद्धिः। सापेक्षत्वेऽपि गमकत्वात् समासः। मयि स्थिते ते तव का शङ्का अविश्वासः न काचि[illegible]त्यर्थः इति तां भैमीं भृशम् आह स्म उवाच, लट् स्म इति भूते लट्, ब्रुवः पञ्चानामित्यादिना णलाहादेशः ॥ ३७ ॥

एषामिति। हे वत्से! येषाम् एषाम् इन्द्रादीनां चरणप्रणामम् अकृत्वा अनुज्ञां सम्यक् अनवाप्य च

सुपर्वर्वैरे तव वैरसेनिं वरीतुमीहा कथमौचितीयम् ॥ ३८ ॥
इतीरिते विश्वसितां पुनस्तामादाय पाणौ दिविषत्सु देवी ।
कृत्वा प्रणम्रां वदति स्म सा तान् भक्तेयमर्हत्यधुनानुकम्पाम् ॥ ३९ ॥
युष्मान् वृणीते न बहून् सतीयं शेषावमानाच्च भवत्सु नैकम् ।
तद्वः समेतं नृपमंशमेनं वरीतुमन्विच्छति लोकपालाः ! ॥४०॥

---

अनाकर्ण्य सुपर्वर्वैरे देवताद्वेषे सति तव वीरसेनस्य अपत्यं वैरसेनिः नलः तम् वरीतुं, वृतो वेति विकल्पादिटो दीर्घः। इयम् ईहा स्पृहा कथम् औचिती औचित्यं न कथञ्चिदित्यर्थः ॥ ३८ ॥

इतीति। सा देवी इतीरिते सति विश्वसितां प्रतीतां तां भैमीं पुनः भूयः पाणौ हस्ते आदाय तत्पाणिं गृहीत्वेत्यर्थः, *दिविषत्सु देवेषु विषये प्रणम्रां प्रणतां कृत्वा तान् इन्द्रादिदेवान् वदति स्म उक्तवती, लट् स्म इति भूते लट्। किमिति।* भक्ता युष्मद्भक्ता इयं दमयन्ती अधुना इदानीम् अनुकम्पां भवत्कृपाम् अर्हति त्वद्वरणाशां विहाय नलवरणार्थमनुग्रहं कुरुतेति भावः ॥ ३९ ॥

युष्मानिति। हे लोकपालाः! सती साध्वी इयं भैमी युष्मान् बहून् न वृणीते पातिव्रत्यभङ्गादिति भावः। शेषाणाम् अवशिष्टानाम् अवमानात् अवमानप्रसङ्गात् भवत्सु मध्ये एकञ्च न वृणीते तत् तस्मात् वः युष्माकं सम्बन्धिनं समेतं मिलितम् अंशं सर्वांशसमष्टिरूपम्, अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृप इति भावः। एनं नृपं वरीतुम् अन्विच्छति एकवरणापेक्षया सर्वांशनिर्मितस्य नलस्य वरणेनैव सर्वेषां सम्मानं भवति इति भावः ॥४०॥

भैम्याः स्रजः सञ्जनया पथि प्राक् स्वयंवरं संवरयांबभूव
सम्भोगमालिङ्गनयास्य वेधाः शेषन्तु कं हन्तुमियद् यतध्वम्॥४१
वर्णाश्रमाचारपथात् प्रजाभिः स्वाभिः सहैवास्खलते नलाय।
प्रसेदुषो वेट्टशवृत्तभङ्ग्या दिष्ट्यैव कीर्त्तिर्भुवमानयद् वः॥४२॥

---

*किञ्च भैम्या नलवरणसम्भोगौ तत्र प्रागेव ब्रह्मणैव निर्व-र्त्तितौ किमपरमवशिष्यते यद्विघातार्थमयं वः प्रयास इत्याह* भैम्या इति। किञ्च, वेधाः स्रष्टैव प्राक् युष्मद्दूत्यानुसन्धान-काले पथि अन्तःपुरमार्गे स्रजःसञ्जनया कण्ठे योजनया, ण्यासश्रन्थो युच्। भैम्याः स्वयंवरं नलवरणं संवरयांबभूव निवर्त्तयामास तथा आलिङ्गनया आश्लेषणया, पूर्ववत् युच्। सम्भोगं संवरयांबभूव एतच्चोभयं षष्ठसर्गे प्रसूप्रसादाधिगताम् अनोन्यमन्यत्रवदित्यत्र च श्लोकद्वयोक्तरीत्यानुसन्धेयम्। शेषम् इतोऽवशिष्टन्तु, अथ शेषं त्रिष्वन्यस्मिन् उपयुक्ततमा-मचता दिवःने स्त्री ना नागेशप्रधानयोरिति वैजयन्ती। कं हन्तुं वियोक्तुं इयत् एतावत् यथा तथा यतध्वं प्रयतति, सम्प्रश्ने लोट्। ब्रह्मसृष्टेरलङ्घ्यत्वात् वृथा वः प्रयास इति भावः॥ ४१॥

यद्वा, किमेषु दोषग्रहणेन येनेत्थमुपालभ्यन्ते किन्तु गुण-ग्रहणेनैव तान् प्रसादयामीत्याशयेनाह वर्णेति। वर्णानां ब्राह्मणादीनाम्, आश्रमाणां ब्रह्मचर्य्यादीनाम् आचारपथात् सद्वृत्तमार्गात् स्वाभिः स्वकीयाभिः प्रजाभिः सह अस्खलते अचलते नलाय प्रसेदुषः प्रसन्नान्, भाषायां सदवसश्रुव इति सदेः क्वसुरादेशः। वः युष्मान् ईदृश्या दूत्यकृत्यदृष्टया वृत्त-भङ्ग्या चरित्रवैचित्र्या तद्व्याजेनेत्यर्थः, स्त्रियाः पुंवदित्यादि

इति श्रुतेऽस्या वचने च हास्यात् कृत्वा नलस्याधरमास्यबिम्बम् ।
भ्रूविभ्रमाकूतकृताभ्यनुज्ञेष्वेतेषु तां साथ नलाय निन्ये ॥४३॥
मन्दाक्षनिष्पन्दतनोर्मनोभूर्दुष्प्रेरमप्यानयति स्म तस्याः ।
मधूकमालामधुरं करं सा कण्ठोपकण्ठं वसुधासुधांशोः ॥४४॥
अथाभिलिख्येव समर्प्यमाणां राजिं निजस्वीकरणाक्षराणाम् ।
दूर्वाङ्कुराढ्यां नलकण्ठनाले वधूर्मधूकस्रजमुत्ससर्ज ॥ ४५ ॥

---

पुंवद्भावः । कीर्त्तिः दित्सा नलाय दातुम् इच्छैव कर्त्री, ददातेः सनि मोमेत्यादिना इमादेशेऽभ्यासलोपः । अप्रत्यया इत्यकारप्रत्ययेऽट् । भुवम् आनयद्वा अतो नीतवती किं ? नीवह्योरित्यादिना नयतेर्द्विकर्मकता । नलस्य कीर्त्तिम् अलङ्कर्त्तुम् अयं वः प्रयासः न नु भैमीं पीड़यितुमित्यर्थः ॥ ४२ ॥

इतीति । किञ्चेति चार्थः, इति इत्थम्भूते अस्याः देव्याः वचने श्रुते सति हास्यात् हास्यकरात् वचनाद्धेतोः आस्यबिम्बं नलस्य सम्बन्धे अधरं चलदोष्ठं कृत्वा एतेषु देवेषु भ्रूविभ्रमेण भ्रूचेष्टयैव आकूतेन अकपटभावेन कृता अभ्यनुज्ञा यैः तेषु सत्सु अथ अनुज्ञानन्तरं सा देवी तां भैमीं नलाय निन्ये नलसमीपं निनायेत्यर्थः। क्रियाग्रहणाच्चतुर्थी ॥ ४३ ॥

मन्दाक्षेति। सा सरस्वती मन्दाक्षनिष्पन्दतनोः लज्जानिश्चलाङ्गाः तस्याः भैम्याः मनोभुवा कामेनापि दुष्प्रेरं प्रेरयितुमशक्यं मधूकमालया मधुरं रम्यं करं वसुधासुधांशोः भूचन्द्रस्य नलस्य कण्ठोपकण्ठं कण्ठसमीपम् आनयति स्म तदा अस्याः स्मरादपि लज्जा बलीयसीति भावः ॥४४॥

अथेति। अथ बधूः कन्या भैमी अभिलिख्य लिखित्वा समर्प्यमाणां निजस्य आत्मीयस्य यत् स्वीकरणं तस्य अक्ष-

तां दूर्वया श्यामलयातिवेलं शृङ्गारभासन्निभया सशोभाम् ।
*मालां प्रसूनायुधपाशभासं कण्ठेन भूभृद् बिभराम्बभूव ॥४६॥*
*दूर्वाग्रजाग्रत्पुलकावलिं तां नलाङ्गसङ्गाद् भृशमुल्लसन्तीम् ।*
मानेन मन्ये नमितानना सा सासूयमालोकत पुष्पमालाम्॥ ४७
सा निर्मले तस्य मधूकमाला हृदि स्थिता च प्रतिबिम्बिता च ।
कियत्यमग्ना कियती च मग्ना पुष्पं पुन्नागाणालिरिव व्यलोकि ॥ ४८ ॥

---

राणां तद्वाचकवर्णानां राजिं मालामिव दूर्वाङ्कुराढ्यां तद्भूयिष्ठां मधूकस्रजं मधूकद्रुमकुसुममालाम्, अथ मधूकं गुडपुष्पमधुद्रुमावित्यमरः। नलकण्ठनाले उत्ससर्ज मुमोच ॥४५॥

तामिति। अतिवेलं भृशं श्यामलया अतएव शृङ्गारभासन्निभया शृङ्गाररसप्रभासदृश्या दूर्वया सशोभां शोभमानां प्रसूनायुधस्य कुसुमास्त्रस्य यः पाशः पाशायुधं तस्येव भा यस्याः तां मालां भूभृत् नलः कण्ठेन बिभराम्बभूव, भीह्रीभृहुवां श्लुवच्चेति विकल्पा दाम्प्रत्ययस्य श्लुवद्भावाद् द्विर्भावः कृञन्ताश्च प्रयुज्यन्ते लिटीति भुवोऽनुप्रयोगः ॥ ४६ ॥

दूर्वाग्रेति। सा भैमी दूर्वाग्राण्येव जाग्रती पुलकावलिः यस्याः तां नलाङ्गसङ्गात् भृशम् अत्यर्थम् उल्लसन्तीम् आभरणस्याप्याभरणत्वात् तदङ्गसङ्गस्येति भावः। तां पुष्पमालां मानेन मालायाः साफल्यरूपात् कोपेन नमितानना सती सा सासूयम् आलोकतेति मन्ये। अत्र दूर्वाग्रेत्यादि प्रस्तुतमालाविशेषणसाम्यादप्रस्तुतसपत्नीप्रतीतेः समासोक्तिः, तदुपजीवनेन लज्जाहेतुकनलाननालोकने मानकृतासूयाहेतुकत्वोत्प्रेक्षणादनयोरङ्गाङ्गिभावेन सङ्करः ॥ ४७ ॥

सेति। तस्य नलस्य निर्मले स्वच्छे हृदि वक्षसि स्थिता

कापि प्रमोदास्फुटनिर्जिहानवर्णैव या मङ्गलगीतिरासाम्।
*सैवाननेभ्यः पुरसुन्दरीणामुच्चैरुलूलुध्वनिरुच्चचार ॥ ४९ ॥*
*रोमाणि सर्वाण्यपि बालभावाद् वरश्रियं वीक्षितुमुत्सुकानि।*
तस्यास्तदा कण्टकिताङ्गयष्टेरुद्ग्रीविकादानमिवान्वभूवन् ॥५०॥

---

बहिरवस्थिता चलन्ती प्रतिबिम्बिता च सा मधूकमाला कियती स्वल्पा अमग्ना कियती मग्ना अन्तःप्रविष्टा च अर्द्धमग्ना चेत्यर्थः पुष्पेषोः कामस्य बाणावलिरिव व्यलोकि इत्युत्प्रेक्षा ॥ ४८ ॥

कापीति। प्रमोदेन हर्षातिरेकेण अस्फुटं यथा तथा निर्जिहानाः निर्गच्छन्तः वर्णाः यस्याः सा एव हर्षपारवश्यात् अस्फुटाक्षरैव निर्गच्छन्तीत्यर्थः। कापि अपूर्वा पुरसुन्दरीणां या मङ्गलगीतिः सैव अस्फुटाक्षरा मङ्गलगीतिरिव आसाम् आननेभ्यः उलूलुध्वनिः सन् उच्चैः तारम् उच्चचार उत्थितः अनुकारिशब्दोऽयम् उलूलुरित्येवंरूपः कश्चित् हर्षणात्मको मुखोच्चार्यो ध्वनिविशेषः उत्सवादौ स्त्रीभिरुच्चार्य्यते इत्युदीच्यानामाचारः। तथाच पुरसुन्दरीणां यत्तु धार्मिकमङ्गले गानं तदेव हर्षपारवश्यादस्फुटाक्षरत्वात् उलूलुध्वनिकल्पमभूदित्यर्थः ॥ ४९ ॥

अथास्यास्त्रिभिः पुलकोदयमाह रोमाणीत्यादि। तदा तत्काले कण्टकिताङ्गयष्टेः तस्याः भैम्याः सर्वाण्यपि रोमाणि बालभावात् कचत्वात् वबयोरभेदेन शिशुत्वाच्च, बालः कचे शिशौ मूर्खे इति विश्वः। वरस्य वोढुः नलस्य श्रियं वीक्षितुम् उत्सुकानि सन्ति उद्ग्रीविका उन्नमितग्रीवीकरणं ग्रीवोन्नमनमिति यावत्, उद्ग्रीवयतेस्तत्करोतीति ण्यन्ताद्भावार्थनिर्देशेऽपि ल्युत्प्रत्ययः। तस्याः आदानं स्वीकारम् अन्व-

रोमाङ्कुरैर्दन्तुरिताखिलाङ्गी रम्याधरा सा सुतरां विरेजे ।
शरव्यदण्डैः श्रितमण्डनश्रीः स्मारी शरोपासनवेदिकेव ॥५१॥
चेष्टा व्यनेशन्निखिलास्तदास्याः स्मरेषुपातैरिव ता विधूताः ।
अभ्यर्थ्य नीताः कलिना मुहूर्त्तं लाभाय तस्या बहु चेष्टितुं वा
॥ ५२ ॥

---

भूवन्निवेत्युत्प्रेक्षा बाला ह्युद्ग्रीवा भृशं पश्यन्तीति भावः ॥ ५० ॥

रोमाङ्कुरैरिति । रोमाङ्कुरैः पुलकैः दन्तुरितं विषमितम् अखिलाङ्गं यस्याः सा, रम्यौ अधरोष्ठौ अन्यत्राधोभागश्च यस्याः सा, अधरं दन्तवसनेऽनूर्ध्वेऽधरोऽन्यवदिति विश्वः । सा भैमी शरव्यदण्डैः लक्ष्ययष्टिभिः श्रिता मण्डनश्रीः प्रसाधनश्रीः यस्याः सा । स्मरस्येयं स्मारी शरोपासनस्य शराभ्यासस्य वेदिकेव सुतरां विरेजे शराभ्यासिनो व्याधप्रवणां निखातलक्ष्ययष्टिकां वेदीं कुर्वन्तीति प्रसिद्धिः ॥ ५१ ॥

चेष्टा इति । तदा तत्काले अस्याः भैम्याः ताः प्रागनुभूताः निखिलाः चेष्टाः कटाक्षवीक्षणाङ्गविक्षेपादयः स्मरस्येषुपातैः बाणप्रहारैः विधूताः निरस्ता इवेत्युत्प्रेक्षा, व्यनेशन् विनष्टाः, नशेर्लुङि पुषादित्वादङ्, नशोऽमन्तेन एत्वं वक्तव्यमित्येत्वम् । विनेशुरिति पाठे लिट्यनादेशादित्वादेत एकहल्मध्येनादेशा-देर्लिटीत्येत्वाभ्यासलोपौ । प्रकारान्तरेणोत्प्रेक्षते, अथवा तस्याः भैम्याः लाभाय स्वप्राप्तये बहु बहुविधं चेष्टितुं विलसितुं कलिना कलिपुरुषेण अभ्यर्थ्य मयि तिष्ठन्त्विति प्रार्थ्य मुहूर्त्तम् ईषत्कालं नीता वा दमयन्त्याप्सायां पापिष्ठस्य कलेरप्यागमित्वात्तस्याः विकृतरूपस्य चतुरचेष्टाशून्यत्वाच्चेत्यमुत्प्रेक्षा ।

तथ्यस्तम्भाख्यस्रजि तस्य कण्ठे स्वेदं करे पञ्चशरश्चकार।
भविष्यदुद्वाहमहोत्सवस्य हस्तोदकं तज्जनयाम्बभूव ॥ ५३ ॥
तूलेन तस्यास्तुलना मृदोस्तत् कम्प्रास्तु सा मन्मथबाणपातैः।
चित्रीयितं तत्तु नलो यदुच्चैरभूत् स भूभृत् पृथुवेपथुस्तैः ॥५४॥
दृशोरपि न्यस्तमिवास्त राज्ञां रागादृहगम्बुप्रतिविम्बि माल्यम्।
नृपस्य तत्पीतवतोरिवाक्ष्णोः प्रालम्बमालम्बत युक्तमन्तः ॥५५॥

---

एतेन अस्याः स्तम्भाख्यसात्त्विक उक्तः, स्तम्भः स्यान्निष्क्रियाङ्गत्वमिति लक्षणात् ॥ ५२ ॥

अथ चतुर्भिर्नलस्यापि सात्त्विकोदयमाह। तया भैम्या न्यस्तं माल्यं स्पृशतीति तत्स्पृक्, स्पृशोऽनुदके क्विप् वा। तस्मिन् तस्य कण्ठे करे च पञ्चशरः स्मरः स्वेदं चकार जनयामासेति यत् तत् भविष्यतः उद्वाहमहोत्सवस्य सम्बन्धि हस्तोदकम् अर्घ्यं जलं जनयाम्बभूवेत्युत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या ॥ ५३ ॥

तूलेनेति। मृदोः मृद्व्याः, वोतोगुणवचनादिति विकल्पादनीकारः। तस्याः भैम्याः तूलेन कार्पासादिना तुलना साम्यं तत्तस्मात् सा भैमी मन्मथबाणपातैः कम्प्रा चला अस्तु किन्तु उच्चैः महान् भूभृत् राजा गिरिश्च, भूभृद् भूमिधरे नृप इत्यमरः। स नलः तैः बाणपातैः पृथुवेपथुः महाकम्पः, ट्वितोऽथुच्। अभूदिति यत् तत्तु चित्रीयितं चित्रीकरणं नमो वरिवश्चित्रङ् क्यच्। अस्यच्यादीतिकारः क्यजन्तात्भावे निष्ठा। अल्पवायुना तूलचलने किं चित्रं शैलचलनन्तु चित्रीयत इत्यर्थः। धीरः राजा नलोऽपि चलति भीरुर्भैमी चलतीति किं चित्रमिति भावः ॥ ५४ ॥

सात्त्विकानां सर्वरससाधारणत्वात् राज्ञां रोषादश्रूत्पन्नत्वं

स्तम्भस्तथालम्बितमां नलेन भैमीकरस्पर्शमुदः प्रभावः ।
कन्दर्पलक्षीकरणार्पितस्य स्तम्भस्य दम्भं स चिरं यथाऽऽपत् ॥५६

नलस्य हर्षादित्येवं स्थिते तदाश्रित्य उभयत्र उत्प्रेक्षते दृशो-रिति। राज्ञां रागात् मात्सर्य्यात् यत् दृगम्बु वाष्पः, रागोऽनु-रक्तौ मात्सर्य्ये इति विश्वः। सापेक्षत्वेऽपि गमकत्वात् समासः। तत्र प्रतिविम्बते प्रतिफलतीति तत् प्रतिविम्बि माल्यं संवरण-स्रक् दृशोः अक्ष्णोरपि न्यस्तमिव आस्त स्थितमित्युत्प्रेक्षा। आसेर्लङ्। अपि सम्भावनायां, यथोरसि तथा दृशोरपि न्यस्त किमित्यर्थः नृपस्य नलस्य तु तन्माल्यं कण्ठे अनुरागोत्थाश्रु-प्रतिविम्बितम् अक्ष्णोः पीतवतोः तृष्णया तन्माल्यं गिलतोरिव सतोः प्रालम्बं सत् प्रालम्बं ऋजुलम्बि स्यात्कण्ठादित्यमरः। अन्तः मध्ये तथा प्रान्ते स्वीकारेऽपि च दृश्यते इति विश्वः। युक्तम् आलम्बत अवलम्बते स्म अत्रापि राज्ञां द्वेषात् अरुच्या तत् प्रतिविम्बि माल्यं युक्तम् अचिगतमेव कृतमित्युत्प्रेक्षा। नलस्य तु रागातिरेकात् अक्षिभ्यां तत् तृष्णया पीतमित्युत्प्रेक्षितस्यैव वाह्यविम्बमाल्याध्यवसायभेदेन मध्ये प्रालम्बितया लम्बन-मित्युत्प्रेक्षते ॥ ५५ ॥

स्तम्भ इति। नलेन भैमीकरस्पर्शेन या मुत् आनन्दः तस्याः प्रभावः तदनुभाव इत्यर्थः। स्तम्भः निष्क्रियाङ्गत्व-लक्षणः सात्त्विकविशेषः सोऽपि तथा तेन प्रकारेण आलम्बित-माम् अतिशयेन आलम्बि, लम्बेः कर्मणि लुङ्। चिणि विभावा चिण्णमुलोरिति विकल्पान्नुमागमः, तिङ् धाटा मुप्रत्ययः। यथा स नलः कन्दर्पस्य लक्षीकरणाय अर्पितस्य शराभ्यासकाले शरव्यत्वेन स्थापितस्य स्तम्भस्य स्थूणायाः-स्तम्भस्थूणा जड़ीभावावित्यमरः। दम्भं व्याजत्वं भावप्रधानो

उत्सृज्य साम्राज्यमिवाथ भिक्षां तारुण्यमुल्लङ्घ्य जरामिवारात्।
तं चारुमाकारमुपेक्ष्य यातुं निजां तनूमादधिरे दिगिन्द्राः॥५७॥
मायानलत्वं त्यजतो निलीनैः पूर्वैरहंपूर्विकया मघोनः।
भीमोद्भवासात्त्विकभावशोभादिदृक्षयेवाविरभावि नेत्रैः॥५८॥
गोत्रानुकूलप्रभवे विवाहे तत्रातिकूल्यादिव गोत्रशत्रुः।

---

निर्देशः, व्याजदम्भोपधय इत्यमरः। चिरम् आपत् प्रापत्॥ ५६ ॥

उत्सृज्येति। अथ दिगिन्द्राः इन्द्रादिदिक्पालाः यातुं गन्तुं सम्राजतीति सम्राट् महाराजविशेषः। येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः। शास्ति यश्चाज्ञया राज्ञः स सम्राडित्यमरः। सत्सूद्विषेत्यादिना क्विप्, मो राजसमः क्वादिति समो मकारस्य मकारान्नानुस्वारः। तस्य भावः कर्म वा साम्राज्यं तत् उत्सृज्य भिक्षां याच्ञामिव तारुण्यं यौवनम् उल्लङ्घ्य जरामिव आरात् समीपे तत्रैवेत्यर्थः तं चारुं सुन्दरम् आकारं नलरूपम् उपेक्ष्य हित्वा निजां तनूम् आकारम् आदधिरे स्वीचक्रुः॥ ५७ ॥

मायेति। मायानलत्वं त्यजतो मघोनः इन्द्रस्य निलीनैः निगूढैः पूर्वैः प्राचीनैः नेत्रैः भीमोद्भवायाः भैम्याः सात्त्विकभावानां शोभायाः दिदृक्षया द्रष्टुमिच्छयैवेति फलोत्प्रेक्षा द्योत्या आविर्भावफलत्वाच्छोभादर्शनस्य। अहं पूर्वोऽहं पूर्व इति योऽभिमानः क्रियायां साऽहंपूर्विका मयूरव्यंसकादित्वात् समासः। स्वार्थे मत्वर्थे वा ठन्प्रत्ययः। आविरभावि आविर्भूतं, भावे लुङ्। स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्यवेपथू। अश्रु वैस्वर्य्यमित्यष्टौ सात्त्विकाः परिकीर्त्तिताः॥ ५८ ॥

गोत्रेति। गोत्रानुकूल्यप्रभवे कुलानुकूल्यप्रवृत्ते विवाहे

पुरश्चकार प्रवरं वरं यमायन् सखायं ददृशे तया सः ॥ ५८ ॥
स्वकामसम्मोहमहान्धकारनिर्वापमिच्छन्निव दीपिकाभिः ।
उद्गत्वरीभिः स्फुरितं वितेने निजं वपुर्वायुसखः शिखाभिः ॥ ६० ॥
पत्यौ वृते भीमजया न वह्निर्वह्निः स्वमङ्काय निजुह्नुवे यः ।
जनादपत्रप्य स ह्रा सहायस्तस्य प्रकाशोऽभवदप्रकाशः ॥ ६१ ॥

---

गोत्रशत्रुर्गोत्रं कुलस्याचलस्य गोत्रं नाम्नि कुलेऽचल इति विश्वः । तच्छत्रुः इन्द्रः तत् प्रातिकूल्यात् गोत्रशत्रुत्वादिव न हि यो यस्य शत्रुः स तदनुकूलकार्य्यं सहते इति भावः । अतः आयन् स्वयंवरार्थमागच्छन्, इणो लटः शतरि णादेशः । प्रवरं श्रेष्ठं यं वरं वोढारमेव सखायं पुरश्चकार दूत्ये न सहायत्वेन स्वीचकारेत्यर्थः स एव तया भैम्या ददृशे न सहसाक्ष इत्यर्थः । केचित्तु प्रवरनामा कश्चिदिन्द्रेण सहायत्वेनानीत इति व्याचक्षते तत्तु अमूलं चिन्त्यं भारतादिषु अदर्शनादिति ॥ ५८ ॥

स्वेति । अथ वायुसखः अग्निः दीपिकाभिः दीपैः स्वः स्वीयः कामेन संमोहः अज्ञानमेव महान्धकारः तस्य निर्वापं प्रशान्तिम् इच्छन्निव उद्गत्वरीभिः उद्गमनशीलाभिः, गत्वरश्चेति करवन्तो निपातः । शिखाभिः ज्वालाभिः स्फुरितं व्याप्तं निजं वपुः वितेने प्रकाशयामास ॥ ६० ॥

पत्याविति । यः प्रकाशः पत्यौ स्वामिनि वह्नौ भीमजया भैम्या न वृते अनावृते सति जनात् अपत्रप्य लज्जित्वा, लज्जा सापत्रपान्यत इत्यमरः । जुगुप्साविरामप्रमदार्थानामुपसङ्ख्यानात्पञ्चमी । अङ्काय शीघ्रम् अङ्का करणेन स्वं निजम् आत्मस्वरूपञ्च निजुह्नुवे अपह्नुतवान् अहनि वह्नेरप्रकाशादिति भावः । ह्नुतेः कर्त्तरि लिट् । तस्य वह्नेः सहायः अनुचरः सः

सदण्डमालक्तकनेत्रचण्डं तमःकिरं कायमधत्त कालः ।
तत्कालमन्तःकरणं नृपाणामध्यासितुं कोप इवोपपन्नः ॥६२॥
दृग्गोचरोऽभूदथ चित्रगुप्तः कायस्थ उच्चैर्गुण एतदीयः ।
ऊर्द्धं तु पत्रस्य मषीद एको मषेर्दधत्रोपरि पत्रमन्यः ॥ ६३ ॥

---

अप्रकाशः अनुज्ज्वलः अभवत् हा कष्टं प्रयासवैयर्थ्यात् अग्निः अपत्रपया अत्र निस्तेजा एवासीदित्यर्थः ॥ ६१ ॥

सदण्डमिति । अथ कालः यमः तत्कालं तस्मिन् स्वयंवरकाले, अत्यन्तसंयोगे द्वितीया । नृपाणाम् अन्तःकरणम् अध्यासितुम् अधिष्ठातुम् उपपन्नः उपागतः कोपः दमयन्त्यनादरोत्थक्रोधः इव सदण्डं दण्डहस्तम् आलक्तके रक्ते, तेन रक्तं रागादित्यण्प्रत्ययः । कषायौ गर्दभस्य कर्णावितिवदलक्तके इत्युपमानाप्रयोगः । ताभ्यां नेत्राभ्यां चण्डं क्रूरं किरतीति किरः, इगुपधज्ञाप्रीकिरः कः । तमसः किरः तं तमःश्यामं कायं देहम् अधत्त कालोऽपि स्वरूपं प्रादर्शयदित्यर्थः ॥ ६२ ॥

दृगिति । अथ एतदीयः कालसम्बन्धी उच्चैः महान् गुणः प्रधानं शेषभूतः चित्रगुप्तः चित्रगुप्ताख्यः कायस्थः लेखको जातिविशेषः दृग्गोचरः दृश्यः अभूत्, लेखकः स्याल्लिपिकरः कायस्थोऽक्षरजीविक इति हलायुधः । अन्यत्र चित्रं यथा तथा पूर्वं निगूहितः कायस्थः कार्यनिष्ठः एतदीयः कालसम्बन्धी उच्चैः महान् गुणः नीलगुणः दृग्गोचरः अभूत् एकः चस्त्वर्थः चित्रगुप्तनीलगुणयोः एकः चित्रगुप्तस्तु पत्रस्य ऊर्ध्वम् उपरितले मषिं ददातीति मषीदः मषीमयलिपिकरः लेखक इत्यर्थः । अन्यस्तु पूर्ववच्चार्थः अन्यः नीलगुणस्तु मषेः मषिद्रव्यस्य उपरि, कृदिकारादक्तिनो वेति ईकारविकल्पादुभयथा प्रयोगः । पत्रं पत्रालम्बनं दधत् दधानः अभूत् मषितोऽपि-

तस्यां मनोबन्धविमोचनस्य कृतस्य तत्कालमिव प्रचेताः।
पाशं दधानः करबद्धवासं विभुर्बभावाप्यमवाप्य देहम्॥ ६४॥
सहद्वितीयः स्त्रियमभ्युपेयादेवं स दुर्बुध्य नयोपदेशम्।
अन्यां सभार्य्यः कथमृच्छतीति जलाधिपोऽभूदसहाय एव॥६५॥

---

कोऽयं नीलिमेत्यर्थः। नाभ्यस्ताच्छतुरिति नुमभावः। अत्र मषेरुपरि पत्रमिति प्रतीतेराभासीकरणात् विरोधाभासोऽलङ्कारः॥ ६३॥

तस्यामिति। तस्यां दमयन्त्यां विषये तस्मिन् काले तत्कालं नलवरणकाले इत्यर्थः। अत्यन्तसंयोगे द्वितीया। कृतस्य मनोबन्धविमोचनस्य एतत्प्रतियोगिसम्बन्धमिव स्थितमित्यर्थः उत्प्रेक्षा। करे बद्धवासं कृतस्थितिं करगतं पाशं बन्धनरज्जुं दधानः विभुः प्रभुः प्रचेताः वरुणः अपां विकारम् आप्यम् अम्मयम् आप्यस्वेति चान्द्रव्याकरणसूत्रात् साधुः। देहम् अवाप्य बभौ॥ ६४॥

सहेति। जलाधिपः अपां पतिः, लड़योरभेदात् जड़ाधिपः मूढाग्रणीश्च स वरुणः स्त्रियं कान्तामपि द्वितीयेन सह वर्त्तते इति सहद्वितीयः ससहाय एव, तेन सहेति तुल्ययोग इति बहुव्रीहिः वोपसर्जनस्येति विकल्पाच्च सहस्य सभावः। उपेयात् इत्येव नयोपदेशं नीतिवाक्यम् अन्यां स्त्र्यन्तरं सभार्य्यः सस्त्रीकः सन् कथम् ऋच्छति गच्छेत् इत्येवं [illegible]ध्य विपरीतं बुद्धा, समासात् क्लोत्ववादेशः। असहायः एव अभूत् अस्त्रीकः एव अभूदित्यर्थः। दमयन्तीलोभात् सर्वत्र ससहाय एवोपेयादिति नीतिमप्युल्लङ्घ्य सदारागादरे सम्प्रति सापि दुर्लभेत्यहो वरुणस्य दुर्बुद्धिरिति भावः॥ ६५॥

देव्यापि दिव्यां नु तनुः प्रकाशीचक्रे मुदश्चक्रभृतः सृजन्ती ।
अनिङ्गितैस्तामवधार्य्य चिह्नैस्तदाचि बाला शिथिलाङ्गताऽभूत्
॥ ६६ ॥
विलोकके नायकमेलकेऽस्मिन् रूपान्यथाकौतुकदर्शिभिस्तैः ।
बाधा यतेन्द्रादिभिरिन्द्रजालविद्याविदां वृत्तिवधात् व्यधायि ६७
विलोक्य तावासदुरापकामौ परस्परप्रेमरसाभिरामौ ।
अथ प्रभुः प्रीतमना बभाषे जाम्बूनदीवीधरसार्वभौमः ॥६८॥

---

देव्येति। अथ देव्या सरस्वत्यापि चक्रभृतः गगनगतस्य विष्णोरपि मुदः हर्षान् सृजन्ती दिव्यां स्वतनुं प्रकाशीचक्रे मानुषीवेषमुत्सृज्य निजरूपमाविश्चकारेत्यर्थः। तदा बाला दमयन्ती अनिङ्गितैः प्रकाशितैः चिह्नैः वीणांशुकपुस्तकादिभिः तां सरस्वतीम् अवधार्य्य सम्यक् निर्वर्ण्य निश्चित्य तस्याः वाचि वागुपन्यासे शिथिलाङ्गता कियदेतस्या भगवत्याः सरस्वत्या इति शिथिलितविस्मया बभूत् ॥ ६६ ॥

विलोकके इति। विलोकके विलोकनकारिणि अस्मिन् नायकमेलके पुरोवर्त्तिनृपतिसमूहे रूपान्यथा रूपनानात्वं सैव कौतुकं विनोदः तद्दर्शिभिः तत्प्रदर्शकैः, दृशेर्ण्यन्तात्ताच्छील्ये णिनिः। तैः इन्द्रादिभिः इन्द्रजालविद्याविदाम् ऐन्द्रजालिकानां वृत्तिवधात् जीविकाच्छेदात् हेतोः बाधा पीड़ा व्यधायि विहिता, वतेति खेदे, एतन्महेन्द्रजालाद्भुतावलोकिनाम् राज्ञाम् इन्द्रजालान्तरेषु अरुच्या तदुपजीविनां तेषां वृत्तिविच्छेदः प्राप्त इत्यहो सेयं देवमायेति भावः ॥ ६७ ॥

विलोक्येति। अथ साक्षात्कारानन्तरं जाम्बुनदीवीधरस्य हेमाद्रिसम्बन्धिन्याः सर्वस्याः भूमेः ईश्वरः सार्वभौमः सर्वा-

वैदर्भि ! दत्तस्तव तावदेष वरो दुरापः पृथिवीश एव ।
दूत्यं तु यत्त्वं कृतवानमायं नल ! प्रसादस्त्वयि तन्मयायम् ॥६९॥
प्रत्यक्षलक्ष्यामवलम्ब्य मूर्त्तिं हुतानि यज्ञेषु तवोपभोक्ष्ये ।
संशेरतेऽस्माभिरवीक्ष्य भुक्तं मखं हि मन्त्राधिकदेवभावे ॥७०॥
भवानपि त्वद्दयितापि शेषे सायुज्यमासादयतं शिवाभ्याम् ।

---

ष्यञः, सर्वभूमिपृथिवीभ्यामणञावित्यप्रत्ययः, अनुशतिकादीनां चेत्युभयपदवृद्धिः । प्रभुः महेन्द्रः आप्तदुरापकामौ प्राप्तदुर्लभमनोरथौ परस्परप्रेमा अन्योन्यानुरागः स एव रसः तेन अभिरामौ अन्यथा रसाभावादिति भावः । तौ दमयन्तीनलौ विलोक्य प्रीतमनाः सन्तुष्टचित्तः सन् बभाषे ॥ ६८ ॥

तावभाषतेत्युक्तं तत्र वैदर्भीं तावदाह वैदर्भीति । हे वैदर्भि ! तव तावत् एषः पृथिवीशः नलः एव दुरापः अस्मदनुग्रहं विना दुर्लभः वरः दत्तः आपाततस्तावदेष वरः उभयसाधारण्येन तु वरान्तरञ्च भविष्यतीति भावः । नलञ्चाह । हे नल ! त्वं तु अमायम् अकपटं दूत्यं दूतकर्म दूतस्य भावः कर्मणीति यत्प्रत्ययः । कृतवान् इति यत् तत् तस्मात् त्वयि विषये मया अयं वक्ष्यमाणः प्रसादः वरः दत्तः ॥ ६९ ॥

प्रत्यक्षेति । हे नल ! तव यज्ञेषु प्रत्यक्षेण लक्ष्यां दृश्यां मूर्त्तिं विग्रहम् अवलम्ब्य इह हुतानि हवींषि उपभोक्ष्ये अनुभोक्ष्ये, प्रोपाभ्यां भुजेरित्यात्मनेपदम् । तथाहि, अस्माभिः भुक्तं मखं यज्ञम् अवीक्ष्य प्रत्यक्षेण अदृष्ट्वा मन्त्राधिकदेवभावे शब्दातिरिक्तदेवसद्भावे संशेरते सन्दिहते । अशरीरा देवतेति मीमांसकाः । तत्सन्देहनिवृत्त्यर्थं ते विग्रहं दर्शयिष्यामीत्यर्थः ॥ ७० ॥

अथोभयसाधारणं वरमाह भवानिति । भवानपि त्वञ्च

प्रेत्यास्मि कीदृक् भवितेति चिन्ता सन्तापमन्तस्तनुते हि जन्तोः ॥ ७१ ॥

तवोपवाराणसि नामचिह्नं वासाय पारेऽसि पुरं पुरास्ते।
निर्यातुमिच्छोरपि तत्र भैमीसम्भोगसङ्कोचभियाधिकाशि ॥७२॥

धूमावलिश्मश्रु ततः सुपर्वा मुखं मखास्वादविदां तमूचे।
कामं मदोच्चामयकामधेनोः पयायतामभ्युदयस्त्वदीयः ॥७३॥

---

*त्वद्दयितापि च ते च शेषे आयुरवसाने शिवा च शिवश्च ताभ्यां* शिवाभ्यां पार्वतीपरमेश्वराभ्यां सह, पुमान्स्त्रियेत्येकशेषः। सयुजो भावः सायुज्यं तादात्म्यम् आसादयतं प्राप्नुतम्। आमुष्मिकफलोक्तौ कारणमाह—प्रेत्य लोकान्तरं गत्वा कीदृक् भविता कीदृशो भविष्यामीति चिन्ता जन्तोः अन्तः अन्तरङ्ग सन्तापं तनुते, तन्नि[illegible]यर्थेयमुक्तिरित्यर्थः ॥ ७१ ॥

तवेति। किञ्च, तव वासाय निवासाय उपवाराणसि वाराणस्याः समीपे, अव्ययं विभक्तीत्यादिना अव्ययीभावः। असिनाम नदी तस्याः पारे पारे मध्ये षष्ठ्या वेत्यव्ययी भावः। नाम चिह्नं त्वन्नामाङ्कितं पुरं नलपुरं पुरास्ते आसिष्यते भविष्यतीत्यर्थः आसि भविष्यदर्थे यावत् पुरानिपातयोर्लट्। तत् पुरं निर्यातु मोक्तुमिच्छोः मुमुक्षोरपि तव भैमीसम्भोगस्य सङ्कोचात् प्रतिबन्धात् भिया अधिकाशि काश्यां न भविष्यति इति शेषः। मुमुक्षुरपि त्वं यावज्जीवं भैम्या सह नलपुरे विहर, अन्ते काश्यां शिवसायुज्यम[illegible]हीत्यर्थः ॥ ७२ ॥

धूमेति। ततः इन्द्रवाक्यानन्तरं धूमावलिरेव श्मश्रूणि यस्य तत्, मखास्वादविदां मखरसज्ञानां मुखं मुखभूतः सुपर्वा देवः अग्निः, अग्निमुखा वै देवा इति श्रुतेः। तं

या दाहपाकौपयिकी तनुर्मे भूयात् त्वदिच्छावशवर्त्तिनी सा ।
तया पराभूततनोरनङ्गात् तस्याः प्रभुः सन्नधिकस्त्वमेधि ॥७४॥
अस्तु त्वया साधितमन्नमीनरसादि पीयूषरसातिशायि ।
तद्भूप ! विश्वस्तव सूपकारक्रियासु कौतूहलशालि शीलम् ॥७५॥

---

नलम् ऊचे । तदेवाह—हे नल ! त्वदीयः अभ्युदयः वृद्धिः मदीच्छामयी मद्दृष्टिरिव कामधेनुः तस्याः कामं पयायतां क्षीरायतां मत्कटाक्षमात्रेण ते सर्वार्थसिद्धिर्भविष्यतीत्यर्थः । कर्त्तुः क्यङ् सलोपश्चेति पयःशब्दादाचारार्थे क्यङ् प्रत्ययो वैभाषिकः सलोपश्च ओजसोऽप्सरसो नित्यं पयसस्तु विभाषयेति वचनात् ॥ ७३ ॥

येति । दाहः भस्मीकरणं पाकः तण्डुलविक्लेदनादि तयोः औपयिकी उपायभूता, विनयादित्वात् स्वार्थे ठकि ङीप् उपायाद् ह्रस्वत्वञ्च । ईदृशी या मे तनुः सा त्वदिच्छया वशवर्त्तिनी भूयात् । किञ्च, त्वं तस्याः तनोः प्रभुः स्वामी नियामकः सन् तया तन्वा पराभूततनोः दग्धाङ्गात् हरभ्रष्टाग्रतममूर्त्तित्वात् अस्या इति भावः । अनङ्गात् अधिकः एधि भव, न केवलं रूपादेवानङ्गादधिकः किन्तु तज्जेतुरग्नेरपि वशवर्त्तित्वेन अधिको भव इति भावः । अस्तेर्लोटि सिपि हेधिः घ्वसोरित्यादित्वम् ॥ ७४ ॥

अस्त्विति । किञ्च, हे भूप ! त्वया साधितं पक्वम् अन्नं शाल्यादि मीनेति मांसोपलक्षणं तयोः रसः स्वादः आदिः यस्य आदिशब्दात् वीर्य्यविपाकादि तत्सर्वं, पीयूषरसम् अमृतस्वादम् अतिशेते इत्यतिशायि ततोऽप्युत्कृष्टमस्तु । ईदृग्वरदाने कारणमाह तदिति । तत् प्रसिद्धं तव शीलं स्वभावं

वैवस्वतोऽपि स्वत एव देवस्तुष्टस्तमाचष्ट धराधिराजम् ।
वरप्रदानाय तवावदानैश्चिरं मदीया रसनोद्धुरेयम् ॥७६॥
सर्वाणि शस्त्राणि सहाङ्गचक्रैराविर्भवन्तु त्वयि शत्रुजैत्रे ।
अवाप्यमस्मादधिकं न किञ्चिज्जागर्त्ति वीरव्रतदीक्षितानाम्॥७७
कृच्छ्रं गतस्यापि दशाविपाकं धर्मान्न चेतः स्खलतात् तवेदम्।

सूपं सूपादिपाकं कुर्वन्तीति सूपकाराः सूदाः, सूपकारास्तु बल्लवाः आरालिका आन्धसिकाः सूदा औदनिका गुणा इत्यमरः। कर्मण्यण् । तेषां क्रियासु पाकक्रियासु सुष्ठूपकारक्रियासु च कौतूहलेन शालते इति तच्छालि उत्सुकं विद्धः अतः तवेयं सूपविद्या दत्तेत्यर्थः ॥ ७५ ॥

वैवस्वत इति । देवः वैवस्वतः यमोऽपि स्वतः एव अप्रार्थितः एव तुष्टः सन् तं धराधिराजं नलम् आचष्ट अब्रवीत् । तदेवाह—हे नृप ! तव अवदानैः अद्भुतकर्मभिः इयं मदीया रसना चिरं चिरात्प्रभृति वरप्रदानाय ऊढा धूः वरदानभारः यया सा उद्धुरा उत्सुका, ऋक्पूरित्यादिना समासान्तः ॥७६॥

सर्वाणीति । हे नल ! सर्वाणि शस्त्राणि आयुधानि अङ्गचक्रैः स्वाङ्गकलापैः सह शत्रून् जेतरि एव जैत्रे जयशीले शत्रुजैत्रे जेतृशब्दात्ताच्छील्ये तृन्नन्तात् प्रज्ञादित्वात् स्वार्थेऽण्प्रत्ययः, नलोकेत्यादिना षष्ठीप्रतिषेधात् कर्मणि द्वितीया योगविभागात् समस्यते । त्वयि विषये आविर्भवन्तु । एतावता को लाभस्तत्राह—वीरव्रतम् आहवेषु अनिवर्त्तित्वं तत्र दीक्षितानां कृतसङ्कल्पानां त्वादृशां शूराणाम् अस्मात् अस्त्रलाभात् अधिकम् उत्कृष्टम् अवाप्यं लभ्यं किञ्चित् न जागर्त्ति स्फुरति । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः॥७७॥

कृच्छ्रमिति । किञ्च, कृच्छ्रं कष्टं दशाविपाकम् अवस्था-

अमुष्वतः पुण्यमनन्यभक्तेः स्वहस्तवास्तव्य इव त्रिवर्गः ॥७८॥
स्मिताञ्चितां वाचमवोचदेनं प्रसन्नचेता नृपतिं प्रचेताः ।
प्रदाय भैमीममुना वरौ ते ददामि तद्यौतककौतुकेन ॥ ७९ ॥
यत्राभिलाषस्तव तत्र देशे नन्वस्तु धन्वन्यपि तूर्णमम्भः ।
आपो वहन्तीह हि लोकयात्रां यया न भूतानि तया धराणि ॥८०

---

परिणामं गतस्यापि दुर्दशापन्नस्यापि तव इदं चेतः धर्मात् न स्खलतात् न स्खलतु । तोस्तातङादेशः । ततः किं तत्राह—पुण्यं धर्मम् अमुञ्चतः अत्यजतः न विद्यते अन्यस्मिन् अधर्मे भक्तिः यस्य तस्य अनन्यभक्तेः अधर्मविमुखस्य त्रयाणां धर्मकामार्थानां वर्गः त्रिवर्गः, त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैरित्यमरः । स्वहस्ते वास्तव्यः वस्तेव हस्तस्थप्राय इवेत्यर्थः । वसेस्तव्यवत् कर्त्तरि णिच्च वक्तव्यम् । अत्र त्रिवर्गसिद्धिलक्षणकार्य्येण धर्मात्यागरूपकारणसमर्थनात् कार्य्येण कारणसमर्थनरूपोऽर्थान्तरन्यासः ॥ ७८ ॥

*स्मितेति ।* अथ प्रसन्नचेताः प्रचेता वरुणः एनं नृपतिं नलं स्मिताञ्चितां मन्दहासमधुरां वाचम् अवोचत् । तदेवाह—अधुना ते तुभ्यं भैमीं प्रदाय तस्मिन् प्रदाने यत् यौतकं युवयोः वधूवरयोः देयं हरणोपरागाख्यं युतकादिषु यद्देयं स दायो हरणं च तदित्यमरः । मङ्प्रत्ययः । तद्यौतककौतुकेन तद्दानोत्कण्ठया वरौ वक्ष्यमाणौ ते ददामि यौतकत्वेन दास्यामीत्यर्थः ॥ ७९ ॥

द्वावेव वरावाह यत्रेत्यादि । ननु भो नल ! यत्र देशे तव वा अभिलाषः जलेच्छा तत्र धन्वनि मरुस्थलेऽपि, समानौ मरुधन्वानावित्यमरः । तूर्णम् आशु अर्णः अम्भः अस्तु उद्ग-

प्रसारिताप: शुचिभानुनास्तु मरु: समुद्रत्वमपि प्रपद्य ।
भवन्मनस्कारलवोद्गमेन क्रमेलकानां निलय: पुरीव ॥ ८१ ॥
अम्लानिरामोदभरश्च दिव्य: पुष्पेषु भूयाद्भवदङ्गसङ्गात् ।
इष्टं प्रसूनोपमया मयाप्यत् न धर्मशर्माभयकर्मठं यत् ॥८२॥

---

वतु । अस्य वरस्य श्लाघ्यतामाह—इहलोके यथा आपः लोकस्य जनस्य यात्रां जीवनं, गमने जीवने यात्रेति वैजयन्ती । वहन्ति प्रापयन्ति तथा अपराणि अन्यानि भूतानि पृथिव्यादीनि न वहन्ति हि । यदाह वाग्भटः । पानीयं प्राणिनां प्राणा विश्वमेतच्च तन्मयमिति । अतः श्लाघ्योऽयं वर इत्यर्थः ॥ ८० ॥

प्रसारितेति । किञ्च, मरुः निर्जलस्थलं भवतः मनस्कारः चित्ताभोगः सङ्कल्पः इति यावत् अतः ककमोत्यादिना सत्वम् । तस्य लवः लेशः तस्य उद्गमे सतीति, सप्तम्यन्तच्छेदः । नक्राणां जलजन्तुविशेषाणां मेलाः एव मेलकाः सङ्घाः तेषां निलयः तथा शुचिभानुना शुभ्रांशुना चन्द्रेण प्रसारिताः संवर्धिताः आपः यस्य स प्रसारितापश्च सन्, ऋक पूरित्यादिना समासान्तः । समुद्रत्वं प्रपद्यापि सम्प्रति भवन्मनस्कारलवोद्गमेन तृतीयान्तच्छेदः त्वदिच्छाभावेनेत्यर्थः । क्रमेलकानाम् उष्ट्राणां निलयः सन्, उष्ट्रा मरुप्रिया इति प्रसिद्धिः । तथा शुचिभानुना ग्रीष्मसूर्येण, शुचिरित्यनुवृत्तौ ग्रीष्मे हुतवहेऽपि स्यादिति विश्वः । प्रसारिताप: अपसारितोदक: सन् पुरिवास्तु पूर्ववत् निर्जल एवास्त्वित्यर्थः ॥ ८१ ॥

द्वितीयं वरमाह अम्लानिरिति । हे नल ! भवतः अङ्गसङ्गात् कारस्पर्शात् एव पुष्पेषु अम्लानिः अम्लानता दिव्यः

वाग्देवतापि स्मितपूर्वमुर्वीसुपर्वराजं रभसाद्बभाषे ।
त्वत्प्रेयसीसम्मदमाचरन्त्या मत्तो न किञ्चिद् ग्रहणोचितं ते॥८३॥
अर्थो विनैवार्थनयोपसीदन्नल्पोऽपि धीरैरवधीरणीयः ।
मान्येन मन्ये विधिना वितीर्णः स प्रीतिदायो बहु मन्तुमर्हः॥८४॥

---

आमोदभरः सौरभ्यसम्पच्च भूयात्। अस्य वरस्य श्लाघ्यतामाह। यत् यस्मात् प्रसूनोपमया पुष्पसाम्येन धर्मशर्मणोः सुकृतसुखयोः उभयस्मिन् द्वये कर्मठं कर्मणि घटं कर्मक्षममित्यर्थः। कर्मशूरस्तु कर्मठ इत्यमरः। कर्मणि घटोऽठजिति ठच्प्रत्ययः। अन्यत् मया न दृष्टं सुराचंनस्योपभोगाभ्यामिहामुत्र चोपयोगाच्छ्लाघ्योऽयं वर इत्यर्थः ॥ ८२ ॥

वागिति। वाग्देवतापि स्मितपूर्वं यथा तथा उर्वीसुपर्वराजं भूदेवेन्द्रं नलं रभसात् हर्षात् बभाषे, रभसो वेगहर्षयोरिति विश्वः। अथ स्वामत्वोक्तिपूर्वकं स्वदेयस्य वरस्य अपरिज्ञाय त्वं तावत् सार्द्धस्लोकेनाह त्वदिति। त्वत्प्रेयस्याः दमयन्त्याः सम्मदं हर्षं त्वद्वरणरूपं प्रियमित्यर्थः। प्रेमसम्मदौ हर्ष इति निपातः। आचरन्त्या कुर्वन्त्या अत एव मत्तो मत् स्वस्माद्विभक्तौ पञ्चम्यर्थे तसिल्प्रत्ययः। ग्रहणोचितमासत्वं न स्वीकारार्हं ते तव किञ्चित् अथच ग्रहणोचितं ज्ञानान्तरं नास्ति अतो मद्वाक्यं ग्राह्यमित्यर्थः ॥ ८३ ॥

अर्थ इति। किञ्च, अर्थनया याच्ञया विना उपसीदन् उपनमन् अल्पः अपि अर्थः हितार्थः धीरैः प्रेक्षावद्भिः अवधीरणीयः उपेक्ष्यः न प्रत्युत मान्येन पूज्येन विधिना एव ब्रह्मणा एव वितीर्णः दत्तः दीयते इति दायः, कर्मणि घञ्प्रत्ययः। अतो युक् चिण्कृतोरिति युगागमः। प्रीत्या दायः

अवामा वामार्द्धे सकलमुभयाकारघटनाद्-
द्विधा भूतं रूपं भगवदभिधेयं भवति यत् ।
तदन्तर्मन्त्रं मे स्मर हरमयं सेन्दुममलं
निराकारं शश्वज्जप नरपते ! सिध्यतु स ते ॥ ८५ ॥

---

प्रीतिदानरूपः अधिक इत्येवं मन्तुम् अर्हः मन्ये मन्तव्य इत्यर्थः ॥ ८४ ॥

अथ परस्वरूपमेव पञ्चभिः प्रपञ्चेनाह अवामेत्यादि । हे *नरपते ! नरेन्द्र ! अर्द्धे एकभागे अवामा अस्त्री पुमानित्यर्थः । पुनः अर्द्धभागान्तरेण वामा स्त्री अत एव द्विधाभूतं* स्त्रीपुंसात्मकम् उभयाकारघटनात् उभयोः आकारयोः मेलनात् सकलं सम्पूर्णं भगवदभिधेयं भगवच्छब्दवाच्यं च यत् मे रूपं भवति विद्यते मन्त्रं मन्त्रात्मकं तद्वत् गोप्यं वा हरमयम् ईश्वरात्मकं सेन्दुम् इन्दुकलासमेतम् अमलं निर्मलं निराकारं परमार्थतः निरंशं तत् मे रूपं स्वरूपम् अन्तः अन्तःकरणे स्मर चिन्तय शश्वत् जप मन्त्रात्मकत्वात् जपरूपेण च उपास्स्व । स मन्त्रमूर्त्तिः भगवान् अर्द्धनारीश्वरः ते तव सिध्यतु प्रसीदतु फलतु इत्यर्थः । मन्त्रपक्षे तु वा औंकारेण मामकारेण प्रणवेन वामार्द्धे तथा अवामार्द्धे वोपलक्षितम् एवमुभयाकारघटनात् उभयाभ्यामाकाराभ्यां प्रणवस्वरूपाभ्यां घटनात् सम्पुटीकरणात् द्विधाभूतं द्व्याकारं सकलं समग्रं यद्रूपं भवति यत् स्वरूपं निष्पद्यते इति यत् तदेव हरमयं हकाररेफात्मकं तथा ई च इन्दुश्च ताभ्याम् ईन्दुभ्यां सह वर्त्तते इति सेन्दु तुरीयस्वरविन्दुसहितम् अमलं निर्दोषं निराकारम् अमूर्त्तिं मे मदीयं मन्त्रं प्रणवद्वयसम्पुटितह्रींकारात्मकं सारस्वतचिन्तामणिमन्त्रमित्यर्थः । तदुक्तं पारमेश्वरे, उद्धारस्तु परोक्षेण परो-

सर्वाङ्गीणरसामृतस्तिमितया वाचा स वाचस्पतिः
स स्वर्गीयमृगीदृशामपि वशीकाराय मारायते।
यस्मै यः स्पृहयत्यनेन स तदेवाप्नोति किं भूयसा
येनायं हृदये कृतः सुकृतिना मन्मन्त्रचिन्तामणिः॥ ८६॥

---

स्वप्रियता श्रुतेः। सान्तोष्ठावह्निसंयुक्तो ब्रह्मद्वितयमन्तरा तुरीयस्वरशीतांशुरेखोङ्कारसमन्वितः। एष चिन्तामणिर्ना मन्त्रः सर्वार्थसाधकः। जगन्मातुः सरस्वत्या रहस्यं परमं मत मिति। ब्रह्मद्वितयमन्तरा प्रणवद्वितयमध्य इत्यर्थः। अन रित्यादि पूर्ववत्। यन्त्रपक्षे भगवद्योनीव दृश्यं यद्रूपं त्रिको णाख्यम् उभयाकारघटनात् त्रिकोणद्वयमेलनात् षटकोण *भवति तस्य षट्कोणस्य मध्यमे मन्त्रम् अनन्तरोक्तं नरपत* इत्यादि पूर्ववत्। अत्र *देवतामन्त्रयन्त्राणां त्रयाणामपि प्रकृ*तत्वात् केवलप्रकृतश्लेषोऽलङ्कारः। शिखरिणीवृत्तम्॥८५॥

सम्प्रति श्लोकद्वयेन मन्त्रमाहात्म्यमाह सर्वाङ्गीणेत्यादि। येन सुकृतिना पुण्याधिकेन अयं पूर्वोक्तः मन्मन्त्रः एव चिन्तामणिः हृदये कृतः अनुस्मृतः सः अनुकृतः सर्वाङ्गीणेन सर्वाङ्गव्यापिना। तत्सर्वादेरित्यादिना खप्रत्ययः। रसः शृङ्गारादिः तेनैव अमृतेन स्तिमितया भरितया वाचा वाग्वैदग्ध्येन स वाचस्पतिः बृहस्पतिः तत्सदृशो भवतीत्यर्थः। कस्मात्पादलक्षे षष्ठ्याः पतिपुत्रेत्यादिना विसर्जनीयस्य सत्वमिति स्वामी तन्न छन्दोविषयत्वादिति। स्वर्गे भवाः स्व[illegible]याः वा. नामधेयस्येति वृद्धत्वाच्छप्रत्ययः। तासां मृगीदृशां स्त्रीणां वशीकाराय वशीकरणाय मारः इव आचरति मारायते न केवलं वाक्प्रदः स्त्रीवशीकरणश्चेत्यर्थः। यद्वा भूयसा बहुतरोक्तेन किं किन्तु यः यस्मै स्पृहयति यत् कामयते, स्पृहेरीप्सित इति

पुष्पैरभ्यर्च्य गन्धादिभिरपि सुभगैश्चारु हंसेन मां चेत्
निर्यान्तीं मन्त्रमूर्त्तिं जपति मयि मतिं न्यस्य मय्येव भक्तः ।
सम्प्राप्ते वत्सरान्ते शिरसि करमसौ यस्य कस्यापि धत्ते
सोऽपि श्लोकानकाण्डे रचयति रुचिरान् कौतुकं दृश्यमस्य ॥८७

गुणानामास्थानीं नृपतिलक ! नारीतिविदितां
रससफीतामन्तस्तव च तव वृत्ते च कवितुः ।
भवित्री वैदर्भीमधिकमधिकण्ठं रचयितुं
परीरम्भक्रीड़ाचरणशरणामन्वहमहम् ॥ ८८ ॥

---

सम्प्रदानत्वाच्चतुर्थी । स कामो तत्सर्वम् अनेन मन्त्रेण आप्नोति एव यतोऽयं चिन्तामणिरिति भावः ॥ ८६ ॥

*पुष्पैरिति।* किञ्च, *हंसेन* वाहनभूतेन *चारु* सम्यक् *निर्यान्तीं* सञ्चरन्तीं *मन्त्रमूर्त्तिं* मन्त्ररूपां *मां सुभगैः* मनोज्ञैः *पुष्पैः गन्धादिभिः* आदिशब्दात् धूपाद्युपचारैः *अभ्यर्च्य मयि मतिं न्यस्य* मनो निधाय *मय्येव भक्तः* सन् *जपति चेत्* तर्हि *वत्सरान्ते सम्प्राप्ते* सति *असौ* जपिता *यस्य कस्य* अनक्षरस्यापि *शिरसि करं धत्ते* निधत्ते, *सः* अनक्षरः *अपि अकाण्डे* अकस्मात् *रुचिरान् श्लोकान् रचयति अस्य* मन्त्रस्य एतत् *कौतुकम्* अद्भुतं *दृश्यं* द्रष्टव्यम् ॥ ८७ ॥

अथ श्लोकद्वयेन नलं प्रत्युपयोगविशेषमाह गुणानामित्यादि । हे *नृपतिलक* ! नृपश्रेष्ठ ! *गुणानां* रूपलावण्यादीनां श्लेषप्रसादादीनाञ्च *आस्थानीम्* आधारभूताम्, आस्थानी क्लीवमास्थानमित्यमरः । *नारी* उत्तमस्त्रीति *विदितां* विश्रुताम् अन्यत्र रीतिषु गौड़ीपाञ्चाल्यादिषु विदिता प्रसिद्धा सा न भवतीति अरीतिविदितां, नञ्समासः । सापि न भवतीति नारीतिविदितां नञर्थस्य नशब्दस्य सुप्सुपेति समासः ।

भवद्वृत्तस्तोतुर्मदुपहितकण्ठस्य कवितु-
र्मुखात् पुण्यैः श्लोकैस्त्वयि घनमुदेयं जनमुदे।
ततः पुण्यश्लोकः क्षितिभुवनलोकस्य भविता
भवानाख्यातः सन् कलिकलुषहारी हरिरिव ॥८८॥

---

तां रीतिषु विदितामित्यर्थः। अन्तः अन्तरङ्गे रसस्फीतां रागभूतां अन्यत्र शृङ्गारादिरसाढ्यां, शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रस इत्यमरः। वैदर्भीं दमयन्तीं वैदर्भरीतिं च यथासंख्यं तव च तव वृत्ते चरित्रविषये कवितुः वर्णयितुः कवेश्च कविवर्णन इति धातोस्तृच्। अधिकण्ठं कण्ठे, विभक्त्यर्थेऽव्ययीभावः। परिरम्भक्रीड़ाचरणम् आलिङ्गनविनोदाचरणमेव शरणं प्राणत्राणं यस्याः तां तदेकजीविताम् अन्वहम् अनुदिनं, याथार्थ्येऽव्ययीभावः, नपुंसकादन्यतरस्यामिति समासान्तष्टच्, अह्नष्टखोरेवेति टिलोपः। अधिकम् अत्यर्थं रचयितुं कर्त्तुम् अहं भवित्री भविष्यामीत्यर्थः॥ ८८ ॥

भवदिति। किञ्च, हे नल! भवतः वृत्तस्य चरित्रस्य स्तोतुः स्तावकस्य मया उपहतकण्ठस्य अधिष्ठितकण्ठनालस्य कवितुः कवेः मुखात् त्वयि विषये पुण्यैः पवित्रैः चारुभिर्वा, पुण्यं तु चारावपीत्यमरः। श्लोकैः पद्यैः जनमुदे घनं निरन्तरम् उदेयम् उदेतव्यम् उदेयतामित्यर्थः। एतेः क्यपो यत्प्रत्ययः। ततः को मे लाभस्तत्राह तत इति। ततः श्लोकोदयात् पुण्यश्लोकः पुण्यकीर्त्तिः भवान् आख्यातः कीर्त्तितः सन् हरिः जनार्दनः इव क्षितिभुवनलोकस्य भूलोकस्य कलिकलुषहारी कलिकालकल्मषनाशनः भविता भविष्यति, भवतेर्लुटि शेषे प्रथमः। अत्राहुः, पुण्यश्लोको नलो राजा पुण्यश्लोको युधिष्ठिरः। पुण्यश्लोका च वैदेही पुण्यश्लोको जनार्दनः॥

देवी च ते च जगदुर्जगदुत्तमाङ्ग-
रत्नाय ते कथय कं वितराम कामम् ।
किञ्चित्त्वया न हि पतिव्रतया दुरापं
भस्मास्तु यस्तव वत व्रतलोपमिच्छुः ॥ ९० ॥

कूटकायमपहाय नो वपु-
र्बिभ्रतस्त्वमसि वीक्ष्य विस्मिता ।
आमुमाकृतिमतो मनीषितां
विद्यया हृदि तवाप्युदीयताम् ॥९१॥

---

कर्कोटकस्य नागस्य दमयन्त्या नलस्य च । ऋतुपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनमिति ॥ ८९ ॥

अथ ते सर्वे दमयन्तीं प्रति आहुः देवीति । देवी सरस्वती च ते देवाश्च जगदुः जगदुत्तमाङ्गरत्नाय त्रैलोक्यशिरोमणये, उत्तमाङ्गं शिरः शीर्षमित्यमरः । ते तुभ्यं कं काम्यते इति कामम् ईप्सितं, कर्मणि घञ् । वितराम प्रयच्छाम, सम्प्रश्ने लोट् । कथय । पत्यौ व्रतं नियमः अस्खालित्वं यस्याः तया त्वया दुरापं दुष्प्रापं नास्ति पातिव्रत्यतेजसोऽप्रतिहतशक्तिकत्वादिति भावः । तथापि यः पापी तव पत्यौ व्रतम् अस्खालित्वं तस्य लोपं नाशमिच्छुः अभिलाषुकः विन्दरिच्छुरित्युप्रत्ययान्तो निपातः, न लोकेत्यादिना षष्ठीप्रतिषेधात् कर्मणि द्वितीया । स पापी भस्मास्तु तथाचास्मद्वरप्रसादादेव तत्प्रतीकारात् तव ततो व्ययो न भविष्यतीति भावः । एतच्चोत्तरत्र वनवासे अजगरग्रस्तां दमयन्तीमजगरादुन्मोच्य पुनस्तां कामयमानस्य पापिष्ठस्य व्याधस्य बधे फलिष्यतीति भारती कथा अत्र अनुसन्धेया ॥ ९० ॥

अथ वरान्तरञ्च कूटेति । कूटकायं कपटदेहं नलाकारम्

इत्थं वितीर्य्य वरमम्बरमाश्रयत्सु
तेषु क्षणादुदलसद्विपुलः प्रणादः ।
उत्तिष्ठतां परिजनालपनैर्नृपाणां
स्वर्वासिवृन्दहतदुन्दुभिनादसान्द्रः ॥ ८२ ॥

न दोषं विद्वेषादपि निरवकाशं गुणमये
वरेण प्राप्तास्ते न समरसमारम्भसदृशम् ।
जगुः पुण्यश्लोकं प्रति नृपतयः किन्तु विदधुः
स्वनिःश्वासैर्भैमीहृदयमुदयन्निर्भरदयम् ॥ ८३ ॥

---

अपहाय वपुः निजविग्रहं बिभ्रतः बिभ्राणान् नः अस्मान् वीक्ष्य त्वं विस्मिता विस्मयाविष्टा तेन तत्कामात्त्वमिति प्रतिभासीति भावः । अतः हेतोः मनीषिताम् अभिलषिताम् आकृतिं शरीरम् आसु तवापि हृदि हृदये विद्यया कामरूपसम्पादकविद्यया उदीयताम् उद्भूयताम्, उत्पूर्वादिणो भावे लोट् ॥ ८१ ॥

इत्थमिति । तेषु देवेषु इत्थं वरं वितीर्य्य दत्त्वा अम्बरम् आकाशम् आश्रयत्सु सत्सु उत्तिष्ठताम् आसनेभ्यः उज्ज्वलतां नृपाणां प्रणादः हर्षोत्थध्वनिः, प्रणादस्तु शब्दः स्यादनुरागज इत्यमरः । परिजनानाम् आलापनैः आभाषणैः विपुलः सन् तथा स्वर्वासिनां दिव्यजनानां वृन्देन हतानां ताड़ितानां दुन्दुभीनां नादेन सान्द्रः घनः सन् क्षणात् उदलसत् उत्थितः ॥ ८२ ॥

नेति । प्राप्ताः स्वयंवरागताः ते नृपतयः गुणमये गुणैकनिलये नले निरवकाशं दोषं विद्वेषात् अपि द्वेषे सति अपीत्यर्थः। न जगुः न उद्घाटयामासुः, तादृशगुणसम्पत्तेः अदोषता चास्येति भावः । किञ्च, वरेण शचीदत्तेन हेतुना पुण्यश्लोकं

भूभृद्भिर्लम्भितासौ करुणरसनदीमूर्त्तिमद्दैवतात्वम्
तातेनाभ्यर्थ्य योग्याः सपदि निजसखीर्दापयामास तेभ्यः ।
वैदर्भ्यास्तेऽप्यलाभात् कृतगमनमनःप्राणवाञ्छा निजघ्नुः
सख्याः संग्रिह्य विद्यां सततधृतवयस्यानुकाराभिराभिः ॥८४॥
अहह सह मघोना श्रीप्रतिष्ठासमाने
निलयमभि नलेऽथ स्वप्रतिष्ठासमाने ।

---

नलं प्रति समरसमारम्भस्य युद्धोद्योगस्य सदृशम् अनुकूलञ्च किञ्चित् न जगुः नोचुः, गैशब्दे इति धातोर्लिट् । सान्नि-ध्ययोगात् किल, तत्र अस्याः स्वयंवरचोभकृतामभाव इति भावः । किन्तु स्वनिःश्वासैः दुःखोत्थैः निश्वासैः भैमीहृदयं दमयन्तोचेतः, उदयन्ती निर्भरा अतिमात्रा दया यस्य तत् तथाभूतं विदधुः तद्दुःखं विदधुः चक्रुः स्वावरणदुःखितान् राज्ञो दृष्ट्वा तद्दुःखग्रहणेच्छुरासीदित्यर्थः ॥ ८३ ॥

भूभृद्भिरिति । असौ दमयन्ती भूभृद्भिः भूपालैः करुणस्य रसनद्याः करुणस्य रसप्रवाहस्य मूर्त्तिमत् देवतात्वम् अधि-दैवतात्वं लम्भिता प्रापिता सती स्वदुःखेन दुःखाकृता सती-त्यर्थः सपदि योग्याः राजार्हा निजसखीःतेभ्यः भूभृद्भ्यः, सम्प्र-दाने चतुर्थी । तेन पित्रा भीमेन अभ्यर्थ्य सम्प्रार्थ्य दापया-मास, ते भूभृतोऽपि वैदर्भ्याः अलाभात् हेतोः कृतं गमनं निष्क्रमणेच्छा यैः तेषां मनःप्राणानां वाञ्छां निष्क्रमणेच्छा-कर्माणि सख्याः भैम्याः आख्यातोपयोग इति अपादानत्वात् पञ्चमी । विद्यां कामरूपधारणविद्याम् इन्द्राद्युक्तां संगृह्य अभ्यस्य सततं नित्यं धृतः वयस्यानुकारः भैमीसादृश्यं याभिः ताभिः आभिः सखीभिः साधनैः निजघ्नुः अन्यथापि सद्यो म्रियेरन्निति अहो दमयन्त्या दयालुत्वमौचित्यञ्चेति भावः॥८४॥

अपतदमरभर्त्तुर्मूर्त्तिबद्धेव कीर्त्ति-
र्गलदलिमधुबाष्पा पुष्पवृष्टिर्नभस्तः ॥ ८५ ॥
स्वस्यामरैर्नृपतिमंशममुं त्यजद्भि-
रंशच्छिदाकदनमेव तदाध्यगामि ।
उत्का स्म पश्यति निवृत्त्य निवृत्त्य यान्ती
वाग्देवतापि निजविभ्रमधाम भैमीम् ॥८६॥

---

अहहेति। अथेन्द्रप्रस्थानानन्तरं मघोना इन्द्रेण सह श्रीप्रतिष्ठया समा सीम्ना समाने सदृशे नले स्वं निलयम् अभि शिविरं प्रति, अभिरभागे इति लक्षणार्थे कर्मप्रवचनीयत्वा-त्तद्योगे द्वितीया। प्रतिष्ठासमाने प्रस्थातुम् इच्छति सति, प्रपूर्वात् तिष्ठतेः सनन्ताल्लटः शानजादेशः, समवप्रविभ्य इत्या-त्मनेपदत्वात् पूर्ववत्सन इत्यात्मनेपदम्। गलन् स्रवन् अलियुक्तं मधु मकरन्दः एव बाष्पः अश्रु यस्याः सा साञ्जनबाष्पयुक्ता इत्यर्थः। मूर्त्तिर्बद्धा बद्धमूर्त्तिः मूर्त्तिमतीत्यर्थः, वाहिता-ग्न्यादिष्विति निष्ठायाः परनिपातः। अमरभर्त्तुः इन्द्रस्य *कीर्त्तिः इव पुष्पवृष्टिः नभस्तः नभसः, पञ्चम्यास्तसिल्।* अपतत् पतिता, अहह इत्यद्भुते स्वामिदुर्व्यसनदुःखाद् भ्रश्यति इति कीर्त्तिरिव स्थितेत्युत्प्रेक्षा ॥ ८५ ॥

स्वस्येति। स्वस्य आत्मनः अंशम् अंशसम्भवं तम्, अष्टा-भिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृप इति स्मरणात्। अमुं नृपतिं नलं त्यजद्भिः अमरैः इन्द्रादिभिः अंशच्छिदा अवयव-च्छेदः, षिद्भिदादिभ्योऽङ्। तया यत् कदनं दुःखं तदेव तदा अध्यगामि अधिगतम्। स्वान्तोद्भूतजनवियोगः स्वावयवच्छेदात् भवतीति भावः। किञ्च, वाग्देवता सरस्वती अपि निजम् आत्मीयं विभ्रमधाम विहारभवनं यान्ती उत्का उन्मनाः उत्-

सानन्दं तनुजाविवाहनमहे भीमः स भूमीपति-
र्वैदर्भीनिषधाधिपौ नृपजनानिष्टोक्तिसंमृष्टये ।
स्थानि स्थानि धराधिपाश्च शिबिराण्युद्दिश्य यान्तः क्रमा-
देको द्वौ बहवश्चकार सृजतः स्मातेनिरे मङ्गलम् ॥९७॥
श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतम्
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
यातस्तस्य चतुर्दशः शरदिजज्योत्स्नाच्छसूक्तेर्महा-
काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥९८॥

---

सुका सती, उत्क उन्मना इति निपातः । भैमीं निवृत्त्य निवृत्त्य पुनः पुनः परावृत्त्य पश्यति स्म, सम्भर्त्तुं भृशमरतिं सुहृद्वियोग इति भावः ॥ ९६ ॥

सानन्दमिति । तत्र तस्मिन् तनयायाः दुहितुः दमयन्त्याः विवाहनं परिणयनं, विपूर्वाद् वहतेर्ण्यन्ताद्भावे ल्युट् । तदेव महः उत्सवः तस्मिन् स भीमो भूमीपतिः भूपतिः तथा वैदर्भीनिषधेश्वरौ दमयन्तीनलौ तथा स्थानि स्थानि शिबिराणि *उद्दिश्य यान्तः धराधिपाः एकः द्वौ बहवः एते त्रितयेऽपि नृपाणां ये जनाः परिजनाः तेषां या अनिष्टोक्तिः अश्लील-*वाक्यानि तासां संमृष्टये तद्दोषपरिहाराय मङ्गलं नगरसंस्कारेष्टदेवतानुस्मरणतूर्य्यघोषादिमङ्गलाचरणं क्रमात् एकः भीमः चकार द्वौ दमयन्तीनलौ सृजतः स्म असृजतां चक्रतुः इति आतेनिरे बहवो धराधिपाश्चक्रुरित्यर्थः । क्रमालङ्कारः ॥९७॥

श्रीहर्षमिति । शरदि भवा शरदिजा, सप्तम्यां जनेर्डः । प्रावृट्शरत्कालादिवाञ्ज इति सप्तम्या अलुक् । सा च सा ज्योत्स्ना तद्वदच्छा मृष्टाः सूक्तयः यस्य तस्य सः । गतमन्यत् ॥ ९८ ॥

# पञ्चदशः सर्गः ।



अथोपकार्य्यां निषधावनीपतिर्निजामयासीद्वरणस्रजान्वितः ।
वसूनि वर्षन् सुबहूनि वन्दिनां विशिष्य भैमीगुणकीर्त्तनाकृत ॥ १

तया पथि त्यागमयं वितीर्णवान् यथाऽतिभाराधिगमेन मागधैः
तृणीकृतं रत्ननिकायमुच्चकैश्चिकाय लोकश्चिरमुञ्छमुत्सुकः ॥२॥

---

अथेति। अथ स्वयंवरानन्तरं निषधावनीपतिः नलः वरणस्रजा अन्वितः सन् वन्दिनां स्तुतिपाठकानां तत्रापि भैमीगुणकीर्त्तनां कुर्वन्तीति तत्कृतां तत्कारिणां क्विप्। विशिष्य अतिशय्य बहूनि भूयिष्ठानि वसूनि धनानि वर्षन् निजाम् आत्मीयाम् उपकार्य्याम् उपकारिकां शिविरम् अयासीत् अगमत्, यातेर्लुङि यमरमनमातां सक् चेति सगितागमो अस्ति सिचो व्यक्त इतोड़ागमः ॥ १ ॥

तयेति। अयं नलः तया तेन प्रकारेण पथि स्वनिवेशमार्गे त्यज्यते इति त्यागं धनं, कर्मणि घञ्। वितीर्णवान् दत्तवान् यथा येन प्रकारेण अतिभारस्य अतिगुरुत्वस्य अधिगमेन प्राप्त्या मागधैः वन्दिभिः तृणीकृतं तृणव[illegible] त्यक्तम् उच्चकैः उच्छ्रितं रत्नानां निकायं समूहं लोकः जनः उत्सुकः सन् चिरं बहुकालम् उञ्छं चिकाय उञ्छत्वेन सञ्चितवान्, विभाषा चेति कुत्वम् उञ्छो धान्यत आदानं कणिकाद्यर्जनं शीलमिति च यादवः ॥ २ ॥

त्रपाय न स्यात्सदसि प्रियान्वयात् कुतोऽतिरूपः सुखभाजनं जनः ।
अमूदृशो तत्कविवन्दिवर्णनैरपाकृता राजकरञ्जिलोकवाक् ॥३॥
अदोषतामेव सतां विवृण्वते द्विषां मृषादोषकणाधिरोपणाः ।
न जातु सत्ये सति दूषणे भवेदलीकमाधातुमवद्यमुद्यमः ॥४॥

---

त्रपेति। अस्य नलस्य सदसि सभायां प्रियान्वयात् *प्रियासमागमात् त्रपा अनुचितम् आचरामीति लज्जादुःखं न स्यादिति काकुः स्यादेवेत्यर्थः।* तथाहि, अतिरूपः अतिमात्रसौन्दर्य्यः जनः कुतः क्व सुखभाजनं सुखास्पदं भवेत् ? न कुत्रापीत्यर्थः। असौ इव दृश्यते इति अमूदृशी एतादृशी उक्तरूपा इत्यर्थः। अदःशब्दोपपदात् दृशेस्त्यदादिषु दृशो नालोचने कञ् चेति कञ्, टिड्ढाणञ् इत्यादिना ङीप्, आसर्वनाम्न इत्यात्वे अदसोऽसेर्दादुदोम इत्युत्वमत्वे। राजकं राजसमूहं रञ्जयतीति राजकरञ्जिनां तदिच्छानुकूलवादिनां लोकानां जनानां वाक् पूर्वोक्ता निन्दोक्तिः तस्य नलस्य कवीनां वन्दिनाञ्च वर्णनैः अहो निखिलं राजकम् अवधूय त्वया स्त्रीरत्नं लब्धं सर्वोत्तरोऽसीत्यादिस्तवैः अपाकृता व्यकृता वागवाकृतेति विरोधस्फुरणात् विरोधाभासोऽलङ्कारः॥ ३॥

अदोषतामिति। द्विषां सम्बन्धिन्यः तत्कृताः इत्यर्थः, मृषादोषकणाधिरोपणाः अलीकदोषलवारोपाः सतां सज्जनानाम् अदोषतां निर्दोषताम् एव विवृण्वते प्रकाशयन्ति शुभ्रे कलङ्कारोपणवत् इत्यर्थः। सदोषे दोषारोपणं दोषमेव प्रकाशयन्तीत्याशङ्क्याह नेति। जातु कदाचिदपि सत्ये दूषणे सति अलीकम् असत्यम् अवद्यं दूषणम्, अवद्यपण्येत्यादिना

विदर्भराजोऽपि समं तनूजया प्रविश्य हृष्यन्नवरोधमात्मनः ।
शशंस देवीमनुजातसंशयां प्रतीच्छ जामातरमुत्सुके ! नलम् ॥५॥
तनुत्विषा यस्य तृणं स मन्मथः कुलश्रिया यः पविताऽस्मदन्वयम्
जगत्त्रयीनायकमेलके वरं सुता परं वेद विवेक्तुमीदृशम् ॥ ६ ॥
सृजन्तु पाणिग्रहमङ्गलोचिता मृगीदृशः स्त्रीसमयस्पृशः क्रियाः
श्रुतिस्मृतीनान्तु वयं विदध्महे विधीनिति स्माह च निर्ययौ च
सः ॥ ७ ॥

---

निपातः । आधातुम् आरोपयितुम् उद्यमः उद्योगः न भवेत् शशाङ्के कलङ्कारोपणवदिति भावः ॥ ४ ॥

विदर्भेति । अथ विदर्भराजः भीमोऽपि तनूजया दुहित्रा भैम्या समम् आत्मनः अवरोधम् अन्तःपुरं हृष्यन् प्रविश्य जातसंशयाम् इष्टवरलाभे सन्दिहानां देवीं निजमहिषीम् अनुलक्ष्यीकृत्य हे उत्सुके ! इष्टवरोद्युक्ते ! इष्टोद्युक्त उत्सुक इत्यमरः । नलं जामातरं दुहितुः पतिं प्रतीच्छ स्वीकुरु इति शशंस सिद्धं नः समीहितमिति भावः ॥ ५ ॥

तन्विति । किञ्च यस्य नलस्य तनुत्विषा तनुश्रिया कायकान्त्या सः प्रसिद्धः मन्मथः तृणं हि य इत्यर्थः । यः कुलश्रिया अभिजनसम्पदा अस्मदन्वयं पविता पवित्रीकर्त्ता, पुनातेस्तृन्, नलोकेत्यादिना षष्ठीप्रतिषेधात् कर्मणि द्वितीया । किञ्च, जगत्त्रय्यां ये नायकाः तेषां मेले एव मेलके सङ्घे, मेलात् घञन्तात् स्वार्थे कः । ईदृशं वरं विवेक्तुं सुता परं त्वत्सुतैव वेद वेत्ति, विदो लटोवेति नलादेशः । अहो भाग्यात्सर्वानुकूलत्वमिति भावः ॥ ६ ॥

सृजन्त्विति । स भीमः मृगीदृशः पुरन्ध्यः पाणिग्रहमङ्गलोचिताः मङ्गलयोग्याः स्त्री समयं स्पृशन्तीति तत्स्पृशः तत्स-

निरीय भूपेन निरीक्षिताननाः शशंस मौहूर्त्तिकसंसदंशकम् ।
गुणैररीणैरुदयास्तनिस्तुषं तदा स दातुं तनयां प्रचक्रमे ॥८॥
अथावदद्दूतमुखः स नैषधं कुलस्य बाला च ममानुकम्प्यताम् ।
सपल्लवत्वद्य मनोरथाङ्कुरश्चिरेण नस्त्वच्चरणोदकैरिति ॥९॥

---

माचारप्राप्ताः इत्यर्थः, स्पृशोऽनुदके क्विन् । क्रियाः मङ्गलकर्माणि सृजन्तु निर्मान्तु वयं च श्रुतिस्मृतीनां सम्बन्धिनः तदुक्तान् विधीन् कर्माणि विदध्महे कुर्महे इत्याह स्म उवाच, लट् स्मे इति भूते लट् । निर्ययौ अन्तःपुरात् निर्जगाम च ॥ ७ ॥

निरीयेति । भूपेन निरीय अन्तःपुरात् निर्गत्य ईञ् गताविति धातोः समासात् क्तो ल्यबादेशः । निरीक्षितानि आननानि यस्याः सा सती मुहूर्त्तं विन्दन्तीति मौहूर्त्तिकाः, तदधीते तद्वेदेति ठक् । तेषां संसत् ज्यौतिषकपरिषत् अरीणैः अक्षीणैः समग्रैरित्यर्थः, ऋञ् गताविति धातोः कर्त्तरि क्तः, ल्वादिभ्य इति निष्ठानत्वम् । गुणैः शुभग्रहवीक्षणादिभिः उपलक्षितम् उदये विवाहलग्ने जामित्राख्ये अस्तनिस्तुषं निर्दोषम् अंशमेव अंशकं लग्ननवांशकं शशंस कथयामास तदा स भूपः तनयां दातुं प्रचक्रमे अन्वतिष्ठदित्यर्थः ॥ ८ ॥

अथेति । अथ स भीमः दूतः एव मुखं यस्य स सन् मम कुलस्य बाला भैमी चानुकम्प्यताम् अनुगृह्यताम् अद्य नः अस्माकं मनोरथाङ्कुरः प्रागङ्कुरितः मनोरथः चिराय त्वच्चरणोदकैः पाद्योदकैः पल्लवेन सह वर्त्तते इति सपल्लवः सः इव आचरतु सपल्लवतु अपल्लवः पल्लव इवास्त्वित्यर्थः । सर्वप्रातिपदिकेभ्यः क्विप् वक्तव्यम् इति पल्लवशब्दादाचारक्विबन्तो

तथोत्थितं भीमवचःप्रतिध्वनिं निपीय दूतस्य स वक्त्रगह्वरात्।
व्रजामि वन्दे चरणौ गुरोरिति ब्रुवन् प्रदाय प्रजिघाय तं वसु
॥ १० ॥

निपीतदूतालपितस्ततो नलं विदर्भभर्त्ताऽऽगमयाम्बभूव सः।
निशावसाने श्रुतताम्रचूडवाग्यथा रथाङ्गस्तपनं धृतादरः ॥११॥

काचित्तदा लेपनदानपण्डिता कमप्यहङ्कारमगात् पुरस्कृता।
अलम्भि तुङ्गासनसन्निवेशनादपूपनिर्माणविदग्धयादरः ॥१२॥

---

धातोः प्रार्थनायां लोट्। इति नैषधं नलम् अवदत् नलाह्वानाय दूतं प्रेषितवानित्यर्थः ॥ ९ ॥

तथेति। स नलः दूतस्य वक्त्रम् आस्यम् एव गह्वरं गुहा तस्मात् तथा उदितम् उत्थितं भीमवचसः प्रतिध्वनिं निपीय दूतमुखात् भीमवचनं श्रुत्वेत्यर्थः। व्रजामि गुरोः श्वशुरस्य चरणौ वन्दे स्वयम् अहम् आगच्छामि गुरुपादवन्दनायेति ब्रुवन् वसु वसुधनं प्रदाय पारितोषिकं दत्त्वा तं दूतं प्रजिघाय प्राहिणोत्, हि गताविति धातोः लिटि हेरच इति कुत्वम् ॥ १० ॥

निपीतेति। स विदर्भभर्त्ता भीमः निपीतदूतालपितः श्रुतदूतवाक्यः सन् निशावसाने श्रुता ताम्रचूड़वाक् कुक्कुटकूजितं येन सः ककवाकस्ताम्रचूड़ः कुक्कुटश्चरणायुध इत्यमरः। रथाङ्गः चक्रवाकः रथाङ्गाह्वयनामकः इति रथाङ्गपर्य्यायाणां चक्रवाकनामत्वाभिधानात् पुंलिङ्गता। तपनं यथा सूर्य्यमिवेति श्रौती उपमा। इववत्वायथाशब्दानां प्रयोगे श्रौतीति लक्षणात्। धृतादरः सन् नलम् आगमयाम्बभूव नलागमनं प्रतीक्षितवानित्यर्थः, तादृगुपमासामर्थ्यादिति ॥११॥

काचिदिति। तदा तत्काले आलेपनदानपण्डिता पिष्टा-

मुखानि मुक्तामणितोरणात्तदा मरीचिभिः पान्थविलाससमाश्रितैः
पुरस्य तस्याखिलवेश्मनामपि प्रमोदहासच्छुरितानि रेजिरे
॥ १३ ॥

पथामवीयन्त तथाधिवासनान्मधुव्रतानामपि दत्तविभ्रमाः ।
वितानतामातपनिर्भयास्तदा पटच्छिदाकालिकपुष्पजाः स्रजः
॥१४॥

---

तत्कालेपनादिक्रियादक्षा काचित् आलेपनकर्मणि पुरस्कृता प्राधान्येन नियुक्ता सती कमपि अवाच्यम् अहङ्कारं गर्वम् अगात् अपूपानां भक्ष्यभेदानां निर्माणे विदग्धया कयाचित् तुङ्गासने सन्निवेशनात् उपवेशनात् आदरः आत्मनि अभिमानः अलम्भि प्रापि, लभेश्चेति नुमागमः ॥ १२ ॥

मुखानीति। तदा तत्काले तस्य पुरस्य सम्बन्धिनाम् अखिलवेश्मनाम् अपि मुखानि द्वाराणि वक्त्राणि च मुक्तामणीनां तोरणात् तन्मयबहिर्द्वारात् अपादानात्, तोरणोऽस्त्री बहिर्द्वारमित्यमरः । पान्थविलासं नित्यपथिकविभ्रमम् आश्रितैः नित्यनिर्गतैरित्यर्थः। मरीचिभिः मयूखैः किरणैः, मरीचिः स्त्रीपुंसयोरित्यमरः। प्रमोदहासच्छुरितानि रेजिरे अट्टहासव्याप्तानीव रेजिरे इत्यर्थः। मुखत्वात् शुभ्रत्वाच्च इयमुत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या ॥ १३ ॥

पथामिति। तथा तेन प्रकारेण अधिवासनात् चम्पकादिभिः अधिवासितत्वात् मधुव्रतानां मधुलिहाम् अपि दत्तविभ्रमाः कृतस्रक्भ्रान्तयः, इति भ्रान्तिमदलङ्कारः। आतपनिर्भयाः आतपेऽपि अम्लानाः इत्यर्थः। पटच्छिदा पटकर्त्तनेन कृतानि यानि अकालिकानि अकालोद्भवानि पुष्पाणि तेभ्यः जाताः तन्मयाः स्रजः मालिकाः पथां नगरमार्गाणां

विभूषणैः कञ्चुकिता बभुः प्रजा विचित्रचित्रैः स्नपितत्विषो गृहाः।
बभूव तस्मिन्मणिकुट्टिमैः पुरे वपुः स्वमुर्व्याः परिवर्त्तितोपमम्॥१५॥
तदा निरस्वानतमां घनं घनं ननाद तस्मिन्वितरां ततं ततम्।
अवापुरन्यैः सुषिराणि राणितामम्मानमानद्धमियत्तयाऽध्वनीत्
॥१६॥

---

वितानताम् उल्लोचनताम्, अस्त्री वितानमुल्लोचमित्यमरः। अनीयन्त नीताः, नयतेर्हि कर्मकत्वात् प्रधाने कर्मणि लङ्, प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणामिति वचनात्। पुष्पवितानभ्रान्तिता पटविधानात् सर्वत्र बद्धा इत्यर्थः॥१४॥

विभूषणैरिति। तस्मिन् पुरे प्रजाः जनाः जनो लोकः प्रजाः प्रोक्ता इति हलायुधः। विभूषणैः कञ्चुकिताः सञ्जातकञ्चुकाः सर्वाङ्गीणाभरणाः बभुः। गृहाः विचित्रचित्रैः विविधालेख्यैः स्नपितत्विषः व्याप्तकान्तयः बभुः विरेजुः, स्नावन्नुपमाश्चेति स्नातेरनुपसर्गस्य मित्त्वविकल्पाद्ध्रस्वत्वम्। उर्व्याः तलत्यभूमेः स्वं वपुः निजस्वरूपं मणीनां कुट्टिमैः मणिबद्धप्रदेशैः, कुट्टिमोऽस्त्री निबद्धा भूरिति स्वामी। परिवर्त्तितोपमं निरस्तोपमानम् असदृशं बभूव। कुट्टेन बद्धेन निर्वृत्तं कुट्टिमं भावप्रत्ययान्तादिमनिच् वक्तव्यम्॥ १५॥

तदेति। तदा तस्मिन् पुरे घनं कांस्यतालादिवाद्यं घनं निरन्तरं निरस्वानतमाम् अतिशयेन सस्वान, किमे त्तिङव्ययघादामित्यादिना आमुप्रत्ययः। ततं [illegible]ादिकं वाद्यं नितराम् अतिशयिकम्, अव्ययघादामुप्रत्ययः। ततं विस्तृतं यथा तथा ननाद। आनद्धं मुरजादिवाद्यम् इयत्तया केनचित् मानेन अमानं मानरहितं यथा तथा अध्वनीत् दध्वान, ध्वनतेर्लुङ्। अतो हलादेर्लघो

विपञ्चिराच्छादि न वेणुभिर्न ते प्रणीतगीतैर्न च तेऽपि झर्झरैः।
न ते हुडुक्केन न सोऽपि ढक्कया न मर्दलैः सापि न तेऽपि ढक्कया
॥ १७॥

विचित्रवादित्रनिनादमूर्च्छितः सुदूरचारी जनतामुखारवः।
ममौ न कर्णेषु दिगन्तदन्तिनां पयोधिपूरप्रतिनादमेदुरः ॥१८॥
उदस्य कुम्भीरथ शातकुम्भजाश्चतुष्कचारुत्विषि वेदिकोदरे।

---

रिति विकल्पात् वृद्धिप्रतिषेधः। सुषिराणि वंशादिवाद्यानि उच्चैस्तरां राणितां राणनं, रणतेर्ण्यन्ताद्भावे क्तः। अवापुः, ततं वीणादिकं वाद्यम् आनद्धं मुरजादिकम्। वंशादिकन्तु सुषिरं कांस्यं तालादिकं घनमिति सर्वत्राप्यमरः ॥ १६ ॥

विपञ्चिरिति। विपञ्चिः वीणादिः, विपञ्चिर्वल्लकी वीणेति वैजयन्ती। कृदिकाराद्विकल्पादीकाराभावः। वेणुभिः वेणुवाद्यैः न आच्छादि न छादिता, छादयतेः कर्मणि लुङ्। ते वेणवः प्रणीतगीतैः प्रयुक्तगानैः गायकैरित्यर्थः, न आच्छादिषत इति विपरिणामेनैव मुत्तरत्रापि योज्यम्। झर्झरादयः वाद्यविशेषाः ॥ १७ ॥

विचित्रेति। विचित्राणि वादित्राणि च ततादि, चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकमित्यमरः। तेषां निनादैः संमूर्च्छितः प्रवृद्धः सुदूरचारी अतिदूरव्यापी च जनतानां जनसमूहानां मुखेषु आरवः लोकालापकोलाहलः पयोधीनां पूरेषु लहरीषु प्रतिनादेन प्रतिध्वनिना मेदुरः मेदस्वी प्रवृद्धः सन्, भञ्जभासमिदो द्युरच्। दिगन्तदन्तिनां दिग्गजानां कर्णेषु न ममौ न माति स्मेति अतिशयोक्तिः। वधूमङ्गलस्नानार्थं महान्तं मङ्गलतूर्य्यघोषणमकार्षुरित्यर्थः ॥ १८ ॥

उदस्येति। अथ मङ्गलतूर्य्यघोषणान्तरं पुरन्ध्रीवर्गः पुरवा-

यथाकुलाचारमथावनीन्द्रजां पुरन्ध्रिवर्गः स्नपयाम्बभूव ताम् १९
विजित्य दास्यादिव वारिहारितामवापितास्तत्कुचयोर्द्वयेन ताः
शिखामवाञ्चुः सहकारशाखिनस्त्रपाभरम्लानिमिवाननैर्मुखैः॥२०
असौ मुहुर्जातजलाभिषेचना क्रमाद्दुकूलेन सितांशुनोज्ज्वला ।
द्वयस्य वर्षाशरदां सदातनीं सनाभितां साधु बबन्ध सन्धया॥२१

---

मिनीसङ्घः शातकुम्भजाः सौवर्णीः कुम्भीः पूर्णकलशीः उदस्य उन्नमय्य अथ तदनन्तरं चतुष्कोण चतुस्तम्भमण्डपेन चारुत्विषि अतिशयशोभे वेदिकोदरे वेदिमध्ये यथाकुलाचारम् कुलाचारम् अनतिक्रम्य इत्यर्थः । ताम् अवनीन्द्रजां भैमीं स्नपयाम्बभूव स्नानं कारयामास, स्नातेर्विभाषामित्वाद् ह्रस्वत्वम्॥१९

विजित्येति । तत्कुचयोः द्वयेन भैमीकुचद्वयेन विजित्य दास्यात् दासीकरणादिव वारिहारितां जलवाहिनीत्वम् अवापिताः प्रापिताः, आपेर्ण्यन्तादणिकर्तुः कर्मणि क्तः, ण्यन्ते कर्त्तुश्च कर्मण इति वचनात् । ताः कुम्भाः आननैः मुखैः द्वारैश्च आननैश्च सहकारशाखिनः शिखां चूतपल्लवं त्रपाभरेण या म्लानिः म्लानता तामिव तामेव अवाञ्चुः अधार्षुः, वहो लुङि सिचि नवदव्रजेत्यादिना वृद्धिः, ढोढः षढो कः सिति-कत्वे इस्रोरिति षत्वं, सिजभ्यस्तेत्यादिना झर्झरि अडागमः । लोके दासीकृताः स्त्रियो नतानना जलाहरणादि कर्म कुर्वन्तीति भावः । अत्र दास्यादिवेति हेतूत्प्रेक्षा म्लानिमिवेति गुणस्वरूपोत्प्रेक्षा, तयोरङ्गाङ्गिभावेन सजातीयसङ्करः ॥ २० ॥

असाविति । असौ भैमी मुहुः जातं जलाभिषेचनं यस्याः सा जलाभिषिक्ता सती क्रमात् शीतांशुना शुभ्रतरेण दुकूलेन उज्ज्वला वर्षाशरदां द्वयस्य सन्धया सन्धिस्थलेन सदातनीं

असौ प्रभिन्नाम्बुददुर्दिनोन्नतां निनिन्द चन्द्रद्युतिसुन्दरीं दिवम्
शिरोरुहौघेण घनेन संवृता तथा दुकूलेन सितांशुकोज्ज्वला॥२२
विरेजिरे तच्चिकुरोत्करा किराः क्षणं गलन्निर्मलवारिविप्रुषाम् ।
तमःसुहृच्चामरनिर्जयार्जिताः सितावमन्तःखलु कीर्त्तिमौक्तिका
॥ २३ ॥

---

सनातनीं सनाभितां तुल्यत्वं साधु यथा तथा बबन्ध बधार वर्षर्तुरपि जलाभिषिक्तः, शरच्च शीतांशूज्ज्वलो भवतीत्युपमा ॥ २१ ॥

असाविति । असौ भैमी प्रभिन्नैः वर्षुकैः अम्बुदैः दुर्दिनोन्नताम् अभिवृष्टामित्यर्थः । अथ चन्द्रद्युत्या चन्द्रकान्त्या *सुन्दरीं दिवं नभःस्थलीं निनिन्द तदुपमा अभूदित्यर्थः ।* कदर्थयतीति निन्दयतीति सादृश्यवाचकेषु दण्डी उपमालङ्कारः । घनेन सान्द्रेण मेघेन च शिरोरुहौघेण केशपाशेन उपलक्षितेति वर्षासाम्योक्तिः, क्वचित् एकदेशे शीतांशुना चन्द्रेण च दुकूलेनोज्ज्वलेनेति शरत्साम्योक्तिः ॥ २२ ॥

विरेजिरे इति । क्षणं क्षणमात्रं गलन्त्यः निर्मलाश्च याः वारिविप्रुषः तोयविन्दवः तासां, कृद्योगात् कर्मणि षष्ठी । किरन्तीति किराः विक्षेपकाः, इगुपधज्ञाप्रीकिरः क इति कः । तस्याः भैम्याः चिकुरोत्कराः केशनिकराः तमःसुहृदः तमोनिभस्य चामरस्य लीलाचामरस्य निर्जयेन अर्जिताः सम्पादिताः सिताः मुक्ताः एव मौक्तिकाः, अभाषितपुंस्काच्चेतिकात्पूर्वस्य विकल्पादिकारः । कीर्त्तिरेव मौक्तिकाः वमन्तः उद्गिरन्त इवेत्युत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या । विरेजिरे खलु फणानाञ्च सप्तानामित्येत्वाभ्यासलोपौ ॥ ॥ २३ ॥

मृदीयसा स्नानजलस्य वाससा प्रमार्जनेनाधिकमुज्ज्वलीकृता ॥
अदभ्रमभ्राजत साऽश्मशाणनात् प्रकाशरोचिः प्रतिमेव हेमजा
॥ २४ ॥

तदा तदङ्गस्य बिभर्त्ति विभ्रमं विलेपनामोदमुचः स्फुरद्रुचः ।
दरस्फुटत्काञ्चनकेतकीदलात् सुवर्णमभ्यस्यति सौरभं यदि ॥२५

---

मृदीयसेति। मृदीयसा मृदुतरेण वाससा स्नानजलस्य अङ्गसङ्गिनः प्रमार्जनेन अपाकरणेन अधिकम् उज्ज्वलीकृता। विमलीकृता सा भैमी अश्मशाणनात् उत्तेजनोपलेन शाणनात् उद्घर्षणात् प्रकाशम् उज्ज्वलं रोचिः दीप्तिः यस्याः सा हेमजा हैमी प्रतिमा इव अदभ्रं बहुलम् अभ्राजत अराजत ॥ २४ ॥

तदेति। सुवर्णं कर्त्तृ दरस्फुटतः ईषद्विकसतः, ईषदर्थे दरोऽव्ययमित्यमरः। काञ्चनकेतकीदलात् काञ्चनवर्णकेतकीपत्रात्, आख्यातोपयोग इत्यपादानत्वात् पञ्चमी। सौरभम् आमोदम् अभ्यस्यति यदि अधीते चेत् तदा तर्हि विलेपनेन अङ्गरागेण यः आमोदः मनोज्ञगन्धः तं मुञ्चति किरतीति तन्मुचः स्फुरद्रुचः स्फुरत्कान्तेः तदङ्गस्य विभ्रममिव विभ्रमं शोभां बिभर्त्ति, विभ्रमः संशये भ्रान्तौ शोभायामिति वैजयन्ती। तथा च तदङ्गस्य सौरभगुणेन तद्रहितात् सुवर्णाधिक्यकथनाद्व्यतिरेकस्तावदेकः। यदिशब्देन सुवर्णस्य सौरभासम्बन्धेऽपि सम्भावनया तत्सम्बन्धोक्तेरतिशयोक्तिभेदः, विभ्रममिव विभ्रममिति साहृश्याचेपादसम्भवद्वस्तुसम्बन्धरूपो निदर्शनाभेदः, तदङ्गोपमानसुवर्णस्योपमेयत्वकल्पनात् प्रतीपालङ्कारः, तेन चाङ्गिमाङ्गत्वेन तेषां सङ्कर इति विवेकः ॥२५॥

अवापितायाः शुचि वेदिकान्तरं
कलासु तस्याः सकलासु पण्डिताः ।
क्षणेन सख्यश्चिरशिक्षणस्फुटं
प्रतिप्रतीकं प्रतिकर्म निर्ममुः ॥ २६ ॥

विनापि भूषामवधिः श्रियामियं
व्यभूषि विज्ञाभिरदर्शि चाधिका ।
न भूषयैषाऽतिचकास्ति किन्तु
साऽनयेतिकस्यास्तु विचारचातुरी ॥२७॥

विधाय बन्धूकपयोजपूजनं कृतां विधोर्गन्धफलीबलिश्रियम् ।

---

अवापिताया इति। सकलासु कलासु शिल्पविद्यासु पण्डिताः कुशलाः, कला शिल्पे कालभेदे इत्यमरः। सख्यः शुचि शुद्धं वेदिकान्तरं स्नानवेदेः अन्यां वेदिम् अवापितायाः *तस्याः दमयन्त्याः चिरशिक्षणेन चिराभ्यासेन स्फुटं सुस्पष्टं प्रतिप्रतीकं प्रत्यवयवम् अङ्गं प्रतीकोऽवयव इत्यमरः।* प्रतिकर्म प्रसाधनं क्षणेन निर्ममुः चक्रुरित्यर्थः ॥ २६ ॥

विनेति। भूषां विना अलङ्कारम् अन्तरेणापि श्रियां शोभानाम् अवधिः सीमा इयं भैमी विज्ञाभिः प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षित इत्यमरः। व्यभूषि विभूषिता तदा अधिका पूर्वावस्थातोऽप्युत्कृष्टा अदर्शि दृष्टा च तथा अमानीत्यर्थः। वस्तुतस्तु एषा भैमी भूषया नातिचकास्ति किन्तु सा भूषैव अनया भैम्या अतिचकास्तीति विचारचातुरी विमर्शनकौशलं कस्यास्तु न कस्यापीत्यर्थः। लोकदृष्ट्या भूषणे भूष्यत्वभ्रमात् अलङ्कृः भूषणं भूषासु इति तु न काचिदिति भावः ॥२७॥

विधायेति। लब्धम् अधरेण लोचनाभ्यां च अर्चनं येन तत् अधरलोचनार्चितमित्यर्थः तन्मुखं कर्तृ मनःशिलया धातु-

निनिन्द लब्धाधरलोचनार्चनं मनःशिलाचित्रकमेत्य तन्मुखम् ॥२८॥

महीमघोनां मदनान्धतातमीतमःपटारम्भणतन्तुसन्ततिः।
अबन्धि तन्मूर्द्धजपाशमञ्जरी कयापि धूपग्रहधूमकोमला ॥२९॥

*पुनः पुनः काचन कुर्वती कचच्छटाधिया धूपजधूमसंयमम्।*
सखीस्मितैस्तर्कितनिजभ्रमा बबन्ध तन्मूर्द्धजचामरं चिरात् ॥ ३० ॥

---

विशेषेण चित्रकं तिलकम् एत्य, तमालपत्रतिलकचित्रकाणि विशेषकमित्यमरः। विधोः चन्द्रस्य बन्धूकेन बन्धूजीवककुसुमेन पयोजाभ्याञ्च यत् पूजनं तत् विधाय कृतां गन्धफल्यां चम्पककलिकायां बलेः पूजनस्य श्रियं शोभां निनिन्द, अथ चाम्पेयश्चम्पको हेमपुष्पकः एतस्य कलिका गन्धफलीत्यमरः। अधराद्यञ्चितं तन्मुखं बन्धूकाद्यञ्चितं चन्द्रबिम्बमिव बभौ इत्यर्थः॥ २८ ॥

महीति। महीमघोनां भूदेवेन्द्राणां या मदनान्धता सैव तमी रजनी, रजनी यामिनी तमीत्यमरः। तस्याः तमः एव पटः तस्य आरम्भणे तन्तुसन्ततिः तत्तदर्थं तन्तुपुञ्जवत् स्थिते त्युत्प्रेक्षा। धूपे ग्रहेण ग्रहणेन यः धूमः तेन कोमला रम्या तन्मूर्द्धजपाशमञ्जरी तत्केशपाशवल्लरी कयापि सख्या अबन्धि बद्धा॥ २९ ॥

पुनः पुनरिति। काचन कचच्छटाधिया केशपाशभ्रान्त्या धूपजधूमस्य संयमं बन्धनं पुनः पुनः कुर्वती इति भ्रान्तिमदलङ्कारः। सखीनां स्मितैः तर्कितः ऊहितः सः पूर्वोक्तः निजभ्रमः यया सा सती चिरात् तस्या मूर्धजाः चामरमिव तत् बबन्ध॥ ३०॥

बलस्य कृष्टेव हलेन भाति या कलिन्दकन्या घनभङ्गभङ्गुरा ।
तदार्पितैस्तां करुणस्य कुड्मलैर्जहास तस्याः कुटिला कचच्छटा
॥ ३१ ॥

धृतैतया हाटकपट्टिकालिके बभूव केशाम्बुदविद्युदेव सा ।
मुखेन्दुसम्बन्धवशात् सुधाजुषः स्थिरत्वमूहे नियतं तदायुषः॥३२
ललाटिकासीमनि चूर्णकुन्तला बभुस्तमां भीमनरेन्द्रजन्मनः ।
मनःशिलाचित्रकदीपसम्भवा भ्रमीभृतः कज्जलधूमवल्लयः॥३३॥

---

बलस्येति। या कलिन्दकन्या कालिन्दी बलस्य बलभद्रस्य हलेन कृष्टेव अद्यापि कर्षणविशिष्टेव घनैः निरन्तरैः भङ्गैः तुङ्गैः तरङ्गैः भङ्गुरा अराला भाति तां कालिन्दीं तस्याः दमयन्त्याः कुटिला वक्रा कचच्छटा केशपाशः तदा तत्काले अर्पितैः न्यस्तैः करुणस्य वृक्षविशेषस्य, करुणस्तु रसेऽवृक्ष इति विश्वः । कुड्मलैः जहास जहासेवेत्यर्थः व्यञ्जकाप्रयोगाद्गम्योत्प्रेक्षा ॥३१॥

धृतेति। एतया भैम्या अलिके ललाटे धृता ललाटमलिकं गोधिरित्यमरः। सा हाटकपट्टिका सुवर्णपट्टः केशः एव अम्बुदः तस्य विद्युदेव बभूव। विद्युच्चेत्कथं स्थिरत्वं तत्राह। मुखेन्दुसम्बन्धवशात् सुधाजुषः अमृतपायिनः तस्याः विद्युतः सम्बन्धिनः आयुषः स्थिरत्वं चिराय स्थायित्वं नियतम् ऊहे उत्प्रेक्षे उपसर्गादस्यत्यूह्योर्वा वचनमित्यात्मनेपदम् ॥ ३२ ॥

ललाटिकेति। भीमनरेन्द्रात् जन्म यस्याः तस्याः भैम्याः अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपद इति वामनः । ललाटस्य अलङ्कारः ललाटिका कर्णललाटात्कर्णालङ्कार इति कन्प्रत्ययः। तस्याः सीमनि प्रान्ते चूर्णकुन्तलाः अलकाः मनःशिलायाः धातुविशेषस्य चित्रकं तिलकं स एव दीपः

धृतं वतंसोत्पलयुग्ममेतया व्यराजदस्यां पतिते इकाविव।
मनोभुवान्ध्यं गमितस्य पश्यत: स्थिते लगित्वा रसिकस्य कस्यचि
॥३८

विदर्भसुभ्रू श्रवणावतंसिकामणीमहः किंशुककार्मुकोदरे।
उदीतनेत्रोत्पलवाणसम्भृतिर्नलं परं लक्ष्यमवैक्षत स्मर: ॥४०॥
अनाचरत्तथ्यमृषाविचारणां तदाननं कर्णलतायुगेन किम्।
अबन्ध जित्वा मणिकुण्डले विधू द्विचन्द्रबुद्धा कथितावसूयकौ
॥ ४१ ॥

---

धृतमिति। एतया भैम्या धृतम् अवतंसोत्पलयुग्मम् अस्यां भैम्यां पतिते सत्यौ तत्रैव लगित्वा आसज्य स्थिते पश्यत: सत: मनोभुवा कामेन आन्ध्यं गमितस्य तदेकासक्तीकृतस्य कस्यचित् रसिकस्य रसवत: रागिण: इत्यर्थ:। अत इन्निति ईठनाविति ठक्प्रत्यय:। इकौ इव व्यराजत् विरराज इत्युत्प्रेक्षा ॥ ३८ ॥

विदर्भेति। विदर्भसुभ्रुव: वैदर्भ्या: श्रवणावतंसिका कर्णावतंसीभूता या मणी, कृदिकारादीकार:। तस्य मह: प्रभा एव किंशुककार्मुकं पलाशकुसुमचापं तस्य उदरे मध्ये उदीता उत्पन्ना नेत्रस्य एव उत्पलवाणस्य सम्भृति: सम्भरणं यस्य स सन् स्मर: नलं परं नलमेव लक्ष्यम् एव ऐक्षत सर्वथा नलस्यायमोट्टक् स्मरबाणो भविष्यति इति भाव ॥ ४० ॥

अनाचरदिति। तदाननं कर्त्रं तथ्यमृषाविचारणाम् अनाचरत् सत्यासत्यविमर्शम् अकुर्वत् द्विचन्द्रबुद्धा द्वौ चन्द्रौ इमौ इति भ्रान्त्या कथितौ असूयकौ सूचितौ असूयकौ स्वद्वेषिणौ मणिकुण्डले एव विधू चन्द्रौ जित्वा कर्णलतयो: युगेन

**अवादि भैमी परिधाप्य कुण्डले वयस्यया भ्यामभितः समन्वयः।**
**त्वदाननेन्दोः प्रियकामजन्मनि श्रयत्ययं दौरधुरीं धुरं ध्रुवम् ४२**
**निवेशितं यावकरागदीप्तये लगत्तदीयाधरसीम्नि सिक्थकम्।**
**रराज तत्रैव निवस्तुमुत्सुकं मधूनि निर्धूय सुधासधर्मिणि ॥४३॥**

---

बबन्ध किमिति मिथ्याचन्द्रयोरेव बन्धनमुत्प्रेच्यते, जितस्य शत्रोर्बन्धनमुचितमिति भावः ॥ ४१ ॥

अवादीति। वयस्यया सख्या कुण्डले मणिकुण्डले परिधाप्य आरोप्य भैमी अवादि गदिता। किमिति ? हे भैमि ! त्वदाननेन्दोः आभ्यां मणिकुण्डलाभ्याम् अयम् अभितः उभयतः समन्वयः समायोगः प्रियस्य नलस्य कामजन्मनि त्वयि रागोदये दौरधुरीं दुरधुराख्ययोगसम्बन्धिनीं धुरं श्रयति फलदानभारं वहति, ध्रुवमित्युत्प्रेचा। चन्द्रस्यार्कातिरिक्तोभयग्रहमध्यगते दौरधुरयोगः। यदाह वराहमिहिरः। हित्वार्कं सुनयानयाद्रुधुरा स्वान्त्योभयस्थैर्ग्रहैः शीतांशोरिति ॥ ४२ ॥

निवेशितमिति। तदीयस्य दमयन्तीयाधरस्य सीम्नि प्रदेशे यावकरागस्य अलक्तकरागस्य दीप्तये स्फुरणाय निवेशितं न्यस्तं लगत् सत् सिक्थकं मधूच्छिष्टं चौद्रजमिति यावत्। मधूनि चौद्राणि निर्धूय निरस्य सुधया समानः धर्मः स्वाद्वात्मा यस्याः सा सुधाधर्मा नामगोत्ररूपस्थानवर्णवयोवचनधर्मजातीयेषु समानस्य सभावः इति वर्द्धमानसूत्रम्। समानस्य छन्दस्यमूर्धप्रभृत्युदर्केष्वित्यत्र समानस्येति योगविभागात् सपचसधर्मसंस्थानादिसिद्धिरिति काशिका। धर्मादनिच् केवलात्मनो बहुव्रीहिरिति प्रतिषेधामन्यतनेभ्य इति ङीप्। तस्यां सुधासधर्मिणि अमृतसदृश्यां तत्र एव तदीयाधरसीम्नि एव निवस्तुं

स्वरेण वीणेत्यविशेषणं पुराऽस्फुरत्तदीया खलु कण्ठकन्दली ।
अवाप्य तन्त्रीरथ सप्त मौक्तिकासरानराजत् परिवादिनी स्फुटम्
॥ ४४ ॥

उपास्यमानाविव शिक्षितुं ततो मृदुत्वमप्रौढमृणालनालया ।
विरेजतुर्माङ्गलिकेन संयुतौ भुजौ सुदत्या वलयेन कम्बुनः ॥४५॥
पदद्वयेऽस्या नवयावरञ्जना जनैस्तदानीमुदनीयतार्पिता ।
चिरायपद्मौ परिरभ्य जाग्रती निशीव विश्लिष्य नवा रविद्युतिः॥४६

---

स्थातुम् उत्सुकं रराज अन्यथा कथम् अत्रैव लगेदित्युत्प्रेक्षा, उत्कृष्टस्थानलाभे चिरपरिचितमपि स्वस्थानमुत्सृजति न त्वौचित्यं गम्यते विशेषार्थिभिरिति भावः ॥ ४३ ॥

स्वरेणेति । तदीया दमयन्तीया कण्ठकन्दली कण्ठनालः पुरा पूर्वं स्वरेण ध्वनिना वीणेत्यविशेषणं निर्विशेषं यथा तथा अस्फुरत् वीणा इत्येव अबोधीत्यर्थः । अथ वीणेति स्फुरणानन्तरं सप्त मौक्तिकासरान् मुक्तायष्टीरेव सप्त तन्त्रीः अवाप्य परिवादिनी परिवादिन्याख्या वीणा सती अराजत् । स्फुटम् इत्युत्प्रेक्षायाम् विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनीत्यमरः ॥ ४४ ॥

उपास्यमानाविति । ततः कण्ठभूषणानन्तरं माङ्गलिकेन मङ्गलार्थेन, प्रयोजनमिति ठक् । कम्बुनः शङ्खस्य वलयेन संयुतौ, शङ्खः स्यात्कम्बुरस्त्रियाम् इत्यमरः । सुदत्याः तस्याः भुजौ अप्रौढमृणालनालया बालत्रिभक्ताग्र .....ण्डेन मृदुत्वं मार्दवं शिक्षितुम् अभ्यसितुम् उपास्यमानौ सेव्यमानौ इव विरेजतुः इत्युत्प्रेक्षा ॥ ४५ ॥

पदेति । तदानीं प्रसाधनकाले अस्याः भैम्याः पदद्वये अर्पिता नवयावस्य नवालक्तस्य रञ्जना, यावोऽलक्तो द्रुमामय

कृतापराधः सुतनोरनन्तरं विचिन्त्य कान्तेन समं समागमम्।
स्फुटं सिषेवे कुसुमेषुपावकः सरागचिह्नश्चरणौ न यावकः॥४७॥
स्वयं तदङ्गेषु गतेषु चारुतां परस्परेणैव विभूषितेषु च।
किमूचिरेऽलङ्करणानि तानि तत् वृथैव तेषां करणं बभूव यत्
॥ ४८ ॥
क्रमाधिकामुत्तरमुत्तरं श्रियं पुपोष यां भूषणचुम्बनैरियम्।
पुरः पुरस्तस्थुषि रामणीयके तया बबाधेऽवधिबुद्धिधोरणिः॥४९

---

इत्यमरः। निशि रात्रौ विश्लिष्य वियुज्य चिराय प्रभाते पद्मी पद्मे, वा पुंसि पद्मं नलिनमित्यमरः। परिरभ्य प्राप्य जाग्रती प्रकाशमाना नवा प्रत्यग्रा रविद्युतिः इव बालार्कप्रभेव स्थितेति जनैः उदनीयत उन्नीता उत्प्रेक्षितेत्यर्थः॥ ४६ ॥

कृतेति। सुतनोः भैम्याः कृतापराधः पूर्वं विरहकाले सापराधः कुसुमेषुपावकः कामाग्निः अनन्तरं कान्तेन समं नलेन सह समागमं विचिन्त्य सरागचिह्नः रक्तचिह्नसहितः सन् अन्यथा कुत एष राग इति भावः। चरणौ सिषेवे स्फुटं यावः एव यावकः अलक्तस्तु न इति सापह्नवोत्प्रेक्षा यावादिभ्यः कन्निति स्वार्थे कन्प्रत्ययः॥ ४७ ॥

स्वयमिति। स्वयं स्वभावतः एव चारुतां गतेषु परस्परेण इतरेतरेणैव विभूषितेषु च परस्परमेलनात् प्रत्यवयवं कस्यचित् कमनीयविशेषस्य च स्फुरणादिति भावः। तदङ्गेषु भैमीगात्रेषु तेषां पूर्वोक्तहेमपट्टादीनां करणम् अर्पणं वृथा एव बभूव इति यत् तत् वास्तव्यानि अलङ्करणानि कर्तॄणि ऊचिरे किम्? किमुक्तिः सम्भावितेत्युत्प्रेक्षा॥ ४८

क्रमेति। इयं दमयन्ती भूषणचुम्बनैः आभरणसम्बन्धैः उत्तरम् उत्तरम् उपर्युपरि, उपर्युदीच्य श्रेष्ठेष्वप्युत्तरः स्यादित्य-

मणीसनाभौ मुकुरस्य मण्डले बभौ निजास्य प्रतिबिम्बदर्शिनी।
विधोरदूरं स्वमुखं विधाय सा निरूपयन्तीव विशेषमेतयोः॥५०॥
जितस्तदास्येन कलानिधिर्दधे द्विचन्द्रधीसाक्षिकमायकायताम्।
तथापि जिग्ये युगपत् सखीयुगप्रदर्शितादर्शबहुभविष्णुना ॥५१

---

मरः। क्रमेण अधिकां यां श्रियं शोभां पुपोष तया श्रिया रामणीयके कमनीयत्वे, *मनोज्ञादित्वाद् वुञ्प्रत्ययः।* पुरः अग्रे तस्थुषि स्थिते सति अवधिबुद्धिधोरणिः इयत्ताधीपरम्परा वबाधे बाधिता। इयत्तारहिता सा शोभासम्पत्तिरिति भावः। धोरणिशब्दः पङ्क्तौ देशीये इति सम्प्रदायः ॥ ४८ ॥

मणीति। मणीसनाभौ रत्नप्रख्ये मुकुरस्य मण्डले दर्पणतले निजास्यप्रतिबिम्बदर्शिनी भैमी स्वमुखं विधोः चन्द्रस्य अदूरं समीपगतं विधाय एतयोः स्वमुखचन्द्रयोः विशेषं तारतम्यं निरूपयन्ती परीक्षमाणा इव बभौ, परीक्षका हि उभयमेकत्र अवस्थाप्य परीक्षन्ते इति भावः ॥ ५०

जित इति। कलानिधिः चन्द्रः शिल्पे कला विधोरंश इत्यभिधानात्। तदास्येन भैमीमुखेन जितः सन् द्वौ चन्द्रौ इति धीरेव कार्य्यभूता साक्षी प्रमाणं यस्याः सा तत्साक्षिका माया कारणभूता यस्य स समायः कायः यस्याः तस्याः भावः तत्ता तां दधे दधार इति एकाकिना तन्मुखस्य दुर्जयत्वादेकोऽपि चन्द्रो मायया द्वावभूत् इत्यर्थः। तन्मुख[illegible] स्वयमपि कपटादेव द्वित्वमापद्य पुनस्तं जिगायेत्याह- *तथापि द्विभूतोऽपि* युगपत् सखीयुगेन प्रदर्शिताभ्याम् आदर्शाभ्यां दर्पणाभ्यां तद्गतप्रतिबिम्बद्वयवशेन इत्यर्थः, दर्पणे मुकुरादर्शावित्यमरः। बहुभविष्णुना ताच्छील्येन बहुभविना प्रतिबिम्बद्वयेन आत्मना

किमालियुग्मार्पितदर्पणद्वये तदास्यमेकं बहु चान्यदम्बुजम् ।
हिमेषु निर्वाप्य निशासमाधिभिस्तदास्यसालोक्यमितं व्यलोक्यत ॥ ५२ ॥

पलाशदामेति मिलच्छिलीमुखैर्वृता विभूषामणिरश्मिमण्डलैः
अलक्षि लक्षैर्धनुषामसौ तदा रतीशसर्वस्वतयाभिरक्षिता ॥५३॥

---

च वित्वमापन्नेन तन्मुखेनेत्यर्थः । भुवश्चेति इष्णुच्प्रत्ययः । जिग्ये जितः, विभिर्द्वौ सुजयाविति भावः ॥ ५१ ॥

किमिति । आलियुग्मेन सखीद्वयेन अर्पिते दर्पणद्वये तदास्यं भैमीमुखम् एकम् एकार्कप्रतिविम्बितानेकार्कवत् ब्रह्म चैकम् अनेकाविद्याप्रतिविम्बितब्रह्मवच्चेति भावः । अन्यत् तन्मुखसदृशं च अम्बुजं पद्मं निशासु समाधिभिः तन्मुखध्यानैः मुकुलभावलक्षणैः उपलक्षितं सत् हिमेषु निर्वाप्य मृत्वा मृत्वा च तदास्यस्य भैमीमुखस्य आलोकेन दर्शनेन सह वर्त्तते इति सालोकं तस्य भावः सालोक्यम् आलोकनीयत्वं रम्यत्वम् इति यावत् तदाननसालोक्यं तदाननसमानालोकत्वञ्च इतं प्राप्तं सत् इणः कर्त्तरि क्तः । व्यलोक्यत किम् ? दृष्टं किम् इत्युत्प्रेक्षा । निर्वाणकाले यां देवतां ध्यायन्ति तत्सालोक्यं लभन्ते इत्यागमः । निशि हिमोपघातात् मुकुलीभावाच्च तत्साम्यकथा च नास्ति दिवापि तदभावात्तदा समानालोकैर्वा कथञ्चित्तत्साम्यं लभते पद्ममिति तात्पर्य्यम् ॥ ५२ ॥

पलाशेति । पलाशदाम किंशुकमाला इति विचिन्त्य मिलन्तः शिलीमुखाः अलयः बाणाश्च येषु तैः इति भ्रान्तिमदलङ्कारः । विभूषामणिरश्मिमण्डलैः आभरणरत्नकान्तिपटलैः वृता असौ भैमी तदा रतीशस्य कामस्य सर्वस्वतया सर्वधनत्वेन धनुषां लक्षैः शतसहस्रैः अभिरक्षिता अलक्षीत्यर्थः । व्यञ्जकाप्रयो-

विशेषतीर्थैरिव जह्नुनन्दना गुणैरिवाजानिकरागभूमिका।
जगाम भाग्यैरिव नीतिरुज्ज्वलैर्विभूषणैस्तत्सुषमा महार्घताम्
॥ ५४ ॥

नलात् स्ववैशस्त्यमनाप्तुमानता नृपस्त्रियो भीममहोत्सवागताः।
तदङ्घ्रिलाक्षामदधन्त मङ्गलं शिरःसु सिन्दूरमिव प्रियायुषे ॥५५

---

गाङ्गयोर्व्यञ्जना। राजधनं शस्त्रिभिः अभिरक्ष्यते इति भावः ॥ ५३ ॥

विशेषेति। विशेषतीर्थैः यमुनासरयूप्रमुखैः जह्नुनन्दना जाह्नवी इव, नन्द्यादित्वाल्ल्युप्रत्यये टाप्। गुणैः विद्याविनयादिभिः अजनात् उत्पन्नः अजानिकः सहजः, शैषिकष्ठन्प्रत्ययः। तस्य रागस्य प्रेम्णः भूमिः एव भूमिका आस्पदं विनयादिभिः गुणैः पुत्रादिरिव इति यावत्। भाग्यैः दैवानुकूल्यैः नीति इव उज्ज्वलैः विभूषणैः तस्याः सुषमा परमा शोभा कान्तिः महार्घतां महामूल्यताम् अत्यन्तोत्कृष्टतां जगाम। तीर्थान्तरमेलनेन जाह्नव्याः पावनत्वोत्कर्षः इव विनयगुणैः पुत्रादिरिव तथा दैवानुकूल्येन नीतेः फलप्राप्तिः इव तस्याः सुषमायास्तु लोकोत्तरचमत्कारकारित्वमिति भावः ॥ ५४ ॥

नलादिति। नलात् सकाशात् स्वस्य वैशस्त्यं वैधव्यं, विशस्ता विधवे समे इत्यमरः। अनाप्तुम् अप्राप्तुम् आनताः प्रणताः अन्यथा नलः स्वभर्तॄन् वैरायमाणान् हनिष्यतीति भयात् भैमीं प्रणताः भीमस्य महोत्सवे भैमीविवाहे इति यावत्। आगताः नृपस्त्रियः राजपत्न्यः राजकान्ताः इति यावत्। प्रियायुषे स्वभर्तृजीवनार्थं न केवलं प्रणमन्तु मङ्गलाचरणादपि स्वभर्तृजीवनाय मङ्गलं सिन्दूरमिव तस्याः भैम्याः अङ्घ्र्याः लाक्षां

अमोघभावेन सनाभितां गताः प्रसन्नगीर्वाणवराचरस्रजाम् ।
ततः प्रणम्याधिजगाम सा ह्रिया गुरुर्गुरुब्रह्मपतिव्रताशिषः ५६

तथैव तत्कालमथानुजीविभिः प्रसाधनासञ्जनशिल्पपारगैः ।
निजस्य पाणिग्रहणक्षणोचिता कृता नलस्यापि विभोर्विभूषणा
॥ ५७ ॥

नृपस्य तत्राधिकृताः पुनः पुनः
विचार्य्य तान् बन्धमवापयन् कचान् ।

---

प्रणामात् संसक्तम् अलक्तकं शिरःसु अदधन्त अधारयन्, दधधारणे इति धातोः लङि तञ् । पतियुक्तानां स्त्रीणां ललाटे सिन्दूरधारणं इति प्रसिद्धिः ॥ ५५ ॥

अमोघेति । ततः प्रसाधनान्तरं ह्रिया लज्जया गुरुः अतिभारवती सा भैमी प्रणम्य गुर्वादीन् अभिवाद्य अमोघभावेन अवैफल्यगुणेन प्रसन्नानां गीर्वाणानाम् इन्द्रादिदेवतानां वराचरस्रजां वरदानवाग्गुम्फानां सनाभितां सादृश्यं गताः तद्वदमोघाः गुरूणां पित्रादीनां ब्रह्मणां ब्राह्मणानां पतिव्रतानाम् आशिषः आशीर्वादान् अभिजगाम लेभे ॥ ५६ ॥

तथैवेति । अथ अस्मिन् अवसरे सः एव कालः यस्मिन् कर्मणि तत् तत्कालम् अविलम्बितमित्यर्थः । तथैव यथा भैम्याः तथैव प्रसाधनासञ्जनं प्रसाधनाकरणं तत् एव शिल्पं विद्याविशेषः तस्य पारगैः पारदर्शिभिः, अन्तात्यन्तेत्यादिना डप्रत्ययः । अनुजीविभिः सेवकैः निजस्य आत्मीयस्य विभोः स्वामिनः नलस्यापि पाणिग्रहणक्षणोचिता विवाहकालोचिता विभूषणा प्रसाधना कृता ॥ ५७ ॥

नृपस्येति । तत्र प्रसाधने अधिकृताः नियुक्ताः तान् बध्यमानान् नृपस्य नलस्य कचान् केशान् विचार्य्य अपराधम्

कलापनीलोपनिधिर्गरुत्त्यजः
स यैरपालापि कलापिसंसदः ॥ ५८ ॥
पतत्रिणां द्राघिमशालिना धनु-
र्गुणेन संयोगजुषां मनोभुवः ।
कचेन तस्यार्जितमार्जनश्रिया
समेत्य सौभाग्यमलम्भि कुड्मलैः ॥ ५९ ॥
अनर्घ्यरत्नौघमयेन मण्डितः
रराज राजा मुकुटेन मूर्द्धनि ।

---

अनुचिन्त्य पुनः पुनः बन्धम् अवापयन् प्रापितवन्तः, आपेर्णौ चङ् द्वितीयस्यैकाचो द्विर्भावः यत्तदोर्नित्यसम्बन्धात् । यैः कचैः केशैः गरुतः पक्षान् त्यजतीति त्यजः त्यजन्त्याः तस्याः कलापिसंसदः मयूरसङ्घस्य कलापस्य बर्हभारस्य लीला विलासः स एवः उपनिधिः न्यासः बर्हमोचनकालकृतो निक्षेप इत्यर्थः, पुमानुपनिधिर्न्यास इत्यमरः । अपालापि अपलपितः पुनः बर्होदयेऽपि न प्रत्यर्पित इत्यर्थः, अतो बन्धनमुचितमिति भावः ॥ ५८ ॥

पतत्रिणामिति । कुड्मलैः अर्द्धविकसितकुसुमैः कर्त्तृभिः द्राघिमशालिना दैर्घ्यशोभिना, प्रियस्थिरेत्यादिना दीर्घशब्दस्य द्राघिमादेशः । अर्जितमार्जनश्रिया सम्पादितकङ्कतिकादिसंस्कारसम्पदा तस्य कचेन केशपाशेन समेत्य मिलित्वा द्राघिमशालिना अर्जितमार्जनश्रिया सम्पादितोत्तेजनसम्पदा धनुर्गुणेन अलिमालारूपेण संयोगजुषां सन्धानभाजां मनोभुवः कुसुमेषोः पतत्रिणां बाणानां सौभाग्यम् इव सौभाग्यं सौन्दर्य्यम् अलम्भि लब्धम् इति निदर्शनाभेदः ॥ ५९ ॥

वनीयकानां स हि कल्पभूरुहः
ततो विमुञ्चन्निव मञ्जुमञ्जरीम् ॥ ६० ॥
नलस्य भाले मणिवीरपट्टिका-
निभेन लग्नः परिधिर्विधोर्बभौ।
तदा शशाङ्काधिकरूपतां गते
तदानने मातुमशक्तिमुद्वहन् ॥ ६१ ॥
बभूव भैम्याः खलु मानसौकसं
जिघांसतो धैर्य्यभरं मनोभुवः।
उपभ्रु तद्वर्त्तुलचित्ररूपिणी
धनुःसमीपे गुलिकेव सङ्गता ॥ ६२ ॥

---

अनर्घ्येति। हि यस्मात् स राजा नलः वनीयकानामर्थिनां कल्पभूरुहः कल्पवृक्षः, वनीयको याचनको मार्गणो याचकार्थिनावित्यमरः। ततः अर्थिकल्पवृक्षत्वात् अनर्घ्यरत्नौघमयेन अमूल्यमणिनिचयप्रचुरेण मुकुटेन मूर्धनि मण्डितः अलङ्कृतः सन् मञ्जुं फलदां मनोहरां च मञ्जरीं सकलिकां बालशाखां मुञ्चन् अर्थिनां त्यजन् इव रराज इत्युत्प्रेक्षा ॥६०॥

नलस्येति। विधोः इन्दोः परिधिः परिवेषः नलस्य भाले ललाटे मणिवीरपट्टिकानिभेन मणिमयवीरोचितपट्टमिषेण लग्नः सन् ततः शशाङ्कात् अधिकं रूपं स्वरूपं सौन्दर्य्यं वा यस्य तस्य भावः तत्तां गते तदानने नलमुखे मातुम् अभिव्याप्तुम् अशक्तिम् उद्वहन् बभौ। परिवेषः चन्द्रं परिवेष्ट्य शोभते किन्तु अत्रैकदेशवर्त्तीत्याधाराधेययोः आनुरूप्याभावात् अधिकालङ्कारः। आधाराधेययोरानुरूप्याभावादधिको मत इति लक्षणात् ॥ ६१ ॥

बभूवेति। भैम्याः मानसं स्वान्तं सरोविशेषश्च, मानसं

अचुम्बि या चन्दनविन्दुमण्डली
नलीयवक्त्रेण सरोजतर्जिना।
*श्रियं श्रिता काचन तारका सखी*
कृता शशाङ्कस्य तयाङ्कवर्त्तिनी ॥ ६३ ॥

---

स्वान्तमिति विश्वः। तत् श्रोकः स्थानं यस्य तं मनोनिष्ठं हंस चक्राङ्गा मानसौकस इत्यमरः। धैर्य्यभरं धैर्य्यातिशयं धैर्य्यधनं जिघांसतः हन्तुमिच्छतः, हन्तेः सनन्तात्शट्, अभ्यादेशः सन्यजोरिति द्विर्भावः अभ्यासाच्चेति कुत्वं, अज्झनगमांसनीति दीर्घः। मनोभुवः कामस्य धनुःसमीपे गुलिका या पक्षिवेधगुटिका सा इव अस्य नलस्य उपभ्रु भ्रूसमीपे, सामीप्यस्याव्ययीभावे नपुंसकह्रस्वत्वम्। तस्य नलस्य यत् वर्त्तुलं चित्रं तिलकं तद्रूपिणी सती सङ्गता इव इत्युत्प्रेक्षा। बभूव खलु ? चित्रं स्यादद्भुतालेख्यतिलकेति विश्वः। नलः सद्यः भैमीचित्ताकर्षकं तिलकं दधार इत्यर्थः। त्रिपुण्ड्रं सुरविप्राणां वर्त्तुलं नृपवैश्ययोः। अर्द्धचन्द्रन्तु शूद्राणामन्येषामूर्द्ध्वपुण्ड्रकमिति स्मरणाद्वर्त्तुलेत्युक्तम् ॥ ६२ ॥

अचुम्बीति। सरोजतर्जिना पद्मधिक्कारिणा नलस्य इदं नलीयं वा नामधेयस्येति वृद्धत्वाच्छप्रत्ययः। तेन वक्त्रेण वक्त्रचन्द्रेण इत्यर्थः। सरोजतर्जिविशेषणसामर्थ्यात् वक्ष्यमाणतारायोगसामर्थ्याच्च या चन्दनविन्दोः मण्डली विम्बं पूर्वोक्तवर्त्तुलतिलकमित्यर्थः। वि[illegible]ऽस्त्री मण्डलं त्रिष्वित्यमरः। अचुम्बि चुम्बिता धृता इत्यर्थः। तया चन्दनविन्दुमण्डल्या शशाङ्कस्य चन्द्रस्य अङ्कवर्त्तिनी समीपवर्त्तिनी श्रियं श्रिता शोभाधारिणी सती काचन तारका दिनकृतसमागमा काचिदश्विन्यादीनाम् अन्यतमा

न यावदग्निभ्रममेत्य दूढतां
नलस्य भैमीति हरेर्दुराशया।
स विन्दुरिन्दुः प्रहितः किमस्य सा
न वेति भाले पठितुं लिपीमिव॥ ६४॥

कपोलपालीजनितानुविम्बयोः
समागमात् कुण्डलमण्डलद्वयी।
नलस्य तत्कालमवाप चित्तभू-
रथस्फुरच्चक्रचतुष्कचारुताम्॥ ६५॥

---

तारका सखी कृता सहचरी कृता इत्युत्प्रेक्षा चन्दनविन्दु-तिलकेन तु नलमुखं दिवसे तारायुक्तचन्द्रवच्चकासामास इत्यर्थः॥ ६३॥

नेति। सः पूर्वोक्तः विन्दुवर्त्तुलचन्दनतिलकः अग्निभ्रमंयावत् यावदग्निभ्रमं वैवाहिकाग्निप्रदक्षिणीकरणपर्य्यन्तमित्यर्थः, यावदवधारणे इत्यव्ययीभावः। भैमी नलस्य उदूढताम् उद्वाहसंस्कृतत्वं भार्य्यात्वं न एति प्राप्नोतीति हरेः इन्द्रस्य दुराशया वृथाभिलषेण हेतुना सा भैमी अस्य नलस्य किं भवेत् इति न वा इति भाले लिपीं ललाटलिखितं, कृदिकारादीकारः। पठितुं वाचयितुं प्रहितः इन्द्रेण प्रेषितः, इन्दुः इवाभातीति शेषः। उत्प्रेक्षा॥ ६४॥

कपोलेति। नलस्य कुण्डलमण्डलद्वयी कर्णवेष्टनभूषणयुगली कपोलपाल्यां जनितयोः गण्डमण्डलसंक्रान्तयोः निजानुविम्बयोः स्वप्रतिविम्बयोः समागमात् मिलनात् तत्कालं तस्मिन् काले चित्तभुवः कामस्य रथे स्फुरतः चक्रचतुष्कस्य चारुताम् अवाप। रथस्य चतुश्चक्रत्वात् कुण्डलद्वयं स्वप्रतिविम्बद्वयेन सह अन्वयं श्रितेति रथचक्रचतुष्टयवती इव भातीत्यर्थः॥६५॥

श्रितास्य कण्ठं गुरुविप्रवन्दनात्
विनम्रमौलेश्चिबुकाग्रचुम्बिनी।
अवाप मुक्तावलिरास्यचन्द्रमः-
स्रवत्सुधातुन्दिलविन्दुवृन्दताम्॥ ६६॥

यदुद्धता श्रीर्बलवान् बलं द्विषन्
बभूव यस्याजिषु वारणेन सः।
अपूपुरत् तान् कमलार्थिनो घनान्
समुद्रभावं स बभार तद्भुजः॥ ६७॥

---

श्रितेति। गुरूणां मातापित्रादीनां विप्राणाञ्च वन्दनात् प्रणामात् विनम्रमौलेः नम्रशिरसः अस्य नलस्य कण्ठं श्रिता चिबुकं मुखाधोभागः मुखस्य अधस्ताच्चिबुकम् इत्यमरः। तस्य अग्रं चुम्बति स्पृशति इति तच्चुम्बिनी मुक्तावलिः आस्यचन्द्रमसः मुखचन्द्रात् स्रवन्त्याः सुधायाः तुन्दिलानां स्थूलानां विन्दूनां वृन्दतां समूहत्वम् अवाप तत् इव बभौ इत्यर्थः॥६६॥

यदिति। श्रीः सम्पत्तिः पद्मा च यदुद्धता यस्मात् मुद्रा-भुजाच्च उद्भूता यद्वा यदिति भिन्नं पदम् अव्ययं पञ्चम्यर्थे योज्यम्। शोभा सम्पत्तिपद्मे च लक्ष्मीः श्रीरिव कथ्यते इति विश्वः। बलं सैन्यं द्विषन् विरुन्धन् सः नलः आजिषु युद्धेषु यस्य भुजस्य कर्त्तृसम्बन्धिना वारणेन शत्रुनिवारणशक्त्या बल-वान् प्रबलः बभूव, अन्यत्र सः प्रसिद्धः बलं द्विषन् बलासुरस्य द्विट् इन्द्रः, द्विषोऽमित्र इति शतृप्रत्ययेऽ दशः, तस्यापि त्वन्निति प्रत्याहारावलोकेत्यादिना षष्ठी प्रतिषेधात् कर्मणि षष्ठी। यस्य समुद्रस्य सम्बन्धिना वारणेनापि साधनेन आजिषु बलवान् बभूव, बलं सैन्यं बलं स्थौल्यं वल्यं शक्तिर्बलोऽ-सुर इति शाश्वतः। यः भुजः घनान् निरन्तरान् तान् प्रसिद्धान्

कृतार्थयन्नर्थिजनाननारतं
बभूव तस्यामरभूरुहः करः ।
तदीयमूले निहितं द्वितीयवत्
ध्रुवं दधे कङ्कणमालवालताम् ॥ ६८ ॥
रराज दोर्मण्डनमण्डलीजुषोः
स वज्रमाणिक्यसितारुणत्विषोः ।
मिषेण वर्षन् दशदिक्षु खोन्मुखौ
यशःप्रतापाववनीजयार्जितौ ॥ ६९ ॥

---

कमलार्थिनः लक्ष्मीकामान्, अन्यत्र यः समुद्रः तान् कमलार्थिनः जलार्थिनः घनान् मेघान् अपूपुरत् पूरयामास, पिबतेः पृणोतेर्वा लुङ् । कमला श्रीर्जलं पद्मं कमलं कमलो मृगः इति, घनं सान्द्रं घनं वाद्यं घनो मुस्ता घनेऽम्बुद इति च शाश्वतः । सः तद्भुजः नलबाहुः मुद्रया सह वर्त्तते इति समुद्रः मुद्रया सहितः सम् उनत्तीति समुद्रः सागरश्च सा विपश्चीत्यादिना जलधेः कारणादिकः ठप्रत्ययः । तस्य भावं समुद्रत्वं बभार मुद्रिताभरणम् आमुमोचेति प्रकृतार्थः, सागरार्थस्तु ध्वनिरेव विशेषणविशेष्ययोरुभयोरिति श्लिष्टत्वादिति ॥ ६७ ॥

कृतार्थयन्निति । तस्य नलस्य करेण हस्तेन अनारतम् अश्रान्तम् अर्थिजनान् कृतार्थयन् सार्थान् कुर्वन् अमरभूरुहः कल्पवृक्षः बभूव तदीये कल्पवृक्षसम्बन्धिनि मूले मणिबन्धे निहितम् आसक्तं द्वितीयवत् सद्वितीयं कङ्कणं कनकवलयम् आलवालतां दधे दधार ध्रुवम् इत्युत्प्रेक्षायाम् ॥ ६८॥

रराजेति । सः नलः दोर्मण्डने मण्डलीजुषोः बाहुभूषणपटलभाजोः वज्राणां हीराणां माणिक्यानां पद्मरागाणाञ्च यथासङ्ख्यं सितारुणयोः श्वेतलोहितयोः त्विषोः कान्त्योः मिषेण

गृहात् गृहादेत्य धृतप्रसाधना
व्यराजयन् राजपथानथाधिकम् ॥ ७३ ॥
अजानती कापि विलोकनोत्सुका
समीरधूतार्द्धमपि स्तनांशुकम् ।
कुचेन तस्मै चलतेऽकरोत् पुरः
पुराङ्गना मङ्गलकुम्भसम्भृतिम् ॥ ७४ ॥
सखीं नलं दर्शयमानयाङ्कतः
जवादुदस्तस्य करस्य कङ्कणे ।
विषज्य हारैस्त्रुटितैरतर्कितैः
कृतं कयापि च्चणलाजमोच्चणम् ॥ ७५ ॥

---

वस्य स्वर्गस्य सम्बन्धिन्यः अप्सरसः तत्कल्पाः पौराङ्गनाः उज्ज्वलं दीप्यमानं तं नलं वीच्चितुं रसोदयात् रागातिरेकात् धृतं प्रसाधनं याभिः ताः अलङ्कृताः सत्यः गृहात् गृहात्, वीप्सायां द्विर्भावः। एत्य आगत्य राजपथान् राजमार्गान् अधिकम् अत्यर्थं व्यराजयन् अशोभयन् ॥ ७३ ॥

अथ वाराङ्गनानां तात्कालिकीः शृङ्गारचेष्टा नवभिर्व र्णयति अजानातीत्यादि। कापि पुराङ्गना विलोकनोत्सुका नलदर्शनासक्ता सती समीरेण धूतम् अर्द्धं यस्य अर्द्धापसृतमपि स्तनांशुकम् अजानती व्यासङ्गात् एव स्रस्तांशुकेन कुचेन कुचकुम्भेन इति यावत्। चलते गृहात् निर्गच्छते, तस्मै नलाय पुरः अग्रे मङ्गलकुम्भसम्भृतिं मङ्गलार्थं पूर्णकुम्भसम्भरणम् अकरोत्। प्रायेण उत्सवेषु नववस्त्रवेष्टितं पूर्णकलशमग्रे स्थापयेत् इत्याचारः ॥ ७४ ॥

सखीमिति। अङ्कतः कुतश्चित् श्वेतच्छत्रादिचिह्नात्, उत्सङ्गचिह्नयोरङ्क इत्यमरः। सखीं प्रति नलं दर्शयमानया सख्या

लसन्नखादर्शमुखाम्बुजस्मित-
प्रसूनवाणीमधुपाणिपल्लवम्।
यियासतस्तस्य नृपस्य जज्ञिरे
प्रशस्तवस्तूनि तदेव यौवतम्॥ ७६ ॥
करस्थताम्बूलजिघत्सुरेकिका
विलोकनैकाग्रविलोचनोत्पला।

---

नलं दर्शयमानयेत्यर्थः। णिचश्चेत्यात्मनेपदम्, उपसङ्ख्याना-दणि कर्त्ता सख्या वैकल्पिकं कर्मत्वम्। कयापि पुराङ्गनया जवात् उदस्तस्य नलदर्शनाय उत्क्षिप्तस्य करस्य सम्बन्धिनि कङ्कणे विषज्य लगित्वा अतर्कितैः अचिन्तितोपनतैः त्रुटितैः छिन्नैः हारैः क्षणं लाजमोक्षणं कृतं तदेव माङ्गलिके लाजाव-किरणं जातमित्यर्थः। आवश्यकश्चायमाचारः। यथोक्तं रघु-वंशेऽपि—"अवाकिरन् वयोवृद्धास्तं लाजैः पौरयोषितः" इति ॥ ७५ ॥

लसदिति। नखाः एव आदर्शाः मुखानि एव अम्बुजानि स्मितानि एव प्रसूनानि वाण्यः एव मधूनि माक्षिकाणि पाणयः एव पल्लवाः तेषां द्वन्द्वः ते लसन्तः यस्मिन् तत्तथोक्तं, तत् यौवतं युवतिसमूहः एव गार्भिण्यं यौवतं गणे इत्यमरः। भिक्षादिभ्योऽण् युवतिशब्दस्य गणे ग्रहणसामर्थ्यादेव भस्याढे-तद्धित इति पुंवद्भावः। यियासतः अभिजिगमिषतः, यातेः सनन्तात्लट् शत्रादेशः। तस्य नृपस्य नलस्य प्रशस्तवस्तूनि तत्कालोचितमङ्गलद्रव्याणि जज्ञिरे जातानि, जनेर्लिटि गमहनेत्यादिना उपधालोपः॥७६॥

करस्थेति। करस्थताम्बूलम् अत्तुम् इच्छुः जिघत्सुः,

मुखे निचिक्षेप मुखद्विराजता-
रुषेव लीलाकमलं विलासिनी ॥ ७७ ॥
कयापि वीक्षाविमनस्कलोचने
समाज एवोपपतेः समीयुषः ।
घनं सविघ्नं परिरम्भसाहसैः
तदा तदालोकनमन्वभूयत ॥ ७८ ॥

---

प्रसादेशात् सनन्तादुप्रत्ययः । एका एव एकिका विलोकनैकाग्रे तदेकासक्ते विलोचनोत्पले यस्याः सा सती काचित् विलासिनी मुखस्य द्वितीयः राजा द्विराजः वृत्तिविषये सङ्ख्याशब्दस्यापूरणार्थत्वं त्रिभागेत्यादिवद् द्विराजः । द्विराजस्य भावः द्विराजता तत्र रुषा रोषेण इव । लीलाकमलं मुखे निचिक्षेप विदधे । ताम्बूलचर्वणेच्छुः काचित् स्त्री भ्रमेण लीलापद्मं वदने अर्पितवती इति भावः । लीलाकमलस्य मुखप्रतिद्वन्द्वित्वेन एव रुषा मुखे चर्वणार्थमर्पणम् इति उत्प्रेक्षालङ्कारः । एतेन विभ्रमाख्यस्य ष्टानुभाव उक्तः । विभ्रमस्त्वरयाऽस्थाने भूषास्थानविपर्य्यय इति लक्षणात् ॥ ७७ ॥

कयापीति । कयापि कान्तया वीक्षया विनिमिषवीक्षया नलदर्शनलालसेन विमनस्के विषयान्तरविमुखे लोचने यस्य तस्मिन् समाजे जनसमूहे एव समीयुषः सङ्गतस्य उपपतेः जारस्य घनं गाढं यथा तथा परिरम्भसाहसैः आलिङ्गनसाहसकार्यैः तदा तत्काले तदालोकनं नलविलोकनं सविघ्नं यथा तथा अन्वभूयत अनुभूतम् । कामान्धाः किं न कुर्वन्तीति भावः ॥७८॥

दिदृक्षुरन्या विनिमेषवीक्षणा
नृणामयोग्यां दधती तनुश्रियम् ।
पदाग्रमात्रेण यदस्पृशत् महीं
न तावता केवलमप्सरोऽभवत् ॥ ७९ ॥
विभूषणस्रंसनशंसनार्पितैः
करप्रहारैरपि धूननैरपि ।
अमान्तमन्तः प्रसभं पुरा परा
सखीषु सम्मापयतीव सम्मदम् ॥ ८० ॥

---

दिदृक्षुरिति । दिदृक्षुः नलं द्रष्टुम् इच्छुः अतएव विनिमेषवीक्षणा अनिमेषदृष्टिः नृणाम् अयोग्याम् अमानुषीं तनुश्रियम् अङ्गसौन्दर्य्यं दधती अन्या पदाग्रमात्रेण महीं यत् अस्पृशत् तावता केवलं महीतलस्पर्शेनैव न अप्सरोऽभवत् । अन्यथाप्सरसोऽस्याश्च को भेद इति भावः । अत्र महीमस्पृशदित्युपमेयस्योपमानादीषदल्पत्वकथनेन भेदप्रधानसादृश्योक्तिर्व्यतिरेकालङ्कारभेदः । भेदप्रधानं साधर्म्यमुपमानोपमेययोः । आधिक्याल्पत्वकरणाद् व्यतिरेकः स उच्यते इति लक्षणात् ॥ ७९ ॥

विभूषणेति । परा अन्या काचित् सखीषु अन्तः अन्तःशरीरे अमान्तमत्याधिक्यात् उल्लसन्तं सम्मदं हर्षं विभूषणानां स्रंसनस्य शंसनाय यथास्थानानिवेशनाय अर्पितैः प्रयुक्तैः करप्रहारैः पाणिघातैरपि तथा धूननैरपि प्रसभं बलात् पुरा सम्मापयतीव सम्मापयामासेवेत्युत्प्रेक्षा । यावत्पुरानिपातयोर्लडिति भूते लट् । यथा तण्डुलादिसम्मापनाय प्रस्थादिकं मुष्टिभिर्घ्नन्ति धुवन्ति च तद्वदिति भावः ॥८०॥

वतंसनीलाम्बुरुहेण किं दृशा
विलोकमाने विमनीबभूवतुः ।
अपि श्रुती दर्शनसक्तचेतसां
न तेन ते शुश्रुवतुर्मृगीदृशाम् ॥ ८१ ॥

काश्चिन्निर्माय चक्षुःप्रसृतिचुलुकितं ताश्शशङ्कस्म कान्ता
मौग्ध्यादाचूड़मोघैर्निचुलितमिव तं भूषणानां मणीनाम् ।
साहस्रीभिर्निमेषाकृतमतिभिरयं दृग्भिरालिङ्गितः किं
ज्योतिष्टोमादियज्ञश्रुतफलजगतीसार्वभौमभ्रमेण ॥ ८२ ॥

---

वतंसेति । दर्शनसक्तचेतसां नलविलोकनासक्तचित्तानां मृगीदृशां स्त्रीणां श्रुती कर्णौ वतंसनीलाम्बुरुहेण कर्णावतंसोत्पलेन दृशा चक्षुषेति रूपकं विलोकमाने नलं पश्यन्त्यौ अविमनसौ विमनसौ बभूवतुः दुःखिते इव किमित्युत्प्रेक्षा । अरुमनश्चक्षुश्चेतोरहोरजसां सलोपश्चेति च्विप्रत्ययः, सलोपश्च अस्य च्वाविनीकारः । तेन विमनोभावेन ते न शुश्रुवतुः । अन्यथा कथं तासां करणानां न स्वस्वविषयग्रहणमिति भावः ॥ ८१ ॥

काश्चिदिति । तासु पौरकान्तासु मध्ये काचित् कान्ता भूषणानां सम्बन्धिनां मणीनाम् ओघैः आचूडम् आशिखण्डकम्, अभिविधावव्ययीभावः । निचुलितं छ[illegible]तमिव स्थितं तं नलं चक्षुर्भ्यामिव प्रसृतिभ्यां निकुब्जपा[illegible]भ्यां, पाणिर्निकुब्जः प्रसृतिरित्यमरः । चुलुकितं निर्माय गृहीतं कृत्वा अधिकं दृष्ट्वेत्यर्थः, मौग्ध्यात् मोहात् अशङ्कस्त । शङ्काप्रकारमेवाह—अयं पुमान् ज्योतिष्टोमादियज्ञैः श्रुतम् अवगतं ज्योतिष्टोमादियज्ञप्राप्तं फलं फलभूता जगती स्वर्गलोकः तस्याः

भवन् सुद्युम्नः स्त्री नरपतिरभूत् यस्य जननी
तमुर्वश्याः प्राणानपि विजयमानस्तनुरुचा ।
हरारब्धक्रोधेन्धनमदनसिंहासनमसौ
अलङ्कर्मीणश्रीरुदभवदलङ्कर्त्तुमधुना ॥ ८३ ॥

---

सार्वभौमः सर्वभूमेः ईश्वरः इन्द्रः, सर्वभूमीपृथिवीभ्यामणञाविति अणप्रत्ययः । इति भ्रमेण भ्रान्त्या निमेषाक्रतमतिभिः निमेषाक्रतबुद्धिभिः अनिमेषाभिरित्यर्थः, साहस्रीभिः सहस्रसङ्ख्याकाभिः, अण्चेति मत्वर्थीयोऽण्प्रत्ययः । दृग्भिः नेत्रैः आलिङ्गितः किम् ? इति आशङ्कन्त इत्येकान्वयो वा मणिभूषितम् एनं दृष्ट्वा पौरकान्ताः अस्मिन् इन्द्रभ्रान्त्या नेत्रसहस्रम् एनं प्राप्तं किम् ? इति उत्प्रेक्षितवत्यः इत्यर्थः । भ्रान्तिमत्सङ्कीर्णेयमुत्प्रेक्षा ॥ ८२ ॥

भवन्निति । सुद्युम्नो नाम नरपतिः राजा स्त्री भवन् ईश्वरशापात् स्त्री सन् यस्य पुरूरवसः जननी माता अभूत् उर्वश्याः प्राणान् प्राणभूतम् अप्सरोमनोहारि रूपमित्यर्थः । तस्याम् इलायां बुधात् उत्पन्नम् तम् ऐलं पुरूरवसम् तनुरुचा अङ्गलावण्येन विजयमानः अतिशयानः असौ नलः हरेण आरब्धस्य आवेशितस्य क्रोधस्य क्रोधाग्नेः इन्धनस्य दाह्यस्य मदनस्य सिंहासनम् अलङ्कर्त्तुम् अधिष्ठातुम् अलं कर्मणे अलङ्कर्मीणः कर्मक्षमोऽलङ्कर्मीण इत्यमरः । अषड्क्षेत्यादिना खप्रत्ययः । अलङ्कर्मीणा श्रीः यस्य सः मदनराज्याभिषेकार्हः सन् अधुना उदभवत् ततोऽपि सुन्दर इत्यर्थः । अत्र सुद्युम्नो नाम राजा मृगयासक्तो हिमवत्पार्श्वे पार्वतीवनं प्रविष्टः ईश्वरशापात् स्त्रीत्वं प्राप्य बुधात् पुरूरवसमतिसुन्दरमिन्दुवंशप्रवर्त्तकं जनयामासेति पौराणिकी कथा अनुसन्धेया ॥ ८३ ॥

अर्थी सर्वसुपर्वणां पतिरसावेतस्य यूनः कृते
पर्य्यत्याजि विदर्भराजसुतया युक्तं विशेषज्ञया ।
अस्मिन्नाम तया वृते सुमनसः सन्तोऽपि यन्निर्जरा
जाता दुर्मनसो न सोढुमुचितास्तेषां तु सानौचिती ॥८४॥
अस्योत्कण्ठितकण्ठलोठिवरणस्रक्साक्षिभिर्दिग्धवैः
स्वं वचः स्वयमस्फुटन्न किमदः शस्त्रादपि स्फोटितम् ।
व्यावृत्योपनतेन हा शतमखेनाद्य प्रसाद्या कथं
भैम्या व्यर्थमनोरथेन च शची साचीकृतास्याम्बुजा ॥८५॥

---

अर्थीति । अर्थी अर्थित्वं प्राप्तः असौ प्रसिद्धः सर्वसुपर्वणां पतिः देवेन्द्रः एतस्य यूनः कृते एतल्लाभार्थं विशेषज्ञया विदर्भराजसुतया वैदर्भ्या पर्य्यत्याजि परित्यक्तः त्यक्तः इति युक्तम् अन्यथा अज्ञत्वं स्यादिति भावः । किन्तु अस्मिन् नले तया वैदर्भ्या वृते सति निर्जराः देवाः इन्द्रादयः सुष्ठु मन्यन्ते जानन्तीति सुमनसः, सुन्नोऽजाणादिकोऽसुन् प्रत्ययः । शोभनचित्ताश्च सन्तोऽपि दुर्मनसः दूनमनसः जाता नाम इति यत् । नामेति सम्भावनायां तेषां देवानां सा तु दुर्मनीकरणन्तु विधेयप्राधान्यात् स्त्रीलिङ्गनिर्देशः । अनौचिती अनौचित्यं सोढुं न उचिता, विशेषज्ञानाम् उत्कृष्टवस्तुस्वीकरणम् उचितमेव किन्तु देवतानाम् अस्वीकरणे दुर्मनीकरणसाहसमनुचितमिति भावः ॥ ८४ ॥

अस्येति । अस्य नलस्य उत्कण्ठिते कण्ठे लुण्ठतीति लोठिन्याः वरणस्रजः साक्षिभिः दिग्धवैः दिक्पालैः स्वयं स्वतः अस्फुटत् अपि इदं स्वं वचः शस्त्रादपि किं न स्फोटितं ततोऽपि यावत् विस्फोटितव्यमेवेत्यर्थः । किञ्च अद्य भैम्यां व्यर्थमनोरथेन व्यावृत्योपनतेन प्रत्यावृत्तेन शतमखेन इन्द्रेण साचीकृतं तिर्य्य-

मा जानीत विदर्भजामविदुषीं कीर्त्तिं मुदः श्रेयसी
सेयं भद्रमचीकरत् मघवता न स्वं द्वितीयां शचीम् ।
कः शच्या रचयाञ्चकार चरितं काव्यं स नः कथ्यताम्
एतस्यास्तु करिष्यते रसधुनीपात्रे चरित्रे न कैः ? ॥८६॥
वैदर्भीबहुजन्मनिर्मिततपःशिल्पेन देहश्रिया
नेत्राभ्यां स्वदते युवायमवनीवासः प्रसूनायुधः ।

---

कृतम् आस्याम्बुजं यस्याः सा पराङ्मुखी शची कथंप्रसाद्या ? प्रसादयितव्या ? न कथञ्चिदित्यर्थः, हा विषादे ॥८५॥

मेति । विदर्भजां वैदर्भीम् अविदुषीम् अविशेषज्ञां मा जानीत मन्यध्वम् । देवानन्दं विहाय मानुषानन्दे प्रवृत्ता कथमविदुषी इति शङ्कां निरस्यति । यतः मुदः आनन्दात् कीर्त्तिं श्रेयसी प्रशस्यतरा । ततः किं तत्र इति आह । सा इयं दमयन्ती प्रयोजिका मघवता इन्द्रेण प्रयोज्येन स्वम् आत्मानं द्वितीयां शचीं न अचीकरत् न कारितवती न इन्द्रं वव्रे इत्यर्थः । करोतेर्णौ चङ्युपधाया ह्रस्वः चङिति द्विर्भावे सन्वद्भावे सन्वत इत्यभ्यासस्यात्वदीर्घे लघोरिति दीर्घः । इति भद्रम् । इन्द्रस्यावरणम् एव साधु कीर्त्तिकरत्वादित्यर्थः । कथं शचीत्वमेव न साधु इत्याह—कः कविः शच्याः चरितं काव्यं रचयाञ्चकार सः कविः नः अस्मभ्यं कथ्यतां न कोऽपीत्यर्थः । एतस्यास्तु दमयन्त्याः सम्बन्धिनी रसधुनी रसवती तटिनी तटिनी ह्रादिनी धुनीत्यमरः । तस्याः पात्रे कूलद्वयमध्ये प्रवाहस्थाने इत्यर्थः । पात्रं तु भाजने योग्ये वित्ते कूलद्वयान्तरे इति वैजयन्ती । चरित्रे कैः कविभिः न करिष्यते ? सर्वैरपि स्वत एव करिष्यते इत्यर्थः । स्वयमेव दृष्टान्तः इति कवेः तात्पर्य्यं तस्मात् कीर्त्तिकरत्वादेतदेव भद्रमिति भावः ॥८६॥

गीर्वाणालयसार्वभौमसुकृतप्राग्भारदुष्प्रापया
योगं भीमजयानुभूय भजतामद्वैतमद्य त्विषाम् ॥ ८७ ॥
स्त्रीपुंसव्यतिषञ्जनं जनयतः पत्युः प्रजानामभूत्
अभ्यासः परिपाकिमः किमनयोर्दाम्पत्यसम्पत्तये ।
आसंसारपुरन्ध्रिपूरुषमिथः प्रेमार्पणक्रीडया-
ऽप्येतज्जम्पतिगाढरागरचनात् प्राकर्षि चेतोभुवः ॥८८॥

---

वैदर्भीति । अवन्यां वासः यस्य सः प्रसूनायुधः पुष्पेषुः भूलोकमन्मथः इति यावत् । अयं युवा नलः वैदर्भ्याः दमयन्त्याः बहुषु जन्मसु निर्मितेन कृतेन तपसा शिल्पेन निर्माणेन दमयन्तीतपःफलेनेत्यर्थः, देहश्रिया कायकान्त्या नेत्राभ्यां स्वदते रोचते नेत्रानन्दं करोतीत्यर्थः । रुच्यर्थानां प्रीयमाणत्वाच्चतुर्थी । तस्मात् अयं गीर्वाणालयसार्वभौमसुकृतप्राग्भारैः नाकनायकपुण्यराशिभिः अपि दुष्प्रापया इन्द्रादिदुर्लभया इत्यर्थः, भीमजया भैम्या योगम् अनुभूय अद्य त्विषां कान्तीनाम् अद्वैतम् अद्वितीयत्वम् असाधारण्यं भजतां गच्छतु ॥८७॥

स्त्रीपुंसेति । स्त्री च पुमांश्च स्त्रीपुमांसौ, अचतुरेत्यादिना निपातनात् साधुः । तयोः व्यतिषञ्जनं जनयतः सङ्घटनं कुर्वतः प्रजानां पत्युः स्रष्टुः परिपाकेन निर्वृत्तः परिपाकिमः परिपक्वः इत्यर्थः । भावप्रत्ययान्तादिमनिज्वक्तव्यः । अभ्यासः स्वाभ्यासः अनयोः दमयन्तीनलयोः दाम्पत्यस्य जायापतित्वस्य सम्पत्तये सम्पादनाय अभूत् किं ? नो चेत् कथमीदृगनुरूपसङ्घटकत्वमिति भावः । किञ्च, चेतोभुवः कामस्य अपि आसंसारं संसारम् आरभ्य अभिविधावव्ययीभावः । पुरन्ध्रीपूरुषयोः

ताभिर्दृश्यत एष यान् पथि महाज्यैष्ठीमहे मञ्चगे
यद्दृग्भिः पुरुषोत्तमः परिचितः प्राक् सप्तमप्यम् इतः।
सा स्त्रीराट् पतयालुभिः शितिसितैः यादस्य दृक्चामरैः
सत्त्वे मायमथाभिवातियमुनागङ्गौघयोर्मी यया ॥८८॥

---

स्त्रीपुंसयोः मिथः अन्योन्यं प्रेम्णोऽर्पणम् अनुरागोत्पादनम् एव क्रीड़ा तयापि एतद्दम्पत्योः सः गाढः रागः प्रेमा तस्य रचनात् सम्पादनात् प्राकर्षि प्रकर्षं गमितः इत्यर्थः। तथा अभ्यासं विना कथम् ईदृगन्योन्यानुरागजननचातुरीभावः ? कृषेर्ण्य-न्तात् कर्मणि लुङ्। दम्पती जम्पती जायापतीत्यमरः। जाया-शब्दस्य दम्भावो जम्भावश्च निपातितः ॥८८॥

ताभिरिति। ताभिः स्त्रीभिः एष नलः पथि राजपथे यान् गच्छन्, यातेर्लटः शत्रादेशः। दृश्यते, आसां दृग्भिः नेत्रैः प्राक् पूर्वस्मिन् जन्मनि ज्येष्ठया नक्षत्रेण युक्ता पौर्णमासी, नक्षत्रेण युक्तः काल इति ङीप्। सा महती पूज्या ज्यैष्ठी तस्यां यो महः उत्सवः तस्मिन्, मञ्चं पर्य्यङ्कं अञ्चन् मञ्चस्थः इत्यर्थः। शयनं मञ्चपर्य्यङ्कपल्यङ्काः खट्टकाः समा इत्यमरः। पुरुषोत्तमः नारायणः परिचितः दृष्टः कृतः नेत्रैः उपासितः इत्यर्थः। तादृक् सुकृतं विना कथमीदृङ्महाभागदर्शनं लभ्यते इति भावः। यथाहुः "दोलारूढ़ञ्च गोविन्दं मञ्चस्थं मधुसूदनम्। रथस्थं वामनं दृष्ट्वा पुनर्जन्म न विद्यते ॥" पत-यालुभिः उपरिपातुकैः, स्पृहिगृहिपतीत्यादिना चौरा-दिकात्पतेरालुचिरयान्ताल्वित्यादिना णेरयादेशः। शितिभिः श्यामवर्णैः तथा सितैः शुभ्रैश्च अस्य नलस्य दृग्भिः दृष्टिभिः एव चामरैः व्यजनैः सा स्त्रीणां राट् स्त्रीराट्, स्त्रीणां राज्ञी स्यात्। सत्सू द्विषेत्यादिना क्विप्। राजचिह्नत्वात् चामराणामिति

वैदर्भीविपुलानुरागकलनासौभाग्यमत्राखिल-
क्षौणीचक्रशतक्रतौ निजगदे तद्वृत्तवृत्तक्रमैः ।
किञ्चास्याकनरेन्द्रभूसुभगतासम्भूतये कल्मकं
देवेन्द्रावरणप्रसादितशचीविश्राणितायीर्वचः ॥९०॥

---

भावः । यया स्त्रिया, अघानि अभिहन्तीति अघाभिघाती पाप-विनाशी, *ताच्छील्ये णिनिः, हो हेरिति कत्वं हनस्ताच्छील्यलो*रिति नकारस्य तकारः । तस्मिन् यमुनागङ्गयोः ओघयोगे प्रवाहसंयोगसमीपे गङ्गायमुनासङ्गमे इत्यर्थः । सामीप्ये अव्ययीभावः, तृतीयासप्तम्योर्बहुलमिति विकल्पादम्भावाभावः । मघाभिर्नक्षत्रेण युक्ता पौर्णमासी माघी नक्षत्रेण युक्तः काल इत्यण् स माघः अस्मिन् इति माघः, सास्मिन् पौर्णमासीति संज्ञायामित्यण्प्रत्ययः । तं माघं माघमासम्, अत्यन्तसंयोगे द्वितीया । सस्ने स्नातं, स्नातेर्भावे लिट् । यया प्रयागे स्नातं सैव नलेन अवलोक्यते अन्यथा कथमीदृङ्महालाभ इति भावः । अत्राप्याहुः—"सितासितेषु यैः स्नातं माघमासे युधिष्ठिर ! । न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ॥" इति मन्महे, विवेचयामि वाक्यद्वयार्थः नर्मपदम् ॥ ८९ ॥

वैदर्भीति । अखिलक्षौणीचक्रशतक्रतौ अखिलभूलोकदेवेन्द्रे अत्र अस्मिन् नले वैदर्भीविपुलानुरागकलना दमयन्तीगाढानुरागलाभः सा एव सौभाग्यं वाल्लभ्यं क[illegible] तस्याः भैम्याः वृत्तवृत्तक्रमैः अतीतचरित्रप्रकाशैः इन्द्रप्रतिषेधादिभिः कर्तृभिः वृत्तं पद्ये चरित्रे च वर्तुलं निस्तलं वृत्तमित्युभयत्राप्यमरः । निजगदे गदितं, तादृगनुरागाभावे कथमिन्द्रादिप्रतिषेध इति भावः । किञ्च, देवेन्द्रस्य अवरणेन वरणप्रतिषेधेन प्रसाधि-

आसुत्राममपासनात् मखभुजां भैम्यैव राजव्रजे
तादर्थ्यागमनानुरोधपरया युक्तार्जि लज्जामृजा।
आत्मानं त्रिदशप्रसादफलितं पत्ये विधायानया
क्रोरोषापयशःकथानवसरः सृष्टः सुराणामपि॥ ६१॥
इत्यालेपुरनुप्रतीकमिलयालङ्कारसारश्रियाऽ-
लङ्कुर्वत्तनुरामणीयकममूरालोक्य पौरस्त्रियः।

---

*तया सन्तोषितया शच्या विश्राणितं दत्तम् आशीर्वचः एव* अस्माकमियम् आस्माकी, युष्मदस्मदोरन्यतरस्यां खञ् चेति चकारादण् तस्मिन्नणि च युष्माकास्माकाविति अस्माकादेशः। तस्याः नरेन्द्रभुवः राजपुत्र्याः भैम्याः शुभगतायाः पतिवाल्लभ्यस्य सम्भूतये लाभाय लग्नकं प्रतिभूः अभूत् इति शेषः। स्युर्लग्नकाः प्रतिभुव इत्यमरः। स्त्रीणां सौभाग्यस्य शचीप्रसादलभ्यत्वादिति भावः॥ ६०॥

आसुत्राममिति। राज्ञां भूभुजां व्रजे राजव्रजे स्वयंवरगतराजसमाजे तादर्थ्येन नलाद्यर्थं यत् आगमनं स्वयंवरप्रवेशनं तस्य अनुरोधः अनुवर्त्तनमेव परं प्रधानं यस्याः तया नलैकपरया भैम्या आसुत्रामम् इन्द्रपर्य्यन्तम् अभिविधावव्ययीभावः अनश्चेति समासान्तष्टच्। मखभुजां देवानाम् अपासनात् प्रतिषेधात् हेतोः लज्जायाः मृजा प्रमार्जनं युक्ता योग्या एव आर्जि अर्जिता, "आहारे व्यवहारे च त्यक्तलज्जः सुखी भवेत्" इति न्यायादिति भावः। अनया भैम्या त्रिदशप्रसादेन फलितं सफलम् आत्मानं पत्ये वराय नलाय दत्त्वा सुराणां क्रोरोषापयशसां लज्जाक्रोधसम्प्रतिषेधप्रसक्तानां कथानाम् अपि अनवसरः सृष्टः अनवकाशः कृतः। तदनुज्ञयैव प्रकृते वरणम् इति अत्र कश्चिदपयशःकथानवकाश इत्यर्थः॥६१॥

सानन्दं कुरुविन्दसुन्दरकरस्यानन्दनं स्यन्दनं
तस्याध्यास्य यतः शतक्रतुहरित्क्रीडाद्रिमिन्दोरिव ॥८२॥
श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।
यातः पञ्चदशः कृशेतररसस्वादाविहाऽयं महा-
काव्ये तस्य हि वैरिसेनिचरिते सर्गो निसर्गोज्ज्वलः ॥८३॥

---

इतीति। कुरुविन्दः पद्मरागः, कुरुविन्दस्तु मुस्तायां कुल्मा-षव्रीहिभेदयोः। हिङ्गुले पद्मरागेऽपि मुकुलेऽपि समीरित इति विश्वः। तद्वत् सुन्दरौ करौ हस्तौ यस्य तस्य। अन्यत्र सुन्दराः कराः अंशवः यस्य तस्य आनन्दयतीति आनन्दनम् आनन्दकं नन्द्यादित्वाल्ल्युः। स्यन्दनं रथम् अध्यास्य अधिष्ठाय यतः गच्छतः, इणो लटः शत्रादेशः। तस्य नलस्य शतक्रतुहरितः प्राच्याः क्रीडाद्रिम् उदयाद्रिम् अध्यास्य यतः गच्छतः इन्दोः इव अनुप्रतीकनिलयानां प्रत्यवयवसंश्रयाणाम् अलङ्कारसाराणाम् आभरणश्रेष्ठानां श्रिया शोभासाधनेन अलङ्कुर्वत्या आत्मानं प्रसादयन्त्याः तनोर्मूर्त्तेः रामणीयकं रमणीयत्वं योगोपधाद्गुरूपोत्तमात् वुञ्। आलोक्य अमूः पौरस्त्रियः इति पूर्वोक्तरीत्या सानन्दम् यथा तथा आलेपुः आलपन्, आलपेर्लिट्। अतएव एत्वाभ्यासलोपौ ॥ ८२ ॥

श्रीहर्षमिति। कृशेतरेण अकृशेन निर्भरेण रसेन शृङ्गा-रेण स्वादौ रुचिरे इह तस्य कृतौ काव्ये पञ्चदशानां पूरणः पञ्चदशः, तस्य पूरणे डट्। अयं सर्गो यातः गतः समाप्तः इति यावत् ॥ ८३ ॥

---

## षोड़शः सर्गः।

द्रुतः प्रतस्थे स रथैरथो रथी
गृहान् विदर्भाधिपतेर्धराधिपः।
पुरोधसं गौतममात्मवित्तमं
द्विधा पुरस्कृत्य गृहीतमङ्गलः॥ १॥
स्वभूषणांशुप्रतिविम्बितैः स्फुटं
भृशावदातैः स्वनिवासिभिर्गुणैः।
मृगीदृशानां समुपासि चामरैः
विधूयमानैः स विधुप्रभैः प्रभुः॥ २॥

द्रुत इति। अथो प्रसाधनानन्तरम्, रथः अस्य अस्तीति रथी रथिकः स धराधिपः नलः अतिशयेन आत्मवित्तमम् आत्मतत्त्वज्ञानिनं गौतमं गौतमाख्यम् ऋषिं पुरोधसं पुरोहितं द्विधा पुरस्कृत्य पूजयित्वा अग्रे कृत्वा च पुरस्कृतः, पूजितेऽभियुक्तेऽग्रतः कृते इत्यमरः। गृहीतमङ्गलः स्वीकृतमङ्गलाचारः सन् तथैव रथैः द्रुतः विदर्भाधिपतेः भीमस्य गृहान् प्रति प्रतस्थे प्रस्थितः समवप्रविभ्यः स्थ इत्यात्मनेपदम्॥१॥

स्वेति। सः प्रभुः नलः स्वभूषणानाम् अंशुषु मणिषु प्रतिविम्बितैः भृशम् अवदातैः स्वच्छैः विधूयमानैः कम्प्यमानैः विधोः प्रभा इव प्रभा येषां तैः मृगीदृशानां चामरग्राहिणीनां सम्बन्धिभिः चामरैः चामरव्यजनैरित्यर्थः। भृशावदातैः अतिशुभ्रैः स्वनिवासिभिः स्वनिष्ठैः गुणैः श्रुतिशीलादिगुणैः एव समु-

परार्द्ध्यवेशाभरणैः पुरःसरैः
सहाजिहाने निषधावनीभृति ।
दधे सुनासीरपदाभिधेयतां
स रूढिमात्रात् यदि वृत्रशात्रवः ॥ ३ ॥
नलस्य नासीरसुजां महीभुजां
किरीटरत्नैः पुनरुक्तदीपया ।
प्रदीपि रात्रौ वरयात्रया तया
चमूरजोमिश्रतमिस्रसम्पदा ॥ ४ ॥

---

पासि उपासितः स्फुटं प्रतिविम्बितचामरैः स्वामिसेवार्थम् आविर्भूतचामरगुणत्वम् उत्प्रेक्षते ॥ २ ॥

परार्द्धेति । निषधावनीभृति नले परार्द्ध्यानि श्रेष्ठानि परावराधरोत्तमपूर्वाच्चेति यत्प्रत्ययः । तानि वेशाः आकल्पाः वस्त्राभरणादिशोभाः, आकल्पवेशौ नेपथ्यमित्यमरः । ते च आभरणानि कटकमुकुटादीनि च येषां तैः पुरःसरैः, सुनासीरैः सह आजिहाने गते सति स प्रसिद्धः वृत्रशात्रवः इन्द्रः, सुः पूजायाञ्च सुर इति स्वामी । सुः शोभना नासीरा अग्रेसराः यस्य सः सुनासीरः तस्य पदस्य शब्दस्य अभिधेयतां वाच्यत्वं दधे । स वृत्रशात्रवः इन्द्रः रूढ़िमात्रात् अश्वकर्णादिवत् समुदायशक्त्यर्थप्रतीतिमात्रात् यदि किन्तु सुनासीरपदतां धत्ते । नलस्य नासीरदर्शनादयमेव सुनासीर इन्द्र इति प्रतीयते इति भावः ॥ ३ ॥

नलस्येति । चमूरजोमिश्राः तमिस्रसम्पदः यस्यां तया चमूरजोमिलनात् गाढ़ान्धकारयेत्यर्थः । तथापि नलस्य नासीरसृजाम् अग्रेसरसम्पादकानां महीभृतां राज्ञां किरीटगतैः पुनरुक्ताः दीपाः यस्यां तया प्रकृतया वरस्य वोढुः यात्रया

विदर्भराजः क्षितिपाननुक्षणं
शुभक्षणासन्नतरत्वसत्वरः।
दिदेश दूतान् पथि यान् यथोत्तरं
चमूममुष्योपचिकाय तच्चयः ॥ ५ ॥
हरिद्विपद्वीपिभिरंशुकैर्नभो-
नभस्वदाध्मापनपीनितैरभूत्।
तरस्विदश्वध्वजिनीध्वजैर्वनं
विचित्रचीनांशुकवल्लिवेल्लितम् ॥ ६ ॥

---

वैवाहिकगृहयात्रया रात्री अदीपि दीप्तं, भावे लुङ्। दीपप्रकाशेन सा यात्रा गाढ़ान्धकारेऽपि दीपवत् इत्यर्थः ॥४॥

विदर्भेति। विदर्भराजः भीमः, शुभक्षणस्य विवाहमुहूर्त्तस्य आसन्नतरत्वेन सत्वरः सन् अनुक्षणं यान् क्षितिपान् एव दूतान्, उत्तरोत्तरं यथा याथार्थ्ये वीप्सायामव्ययीभावः। दिदेश तच्चयः तेषां प्रेषितानां राज्ञां चयः समूहः पथि मार्गे अमुष्य नलस्य चमूं सैन्यम् उपचिकाय वर्द्धयामास, सक्लिटेति कुत्वम्। दूतत्वेन राज्ञां बहूनां प्रेषणया लग्नातिक्रमभीरोः राज्ञस्त्वरातिशयोक्तिः ॥ ५ ॥

हरीति। विचित्राणि चीनांशुकानि पट्टवस्त्राणि तैः एव वल्लिभिः वेल्लितं नभः अन्तरिक्षं, नभस्वतः वायोः आध्मापनेन पूरणेन पीनितैः स्थूलितैः। पीनितः स्थूलःपीवर इत्यमरः। हरिद्विपद्वीपिभिः सिंहगजव्याघ्रैः तदाकारैः इत्यर्थः। शार्दूलद्वीपिनौ व्याघ्रे इत्यमरः। अंशुकैः अंशुकनिर्मितैः तरस्विनां वेगवताम् अश्वानां ध्वजिनीषु सेनासु ध्वजैः करणैः वनम् अभूत् वनकल्पम् अभूदित्यर्थः ॥ ६ ॥

भ्रुवाऽऽह्वयन्तीं निजतोरणस्रजा
गजालिकर्णानिलखेलया ततः।
ददर्श दूतीमिव भीमजन्मनः
स तत्प्रतीहारमहीं महीपतिः॥ ७॥
श्लथैर्दलैस्तम्भयुगस्य रम्भयोः
चकास्ति चण्डातकमण्डिता स्म सा।
प्रियासखीवास्य मनः स्थितिस्फुरत्-
सुखागतप्रश्नितर्य्यनिस्वना॥ ८॥
विनेतृभर्त्तृद्वयभीतिदान्तयोः
परस्परस्मादनवाप्तवैशसः।

---

भ्रुवेति। सः महीपतिः नलः गजालीनां गजघटानां कर्णानिलैः खेलया निजया तोरणस्रजा तोरणमालया एव भ्रुवा आह्वयन्तीं शीघ्रम् आगच्छ इति आह्वयन्तीं भीमजन्मनः भैम्याः दूतीम् इवेत्युत्प्रेक्षा, तस्य भीमस्य प्रतीहारमहीं ददर्श, स्त्री द्वार्द्वारं प्रतीहार इत्यमरः॥ ७॥

श्लथैरिति। रम्भयोः स्तम्भयुगस्य द्वारशोभार्थं स्थापितकदलिस्तम्भयुगलस्य श्लथैः दलैः पर्णैः चण्डातकेन अर्द्धोरुकेण मण्डिता भूषिता, अर्द्धोरुकं वरस्त्रीणां स्याच्चण्डातकमंशुक इत्यमरः। सा द्वारमही मनसि स्थित्या मनोगतत्वेन स्फुरन् बलात् निर्गच्छन् सः सुखागतप्रश्नः प्रश्नीकृतः, करोतेर्ण्यन्तात् कर्मणि क्तः। तूर्य्यनिस्वनः यया सा सती [illegible] नलस्य प्रियासखी भैमीसखी इव चकास्ति स्म चकासामास। सुवसना कदलीदलरूपा स्त्री तूर्य्यनिस्वनयोगात् स्वागतं पृच्छती भैमीसखीव बभौ इत्युत्प्रेक्षा॥ ८॥

विनेत्रेति। विनेत्रोः नियामकयोः भर्त्रोः स्वामिनोः द्वयोः

अजायत द्वारि नरेन्द्रसेनयोः
समागमः स्फारसुखारवोद्गमः ॥ ९ ॥

निवेश्य बन्धूनित इत्युदीरितं
दमेन गत्वार्द्धपथे कृतार्हणम् ।
विनीतमाद्वारत एव पद्गतां
गतं तमैक्षिष्ट मुदा विदर्भराट् ॥ १० ॥

अथायमुत्थाय विसार्य्य दोर्युगं
मुदा प्रतीयेष तमात्मजन्मनः ।
सुरस्रवन्त्या इव पात्रमागतं
धृताभितो वीचिगतिः सरित्पतिः ॥ ११ ॥

---

भीत्या भयेन दान्तयोः शान्तयोः नरेन्द्रसेनयोः भीमनलसेनयोः परस्परस्मात् अन्योन्यस्मात् अनवाप्तं वैशसं हिंसनं यस्मिन् स स्फारः तारः सुखारवोद्गमः सुखकलकलोदयः यस्मिन् स समागमो मिलनं द्वारि राजभवनद्वारे अजायत जातः ॥ ९ ॥

निवेश्येति । दमेन भीमात्मजेन बन्धून् जामातृबन्धून् निवेश्य उपवेश्य गत्वा प्रत्युद्गम्य इतः इति उदीरितम् इत एव आगम्यताम् इति प्रार्थितं अर्द्धमार्गे कृतार्हणं कृतपूजनं विनीतम् अनुगतम् आद्वारतः द्वारम् आरभ्य पादाभ्यां गच्छति पद्गः तत्तां पद्गतां पादचारित्वं गतम् । पादस्य पदाज्यातिगोपहतेष्विति पादस्य पदादेशः । तं नलं विदर्भराट् भीमः मुदा ऐक्षिष्ट अद्राक्षीत् ॥ १० ॥

अथेति । अथ नलेक्षणानन्तरम्, अयं विदर्भराट् उत्थाय दोर्युगं प्रसार्य्य आत्मजन्मनः आत्मजायाः भैम्याः पात्रं योग्यं वरम् आगतम् अभ्यागतं नलं धृता अभितः वीचिगतिः उभयतः तरङ्गप्रसारः यस्य सः सरित्पतिः समुद्रः सुरस्रवन्त्याः भागीरथ्याः

यथावदस्मै पुरुषोत्तमाय तां
स साधुलक्ष्मीं बहुवाहिनीश्वरः।
शिवामथ स्वस्य शिवाय नन्दिनीं
ददे पतिः सर्वविदे महीभृताम्॥ १२॥
असिस्वदत् यत् मधुपर्कमर्पितं
स तत् व्यधात् तर्कसुदर्कदर्शिनाम्।

---

आगतं पात्रं स्रोतोद्वयान्तरं प्रवाहम् इव मुदा हर्षेण प्रतीयेष प्रत्यैच्छत् आलिलिङ्गेत्यर्थः॥ ११॥

यथावदिति। अथ वरप्रत्युद्गमनानन्तरं बहुवाहिनीश्वरः बहुसेनाधीश्वरः महीभृतां राज्ञां पतिः राजराजः सः भीमः पुरुषोत्तमाय पुरुषश्रेष्ठाय शिवाय भद्रमूर्त्तये सर्वविदे सर्वज्ञाय अस्मै नलाय साधुलक्ष्मीं समीचीनशोभां शिवां भद्रमूर्त्तिं स्वस्य नन्दिनीं दुहितरं तां दमयन्तीं यथावत् यथार्हं विधिवत् इत्यर्थः। तदर्हमिति वतिप्रत्ययः। ददे दत्तवान्। अन्यत्र वाहिनीश्वरः नदीपतिः समुद्रः पुरुषोत्तमाय विष्णवे लक्ष्मीं ददे ददौ तथा महीभृतां पर्वतानां पतिः हिमवान् स्वस्य नन्दिनीं शिवां गौरीं शिवाय शम्भवे ददौ च। अर्थान्तरं प्रति विशेषणविशेष्ययोरपि श्लिष्टत्वादभिधायाः प्रकृतार्थोपक्षीणत्वात् वाच्यार्थानुपपत्त्याभावोपलक्षणाच्च ध्वनिरेवौपम्यपर्य्यवसायी। शिवं भद्रं शिवः शम्भुः शिवा गौरी शिवाभयेति सर्वत्र शाश्वतः॥ १२॥

असिस्वददिति। सः नलः अर्पितं दत्तं मधुपर्कं दधिमधुघृतात्मकं त्रिमधुरम् असिस्वदत् स्वादितवान् इति यत्, स्वादेर्णौ चङ्युपधाह्रस्वः। तत् मधुपर्कस्वादनम् उदर्कदर्शिनाम्

यदेष पास्यन् मधु भीमजाधरं
मिषेण पुण्याहविधिं तदाकरोत् ॥ १३ ॥
वरस्य पाणिः परघातकौतुकी
वधूकरः पङ्कजकान्तितस्करः।
सुराज्ञि तौ तत्र विदर्भमण्डले
ततो निबद्धौ किमु कर्कशैः कुशैः ? ॥१४॥
विदर्भजायाः करवारिजेन यत्
नलस्य पाणेरुपरि स्थितं किल।

---

ग्रामामिफलाभिज्ञानाम् उदर्कः फलम् उत्तरमित्यमरः। तर्कं कश्चित् रहस्यं व्यधात् अकार्षीत्। तं तर्कमेवाह। एषः नलः भीमजायाः भैम्याः अधरमेव मधु माक्षिकं पास्यन् धास्यन् मिषेण मधुपर्कपानव्याजेन पुण्याहविधिं कर्मादौ कर्त्तव्यं पुण्याहकर्म एव तदा तस्मिन्काले अकरोत् चकारेति साप-ह्नवोत्प्रेक्षा इति यत् तं तर्कमिति पूर्वेण सम्बन्धः, मङ्गल्यकृत्येषु आदौ पुण्याहक्रिया प्रसिद्धा एव ॥ १३ ॥

वरस्येति। वरस्य नलस्य पाणिः परघातकौतुकी शत्रु-वधलम्पटः परहिंसालोलुपश्च वधूकरः पङ्कजकान्तेः तस्करः चौरश्च तद्बृहतोरित्यादिना सुट्तलोपौ। ततः पूर्वापराधात् हेतोः तौ वधूवरौ, शोभनः राजा यस्य तस्मिन् सुराज्ञि विद-र्भमण्डले विदर्भराज्ये कर्कशैः कुशैः निबद्धौ संयतौ किमु ? धार्मिकराज्ये दुष्टा बध्यन्ते इति भावः। वधूवरयोः कुश-सूत्रेण करबन्धनं केषाञ्चिदाचारप्राप्तस्य बन्धनस्य अपराधहे-तुकत्वमुत्प्रेक्ष्यते ॥ १४ ॥

विदर्भजाया इति। विदर्भजायाः वैदर्भ्याः करवारिजेन

विभाव्य सूत्रं पुरुषायितस्य तत्
भविष्यतोऽस्मायि तदा तदालिभिः ॥ १५ ॥
सखा यदस्मै किल भीमसंज्ञया
स यक्षसख्याधिगतं ददौ भवः ।
ददे तदेव श्वशुरः सुरोचितं
नलाय चिन्तामणिदाम कामदम् ॥ १६ ॥
बहोर्दु रापस्य वराय वस्तुनः
चितस्य दातुं प्रतिबिम्बकैतवात् ।

---

करकमलेन नलस्य पार्श्वः उपरि स्थितं किलेति यत् । भावे क्तः । सूत्र्यते अनेन इति सूत्रं भविष्यतः पुरुषायितस्य पुरुषवदाचरितस्य सूचकं सूत्राक्षरं विभाव्य विभाव्य तदा तदालिभिः भैमीसखीभिः अस्मायि मन्दम् अहासि, स्मयतेर्भावे लुङ्, चिणि वृद्ध्या अयादेशः । हस्तेन करस्योपरि स्थित्या पुंभावमुत्प्रेक्ष्य स्मितं कृतम् इत्यर्थः ॥ १५ ॥

अथ एकविंशतिश्लोक्या यौतकदानं वर्णयति सखेत्यादि । सः प्रसिद्धः भगवान् ईश्वरः यक्षसख्याधिगतं कुवेरमैत्रीलब्धं कुवेरात् लब्धमित्यर्थः । यक्षः कपिङ्गलविलेत्यमरः । यत् चिन्तामणिदाम भीम इति संज्ञया नाम्ना सखा सन् स्वनामधारणात् प्रीतः सन् इत्यर्थः । व्योमकेशो भवो भीमः इत्यमरः । अस्मै भीमरूपाय भीमनृपाय ददौ स्वनामधारणपारितोषिकत्वेनेति भावः । तत् सुरोचितं देवतायोग्यं कामदुघं चिन्तामणीनां दाम मालिकां श्वशुरः पत्न्याः पिता भीमभूपतिः वराय जामात्रे नलाय ददौ ॥ १६ ॥

तत् मणिदामैव वर्णयति बहोरिति । यत् दाम वराय दातुं

बभीतरामन्तरवस्थितं दधत्
यदर्थमभ्यर्थितदेयमर्थिने ॥ १७ ॥
असिं भवान्याः सतकासरासुरं
वराय भीमः स्म ददाति भासुरम्।
ददे हि तस्मै धवनामधारिणे
स शम्भुसम्भोगनिमग्नयाऽनया ॥ १८ ॥
अधारि यः प्राग्महिषासुरद्विषा
कृपाणमस्मै तमदत्त कुकुदः।

---

चितस्य राशीकृतस्य दुरापस्य दुर्लभस्य बहोः अनेकस्य, भाषित-पुंस्कत्वात् पुंवद्भावः। वस्तुनः पदार्थजातस्य प्रतिबिम्बस्य कैतवात् मिषात् अन्तः अभ्यन्तरे स्थितम् अर्थिने याचकाय अभ्यर्थितः याचितः सन् देयः देयत्वेन निश्चितः तम् अभ्यर्थितं तदेवम् अर्थं वस्तुजातं तदेतत् चिन्तामणिदाम स्वयं दातृत्वात् अर्थिदेयम् अर्थजातं पूर्वोक्तप्रतिबिम्बव्याजात् अन्तर्धानमिवेति सापह्नवोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या। बभीतराम् अतिशयेन बभौ। तिङाद्याद्दामुप्रत्ययः ॥ १७ ॥

असिमिति। भीमः सतकासरासुरं हतमहिषासुरं, लुलायो महिषो वाहद्विषत्कासरसैरिभा इत्यमरः। भासुरं भास्वरं भवान्याः दुर्गायाः असिं दत्तमित्यर्थः वराय नलाय ददाति स्म स्वयंवरणरागिण्या दुर्गया अस्मै दत्तः तन्नाह। शम्भुसम्भोगनिमग्नया महिषासुरादिमर्दनानन्तरं निवृत्तरणरागया केवलसुरतसुखासक्तया तया दुर्गया भवस्य स्वप्रियस्य शम्भोः नामधारिणे इति वात्सल्यकरुणोक्तिः। धवः प्रियः पतिर्भर्त्तेत्यमरः। तस्मै भीमभूभुजे सः असिः ददे दत्तः खलु। ददातेः कर्मणि लिट् ॥ १८ ॥

अहायि तस्या हि धवार्द्धमज्जिना
स दक्षिणार्द्धेन पराङ्गदारणः॥ १९ ॥
उवाह यः सान्द्रतराङ्ककाननः
स्वशौर्य्यसूर्य्योदयपर्वतव्रतम्।
सनिर्झरः शाणनधौतधारया
समूढसन्ध्यः क्षतशत्रुजासृजा ॥ २० ॥
यमेन जिह्वा प्रहितेव या निजा
तमात्मजां याचितुमर्थिना भृशम्।

अधारीति। यः कृपाणः प्राक् पूर्वं महिषासुरद्विषा दुर्गया अधारि धृतः, तं कृपाणम् असिं कूकुः कन्या कूकुरि-रित्युच्यते कन्या इति स्मरणात् तां ददातीति कूकुदः कन्या-प्रदः भीमः। सत्कृत्यालङ्कृतां कन्यां यो ददाति स कूकुद इत्यमरः। अस्मै नलाय दत्तवान्। दाने कारणान्तरमाह— तस्याः दुर्गायाः सम्बन्धिना धवस्य प्रियस्य अर्द्धं वामार्द्धं मज्जतीति तन्मज्जिना दक्षिणार्द्धेन कर्त्रा यः कृपाणः अधारीति भावः। परेषां संसर्गिणाम् अङ्गदारणः गात्रविदारणः अहायि अत्याजि खलु, अन्यथा स्वप्रियाङ्गदारणप्रसङ्गादिति भावः। हातेः कर्मणि लुङ्, चिणि युगागमः॥ १९॥

उवाहेति। सान्द्रतराः निरन्तराः अङ्काश्च छायाख्यानि चिह्नानि एव काननानि यस्य सः शाणनेन उत्तेजनेन धौतया निर्मलया धारया अस्यासारेण सनिर्झरः सप्रवाहः, क्षतेषु प्रहृतेषु शत्रुषु जातं तज्जं तेन असृजा रक्तेन समूढा धृता सन्ध्या येन सः यः कृपाणः स्वशौर्य्यमेव सूर्य्यः तस्य उदयप-र्वतस्य व्रतं सूर्य्योदयनियमम् उवाह वहति स्म इति रूपका-लङ्कारः॥ २०॥

स तां ददेऽस्मै परिवारशोभिनीं
करग्रहार्हामसिपुत्रिकामपि ॥ २१ ॥
यदङ्गभूमौ बभतुः स्वयोषिताम्
उरोजपत्नावलिनेत्रकज्जले ।
रणस्थलस्थण्डिलशायितात्रते
गृहीतदीचैरिव दक्षिणीकृते ॥ २२ ॥
पुरैव तस्मिन् समदेशि तत्सुता-
भिकेन यः सौहृदनाटिनाग्निना ।

---

यमेनेति। या असिपुत्रिका भृशम् अत्यर्थम् अर्थिना याचकेन यमेन अन्तकेन तं भीमम् आत्मजां भैमीं याचितुं प्रेषिता प्रहिता निजा जिह्वा इव स्थिता इत्युत्प्रेक्षा, सः भीमः परिवारेण कोशेन परिजनेन च शोभिनीं, परिवारः परिजने खड्गकोशे परिच्छदे इति विश्वः। करग्रहस्य विवाहस्य हस्तधारणस्य च अर्हां योग्यां ताम् असिपुत्रिकां छुरिकां तथा असिरूपां कन्याञ्च सः भीमः भूपतिः अस्मै ददे। शस्त्रपुत्रिकयोः प्रकृतत्वात् केवलप्रकृतश्लेषः ॥ २१ ॥

यदिति। यस्याः असिपुत्रिकायाः अङ्गभूमौ प्रान्तदेशे रणस्थलम् एव स्थण्डिलम् अनास्तृतभूः तत्र शेरते इति तच्छायिनः, व्रते इति णिनिः। तच्छायितैव व्रतं तत्र गृहीतदीक्षैः दक्षिणीकृते असिपुत्रिकायै तत् ज्ञात्वा ऋत्विजे दक्षिणीकृते इत्यर्थः। स्वयोषिताम् उरोजयोः पत्रावलिः स्तनपत्रवल्ली, नेत्रकज्जलं ते इव बभतुः विरेजतुः इत्युत्प्रेक्षा। भावे लिटि अतुसादेशः ॥ २२ ॥

पुरेति। तत्सुताभिकेन भैमीकामुकेन, कम्रः कामयिताभीकः इत्यमरः। कमितेति निपातनात्साधुः। अतएव

नलाय विश्राणयति स्म तं रथं
नृपः सुलङ्घ्याद्रिसमुद्रकापथम् ॥ २३ ॥
प्रसूतवत्ताऽनलकूवरान्वय-
प्रकाशितास्यापि महारथस्य यत् ।
कुवेरदृष्टान्तबलेन पुष्पक-
प्रकृष्टतैतस्य ततोऽनुमीयते ॥ २४ ॥

---

सुहृदो भावः सौहृदं सौहार्दं, युवादित्वादण् हृद्भगेनेत्यादिनोभयपदवृद्धिः, अतएव सौहृदशब्दादणि हृद्भावादिति वामनः। तत् नाटयति यः तेन सौहृदनाटिना अग्निना यः रथः पुरा एव स्वयंवरात् प्रागेव तस्मिन् भीमे समदेशि सन्दिष्टः दत्तः इत्यर्थः। सुलङ्घ्याः सुसञ्चार्य्या अद्रयः समुद्राः कापथाः अन्ये कुत्सितपथाश्च यस्य, तं कापथ्यक्षयोरिति कोः कदादेशः। तम् अग्निदत्तं रथं नलाय नृपः भीमः विश्राणयति स्म ददौ इत्यर्थः। विश्राणनं वितरणम् इत्यमरः ॥२३॥

प्रसूतवत्तेति। यत् यस्मात् अस्यापि कुवेरवदिति भावः महारथस्य महतः रथस्य, अन्यत्र महान् रथः यस्य तस्य रथिकविशेषस्य प्रसूतवत्ता प्रकृष्टसारथिवत्ता, सूतक्षत्ता च सारथिः इत्यमरः। मत्वन्तत्वात्तल्प्रत्ययः। अन्यत्र प्रसूतवत्ता प्रजनितता, प्रपूर्वात् सूतेः क्तवत्वन्तत्वात् तल्प्रत्ययः। अनलेन अग्निना दात्रा कूवरेण रथेन। अन्यत्र नलकूवरेण तदाख्येन पुत्रेण च अन्वयात् योगात् प्रकाशते इति तत्प्रकाशि तस्य भावः तत्ता ततः कारणात् एतस्य महारथस्य कुवेरः एव दृष्टान्तः निदर्शनं तच्छब्देन पुष्पकप्रकृष्टता अनुमीयते अयं महारथः पुष्पकप्रकृष्टो भवितुमर्हति प्रसूतवत्तादिधर्मयोगी महारथत्वात् कुवेरवदिति अनुमातुं शक्य-

महेन्द्रमुच्चैःश्रवसा प्रतार्य्य यत्
निजेन पत्याक्रत सिन्धुरन्वितम् ।
स तद्ददेऽस्मै हयरत्नमर्पितं
पुरानुबद्धुं वरुणेन बन्धुताम् ॥ २५ ॥
जवादवारीक्रतदूरदृक्पथः
तथाक्षियुग्माय ददे मुदं न यः ।
दधद् दिदृक्षादरदासतां यथा
तथैव तत्यांशुलकण्ठनालताम् ॥ २६ ॥

---

त्वात् इत्यर्थः । अतएवानुमानालङ्कारः, साध्यसाधननिर्देशस्त्व-नुमानमुदोरितम् इति लक्षणात् । रूपहेतुत्वेन तर्कानुमानेन वैलक्षण्यं रूपकञ्च प्रसूतवत्तादिप्रकाशितैः तत्प्रकाशितेति स्लिष्टरूपकं द्रष्टव्यम् ॥ २४ ॥

महेन्द्रमिति । सिन्धुः समुद्रः उच्चैःश्रवसा महेन्द्रं प्रतार्य्य वञ्चयित्वा यत् हयरत्नम् उच्चैःश्रवसोऽपि श्रेष्ठम् इत्यर्थः, निजेन पत्या स्वामिना वरुणेन अन्वितम् अक्रत तस्मै ददौ इत्यर्थः । पुरा स्वयंवरात् पूर्वं बन्धुतां बान्धवत्वम् अनुबद्धुं प्रवर्त्तयितुं वरुणेन अर्पितं दत्तं हयरत्नं सः भीमः तस्मै नलाय ददे दत्तवान् ॥ २५ ॥

जवादिति । अक्षियुग्माय द्रष्टुः दृष्टियुगलाय दिदृक्षायां दर्शनेच्छायाम् आदरः आस्था तस्य दासतां दधत् अत्यन्तदिदृक्षामेव कुर्वन् यः हयः जवात् वेगात् तथा तेन प्रकारेण अवारीक्रतः अर्वाक्कृतः द्राक् दूरीक्रतः इति यावत् निर्जलीक्रतस्य गम्यते, पारावारे परार्वाचीत्यमरः । दूरदृक्पथः येन सः तथा मुदं तृप्तिं न दधे किन्तु तृष्णामेव वर्द्धयति

दिवस्पतेराटरदर्शिनादरात्
अढौकि यस्तं प्रति विश्वकर्मणा ।
तमेकमाणिक्यमयं महोन्नतं
पतद्ग्रहं ग्राहितवान् नलेन सः ॥२७॥
नलेन ताम्बूलविलासिनोज्झितैः
मुखस्य यः पूगकणैर्भृतो न वा ।

---

अवारितक्षतमार्गत्वादिति भावः। तथा तेन प्रकारेण तत् तस्मात् पूर्वोक्तावारिकरणेन तृष्णाकारित्वहेतोः पांशुलः पांशुमान् शुष्कश्च कण्ठनालः यस्य तस्य भावः तत्ता तां तदर्थमुदं न दधे, कण्ठशोषकारी कथं मुदं दद्यादिति भावः। अक्षियुग्मस्य पांशुलकण्ठनालत्वं नाम दूरोद्धतधूलीधूसरप्रान्तत्वम् उत्कण्ठाचरितत्वं च। अजस्रदर्शनीयवेगोऽयमश्व इति तात्पर्य्यम्। अवारिकरणाद्यसम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ २६ ॥

दिवस्पतेरिति। दिवस्पतेः इन्द्रस्य दमयन्तीरागिणः इति भावः। कस्कादित्वात् अलुक् सत्वे। आदरदर्शिना आदरज्ञेन विश्वकर्मणा देवशिल्पिना यः पतद्ग्रहः पिक्दानी इति भाषा। तं भीमं प्रति आदरात् अढौकि प्रापितः, ढौकतेर्गत्यर्थे स्वन्तात्कर्मणि लुङ्। तं विश्वकर्मदत्तम् एकमाणिक्यमयम् एकपद्मरागोपलविकारं महती उन्नतिः यस्य तम् अत्युन्नतं गृह्यते अनेन इति ग्रहः पततः ग्रहः निष्ठ्यूतताम्बूलभाजनं पतद्ग्राहः पतद्ग्रहः इत्यमरः। विभाषाग्रहः इति णप्रत्ययाभावः पक्षे हृहनिश्चिगमश्चेति अप्रत्ययः। तं सः भीमः नलेन ग्राहितवान् अग्राहयत् नलाय ददौ इत्यर्थः ॥ २७ ॥

नलेनेति। यः पतद्ग्रहः (पिकदानी) स्वमयूखमण्डलात् स्वकीयकिरणसमूहात् उदञ्चती उद्गच्छती उच्चा महती या

इति व्यवेचि क्रमयूक्षमण्डलात्
उदश्वदुच्चारुणवारुचा चिरात् ॥ २८ ॥
मयेन भीमं भगवन्तमर्चता
नृपेऽपि पूजा प्रभुनाम्नि या कृता।
अदत्त भीमोऽपि स नैषधाय तां
हरिन्मणेर्भोजनभाजनं महत् ॥ २९ ॥
छदे सदैव छविमस्य बिभ्रतां
न केकिनां सर्पविषं प्रसर्पति।
न नीलकण्ठत्वमधास्यदत्र चेत्
स कालकूटं भगवानभोक्ष्यत ॥ ३० ॥

---

अरुणता अरुणत्वं रक्तवर्णता इति यावत् तस्याः रुचा कान्त्या ताम्बूलविलासिना ताम्बूलचर्वणकारिणा नलेन उज्झितैः निष्ठ्यूतैः मुखस्य सम्बन्धिभिः पूगकणैः क्रमुकशकलैः भृतः पूर्णः न वा इति सन्दिह्य इति शेषः चिरात् व्यवेचि विविक्तः। निश्चयान्तः सन्देहालङ्कारः ॥ २८ ॥

मयेनेति। भगवन्तं भीमम् ईश्वरम् अर्चता, अर्चतेर्भ्वादिकात् शत्रादेशः। मयेन दैत्यशिल्पिना प्रभोः नाम अस्ति यस्मिन् तस्मिन् प्रभुनाम्नि स्वामिनामधारिणि नृपे भीमे या पूजा कृता, सः भीमः अपि हरिन्मणेः गारुत्मतमणेः सम्बन्धि तन्मयं महद्भोजनपात्रं भोजनभाजनं भोजनपात्ररूपां तां पूजां नैषधाय नलाय अदत्त ॥ २९ ॥

छदे इति। अस्य गारुत्मतभाजनस्य छविं कान्तिं सदा सर्वदा एव छदे पक्षे बिभ्रतां केकिनां बर्हिणां सर्पविषं न विसर्पति न व्याप्नोति, सः भगवान् ईश्वरः अपि अत्र गारुत्म-

विरोध्य दुर्वाससमस्खलद् दिवः
स्रजं त्यजन्नस्य किमिन्द्रसिन्धुरः।
अदत्त तस्मै स मदच्छलात् सदा
यमभ्रमातङ्गतयेव वर्षुकम् ॥ ३१ ॥

मदात्मदग्रे भवताथवा भिया
परं दिगन्तादपि यात जीवत।
इति स्म यो दिक्करिणः! स्वकर्णयोः
विनाह्य वर्ष स्रजमागतागतैः ॥ ३२ ॥

---

तभाजने कालकूटम् अभोच्यत चेत् भुञ्जीत यदि नीलकण्ठ न अधास्यत् तदभावात् कालकूटविषस्य कण्ठव्यापित्वा नीलकण्ठत्वम् अस्येत्यर्थः। यत्सावर्ण्यात् केकिनः विषभयशून्य ततृपात्रे भोजने किं वक्तव्यम् इत्यर्थः ॥ ३० ॥

विरोध्येति। अभ्रमातङ्गतया मेघरूपगजत्वेन अन्य आकाशगजत्वेन हेतुना मदच्छलात् मदस्रावमिषात् वर्षुक वर्षणशीलम् इव स्थितम् इति सापह्नवोत्प्रेक्षा लषपतेत्यादिन उकञ् प्रत्ययः। यं सिन्धुरं सः भीमः अस्मै नलाय अदत्त दत्तवान्, सः नलसात्कृतसिन्धुरः दुर्वाससं विरोध्य विरुध अस्य दुर्वाससः सम्बन्धिनीं तद्दत्तामित्यर्थः स्रजं त्यजन् क्षिप इन्द्रसिन्धुरः ऐरावतः इव दिवः स्वर्गात् अस्खलत् किमु स्वदत्तस्रक्त्यागापराधनिमित्तात् दुर्वाससः शापात् दिवश्च्युत ऐरावत एवायं किमित्युत्प्रेक्षा ॥३१॥

मदादिति। यः गजः हे दिक्करिणः! दिग्गजाः मदात् मदपारवश्यात् मदग्रे ममाग्रे एव भवत तिष्ठत अथवा भिया दिगन्तात् अपि परं दूरं यात गच्छत जीवत यथाकथञ्चित् प्राणान् धारयत इति इत्य

अधत्त वीजं निजकीर्त्तये रदौ
द्विषामकीर्त्त्यैं खलु दानविप्रुष:।
श्रव: श्रमै: कुम्भकुचां शिर:श्रियम्
मुदे मदखेदवतीमुपास्त य:॥ ३३ ॥
न तेन वाहेषु विवाहदक्षिणी-
कृतेषु सङ्ख्यानुभवेऽभवत् क्षम:।
न शातकुम्भेषु न मत्तकुम्भिषु
प्रयत्नवान् कोऽपि न रत्नराशिषु॥ ३४ ॥

---

अक्षरस्रजं वर्णपंक्तिं विनैव वाग्वृष्टिम् अन्तरेणेत्यर्थ:। किन्तु स्वकर्णयो: आगतागतै: यातायातै: चेष्टाभिरेव आह स्म ब्रूते स्म वेत्यर्थ:। गम्योत्प्रेक्षा। लट् स्म इति भूते लट्, ब्रुव: पञ्चानमित्यादिना णलाहादेशौ॥ ३२ ॥

अधत्तेति। य: गज: निजकीर्त्तये तत्प्ररोहायेत्यर्थ:। रदौ दन्तौ एव वीजम् अधत्त द्विषाम् अकीर्त्तये तत्प्ररोहाय दानविप्रुष: मदविन्दून् एव वीजम् अधत्त कीर्त्त्यकीर्त्त्यो: सितासितकारित्वात्सितासितयोरेव दन्तदानयोर्वीजत्वेनोत्प्रेक्षा। किञ्च, कुम्भौ इव कुचौ यस्या: तां मदेन खेदवतीमिति सात्त्विकोक्ति: शिर:श्रियं शिर:शोभामिभश्रवसो: श्रमै: व्यापारै: कर्णतालैरेव व्यजनवातैरिति भाव: मुदे हर्षाय उपास्त असेवत इत्युत्प्रेक्षात्रयस्य संसृष्टि:॥ ३३ ॥

नेति। तेन भैमीकं विवाहे दक्षिणीकृतेषु वराय आहरणीकृतेषु इत्यर्थ: वाहेषु वाजिषु विषयवाजिवाहार्वगन्धर्व इत्यमर:। प्रयत्नवान् उद्योगवान् कोऽपि जन: संख्यानुभवे इयत्तापरिच्छेदे क्षम: न अभवत् शातकुम्भेषु स्वर्णेषु तपनीयं शातकु-

करग्रहे वाम्यमधत्त यस्तयोः
प्रसाद्य भैम्यानु च दक्षिणीकृतः ।
कृतः पुरस्कृत्य ततो नलेन सः
प्रदक्षिणस्तत्क्षणमाशुशुक्षणिः ॥ ३५ ॥
स्थिरा त्वमश्मेव भवेति मन्त्रवाक्
धनेशदाशास्य किमाशु तां स्त्रिया ।

---

श्रमित्यमरः। मत्तकुम्भिषु मदगजेषु रत्नराशिषु न सर्वत्र सङ्ग्रा-नुभवे क्षमः इत्यनुषङ्गः। विवाहादिषु सङ्ग्रासम्बन्धेऽप्यसम्ब-न्धोक्तेरतिशयोक्तिभेदः ॥ ३४ ॥

करेति। यः आशु शोषितुम् इच्छतीति आशुशु-क्षणिः अग्निः, शिखावानाशुशुक्षणिरित्यमरः। आङि शुषेः सनन्तादाङ्पूर्वाच्छुषेर्धातोः सनन्तादुप्रत्ययः, भाषायामपी-ष्यते। तयोः भैमीनलयोः करग्रहे पाणिग्रहे वाम्यं वक्रतां वामभागवर्त्तित्वम् अधत्त, वाम्यं सव्ये प्रतीपश्चेति विश्वः। अनु वाम्यानन्तरं भैम्या प्रसाद्य प्रसन्नीकृत्य दक्षिणीकृतश्च दक्षिण-भागवर्त्ती कृतश्च अदक्षिणः वामपरः सः अनलः दक्षिणः कृतः। दक्षिणः छन्दानुवर्त्तिष्विति विश्वः। नलेन सः आशुशुक्षणिः तत्क्षणं सः एव क्षणः यस्मिन् तत्कर्म-णीति क्रियाविशेषणं सः चासौ क्षणश्चेति तत्पुरुषे वात्यन्तसंयोगे द्वितीया। पुरस्कृत्य अग्रतः कृत्वा च प्रदक्षिणः अत्यन्तानुकूलः दक्षिणभागवर्त्ती च कृतः, पूर्वं प्रतिकूलोऽ-प्यग्निः प्रार्थनया अनुकूलितः इत्येकोऽर्थः अग्निप्रदक्षिणीकृत्ये-त्यादि शास्त्रार्थोऽनुष्ठितः इत्यपरार्थः ॥ ३५ ॥

स्थिरेति। अश्मा इव स्थिरा भव इति मन्त्रवाक् तां दमयन्तीम् आशास्य स्वाक्षरैः प्रकाश्याम् आशिषं शिक्षावत्

शिला चलेत् प्रेरणया नृणामपि
स्थितेस्तु नाचालि विडौजसापि सा ॥ ३६ ॥
प्रियांशुकग्रन्थिनिबद्धवाससं
तदा पुरोधा विदधत् विदर्भजाम् ।
जगाद विच्छिद्य पटं प्रयास्यतः
नलादविश्वासमिवैष विश्ववित् ॥३७॥

---

अचला भव इति एवंरूपाम् उदीर्य्य क्रिया हीनोपमाकरण-हेतुकलज्जया इवेत्युत्प्रेक्षा। आशु सपदि अनेशत् अदृश्यतां गता उच्चरितानन्तरप्रध्वंसित्वादिति भावः। नशेर्लुङि पुषादित्वादङि नशिमन्योरलिट्य त्वं वक्तव्यम्। हीनोपमात्वं व्यनक्ति, शिला अश्मा नृणां मनुष्याणाम् अपि प्रेरणया चलेत्, सा दमयन्ती विडौजसा देवेन्द्रेण अपि स्थितेः पतिव्रतामार्गात् न अचालि न चालिता, चलेर्ण्यन्तात्कर्मणि लुङ्। अत्र पूर्ववाक्यार्थस्योत्तरवाक्यार्थहेतुकत्वात् काव्यलिङ्गमलङ्कारः ॥३६॥

प्रियेति। तदा तत्काले विदर्भजां वैदर्भीं प्रियस्य नलस्य अंशुके ग्रन्थिना बन्धविशेषेण निबद्धवाससं ग्रन्थितांशुकं विदधत् कुर्वन् देशाचारप्राप्तत्वादिति भावः, विश्ववित् सर्वज्ञः एषः पूर्वोक्तः पुरोधाः गौतमः पटं विच्छिद्य द्वेधा विपाट्य प्रयास्यतः परित्यज्य गमिष्यतः नलात् अविश्वासं जगादेव भाग्यार्थज्ञापनार्थमिवानयोर्वस्त्राञ्चलद्वयं जग्रन्थेति उत्प्रेक्षा। भारते आरण्यपर्वणि नलोपाख्याने श्लोकः—"ततोऽहं वासमश्छित्त्वा विवस्य च परन्तप ! । सुप्तामुत्सृज्य वैदर्भीं प्राद्रवद्गतचेतनः ॥" इति ॥ ३७ ॥

ध्रुवावलोकाय तदुन्मुखभ्रुवा
निर्दिश्य पत्याभिदधे विदर्भजा ।
किमस्य न स्यादणिमाक्षिसाक्षिकः
तथापि तथ्यो महिमाऽऽगमोदितः ॥ १८ ॥
धवेन सादर्शि वधूररुन्धतीं
सतीमिमां पश्य गतामिवाणुताम् ।
कृतस्य पूर्वं हृदि भूपतेः कृते
तृणीकृतस्वर्गपतेर्जनादिति ॥२८॥

---

ध्रुवेति । विदर्भजा वैदर्भी ध्रुवावलोकाय । विवाहे ध्रुवमरुन्धतीञ्च दर्शयेत् इति शास्त्रात् । तदुन्मुखभ्रुवा ध्रुवाभिमुखा भ्रूः यस्य तेन पत्या नलेन निर्दिश्य पश्येत्यादि अभिदधे अभिहिता, कर्मणि लिट् । किं तदाह—अस्य ध्रुवस्य अणिमा अणुत्वम् अक्षिसाक्षी चक्षुःप्रमाणकः न स्यात् किं ? चक्षुषा न लक्ष्यते किमित्यर्थः । तथापि चक्षुषा अणुतावगमेऽपि आगमोदितः ज्योतिःशास्त्रोक्तः महिमा महत्ता एव तथ्यः प्रामाणिकः, अणुत्वग्राहिप्रत्यक्षस्य दूरत्वदोषेण दुर्बलत्वादिति भावः । महदपि दूरात् अणु प्रतीयते इति प्रसिद्धिः ॥ १८ ॥

धवेनेति । पूर्वं विवाहात् प्रागेव हृदि कृतस्य पतित्वेन मनसि निश्चितस्य भूपतेः तस्य नलस्य कृते तदर्थमित्यर्थः, तादर्थ्येऽव्ययम् । तृणीकृतस्वर्गपतेः अगणितमहेन्द्रात् जनात् त्वत्तः, इति यावत् । पञ्चमी विभक्ते इति पञ्चमी । अणुतां सूक्ष्मतां पातिव्रत्यगुणेन न्यूनताञ्च गतामिव स्थितां सतीं साध्वीम् अरुन्धतीं

प्रसूनता तत्करपल्लवस्थितैः
उडुच्छविर्व्योमनि विहारिभिः पथि।
मुखेऽमराणामनले रदावलेः
अभाजि लाजैरनयोज्झितैर्द्युतिः ॥ ४० ॥
तया गृहीताहुतिधूमपद्धतिः
गता कपोले मृगनाभिशोभिताम्।

---

सा वधूः नवोढ़ा भैमी धवेन भर्त्रा नलेन इमां पश्य इत्युक्ता इति शेषः अदर्शि, दृशेर्ण्यन्तादात्मनेपदिनः कर्मणि क्तः। अभिवादिदृशोरात्मनेपद इति वाच्यम्, अणि कर्मत्वं ण्यन्ते कर्त्तुश्च कर्मण इति अनभिहितकर्मत्वम् ॥ ३९ ॥

प्रसूनतेति। तत्करपल्लवस्थितैः होमार्थं तस्याः पाणिपल्लवधृतैः इत्यर्थः, लाजैः भृष्टशालिभिः परिवापकापरपर्य्यायैः। लाजाः पुं भूम्नि परिवापक इति वैजयन्ती। प्रसूनता पुष्पत्वम् अभाजि तत्सादृश्यं प्राप्तम् इत्यर्थः। भजतेः कर्मणि लुङ्। अथ अनया वध्वा उज्झितैः त्यक्तैः अतएव पथि मध्ये मार्गे व्योमचारिभिः खेचरैः सद्भिः उडुच्छविः नक्षत्रकान्तिः अभाजि। तथा अमराणां मुखे आस्यभूते अनले, अग्निमुखा वै देवा इति श्रुतेः। रदावलेः दन्तपङ्क्तेः द्युतिः अभाजि। अत्र एकस्य लाजद्रव्यस्य क्रमेण करपल्लवाद्यनेकाधारवृत्तिकथनात् पर्य्यायभेदस्तावत्। लाजानां प्रसूननक्षत्रदन्तशोभासादृश्याविदर्शनाभेदः इत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ ४० ॥

तयेति। तया वध्वा गृहीता स्वीकृता आहुतेः लाजाहुतेः धूमपद्धतिः धूमरेखा कपोले मृगनाभिः कस्तूरी इव शोभते इति तच्छोभितां गता दृशोः अञ्जनतां ययौ तत्सादृश्यं गता

ययौ दृशोरञ्जनतां श्रुतौ श्रिता
तमाललीलामलिकेऽलकायिता ॥ ४१ ॥

अपह्नुतः स्वेदभरः करे तयो-
स्त्रपाजुषोर्दानजलैर्मिलन्मुहुः ।
दृशोरपि प्रोद्गतमम्बु सात्त्विकं
घनैः समाधीयत धूमलङ्घनैः ॥ ४२ ॥

बहूनि भीमस्य वसूनि दक्षिणां
प्रयच्छतः सत्त्वमवेक्ष्य तत्क्षणम् ।

---

इत्यर्थः । श्रुतौ श्रोत्रे तमालस्य तमालावतंसस्य लीलां विलासं श्रिता अलिके ललाटे, ललाटमलिकं गोधीत्यमरः । अलकायिता अलकवत् आचरिता, उपमानादाचारक्यङ-न्तात्कर्मणि क्तः । अत्रापि एकस्यैव धूमस्य क्रमात् अनेका-धारसम्बन्धपर्य्यायात्तदुपजीविनामुत्तरेषां यथायोगमुपमानि-दर्शनाभ्यां पूर्ववत् सङ्करः ॥ ४१ ॥

अथानयोस्त्रिभिः सात्त्विकोदयमाह अपह्नुत इत्यादिना । त्रपाजुषोः लज्जाभाजोः तयोः वधूवरयोः करे स्वेदभरः मुहुः दानजलैः तत्कालोचितदानजलैः मिलन् मिश्रीभवन् अपह्नुतः आच्छादितः । दृशोः अक्ष्णोः अपि प्रोद्गतं गलितं सात्त्विकं सत्त्व-समुद्भूतम् अम्बु घनैः सान्द्रैः धूमलङ्घनैः धूमपीडनैः समाधीयत समाहितः परिहृतः इति यावत् । अत्र स्वेदाश्रुणोः सहज-योरागन्तुकदानोदकधूमाभिभवाभ्यां तिरोधानान्मीलनभेदः । मीलनं वस्तुना यत्र वस्त्वन्तरनिगूहनमिति लक्षणात् ॥४२॥

बहूनीति । तयोः वधूवरयोः कण्टककुड्मलश्रियः पुलका-ङ्कुरसम्पदः कर्त्र्यः बहूनि वसूनि धनानि एव दक्षिणां तत्काल-

जनेषु रोमाञ्चमितेषु मिश्रतां
ययुस्तयोः कण्टककुड्मलश्रियः ॥ ४३ ॥
बभूव न स्तम्भविजित्वरी तयो:
श्रुतिक्रियारम्भपरम्परात्वरा ।
न कम्पसम्पत्तिमलुम्पदग्रतः
स्थितोऽपि वह्निः समिधा समेधितः ॥ ४४ ॥
दमस्वसुः पाणिममुष्य गृह्णतः
पुरोधसा संविदधेतरां विधेः

---

दानं प्रयच्छतः ददतः भीमस्य सत्त्वम् उत्साहम् प्रवेक्ष्य तत्-क्षणं तत्काले, अत्यन्तसंयोगे द्वितीया । रोमाञ्चम् इतेषु गतेषु जनेषु मिश्रतां मेलनं ययुः । सर्वेषां रोमाञ्चे सति वधूवरयोः रोमाञ्चानि सात्त्विकभावोद्भूतानि तिरोहितानि इत्यर्थः । पूर्व-वदलङ्कारः ॥ ४३ ॥

बभूवेति । तयोः वधूवरयोः श्रुतिक्रियाणां श्रुत्युक्तकर्म-णाम् आरम्भपरम्परायां त्वरा प्रयोगाविच्छेदत्वरा स्तम्भस्य निष्क्रियाङ्गत्वलक्षणस्य सात्त्विकस्य विजित्वरी विजेत्री, इण्नशजिसर्त्तिभ्यः क्वरप्टिड्ढाणञित्यादिना ङीप् । न बभूव न अपक्नोतुं शशाक इत्यर्थः । समिधा इन्धनेन समेधितः प्रदीपितः अग्रतः स्थितः वह्निरपि कम्पसम्पत्तिं वेपथूद्रेकं न अलुम्पत् निरोद्धुं न अशकदित्यर्थः । गाढानुरागवि-काराणां दुर्वारवेगत्वादिति भावः । अत्र कर्मत्वरासमिध्-वह्निरूपकारणसद्भावेऽपि स्तम्भकम्पनिवृत्तिरूपकार्य्यानुवृत्ते-र्विशेषोक्तिरलङ्कारः । तत्सामग्र्यामनुवृत्तिर्विशेषोक्तिरिति लक्ष-णात् ॥ ४४ ॥

दमस्वसुरिति । दमस्वसुः पाणिं गृह्णतः ताम् उद्वहतः

महर्षिणेवाङ्गिरसेन साङ्गता
पुलोमजामुद्वहतः शतक्रतोः ॥ ४५ ॥
स कौतुकागारमगात् पुरन्ध्रिभिः
सहस्ररन्ध्रीकृतमीचितुं ततः ।
अधात् सहस्राचतनुत्वमित्वताम्
अधिष्ठितं यत् खलु जिष्णुनामुना ॥ ४६ ॥
तथाशनाया निरशेषि नो क्रिया
न सम्यगालोकि परस्परक्रिया ।
विमुक्तसम्भोगमशायि सस्पृहं
वरेण बध्वा च यथाविधि त्र्यहम् ॥ ४७ ॥

---

इत्यर्थः, अमुष्य नलस्य पुलोमजां शचीम् उद्वहतः शतक्रतोः इन्द्रस्य महर्षिणा आङ्गिरसेन बृहस्पतिना इव पुरोधसा गौतमेन विधेः अनुष्ठानस्य साङ्गता साङ्गत्वं समाप्तिरिति यावत् संविदधेतराम् अतिशयेन सम्पादिता, तिङव्ययधादामुप्रत्ययः ॥ ४५ ॥

स इति । ततः होमानन्तरं सः नलः वीचितुं सर्वेषां विस्रम्भवीक्षणार्थं सहस्ररन्ध्रीकृतम् अनेकगवाक्षीकृतं, बहुव्रीहावभूततद्भावे च्विः । कौतुकागारं मङ्गलगृहं पुरन्ध्रिभिः, सह वृद्धो यूनेति ज्ञापकात्सहाप्रयोगे सहार्थे तृतीया । अगात् प्राविशत्, यत् अगारं जिष्णुना जयशीलेन इन्द्रेण अमुना नलेन च अधिष्ठितं सत् सहस्राचतनुत्वमित्वताम् इन्द्रकवचतुल्यताम् अधात् ॥ ४६ ॥

तथेति । अथ वरेण बध्वा च यथाविधि यथाशास्त्रं त्र्यहं त्रिदिनम्, अत्यन्तसंयोगे द्वितीया । तद्धितार्थेत्यादिना समाहारे द्विगुः, राजाहःसखिभ्यष्टच्, द्विगुरेकवचनं, रात्रा-

कटाक्षणाज्जन्यजनैर्निजप्रजाः
क्वचित् परीहासमचीकरत्तराम्।
धराप्सरोभिर्वरयात्रयागतान्
अभोजयद् भोजकुलाङ्कुरः क्वचित्॥ ४८॥

---

आकाङ्क्षाः पुंसि इति पुंलिङ्गता। अशनायाः, बुभुक्षाया अशनेति पिपासार्थेष्विति निपातनात्साधु। ह्रिया लज्जया नो निरशेषि न पर्य्याप्तम् अभोजि इत्यर्थः। परस्परक्रिया अन्योन्यचेष्टा सम्यक् यथेच्छं न आलोकि न वीक्षिता, तथा विमुक्तसम्भोगं यथा तथा सस्पृहं साभिलाषम् एव अशायि शयितं, भावे लुङ्। यथाह आपस्तम्बः—त्रिरात्रमुभयोरधःशय्या ब्रह्मचर्य्यमक्षारलवणाशित्वञ्च तयोः शय्यामन्तरेण दण्डोपलिप्तवाससा सूत्रेण परिवीतयोरवस्थानत्वम्॥ ४७॥

कटाक्षणादिति। भोजकुलाङ्कुरः भोजकुलकुमारः दमः निजाः प्रजाः स्वजनान्, प्रजा स्यात् सन्ततौ जने इत्यमरः। कटाक्षणात् कटाक्षकरणात् तत्संज्ञिताः इत्यर्थः, कटाक्षयतेस्तत् करोतीति ण्यन्ताद्भावे ल्युट्। जन्यजनैः सह। जन्याः स्निग्धाः वरस्ययेत्यमरः। परीहासं द्रवमिति यावत्, द्रवः केली परीहास इत्यमरः। उपसर्गस्य घञ्, मनुष्ये बहुलमिति दीर्घः। क्वचित् प्रदेशे अचीकरत्तराम् अतिशयेन कारयामास, करोतेर्णौ चङ्, सन्भावादभ्यासले दीर्घः, तिङ् श्चादाम्प्रत्ययः। तदा क्वचित् प्रदेशान्तरे वरस्य यात्रया सह आगतान् जनान् धराप्सरोभिः क्षितिसुन्दरीभिः करणैः अभोजयत् भोजयामास तत्काले परिहासकरणसौकर्य्यादिति भावः। निगरणचलनार्थेभ्यश्चेति परस्मैपदं, गतिबुद्धीत्यादिना अणिकर्त्तुः कर्मत्वम्॥ ४८॥

स कश्चिदूचे रचयन्तु तेमनो-
पहारमत्राङ्ग! रुचेर्यथोचितम्।
पिपासतः काञ्चन सर्वतोमुखं
तथार्पयन्तामपि काममोदनम्॥ ४९॥
मुखेन तेऽत्रोपविशत्वसाविति
प्रयाच्य स्पष्टानुमतिं खलाहसत्।
वराङ्गभागः स्वमुखं मतोऽमुना
स हि स्फुटं येन किलोपविश्यते॥ ५०॥

---

तात्कालिकमेव परीहासं बहुधा वर्णयति स इत्यादि। सः दमः कश्चित् जन्यजनम् ऊचे उवाच। किमिति? अङ्ग! भो! अत्र प्रदेशे पिपासतः उत्तृषतः, पिबतेः सनन्ताल्लटः शतरि ङीप्। सर्वतोमुखम् उदकं, यथा पुष्करं सर्वतोमुखमित्यमरः। तथा काञ्चन स्त्रियः रुचेः तृषायाः यथोचितं यथार्हं तेमनस्य निष्ठानापराख्यस्य चोष्यद्रवस्य उपहारं समर्पणम्। स्यात् तेमनन्तु निष्ठानमित्यमरः। रचयन्तु कुर्वन्तु कामम् ओदनम् अन्नम् अर्पयन्तां प्रयच्छन्तु इति। तथाच। अस्य पिपासतः सुखपानिच्छोः अङ्गरुचेः स्वाङ्गसौन्दर्य्यात् हेतोः मनः अपहरतीति मनोऽपहारं मनोहरं, कर्मण्यण्। मुखम् आस्यं सर्वतः समन्तात् अर्पयन्तां कामस्य मोदनं हर्षणं रचयन्तु रमयन्तामिति चेत्यर्थः। इत्यूचे इत्यन्वयः। अत्रोभयोरप्यर्थयोर्विवक्षितत्वेन प्रकृतत्वात् केवलप्रकृतश्लेषः॥ ४९॥

मुखेनेति। हे जन्य! * अत्र पङ्क्तौ असौ ते तव मुखेन साम्मुख्येन वक्त्रेण च, अधिकरणे साधनत्वनिर्देशः, मुखे

युवामिमे मे स्वितमे इतीरिणः
गले तयोक्ता निजगुच्छमेकिका ।
न भास्यदस्तुच्छगलो वदन्निति
न्यधत्त जन्यस्य ततः पराकृषत् ॥ ५१ ॥
नलाय बालव्यजनं विधुन्वती
दमस्य दास्या निभृतं पदेऽर्पितात् ।

---

इत्यर्थः, उपविशतु प्रार्थनायां लोट् । इति प्रयाच्य प्रार्थ्य स्पष्टानुमतिं कृताङ्गीकारं जन्यं खला काचित् धूर्त्ता अहसत् परिजहास । किमिति ? अमुना जन्येन सः वराङ्गभागः गोप्यप्रदेशः, वराङ्गो मूर्ध्नि गुह्ययोरित्यमरः । स्फुटं *यथा तथा* स्वमुखं मतः हि स्ववक्तसदृशत्वेन अनुमतः इत्यर्थः । येन वराङ्गेण उपविश्यते किल सुखोपवेशनाङ्गीकारो नान्तरीयकः सिद्धः इति भावः ॥ ५० ॥

युवामिति । इमे युवां भवत्यो मे मम अतिशयेन स्त्रियौ स्वितमे प्रियतमे इत्यर्थः । नद्याः शेषस्यान्यतरस्याम् इति विकल्पात् ह्रस्वः । इतीरिणः इतिवादिनः, ईरतेर्णिनिः । जन्यस्य वरसखस्य गले कण्ठे तथा उक्ता स्त्रीतमा इत्युक्ता एकैव एकिका तयोः अन्यतरा स्त्री, कात्पूर्वस्येतीकारः । अदः इदं स्त्रीतमेति वचो वदन् त्वं तुच्छगलः रिक्तकण्ठः सन् न भासि न शोभसे इत्युक्त्वेति शेषः, गम्यमानार्थत्वादप्रयोगः । निजम् आत्मीयं गुच्छं द्वात्रिंशत् यष्टिकहारं, हारभेदा यष्टिभेदा गुच्छगुच्छार्द्धगोस्तना इत्यमरः । न्यधत्त निदधे । अपरा तु स्त्री अदः मे मे इदं शब्दम् अयुक्तं वदन् छगलः छागः असीति अपाकृषत् आचकर्ष, कृषेस्तौदादिकाल्लङ् । अजाच्छागो स्तवच्छागवस्तच्छगलका अजेत्यमरः ॥ ५१ ॥

अहासि लोकैः सरटात् पटोज्झिनी
भयेन जङ्घायतिलङ्घिरंहसः ॥ ५२ ॥
पुरस्थलाङ्गूलमदात् खला वृसीम्
उपाविशत् तत्र ऋजुर्वरद्विजः ।
पुनस्तमुत्थाप्य निजामतेर्वदा-
ऽहसच्च पश्चात्कृतपुच्छतत्प्रदा ॥ ५३ ॥

---

नलायेति । नलाय बालव्यजनं विधुन्वती चामरग्राहिणी दमस्य दास्या निभृतं निगूढं पदे अर्पितात् विसृष्टात् जङ्घायतिलङ्घिरंहसः जङ्घादैर्घ्यव्यापिवेगात् वेगेन जङ्घामारोहत इत्यर्थः । सरटात् कृकलासात्, सरटः कृकलासः स्यादित्यमरः । भयेन पटोज्झिनी वस्त्रत्यागिनी सती लोकैः जनैः अहासि परिहसिता ॥ ५२ ॥

पुरस्थेति । खला काचित् धूर्त्ता वृसीम् आसनं, मुनीनामासनं वृसीत्यमरः । पुरस्थलाङ्गूलं पुरोभागस्थपुच्छं यथा तथा अदात् दत्तवती ददातेर्लुङि गातिस्थादिना सिचो लुक् । तत्र तस्यां ऋजुः मुग्धः वरस्य सम्बन्धी द्विजः उपाविशत् उपविष्टः निजामतेः स्वाज्ञानस्य वदतीति अज्ञानात् कृतमिति वदतीत्यर्थः, पचाद्यच् । वदा वदः, वदावदो वक्ता इत्यमरः । पुनः तं द्विजं उत्थाप्य पश्चात्कृतपुच्छां तां वृसीं प्रददातीति तत्प्रदा सती, प्रदेति प्रपूर्वाद्ददातेः कर्मोपपदात्कप्रत्ययः । अहसत् जहास च पुच्छस्य पुरोपस्थाने द्विजस्य प्रकाशमेहनत्वप्रतीतेः पृष्ठत उपस्थाने पशुत्वप्रतीतेश्चेति भावः । कूर्मादिपीठमुष्टौ पुच्छव्यपदेशः ॥ ५३ ॥

स्वयं कथाभिर्वरपक्षसुभ्रुव:
स्थिरीकृतायाः पदयुग्ममन्तरा।
परेण पश्चान्निभृतं न्यधापयत्
ददर्श चादर्शतलं हसन् खल: ॥ ५४ ॥

अथोपचारोद्धुरचारुलोचना-
विलासनिर्वासितधैर्य्यसम्पदः।
स्मरस्य शिल्पं वरवर्गविक्रिया
विलोककं लोकमहासयन् मुहु: ॥ ५५ ॥

तिरोवलद्वक्रसरोजनालया
स्मिते स्मितं यत् खलु यूनि बालया।

---

स्वयमिति। खल: धूर्त्त: स्वयं कथाभि: इष्टालापै: स्थिरीकृतायाः निश्चलीकृतायाः, वरपक्षे सुभ्रुव: स्त्रियाः पदयुग्मं अन्तरा पादयुगलस्य अन्तराले, अन्तरान्तरेण युक्त इति द्वितीया। परेण पुरुषान्तरेण पश्चात् पृष्ठतः निगूढं यथा तथा आदर्शतलं दर्पणस्वरूपं न्यधापयत् निधापयामास, स: हसन् ददर्श च। वराङ्गप्रतिविम्बदर्शनात् हास: ॥ ५४ ॥

अथेति। अथ उपचारेषु उद्धुरा उदूढभारा तत्परा इत्यर्थः, ऋक् पूरित्यादिना समासान्त:। तासां चारुलोचनानां स्त्रीणां विलासै: साधनै: निर्वासिता निष्कासिता धैर्य्यसम्पत् येन तस्य स्मरस्य शिल्पं सृष्टि: स्मरकृता इत्यर्थः, वरवर्गस्य जन्यजनस्य विक्रियाः वक्ष्यमाणविकारा: कर्त्तार: विलोककं द्रष्टृजनं मुहु: अहासयन् परिचारिकाविलासदर्शनादेव जन्यजनस्य जनहासकर: स्मरविकारो जात: इत्यर्थ: ॥ ५५ ॥

तिर इति। तिरोवलन् तिर्य्यग्वलन् वक्रसरोजनाल:

तया तदीये हृदये निखाय तत्
व्यधीयतासम्मुखलक्ष्यवेधिता ॥ ५६ ॥
कृतं यदन्यत् करणोचितत्यजा
दिदृक्षु चक्षुर्यदवारि बालया ।
हृदस्तदीयस्य तदेव कामुके
जगाद वार्त्तामखिलां खले खलु ॥ ५७ ॥
जलं ददत्याः कलितानतेर्मुखं
व्यवस्यता साहसिकेन चुम्बितुम् ।

---

कण्ठः यस्याः तया वलितकन्धरया बालया युवत्या यूनि तरुणे स्मिते स्मितवति सति, कर्त्तरि क्तः । यत् स्मितं किल हसितं खलु, भावे क्तः । तया बालया तदीये युवसम्बन्धिनि हृदये तत् स्मितं निखाय गाढं प्रवेश्य असम्मुखम् अनभिमुखं यत् लक्ष्यं तद्वेधिता तद्वेधित्वं व्यधीयत विहिता, तत् स्मितं तस्य तिरश्चीनलक्ष्यवेधी स्मरो जातः इत्यर्थः ॥५६॥

कृतमिति । करणोचितं क्रियार्हं त्यजतीति तत्त्यजा तत् कर्त्तव्यमकुर्वता इत्यर्थः । त्यजेः क्विप् । तादृश्या बालया तरुण्या अन्यत् अकर्त्तव्यं यत् कृतं तत् दिदृक्षु दर्शनोत्सुकं चक्षुः स्वदृष्टिः यत् अवारि वारितं तदेव कार्य्याकरणदिदृक्षुतादर्शनद्वयमेव तदीयस्य बालासम्बन्धिनो हृदः हृदयस्य अखिलां वार्त्तां वृत्तान्तं खले धूर्त्ते कामुके जगाद खलु तस्मै जगाद इत्यर्थः । तत्र क्रियात्यागेन सान्द्रागपारवश्यं तथादर्शनोत्सुकं चक्षुः यदवारि तेन प्रणयकोपत्वं सूचितमित्यर्थः ॥ ५७ ॥

जलमिति । जलं ददत्याः आवर्जयन्त्याः अतएव कलिता

पदे पतद्वारिवि मन्दपायिना
प्रतीक्षितोऽन्येक्षणवञ्चनक्षणः ॥ ५८ ॥
युवानमालोक्य विदग्धशीलया
स्वपाणिपाथोरुहनालनिर्मितः।
श्लथोऽपि सख्यां परिधिः कलानिधौ
दधावहो तं प्रति गाढबन्धताम् ॥ ५९ ॥

---

ानतिः यया तस्याः नम्रमुख्याः इत्यर्थः, मुखं चुम्बितुं व्यव-
ग्रता उद्युञ्जानेन, अवस्यतेर्लटः शत्रादेशः। अतएव मन्द-
ाणिना श्लथहस्तेन सहसा बलात्कारेण वर्त्तते यः सः तेन
ाहसिकेन केनचित्, श्रोजःसहोऽम्भसां वर्त्तते इति ठक्।
ादे स्त्रीचरणे पतत् वारि यस्मिन् तस्मिन् सति चुम्बनव्यस-
ात् जलपानमपि अविगणय्येत्यर्थः, अन्येक्षणवञ्चनक्षणः
रदृष्टिवञ्चनसमयः प्रतीक्षितः आकाङ्क्षितः इत्यर्थः। कामान्धाः
कं न कुर्वन्तीति भावः ॥५८ ॥

युवानमिति। विदग्धशीलया प्रगल्भस्वभावया कयाचित्
ुवानम् आलोक्य कलानिधौ कामशिल्पाकरे चन्द्रे, इव कला
िल्पे विधोरंश इत्यभिधानात्। सख्यां स्वपाणिपाथोरुहना-
ाभ्यां निजभुजाभ्यां निर्मितः निजभावसूचनार्थं कृतः परिधिः
रिवेषरूपत्वात् परिरम्भः परिवेषः चन्द्रे तत्सम्भावनयेति
ाव:। श्लथः अपि सन् तं युवानं प्रति तस्मिन् इत्यर्थः,
ाढबन्धतां दधौ गाढालिङ्गनसुखं तस्मादभूदित्यर्थः। अहो
ार्य्यकारणवैरस्यात् विरुद्धकार्य्योपादानाच्च आश्चर्य्यम् अतएवा-
सङ्गतिविषमालङ्काराः संसृष्टाः, कार्य्यकारणयोर्भिन्नदेशत्वे
ाादसङ्गतिः। विरुद्धकार्यस्योत्पत्तिरिति च लक्षणात्। अत्र

नतभ्रुवः स्वच्छनखानुविम्बन-
च्छलेन कोऽपि स्फुटकम्पकण्टकः ।
पयो ददत्याश्चरणे भृशं चतः
स्मरस्य बाणैः शरणे न्यविक्षत ॥ ६० ॥

मुखं यदस्मायि विभज्य सुभ्रुवा
ह्रियं यदालम्ब्य नतास्यमासितम् ।
अवादि वा यन्मृदु गद्गदं युवा
तदेव जग्राह तदाप्तिलग्नकम् ॥ ६१ ॥

---

रतिरहस्योक्तेः—उत्सङ्गसङ्गतापि प्रियसख्यां विविधविभ्रमं तनुता । भावादङ्कगतं शिशुमालिङ्गति चुम्बति ब्रूते ॥ ५८ ॥

नतेति । स्मरस्य बाणैः भृशं चतः अतएव स्फुटौ कम्पकण्टकौ वेपथुरोमाञ्चौ रागसात्त्विकौ प्रहारसात्त्विकौ च यस्य सः, रोमाञ्चेऽपि च कण्टक इत्यमरः । कोऽपि युवा पयः दधत्याः नतभ्रुवः स्त्रियः स्वच्छनखेषु अनुविम्बनच्छलेन प्रतिविम्बव्याजेन चरणे पादे एव शरणे रचितुं न्यविक्षत निविष्ट इति सापह्नवोत्प्रेक्षा, व्यञ्जकाप्रयोगाद् गम्या । नेविंश इति लुङि तङ्, इगुपधादनिटकः इति च्लेरनिर्देशः ॥ ६० ॥

मुखमिति । सुभ्रुवा कयाचित् योषिता मुखं विभज्य कुटिलीकृत्य किञ्चित् विकृत्येत्यर्थः, यत् अस्मायि विस्मितं, स्मयतेर्भावे लुङि चिणि वृद्ध्यादेशौ । ह्रियम् आलम्ब्य यत् नतास्यं नम्रमुखं यथा तथा आसितम्, आसेर्भावे क्तः । मृदु गद्गदम् अवादि वा उदितञ्च, वदेः कर्मणि लुङ् । युवा तदेव तच्चेष्टात्रयमेव तदाप्तौ तस्याः प्राप्तौ लग्नकं प्रतिभुवं जग्राह, गाढानुरागानुभावत्वात् तस्या इति भावः ॥ ६१ ॥

विलोक्य यूना व्यजनं विधुन्वतीम्
अवाप्तसत्त्वेन भृशं प्रसिष्विदे ।
उदस्तकण्ठेन सुषोमनाटिना
विजित्य लज्जां ददृशे तदाननम् ॥ ६१ ॥
स तत्कुचस्पृष्टकचेष्टिदोर्लता-
चलद्दलाभव्यजनानिलाकुलः ।
अवाप नानानलनालशृङ्खला-
निबद्धनीडोद्भवविभ्रमं युवा ॥ ६२ ॥

---

विलोक्येति । व्यजनं तालवृन्तकं विधुन्वतीं चालयन्तीं काञ्चित् विलोक्य अवाप्तसत्त्वेन उद्रिक्तसत्त्वगुणेन यूना भृशं प्रसिष्विदे स्विन्नं सञ्जातसात्त्विकोऽभूदित्यर्थः । स्विद्यतेर्भावे लिट् । सुषोमनाटिना नाटकेन उदस्तकण्ठेन उदग्रीवेण सता तेन लज्जां विजित्य विसृज्येत्यर्थः, तदाननं तस्याः आननं ददृशे दृष्टं व्यजनपवनापेक्षयेति भावः । दृशेः कर्मणि लिट् । अत्र आगन्तुकेन घर्मस्वेदेन सहजसात्त्विकस्वेदेन ग्रहणान्मीलनालङ्कारः । मीलनं वस्तुना यत्र वस्त्वन्तरनिगूहनमिति लक्षणात् ॥ ६१ ॥

स इति । सः पूर्वोक्तः युवा तस्याः व्यजनहस्तायाः कुचयोः स्पृष्टमेव स्पृष्टकं घर्षणं तदेव चेष्टा यस्याः तस्याः दोर्लतायाः चलद्दलः इवाभातीति तदाभम् इत्युत्प्रेक्षा । लतायाः पत्रेण भवितव्यमिति भावः । तस्य व्यजनस्य अनिलेन आकुलः उक्त-रीत्या तत्कुचस्पृष्टकसुखसहितमित्यर्थः । नानानलनालः नानाविधनलकाण्डः एव शृङ्खला निगडः तया निबद्धस्य नीडोद्भवस्य पक्षिणः विभ्रमं विलासम् अवाप उपरि

आवच्छटा कापि कटाक्षणस्य सा
तथैव भङ्गी वचनस्य काचन।
यया युवभ्यामनुनाथने मिथः
क्रशोऽपि दूतस्य न शेषितः श्रमः॥ ६४॥
पपौ न कश्चित् क्षणमास्यमीलितं
जलस्य गण्डूषमुदीतसम्मदः।
चुचुम्ब तत्र प्रतिबिम्बितं मुखं
पुरःस्फुरन्त्याः स्मरकार्मुकभ्रुवः॥ ६५॥

---

मश्चाय्य माणवालव्यजनवर्त्ति सुखनिश्चलाङ्गः पञ्जरवद्धपक्षीव तत् बभौ इत्यर्थः। नीडोद्भवा गरुत्मन्तः इत्यमरः॥ ६३॥

आवच्छटेति। सा तात्कालिकी रौप्यवाच्या कटाक्षणस्य कटाक्षोपयोगस्य, तत् करोतीति ण्यन्तात् ल्युट्। आवच्छटा भङ्गी तथैव वचनस्य काचन भङ्गी जाता इति विशेषः। यया कटाक्षवचनभङ्ग्या युवभ्यां युवत्या यूना च, पुमान् स्त्रिया इत्येकशेषः। मिथः अनुनाथने परस्परप्रार्थने, नाथतेर्याचनार्थत्वात् ल्युट्। क्रशः अल्पः दूतस्य श्रमः प्रयासः न शेषितः स्वयमेव तत्कार्य्यं कारित्वात् नावेक्षितः इत्यर्थः॥ ६४॥

पपाविति। उदीतसम्मदः उत्पन्नकौतुकः कश्चित् युवा पुरःस्फुरन्त्याः पुरोवर्त्तिन्याः स्मरस्य कार्मुके कार्मुकभूते भ्रुवौ यस्याः जलदात्र्याः आस्येन मीलितं मिश्रितं तद्धूक्रान्तं प्रतिबिम्बं जलस्य गण्डूषं गण्डूषितजलमित्यर्थः तच्च गण्डूषणाय मुखसंयुक्तं पाणिधृतमिति द्रष्टव्यम् अन्यथा प्रतिबिम्बादिकार्य्यायोगादिति भावः। क्षणं क्षणमात्रं न पपौ किन्तु तत्र जले प्रतिबिम्बितं मुखं चुचुम्ब॥ ६५॥

हरिन्मणेर्भोजनभाजनेऽर्पिते
गताः प्रकोपं किल वारयात्रिकाः।
भृतं न शाकैः प्रवितीर्णमस्ति वः
त्विषेदमेनं हरितेति बोधिताः॥ ६६॥
ध्रुवं विनीतः स्मितपूर्ववाग् युवा
किमप्यपृच्छन्न विलोकयन् मुखम्।
स्थितां पुरः स्फाटिककुट्टिमे वधूं
तदङ्घ्रियुग्मावनिमध्यबद्धदृक्॥ ६७॥

---

हरिदिति। हरिन्मणेः मरकतोपलस्य सम्बन्धिनि तन्मये भोजनभाजने भोजनपात्रे अर्पिते सति प्रकोपम् अतिरोषं गताः पत्रभाजनभ्रान्त्येति भावः, वरयात्रा प्रयोजनम् एषामस्तीति वारयात्रिकाः वरेण सह भोक्तारः, प्रयोजनमिति ठक्। इदं वः युष्माकं प्रवितीर्णं दत्तं भाजनं शाकैः शाकतरुपत्रैः, शाके पृथुच्छदाविति वैजयन्ती। भृतं व्याप्तं नास्ति न भवति किन्तु हरिता हरितया, पालाशो हरितो हरिदित्यमरः। त्विषा स्वकान्त्या एवम् इत्थं वा भ्रान्तिः कथमिति बोधिताः। अत्र कल्पितसादृश्यान्मरकतभाजनेषु पत्रभाजनभ्रान्तिनिबन्धनाद् भ्रान्तिमदलङ्कारः॥ ६६॥

ध्रुवमिति। युवा कोऽपि तरुणः पुरः अग्रे स्फाटिके स्फटिकमये कुट्टिमे निबद्धभूमौ स्थितां वधूं, तस्य अङ्घ्रियुग्मस्य अवनिमध्ये अन्तरालभूमध्ये बद्धदृक् दत्तदृष्टिः सन् तत्सङ्क्रान्ततदङ्गप्रतिबिम्बाकृष्टः सन्नित्यर्थः। मुखं न विलोकयन् न पश्यन्, नञर्थस्य नशब्दस्य सुप्सुपेति समासः। ध्रुवं सत्यं विनीतः साधुः किल स्मितपूर्वा वाक् यस्य सः सन्

अमी लसद्वाष्पमखण्डिताखिलं
वियुक्तमन्योन्यमसुक्तमार्दवम्।
रसोत्तरं गौरमपीवरं रसात्
अभुञ्जतामोदनमोदनं जनाः॥ ६८॥

वयोवशस्तोकविकस्वरस्तनीं
तिरस्तिरश्चुम्बति सुन्दरे दृशा।
स्वयं किल स्रस्तमुरस्यमम्बरं
गुरुस्तनी ह्रीणतराऽपराऽऽदधे॥ ६९॥

---

किमपि यत्किञ्चित् अपृच्छत्। अत्र यूनः स्त्रीसम्भाषणे पादावलोनेन मुखावलोकनादिति धर्मयोगात् विनीतत्वोत्प्रेक्षा ॥ ६७॥

अमी इति। अमी जनाः जन्यजनाः लसन् वाष्पः यस्य तम् अखण्डितम् अखिलं स्वरूपं यस्य तत् अखण्डिताखिलमित्यर्थः, अन्योन्यं वियुक्तम् असंश्लिष्टं तथापि असुक्तमार्दवम् अकठिनं रसोत्तरं स्वादुभूयिष्ठं गौरं शुभ्रम् अपीवरम् अस्थूलं आमोदनम् आह्लादजनकं सुगन्धम् इत्यर्थः, ओदनम् अन्नं रसात् रागात् अभुञ्जत। सार्थकविशेषत्वात् परिकरः॥६८॥

वय इति। सुन्दरे रूपसम्पन्ने पुंसि वयोवशेन स्तोकविकस्वरस्तनीं दिने दिने किञ्चित् किञ्चित् वर्द्धमानकुचां काञ्चित् तिरस्तिरः दृशा तिरश्चीनदृष्ट्या चुम्बति तृष्णया पश्यति सति अपरा गुरुस्तनी पृथुस्तनी स्त्री स्वयं किल वृथैवेति भावः। अविशयेन ह्रीणा लज्जिता ह्रीणतरा सती, ह्रीधातोः कालान्तरप्, नुदविदेत्यादिना पक्षे निष्ठानत्वं, तसिलादिष्विति कृत्वसुच इति पुंवद्भावः। स्रस्तम् उरस्यम् अम्बरम् उत्तरीयम्

यदादिहेतुः सुरभिः समुद्भवे
भवेत् तदाज्यं सुरभि ध्रुवं ततः।
वधूभिरेभ्यः प्रवितीर्य्य पायसं
तदोघकुल्यातटसैकतं कृतम्॥ ७०॥
यदप्यपीता वसुधालयैः सुधा
तदप्यदः स्वादु ततोऽनुमीयते।
अपि क्रतूषर्बुधदग्धगन्धिने
स्पृहां यदस्मै दधते सुधान्धसः॥ ७१॥

---

आदधे यथास्थानं निदधे कैमुत्येनाप्यदर्शनसम्भावनाभिमानादिति भावः॥ ६८॥

यदिति। यत् यस्मात् कारणात् समुद्भवे उत्पत्तौ सुरभिः गौः सुगन्धिश्च, सुरभिर्गोश्चवत् सौम्ये सुगन्धौ स्त्रीश्वसौरभेति यादवः। आदिहेतुः मूलकारणं ततः कारणात् यत् आज्यं सुरभि सुगन्धि भवेत् सुरभिसूतस्य सुरभित्वं युक्तमिति भावः। ध्रुवमित्युत्प्रेक्षायाम्। वधूभिः परिवेष्ट्रीभिः एभ्यः जन्यजनेभ्यः पयसि संस्कृतं पायसं, परमान्नं तु पायसमित्यमरः। संस्कृतं भिक्षादिभ्यः इत्यण्प्रत्ययः। प्रवितीर्य्य दत्त्वा तस्य सुरभ्याज्यस्य ओघः प्रवाहः तस्य कुल्या कृत्रिमसरित् तस्याः तटे सैकतं सिकतामयं पुलिनं कृतमिति रूपकं, देशे लुचिचौ चिण्प्रत्ययः॥ ७०॥

यदपीति। यदपि यद्यपि सुधा वसुधालयैः भूनिलयैः अपि अपीता न पीता तथापि अदः आज्यं ततः सुधातः अपि स्वादु अनुमीयते, यत् यतः सुधा एव अन्धः अन्नं येषां ते सुधान्धसः देवाः क्रतूषर्बुधदग्धगन्धिने यज्ञाग्निप्लुष्टगन्धवते अस्मै

अबोधि नो ह्रीनिभृतं मदिङ्गितं
प्रतीत्य वा नादृतवत्यसाविति ।
लुनाति यूनः स्म धियं कियद्गता
निवृत्य बालादरदर्शनेषुणा ॥ ७२ ॥
न राजिकाराद्धमभोजि तत्र कैः
मुखेन सीत्कारकृता दधद्दधि ।
धुतोत्तमाङ्गैः कटुभावपाटवात्
अकाण्डकण्डूयितमूर्द्धतालुभिः ॥ ७३ ॥

---

आज्याय स्पृहाम् इच्छां दधते, स्पृहेरीप्सित इति सम्प्रदान-त्वाच्चतुर्थी। अस्माकमुभयानुभवाभावेऽपि तद्वत् प्रवृत्तिलि-ङ्गेन तदुभयसमतारतम्यानुमानं सुकरमित्यर्थः ॥ ७१ ॥

अबोधीति। असौ बाला युवतिः ह्रीनिभृतं लज्जानिगूढं मदिङ्गितं मदभिप्रायः नो अबोधि न अबोधिष्ट, बुध्यतेः कर्त्तरि लुङि तङ्, दीपजनेत्यादिना च्लेश्चिणादेशः। प्रतीत्य बुद्ध्वापि न आदृतवती न गणितवती इत्येवंरूपां यूनः धियं संशयबुद्धिं कियत् कतिचित् पदानि गता निवृत्य आदरदर्शनं सराग-दृष्टिः किञ्चिद्दर्शनम् असकलदृष्टिरिति व्याचक्षते। ईषदर्थे दरोऽव्ययमित्यमरः। तेनैव इषुणा शस्त्रेण लुनाति स्म। एतावतैव यूनो विषमानुरागशङ्काशङ्कुरुद्धृत इति भावः ॥७२॥

नेति। तत्र भोजने कैः जनैः दध्नेव दधिवत् दध्ना संस्कृतम् इत्यर्थः, राजिकाराद्धं राजसर्षपनिष्फलं तत्पिष्टमयं व्यञ्जनमित्यर्थः। अथो राजसर्षपश्चवः क्षुधाभिजननो त्वाष्टिका राजिकेति यादवः। कटुभावपाटवात् कटुसामर्थ्यात् धुतो-त्तमाङ्गैः कम्पितमस्तकैः यथा अकाण्डे असमये कण्डूयितं

वियोगिदाहाय कटूभवत्त्विषः
तुषारभानोरिव खण्डमाहृतम्।
सितं मृदु प्रागथ दाहदायि तत्
खलः सुहृत्त्वमिवाहितस्ततः॥ ७४॥
नवौ युवानौ निजभावगोपिनौ
अभूमिषु प्राक् प्रहितभ्रमिक्रमम्।
दृशोर्विधत्तः स्म यदृच्छया किल
त्रिभागमन्योन्यमुखे पुनः पुनः॥ ७५॥

---

मूर्द्धतालु मूर्द्धानः तालूनि च यैः तैः सद्भिः सोत्कारकृताः ससोत्कारेण मुखेन वक्त्रेण न अभोजि सर्वैः एवं कुर्वद्भिरेव अभोजि। स्वभावोक्तिरलङ्कारः॥ ७३॥

वियोगीति। वियोगिनां दाहाय कटूभवन्त्यः तीक्ष्णीभवन्त्यः त्विषः यस्य तस्य तुषारभानोः चन्द्रस्य खण्डमिव आहृतम् इव स्थितम् इत्युत्प्रेक्षा। सितं शुभ्रं तत् राजसर्षपमिश्रं व्यञ्जनं पूर्वम् आदौ सुहृदाभः ततः पश्चात् कार्य्यकाले अहितः अनाप्तः खलः इव इत्युपमा, प्राक् आदौ मृदु अथ पश्चात् दाहदायीति दाहकाले बभूव इति शेषः॥ ७४॥

नवाविति। नवौ अपूर्वौ युवानौ युवतिश्च युवा च, पुमान् स्त्रियेत्येकशेषः। निजभावगोपिनौ स्वाभिप्रायवञ्चकौ सन्तौ अतएव प्राक् प्रथमम् अभूमिषु अन्यविषयेषु, नञर्थेन नञ्समासः। प्रहितभ्रमिक्रमं प्रेरितसञ्चारप्रकारं इतस्ततः प्रवर्त्तितम् इत्यर्थः, दृशोः त्रिभागं तृतीयभागम् अपाङ्गम् इत्यर्थः। वृत्तिविषये सङ्ख्याशब्दस्य पूरणार्थत्वमिति कैयटः। पुनः पुनः अन्योन्यस्य मुखे यदृच्छया किल अनिच्छयैव विधत्तः

व्यधुस्तमां ते मृदुमांससाधितं
रसादशित्वा मृदु तेमनं मनः ।
निशाधवोत्सङ्गकुरङ्गजैरदः
पलैः सपीयूषरसैः किमप्यपि ? ॥ ७६ ॥
परस्पराकूतजदूतकृत्ययो-
रनङ्गमाराद्धुमपि क्षणं प्रति ।
निमेषणेनैव कियच्चिरायुषा
जनेषु यूनोरुदपादि निर्णयः ॥ ७७ ॥

---

स्म आदौ स्त्रिया विषयान्तरदर्शनव्याजादेव अन्योन्यमुखम् अपाङ्गदृष्ट्या ददृशतुरिति चक्षुःप्रीत्याख्या प्रथमावस्थैका ॥ ७५ ॥

व्यधुस्तमामिति । ते जन्याः मृदुना अकठिनेन मांसेन साधितं निष्पादितं तेमनं निष्ठानापराख्यं लेह्यविशेषः, स्यात्तेमनं तु निष्ठानम् इत्यमरः । रसात् रागात् अशित्वा आस्वाद्य अदः इद तेमनं निशाधवस्य इन्दोः उत्सङ्गे यः कुरङ्गः तज्जैः सपीयूषरसैः अमृतद्रवमिश्रितैः पलैः मांसैः अपि किम् अपाचि किम् ? श्रितैः पाकार्थत्वात् ण्यन्तात् कर्मणि लुङ्, घटादिमित्वात् ह्रस्वः । इति मनोमतिं व्यधुस्तमाम् अतिशयेन विदधुः इत्युत्प्रेक्षितवन्तः इत्यर्थः । दधातेर्लुङि तिङ्धादाम्प्रत्ययः ॥ ७६ ॥

परस्परेति । परस्पराकूतजम् अन्योन्याभिलाषजन्यं दूतकृत्यं दूतव्यापारः नयनादिचेष्टारूपः ययोः सञ्ज्ञाभिरेव कृतसमागमनिश्चययोरित्यर्थः, यूनोः तरुणयोः स्त्रीपुंसयोः अनङ्गम् आराद्धुं सेवितुमपि रन्तुमपि इत्यर्थः, क्षणं कालं प्रति

अहर्निशा वेति रताय पृच्छति
क्रमोष्णशीतान्यकरार्पणाद् विटे।
स्त्रिया विदग्धा किल तन्निषेधिनी
न्यधत्त सन्ध्यामधुरेऽधरेऽङ्गुलिम्॥ ७८॥

कियत् त्यजन्नोदनमानयन् कियत्
करस्य पप्रच्छ गतागतेन याम्।
अहं किमेष्यामि किमेष्यसीति सा
व्यधत्त नम्रं किल लज्जयाननम्॥ ७९॥

---

निर्णयः प्रत्ययः समागमकालनिश्चयोऽपि इत्यर्थः, जनेषु जन मध्ये एव कियच्चिरायुषा किञ्चिच्चिरावस्थायिना निमिषणेन निमीलनेन एव उदपादि उत्पन्नः, उत्पद्यतेः कर्त्तरि लुङ चिण्ते पदः। परेषु निद्रितेषु आवयोः समागमः इति काल निश्चयोऽपि संज्ञयैव ज्ञातः इत्यर्थः॥ ७७॥

अहरिति। विटे क्रमेण उष्णशीतयोः अन्नयोः करार्पणात् सूचनात् रताय अहर्निशा वा इति पृच्छति सति विदग्धा चतुरा स्त्रिया किल तत् कालद्वयं निषेधतीति तन्निषेधिनी सती सन्ध्यामधुरे सन्ध्यासवर्णे अधरे अङ्गुलिं न्यधत्त सन्ध्यासवर्णाधरस्पर्शेन आवयोः सन्ध्यासमये समागमः इति सूचयामास इत्यर्थः। स्त्रिया स्त्रीभिरङ्गुल्याधरमाच्छाद्यते इति प्रसिद्धम्॥ ७८॥

कियदिति। कियत् ओदनं त्यजन् अपसारयन् कियत् आनयन् आकर्षन् करस्य गतागतेन यातायाताभ्यां, विप्रतिषद्धञ्चानधिकरणवाचि इति वैभाषिको द्वन्द्वे एकवद्भावः। किम् अहम् एष्यामि किं त्वम् एष्यसि वा इति यां पप्रच्छ सा

यथामिषे जग्मुरनामिषभ्रमं
निरामिषे चामिषमोहमूहिरे ।
तथा विदग्धैः परिकर्मनिर्मितं
विचित्रमेते परिहस्य भोजिताः ॥ ८० ॥

नखेन कृत्वाधरसन्निभं निभात्
युवा मृदुव्यञ्जनमांसफालिकाम् ।
ददंश दन्तैः प्रशशंस तद्रसं
विहस्य पश्यन् परिवेषिकाधरम् ॥ ८१ ॥

अनेकसंयोजनया तदा कृतं
निकृत्य निष्पिष्य च तादृगर्जनात् ।

---

स्त्री लज्जया किल आननं नम्रं व्यधत्त शिरोऽवनतिभेदेन त्वमेव आगच्छ इति सूचितवती इत्यर्थः ॥ ७९ ॥

यथेति । ते जन्याः यथा आमिषे मांसे अनामिषम् इति भ्रमं जग्मुः, यथा निरामिषे अनामिषे आमिषमोहं मांसभ्रमं च ऊहिरे वहन्ति स्म, तथा तेन प्रकारेण विदग्धैः कुशलपाचकैः परिकर्मणा संस्कारेण निर्मितम् अतएव विचित्रं भोज्यवस्तु परिहस्य विहस्य भोजिताः सर्वे सर्वज्ञत्वमादिताः इत्यर्थः ॥ ८० ॥

नखेनेति । युवा मृदोः व्यञ्जनमांसस्य फालिकां खण्डिकां निभात् सञ्छिद्य भक्षणव्याजात् नखेन अधरसन्निभां परिवेषिकाधराकारां कृत्वा विहस्य परिवेषिकायाः भोज्यप्रदात्र्याः अधरं पश्यन् दन्तैः ददंश दष्टवान् तस्य रसं स्वादं प्रशशंस अहो अमृतकल्पमिति तुष्टाव चेत्यर्थः । तदधरबुद्ध्या इति भावः ॥ ८१ ॥

अनेकेति । तदा भोजनकाले अमी जनाः भोक्तारः

अमी कृताकालिकवस्तुविस्मयं
जना बहु व्यञ्जनमभ्यवाहरन् ॥ ८२ ॥
पिपासुरस्मीति विबोधिता मुखं
निरीक्ष्य बाला सुहितेन वारिणा।
पुनः करे कर्त्तुमना गलन्तिकां
हसात् सखीनां सहसा न्यवर्त्तत ॥ ८३ ॥
युवा समादित्सुरमत्रगं घृतं
विलोक्य तत्रैषदृशोऽनुविम्बनम्।

---

अनेकेषां संस्कारद्रव्याणां संयोजनया मेलनेन तदा निकृत्य छित्त्वा निष्पिष्य पिष्ट्वा च भर्जनात् सम्पादनात् हेतोः तादृक् तथा विचित्रं कृतं निष्पादितं किञ्च कृतम् आकालिकेषु अकालभवेषु तत्कालदुर्लभेषु वस्तुषु पदार्थेषु विस्मयः येन तत् बहु अनेकं व्यञ्जनम् अभ्यवाहरन् अभुञ्जत ॥ ८२ ॥

पिपासुरिति। वारिणा सुहितेन वारिणा तृप्ता इत्यर्थः, सौहित्यं तर्पणं तृप्तिः इत्यर्थः। शेषार्थे षष्ठी पूरणगुणेत्यादिना समासनिषेधः। केनचित् यूना इति शेषः, पिपासुः पातुम् इच्छुः अस्मीति विबोधिता बाला मुखं निरीक्ष्य पुनः गलन्तिकां पात्रं, कर्कर्यालुर्गलन्तिकेत्यमरः। करे हस्ते कर्त्तुमनाः धर्त्तुकामा, तुं काममनसोरपि इति मकारलोपः। सखीनां हसात् हास्यात्, स्वनहसोर्वेति विकल्पादप्प्रत्ययः। सहसा सपदि न्यवर्त्तत निवृत्ता, अधरपिपासोक्तित्वपरिज्ञानादिति भावः ॥ ८३ ॥

युवेति। युवा अमत्रगं पात्रगतं घृतं समादित्सुः समादातुम् इच्छुः सन्, ददातेः सनन्तादुप्रत्ययः, सनि मीमेत्या-

चकार तन्नीविनिवेशितं करं
बभूव तच्च स्फुटकण्टकौत्करम् ॥ ८४ ॥
प्रलेहजस्नेहकृतानुविम्बनां
चुचुम्ब कोऽपि श्रितभोजनस्थलः ।
मुहुः परिस्पृश्य कराङ्गुलीमुखैः
ततोऽनुरक्तैः स्वमवापितैर्मुखम् ॥ ८५ ॥
अराधि यन्मीनमृगाजपत्त्रिजैः
पलैर्मृदु स्वादु सुगन्धि तेमनम् ।
अशाकि लोकैः कुत एव जेमितुं
न तत् तु सङ्घ्रातुमपि स्म शक्यते ॥ ८६ ॥

---

ट्रिना इसादेशे अभ्यासलोपः । तत्र इति एणदृशः मृगाक्ष्याः अनुविम्बनं विलोक्य करं तस्य स्त्रीप्रतिविम्बस्य नीव्यां निवेशितं चकार, तत्प्रतिविम्बञ्च स्फुटं कण्टकौत्करं प्रव्यक्तपुलकप्रकरं बभूव तावतैव विम्बस्य पुलकितत्वादिति भावः ॥ ८४ ॥

प्रलेहेति । कोऽपि युवा श्रितभोजनस्थलः प्राप्तभोजनभाजनः सन् प्रलेहजस्नेहे लेह्यद्रव्ये स्नेहरसे करतलगते इति भावः । कृतानुविम्बनां प्राप्तप्रतिविम्बां कान्ताम् इति शेषः, मुहुः परिस्पृश्य ततः स्पर्शात् अनन्तरं स्वं मुखम् अवापितैः आस्यं प्रापितैः चुम्बितैः इत्यर्थः, अतएव अनुरक्तैः सस्नेहैः कराङ्गुलीमुखैः अङ्गुल्यग्रैः चुचुम्ब मुहुः [illegible]लेहनव्याजेन कान्ताप्रतिविम्बानुस्पृष्टाङ्गुलिमुखचुम्बनात् एव तत्प्रतिविम्बचुम्बनात् सुखम् अन्वभूत् इत्यर्थः ॥ ८५ ॥

अराधीति । मीनाः मत्स्याः मृगाः शशादयः अजाः छागाः पत्त्रिणः पक्षिणः चटकादयः तेभ्यः जातैः तज्जैः पलैः

कृतार्थनचाटु विरिङ्गितैः पुरा
परासि यः किञ्च न कुञ्चितभ्रुवा।
क्षिपन् मुखे भोजनलीलयाङ्गुलीः
पुनः प्रसन्नाननयाऽन्वकम्पि सः॥ ८७॥

अकारि नीहारनिभं प्रभञ्जनात्
अधूपि यच्चागुरुसारदारुभिः।
निपीय भृङ्गारुकसङ्गि तच्च तैः
अवर्णि वारि प्रतिवारमीदृशम्॥ ८८॥

---

मांसैः, पललं जाङ्गलं मांसं पललं क्रव्यमामिषम् इति हला-युधः। मृदु कोमलं स्वादु रसवत् सुगन्धि सुरभि यत् तेमनं लेह्यम् अराधि अपाचि, तत् तेमनं लोकैः भोक्तृजनैः सङ्ख्यातुं गणयितुम् अपि न शक्यते स्म जेमितुम् अशितुं कुत एव अशाकि बहुलत्वाच्चेति भावः, पाके राध्यतेरध्यतिजेमत्यत्ति-चमतीति भट्टमल्लः॥ ८६॥

कृतेति। चाटुभिः मनोहरैः इङ्गितैः नयनादिचेष्टितैः कृतार्थनः देहि इति कृतार्थनः यः युवा किञ्च न कुञ्चित-भ्रुवा कुटिलभ्रुवा स्त्रिया पुरा पूर्वं परासि पर्य्यहारि, सः युवा भोजनलीलया भोजनव्यापारेण तद्व्याजेन इत्यर्थः, मुखे अङ्गुलीः क्षिपन् प्रसन्नाननया तया पुनः अन्वकम्पि अनु-कम्पितः, कार्य्यकातरो कृताञ्जलिः कृपापात्रं भवतीति भावः॥ ८७॥

अकारीति। यत् वारि प्रभञ्जनात् वायोः वायुसञ्चा-रात् इत्यर्थः, पवमानः प्रभञ्जनः इत्यमरः। नीहारनिभं हिमकल्पं तद्वत् शीतलम् इत्यर्थः, अकारि कृतम्, अगुरुसारैः दारुभिः धूपकाष्ठैः अधूपि धूपितं वासितं च इत्यर्थः, ईदृशम्

त्वया विधातर्यदकारि चामृतं
कृतञ्च यज्जीवनमम्बु साधु तत्।
वृथेदमारम्भि तु सर्वतोमुखं
तथोचितः कर्त्तुमिदं पिबस्तव॥ ८९॥
सरोजकोशाभिनयेन पाणिना
स्थितेऽपि कूरे मुहुरेव याचते।
सखि! त्वमस्मै वितर त्वमित्युभे
मिथो न वादाद् ददतुः किलौदनम्॥ ९०॥

---

ईदृग्गुणं भृङ्गारुकसङ्गि कनकालुकान्तर्गतं, भृङ्गारः कनकालुकेत्यमरः। वारि निपीय प्रतिवारं प्रतिपानं तत्र तस्मिन् देशे काले वा तैः भोक्तृभिः अवर्णि वर्णितम्॥ ८८॥

त्वयेति। हे विधातः! त्वया अम्बु अमृतञ्च अमृतनामकं पीयूषञ्च यत् अकारि तदा जीवनं जीवनसंज्ञकञ्च यत् कृतं तत् उभयं साधु सफलं सर्वतः मुखानि प्रवाहवक्त्राणि च यस्य तत् तथा कृतम् इति यावत् वृथैव आरम्भि अकारि पेयस्य मुखवैयर्थ्यादिति भावः। किन्तु तव अस्य अम्बुनः पिबतीति इदं पिबः पाता इदमभिभोजनस्तु पाघ्रादिना शप्रत्ययः। तथा सर्वतोमुखः कर्त्तुम् उचितः तस्य तदुपयोगादिति भावः. पुष्करं सर्वतोमुखमित्यमरः॥ ८९॥

सरोजेति। कूरे ओदने स्थितेऽपि, अन्धः कूरं भक्तमन्नमोदनं भस्मेति हलायुधः। सरोजकोशस्य अभिनयः अनुकरणं यस्य सः कमलमुकुलानुकारी तदीयकुचग्रहणाभिलाषव्यञ्जकः इत्यर्थः, तेन पाणिना मुहुः एव याचते पुनः पुनः कूरं याचते याचमानाय यूने, याचेरुभयपदित्वात् शतृप्रत्ययः। उभे स्त्रियौ, हे सखि! त्वम् एव अस्मै वितर देहि मिथः

इयं कियच्चारुकुचेति पृच्छते
पयःप्रदाया हृदयं समावृतम् ।
ध्रुवं मनोज्ञा व्यतरद् यदुत्तरं
मिषेण भृङ्गारभृतः करद्वयी ॥ ८१ ॥

अमीभिराकण्ठमभोजि तद्गृहे
तुषारधाराम्रदितेव शर्करा ।
वाहं द्विषद्वष्कयणीपयःसुतं
सुधाह्रदात् पङ्कमिवोद्धृतं दधि ॥ ८२ ॥

---

वादात् विवादात् ओदनं न ददतुः किल खलु ? पराभि-
प्रायज्ञाने तद्वैयर्थ्यात् इति भावः ॥ ८० ॥

इयमिति । पयः प्रददातीति पयःप्रदा तस्याः सम्बन्धि
समावृतम् आच्छादितं हृदयं वक्षः कर्म हृदयं कियन्ती चारू
कुचौ यस्याः सेति पृच्छते कुचपरिमाणं जिज्ञासमानाय इत्यर्थः,
करद्वयी तस्याः पाणियुगली भृङ्गारभृतः मिषेण कन-
कालुकाधारणव्याजेन यत् यस्मात् उत्तरम् एतत् भृङ्गारपरि-
माणम् इत्येवंरूपम् उत्तरं व्यतरत् अददात् तस्मात् ध्रुवं
मनोज्ञा चित्तज्ञा इत्युत्प्रेक्षा ॥ ८१ ॥

अमीभिरिति । अमीभिः जन्यैः तद्गृहे भीमभवनेषु
तुषारधारया हिमोदकेन म्रदिता मर्दिता शर्करा खण्डवि-
कारा इव तत् साधु शुभ्रं चेत्यर्थः । खण्डविकाराः शर्करा
सितेत्यमरः । सुधाह्रदात् उद्धृतं पङ्कं अमृतकर्दमम् इव
स्थितम् इत्युत्प्रेक्षा । वाहं द्विषन्ती महिषी सा च सा वष्क-
यणी चिरप्रसूता, स्त्रियाः पुंवदित्यादिना पुंवद्भावः । लुलापो
महिषो वाह इत्यमरः । तस्याः पयसः क्षीरात् सुतम् उत्पा-

तदन्तरन्तः सुषिरस्य विन्दुभिः
करम्बितं कल्पयता जगत्सृजा।
इतस्ततः स्पष्टमचोरि मायिना
निरीक्ष्य तृष्णाचलजिह्वताभृता ॥ ८३ ॥

ददासि मे तन्न रुचेर्यदास्पदं
न यत्र रागः सितयापि किं तया।
इतीरिणे बिम्बफलं रुचिच्छलात्
अदायि बिम्बाधरयारुचस्य तत् ॥ ८४ ॥

---

दितं, सृणोतेः कर्मणि क्तः। दधि आकण्ठम् अभोजि भुक्तम् ॥ ८२ ॥

तदिति। निरीक्ष्य वीक्ष्य सृष्ट्यादौ स्वसृष्टं दधि दृष्ट्वा तृष्णया गर्द्धेन चलजिह्वताभृता चलजिह्वत्वधारिणा अतएव मायिना स्वचापल्यवञ्चनाचतुरेण जगत्सृजा स्रष्ट्रा सद्यः तत् दधि अन्तरन्तः मध्ये सुषिरस्य, जातावेकवचनम्। सुषिराणां विन्दुभिः मण्डलैः करम्बितं मिश्रितं कल्पयता तत्र वर्त्तुलच्छिद्रयुक्तं कुर्वता सता इतस्ततः अचोरि चोरितं सर्वथा कतिपयावयवानां स्वादे कृतच्छिद्राणामिति भावः। स्पष्टमित्युत्प्रेक्षायाम्। ब्रह्मणोऽपि आकर्षकं माहिषदधि किमुतान्येषामिति भावः ॥ ८३ ॥

ददासीति। यत् रुचेः रागस्य आस्पदं तत् मे मह्यं न ददासि, यत्र सः रागः तया सितया ज्ञातम् अलं खण्डविकाराः शर्करा सितेत्युक्तं रक्तवस्तुरागिणः किं सितवस्तुना इति च गम्यते। इतीरिणे इतिवादिने रागिणे रुचिच्छलात् छलप्रयोगी छलप्रयोगः एव कर्त्तव्यः इति न्यायात् इत्यर्थः, बिम्ब-

समं ययोरिङ्गितवान् वयस्ययो-
स्तयोर्विहायोपहृतप्रतीङ्गिताम् ।
अकारि नाकूतमवारि सा यया
विदग्धयाऽरञ्जि तयैव भाववित् ॥ ८५ ॥
सखीं प्रति स्माह युवेङ्गितेक्षिणी
क्रमेण तेऽयं चमते न दित्सुताम् ।

---

मिव अधरः यस्याः तया बिम्बोष्ठ्या स्त्रिया बिम्बफलम् अदायि दत्तं मिषान्तरेणाधरबिम्बं याचितं मिषान्तरात् दानम् अङ्गीचकार इत्यर्थः । तत् बिम्बफलम् अरुचत् अरोचिष्ट स्वादूबभूवेत्यर्थः । प्रियाधरप्रतिबिम्बप्रतिनिधित्वादिति भावः । रुचदीप्तौ प्रीत्यर्थाल्लुङ्, द्युद्भ्यो लुङीति परस्मैपदं, पुषादि-द्युताद्ल्यादिना च्लेरङादेशः ॥ ८४ ॥

सममिति । ययोः वयस्ययोः सहचर्य्योः समं तुल्यं यथा तथा इङ्गितवान् दृगादिसंज्ञावान् तयोः मध्ये उपहृत-प्रतीङ्गितां दत्तप्रतिसंज्ञां विहाय परिहृत्य किन्तु यया आकूतं प्रतीङ्गितं न अकारि किन्तु सा प्रथमा अवारि वारिता यदा अस्याम् अयम् अपरक्तः रक्तश्च आत्मनः स्यात् तदा उदासितम् इत्यर्थः । विदग्धया चतुरया द्वितीयया एव अयं भाववित् भावज्ञः अरञ्जि रञ्जितः आकृष्टः, एतेन पूर्वाबलापेक्षया द्वितीया गम्भीरा सोऽपि भावज्ञः तद्युक्तम् एतदिति गम्यते ॥ ८५ ॥

सखीमिति । युवेङ्गितेक्षिणी युवाभिप्रायदर्शिनी काचित् सखीं परिवेषिकां वयस्यां प्रति आह स्म उवाच, लट् स्म इति भूते लट् । किमिति ? अयं युवा ते तव सम्बन्धिनीं

विलोम तद्व्यञ्जनमर्प्यते त्वया
वरं किमस्मै न नितान्तमर्थिने ॥ ८६ ॥
समाप्तिलिप्येव भुजिक्रियाविधेः
दलोदरं वर्त्तुलयाऽऽलयीकृतम्।
अलङ्कृतं चोरवटैस्तदाश्नतां
रराज पाकार्पितगैरिकश्रिया ॥ ८७ ॥

---

क्रमेण दित्सुतां न क्षमते पङ्क्तिक्रमेण परिवेषणं न सहते इत्यर्थः, अतः त्वया नितान्तमर्थिने याचकाय अस्मै वरम् उत्कृष्टं व्यञ्जनं निष्ठानं विलोम विपरीतं व्युत्क्रमेण न अर्प्यते न दीयते व्यग्राय शीघ्रंदेयमिति भावः। विलोम अरोमकं अतएव वरम् उत्कृष्टं व्यञ्जनं वराङ्गम् अर्थिने अस्मै किं न अर्प्यते इत्यर्थान्तरस्यापि विवक्षितत्वात् केवलप्रकृतश्लेषः। व्यञ्जनं श्मश्रुनिष्ठानचिह्नेष्ववयवेऽक्षरे यादवः ॥८६॥

समाप्तीमिति। तदा तत्काले चोरपक्वाः वटाः चोरवटाः पिष्टकविशेषाः तैः अलङ्कृतम् अश्नताम् अभ्यवहरतां दलस्य लेख्यपत्रस्य उदरं मध्यपात्रं, पाकः, पचि व्यक्तीकरणे इति धातोर्घञन्तः। तदर्थम् अर्पिता न्यस्ता गैरिकश्रीः धातुरागः यस्यां तया चोरवटपाकेन अग्निसंयोगभेदेन अर्पिता उत्पादिता गैरिकस्येव श्रीः कान्तिः येषां तैः इति परिणामः वर्त्तुलया निस्तलया अन्यत्र निस्तलैः इत्यर्थः। भुजिक्रिया भुजिधात्वर्थः सा एव विधिः व्यापारः भोजनम् इति यावत् तस्य समाप्तौ या लिपिः तद्बुद्धीकरणलेख्यविन्यासः तया आलयीकृतम् आस्पदीकृतम् इव तदङ्कितम् इति यावत् रराज इत्यन्वयः ॥ ८७ ॥

चुचुम्ब नोर्वीवलयोर्वशीं परं
पुरोऽधिपारि प्रतिबिम्बितां विटः।
पुनः पुनः पानकपानकैतवात्
चकार तच्चुम्बनचुङ्कृतान्यपि ॥ ९८ ॥
घनैरमीषां परिवेषकैर्जनैः
अवर्षि वर्षोपलगोलकावली।
चलद्भुजाभूषणरत्नरोचिषा
धृतेन्द्रचापैः श्रितचान्द्रसौरभा ॥ ९९ ॥
कियद् बहु व्यञ्जनमेतदर्प्यते
ममेति तृप्तेर्वदतां पुनः पुनः।

---

चुचुम्बेति। विटः पुरः अग्रे पार्य्याम् अधि अधिपारि पानपात्रयाम् इत्यर्थः। पारी पात्रीपराङ्ग्योरिति विश्वः। वारिवहनभाण्डमिति स्वामी। प्रतिबिम्बिताम् उर्वीवलयोर्वशीं भूवलयोर्वशीं स्त्रीं परं केवलं न चुचुम्ब किन्तु पुनः पुनः पानकपानकैतवात् पानीयपानच्छलात् तस्याः चुम्बने चुङ्कृतानि अपि चूषणचुङ्कारशब्दान् चकार ॥ ९८ ॥

घनैरिति। चलन्त्यः भुजाः तासां भुजानां भूषणरत्नानां रोचिषा एव धृतम् इन्द्रचापं यैः तैः परिवेषन्तीति परिवेषकाः दातारः तैः जनैः घनैः मेघैः अमीषां भोक्तॄणां श्रितचान्द्रसौरभा प्राप्तकर्पूरगन्धा अन्यत्र श्रिते व्याप्ते चान्द्रस्य सूर्य्यस्य वा सौरी भा प्रभा च यया, सूर्य्यतिष्यागस्त्यानाम् उपधाया इति यकारलोपः। वर्षोपलाः इव गोलकाः घुटिकाकाराः पिष्टकविशेषाः तेषाम् आवली राशिः अवर्षि वृष्टा ॥ ९९ ॥

कियदिति। मम एतत् कियत् बहु व्यञ्जनं शाकं कति-

अमूनि सङ्ग्रातुमसावढौकि तैः
छलेन तेषां कठिनीव भूयसी ॥ १०० ॥
विदग्धबालेङ्गितगुप्तिचातुरी-
प्रवल्हिकोत्पाटनपाटवे हृदः ।
निजस्य टीकां प्रबबन्ध कामुकः
स्फुरङ्गिराकूतशतैस्तदौचितीम् ॥ १०१ ॥
घृतप्लुते भोजनभाजने पुरः
स्फुरत्पुरन्ध्रीप्रतिबिम्बिताकृतेः ।
युवा निधायोरसि लड्डुकद्वयं
नखैर्लिलेखाथ ममर्द निर्दयम् ॥ १०२ ॥

---

व्यञ्जनानीत्यर्थः अर्प्यते इति वदतां तेषां भोक्तॄणाम् अमूनि व्यञ्जनानि सङ्ग्रातुं भूयसी कठिनी इव भूयस्यः करिकाः इव सङ्ग्रानघुटिकाः इवेत्यर्थः । करिका कठिनी इति विश्वः । असौ गोलकावलिः तैः परिवेषकैः छलेन परिवेषणव्याजेन अढौकि ढौकिता दत्ता इत्यर्थः ॥ १०० ॥

विदग्धेति । कामुकः कामी विदग्धबालायाः प्रौढाङ्गनायाः इङ्गितगुप्तिचातुरी आकारगोपनचातुर्य्यं निगूढार्थचेष्टाप्रयोगचातुरी सा एव प्रवल्हिका प्रहेलिकापराख्यो निगूढार्थोक्तिविशेषः तस्याः उत्पाटने अर्थोद्भेदने यत् पाटवं तस्मिन् पटुमदुत्पाटने प्रसिक्ते सति इत्यर्थः, अस्मिन् अर्थोद्भेदेन औचितीम् आनुकूल्यं स्फुरद्भिः तदानुकूल्यैः इत्यर्थः, आकूतानां शतैः निजस्य आत्मीयस्य हृदः हृदयस्य टीकां व्याख्यां प्रबबन्ध स्वहृदयं तस्मै निवेदयामास इत्यर्थः । उचितोत्तरदानादेव प्रश्नार्थप्रकाशनात् तदेव तदव्याख्यानमिति भावः ॥ १०१ ॥

घृतेति । युवा पुरः अग्रे घृतेन प्लुते सिक्ते भोजनभाजने

विलोकिते रागितरेण सस्मितं
क्रियाऽथ वैमुख्यमिते सखीजने।
तदालिरानीय कुतोऽपि शार्करीं
करे ददौ तस्य विहस्य पुत्रिकाम्॥ १०३॥
निरीक्ष्य रम्याः परिवेषिका ध्रुवं
न भुक्तमेवैभिरवाप्ततृप्तिभिः।
अशक्नुवद्भिर्बहुभुक्तवत्तया
यथोज्झिता व्यञ्जनपुञ्जराजयः॥ १०४॥

---

स्फुरन्ती या पुरन्ध्र्याः अङ्गनायाः प्रतिबिम्बिता आकृतिः शरीरं तस्याः उरसि लड्डुकद्वयं वर्तुलपिष्टकविशेषपिण्डयुग्मं निधाय नखैः लिलेख विददार अथ निर्दयं ममर्द पीड़यामास, तदीयकुचकुम्भयुगलभावनयेति भावः॥ १०२॥

विलोकिते इति। रागितरेण अत्यन्तानुरक्तेन केनचित् सस्मितं विलोकिते सखी एव जनः तस्मिन् निजसख्याम्, अथ विलोकनानन्तरं क्रिया वैमुख्यम् इते पराङ्मुखतां गते सति, एतेन तस्याः अपि तस्मिन् तथा रागः सूचितः, तदालिः तत्-सखी कुतः अपि आनीय शार्करीं शर्करामयीं, विकारार्था-ण्प्रत्ययः। पुत्रिकां कृत्रिमपुत्रीं पाञ्चालिकाम् इत्यर्थः, पाञ्चालिका पुत्रिका स्यादित्यमरः। पुत्रा च कृत्रिमा पुत्री इति कप्रत्यये कात्पूर्वस्येकारः। करे विहस्य ददौ एवम् एषा सखीकरगता इति सूचयामासेत्यर्थः॥ १०३॥

निरीक्ष्येति। यथा यथेष्टं बहुभुक्तवत्तया कृतभोजनतया अशक्नुवद्भिः निःशेषं भोक्तुम् अशक्नुवद्भिः तैः भक्तृभिः व्यञ्ज-नपुञ्जराजयः भोज्यराशीनां श्रेणयः उज्झिताः त्यक्ताः तथा

पृथक्प्रकारेङ्गितशंसिताशयः
युवा ययोदासि तयापि तापितः ।
ततो निराशः परिभावय पराम्
अये ! तयाऽतोषि सरोषयैव सः ॥ १०५ ॥

पयःस्मिता मण्डपमण्डलाम्बरा
वटाननेन्दुः पृथुलड्डुकस्तनी ।
पदं रुचेर्भोज्यभुजां भुजिक्रिया
प्रिया बभूवोज्ज्वलकूरहारिणी ॥ १०६ ॥

---

बहुलपरिवेषणादिति भावः । अतोऽत्रे स्तते, रम्याः रमणीयाः परिवेषिकाः योषितः निरीक्ष्य अवासतृप्तिभिः तावतैव तृप्तैः एभिः भोक्तृभिः न भुक्तम् एव ध्रुवम् इत्युत्प्रेक्षा । अन्यथा कथमेते भोज्यराशयः पात्रेषु तथैव दृश्यन्ते इति भावः ॥१०४॥

पृथगिति । यया पृथक्प्रकारेङ्गितसंशिताशयः नानाविधचेष्टाप्रकाशितहृदयः युवा उदासि, तया रोषात् अनादरपरया अपि तापितः सन्तापितः, अत्युपसर्गो धात्वर्थाननुवर्त्तते । औदासीन्यात् निराशः अस्पृहः पराम् अन्यां परिभावय विभावय सः युवा सरोषया अन्यावलोकनरुष्टया पूर्वया एव अतोपि तोषितः, तोषयतेः कर्मणि लुङ् । अये इति सम्भ्रमे । अन्यावलोकात् हि रोषदर्शनात् पूर्वमभितापितोऽयं न तु विरक्तेति ज्ञात्वा सन्तोषात् सम्भ्रान्तः सन्नर्थः । अये क्रोधे विषादे च स्मरणे सम्भ्रमेऽपि च इति विश्वः । १०५ ॥

पय इति । पयः पायः क्षीरं वा स्मितं यस्याः सा, मण्डपमण्डलं मण्डपसमूहः एव अम्बरं यस्याः सा, वटः वटकः शुभ्रवर्त्तुलपिष्टकविशेषकः सः एव आननेन्दुः यस्याः सा, पृथू लड्डुकौ इव स्तनौ यस्याः सा, रुचेः पदम् अभिलाषा-

चिरं युवाकूतशतैः कृतार्थनः
चिरं सरोषेङ्गितया च निर्धुतः ।
सृजन् करचालनलीलयाञ्जलिं
न्यषेचि किञ्चिद्विधुताम्बुधारया ॥ १०७ ॥

न षड्विधः षिङ्गजनस्य भोजने
तथा यथा यौवतविभ्रमोद्भवः ।
अपारशृङ्गारमयः समुन्मिषन्
भृशं रसस्तोषमधत्त सप्तमः ॥१०८॥

---

स्वदं लावण्यास्पदञ्च, उज्ज्वलैः स्वच्छैः कूरैः भक्तैः हारिणी हारवती मनोहरा च, अन्धः कूरं भक्तमिति हलायुधः । भुजिक्रिया भोजनक्रिया, भुज इति धातुनिर्देशेनार्थलक्षणा । भोज्यभुजां भोक्तॄणां भोगिनाञ्च प्रीणातीति प्रिया इष्टवल्लभा च बभूव । रूपकालङ्कारः ॥ १०६ ॥

चिरमिति । चिरम् आकूतशतैः चेष्टाशतैः कृतार्थनः कृतप्रार्थनः युवा चिरं सरोषेङ्गितया रोषचेष्टावत्या निर्धुतश्च अवधुतोऽपि सन् करचालनलीला तद्व्यापारः तया तद्व्याजेन इत्यर्थः, अञ्जलिं सृजन् अञ्जलिबन्धेन प्रार्थयमानः इत्यर्थः, किञ्चिद्विधुतया निर्धुतया अम्बुधारया धाराविधूननव्याजेन इत्यर्थः न्यषेचि निषिक्तः कोपात् इति भावः ॥ १०७ ॥

न षड्विध इति । षिङ्गजनस्य विटजनस्य, षिङ्गः पल्लविको विट इत्यमरः । भोजने भोजनकाले षड्विधः मधुरादिभेदेन षट्प्रकारः तथा भृशं तोषं नाधत्त न अपुष्णात्, पोषणार्थे लुङि तङ् । यथा युवतीनां समूहः यौवतं, भिक्षादिभ्योऽण् । तत्र युवतीति सामर्थ्याद्भस्याटे तद्धित इति टिलोपः । विभ्रमैः

परस्य न स्प्रष्टुमिमामधिक्रिया
प्रिया शिशुः प्रांशुरसाविति ब्रुवन्।
रथे स भैमीं स्वयमध्यरूरुहत्
न तत् किलाश्लिक्षदिमां जनेक्षितः॥११३॥

इति स्मरः शीघ्रमतिश्चकार तं
वधूं च रोमाञ्चभरेण कर्कशौ।
स्खलिष्यति स्निग्धतनुः प्रियादियं
म्रदीयसी पीडनभीरुदोर्युगात्॥ ११४ ॥

---

प्रग्रहाः यस्य, किरणप्रग्रहौ रश्माविव्यमरः। तेन रथेन निषधान् प्रतस्थे॥ ११२ ॥

परस्येति। परस्य अन्यतरस्य इमां भैमीं स्प्रष्टुम् अधिक्रिया अधिकारः न, प्रिया भैमी शिशुः, असौ रथः प्रांशुः उन्नतः, इति ब्रुवन् स्वयुक्तियुक्तं वदन् तत् किल तत्कारणादेव इमां भैमीं सः नलः जनेक्षितः सन् स्वयमेव रथे अध्यरूरुहत् अधिरोहयामास, स्पर्शलोभादिति भावः। रुहेर्णौ चङ्। नाश्लिक्षत् अनौचित्यादिति भावः। श्लिष आलिङ्गन इति श्लिषेर्लुङि च्लेः क्सादेशः॥ ११३॥

इतीति। स्निग्धतनुः मसृणाङ्गी म्रदीयसी अतिसुकुमाराङ्गी इयं भैमी पीड़नात् भीरु दोर्युगं यस्य तस्मात् म्रदीयसः पीड़नासहत्वादिति भावः। प्रियात् स्खलिष्यती ति मृदुत्वात् श्लथालिङ्गने स्निग्धत्वात् प्रियभुजान्तरात् स्रंसं इवेति शीघ्रमतिः प्रत्युत्पन्नमतिः स्मरः तं नलं वधूं भैमीं च रोमाञ्चभरेण पुलकोत्करेण कर्कशौ अस्निग्धगात्रौ चकार, अस्य परस्पराङ्गसङ्गहेतुके रोमाञ्चे आलिङ्गनानीव स्खलितप्रतिबन्धार्थत्वमुत्प्रेक्षते॥ ११४ ॥

अथ किमाजन्मनिजाङ्कवर्द्धितां
प्रहित्य पुत्रीं पितरौ विषेदतु:।
विसृज्य तौ तं दुहितु: पतिं यथा
विनीततालक्षगुणोभवद्गुणम् ॥ ११५ ॥

निजादनुव्रज्य स मण्डलावधे:
नलं निवृत्तौ चटुलापतां गत:।
तड़ागकल्लोल इवानिलं तटात्
धृतानतिर्व्यावद्दते विदर्भराट् ॥ ११६ ॥

---

अथेति। अथ पितरौ मातापितरौ पिता मात्रेति विकल्पादेकशेष:। आजन्म जन्मप्रभृति, अभिविधावव्ययीभाव:। निजाङ्के स्वोत्सङ्गे वर्द्धितां पुत्रीं दुहितरं, गौरादित्वादीकार:। प्रहित्य, हिनोते: क्त्वो ल्यप्। तथा विषेदतु: विषस्मौ किं नेत्यर्थ:, सदेर्लिट्। अत एकहलित्यादिना एत्वाभ्यासलोपौ। यथा तौ भैमीपितरौ विनीततया विनयसम्पन्नतया लक्षगुणीभवन्त: लक्षगुणा: सन्तोषगुणा: यस्य तथोक्तं दुहितु: पतिं जामातरं च। समासादविभाषा स्वसृपत्योरिति विकल्पादलुक्। विसृज्य विषेदतु: ॥ ११५ ॥

निजादिति। स: विदर्भराट् भीम: नलम् अनुव्रज्य निवृत्तौ निवृत्तिसमये चटु लपतीति चटुलाप: तस्य भाव: तत्त्वां गत: चाटुवाद: सन् इत्यर्थ: अन्यत्र चटुला: आप: यस्य तस्य भाव: तत्तां गत: चटुलाप: सन् इत्यर्थ:, ऋक्पूरित्यादिना समासान्त:। तड़ागस्य कल्लोल: महोर्मि:, अथोर्मिषु महत्सु लोलकल्लोलावित्यमर:। अनिलम् अनुव्रज्य तटात् धृता स्वीकृता आनति: नलनमस्कार: अन्यत्र

पितात्मनः पुण्यमनापदः क्षमा
धनं मनस्तुष्टिरथाखिलं नलः।
अतः परं पुत्रि! न कोऽपि तेऽहमि-
त्युदश्रुरेष व्यसृजन्निजौरसीम्॥ ११७॥
प्रियः प्रियैकाचरणाच्चिरेण तां
पितुः स्मरन्तीमचिकित्सदाधिषु।
शशाम सोऽम्बाविरहौर्वपावकः
न तु प्रियप्रेमहाम्बुधावपि॥ ११८॥

---

प्रहृता यस्य सः इव निजात् मण्डलावधेः राष्ट्रसीमान्तात् व्यावृत्ते निवृत्तः॥ ११६॥

पितेति। हे पुत्रि! आत्मनः तव पिता जनकः पुण्यं सुकृतम् अनापदः क्षमाः सर्वनिवृत्तिस्थानं धनं वित्तं मनस्तुष्टिः मनोवृत्तिः अथ किं बहुना अखिलम् उक्तम् अन्यच्च सर्वं नलः नलः एव, अतः अस्मात् नलात् परम् अन्यत् नास्ति अहं तु ते तव वरोऽपि यः कश्चिदेवेत्यर्थः इति इत्थम् उक्त्वेति शेषः एषः भीमः उदश्रुः उद्वाष्पः सन् निजाम् औरसीम् उरसा निर्मितां पुत्रीं, उरसोऽन्यतरस्यामित्यण्प्रत्ययः, संज्ञाधिकारादभिधेयनियम इति काशिका। व्यसृजत् विससर्ज॥११७॥

प्रिय इति। प्रियैकाचरणात् केवलेष्टचरणात् तथा उपलालनादिति यावत् पितुः स्मरन्तीं पितरं स्मरन्तीम् इत्यर्थः। अधीगर्थदयेशां कर्मणीति कर्मणि षष्ठी। तां दमयन्तीं प्रियः नलः चिरेण आधिषु मनोव्यथासु विषये अचिकित्सत् उपशमयामास प्रियरागातिरेकेण कथञ्चित् पितृविरहम् असहत इत्यर्थः। कितनिवासे इति धातोर्व्याधिप्रतिकारे गुप्तिज्किद्भ्यः सनिति सन्। सः अनुभवसिद्धः अम्बाविरहः एव और्वपा-

असौ महीभृद्बहुधा तु मण्डितः
तया निजोपत्यकयेव काममपि।
भुवा कुरङ्गेक्षणदन्तिचारयोः
बभार शोभां कृतपादसेवया॥ ११९॥
तदेकतानस्य नृपस्य रक्षितुं
चिरोढया भावमिवात्मनि श्रिया।
विहाय सापत्न्यमरञ्जि भीमजा
समग्रतद्वाञ्छितपूर्त्तिवृत्तिभिः॥ १२०॥

---

वक्त्रः बड़वाग्निः प्रियप्रेममहाम्बुधौ प्रियानुरागसमुद्रे अपि न शशाम समुद्रेणाप्योर्वस्य दुर्वारत्वादिति भावः। कन्यानां पितरौ मातरि वात्सल्यात् विरहो दुःसहः इति भावः॥११८॥

असाविति। बहुधा तु बहुधा एव अन्यत्र बहुधातुभिः गैरिकादिभिः मण्डितः अलङ्कृतः महीभृत् राजा पर्वतश्च निजया उपत्यकया इव कुरङ्गस्येव कुरङ्गाणाम् ईक्षणं दन्तिनः इव दन्तिनां चारः गतिः सः चारश्च तयोः भुवा स्थानेन कृता पादसेवा प्रत्यन्तपर्वतसन्निकर्षश्च यया तया भैम्या काम् अपि अनिर्वाच्यां शोभां कान्तिं बभार॥ ११९॥

तदिति। चिराय ऊढ़या धृतया परिणतया च श्रिया राज्यलक्ष्म्या तदेकतानस्य दमयन्त्येकवृत्तेः, एकतानोऽनन्यवृत्तिरित्यमरः। नृपस्य नलस्य भावं चित्तवृत्तिम् आत्मनि विषये रक्षितुं स्थिरीकर्त्तुम् इव इत्युत्प्रेक्षा। सापत्न्यं सपत्नीवैरं विहाय भीमजा भैमी समग्राणां तद्वाञ्छितानां पूर्त्तिवृत्तिभिः पूरणव्यापारैः अरञ्जि रञ्जिता परचित्तानुरञ्जनाय सपत्नीः अपि उपासते साध्व्यः इति भावः॥ १२०॥

मसारमालावलितोरणां पुरीं
निजाद् वियोगादिव लम्बितालकाम्।
ददर्श पश्यामिव नैषधः पथाम्
प्रथाश्रितोदग्रीविकमुन्नतैर्गृहैः ॥१२१॥
पुरीं निरीक्ष्यान्यमना मनागिति
प्रियाय भैम्या निभृतं विसर्जितः।
ययौ कटाक्षः सहसा निवर्त्तिना
तदीक्षणेनार्द्धपथे समागमम् ॥ १२२ ॥

---

मसारेति। अथ नैषधः नलः, मसाराः निराहाराः वलयः इन्द्रनीलमालिकाः एव तोरणानि यस्याः ताम् अतएव निजात् वियोगात् नलविरहात् लम्बितालकां संस्काराभावात् विस्रस्तकुन्तलाम् इव स्थिताम् इत्युत्प्रेक्षा। उन्नतैः गृहैः प्रासादैः आश्रिता उदग्रीविका उदग्रीवीभवनं यस्मिन् कर्मणि तत् यथा, उदग्रीवयतेस्तत्करोतीति ण्यन्ताद्भावार्थनिर्देशे ण्वुल् कात्पूर्वस्येतीकारः। पथां नलागमनमार्गाणां, कृद्योगात्कर्मणि षष्ठी। पश्यतीति पश्यां दृष्टिम् इव स्थिताम् इत्युत्प्रेक्षा। पाघ्रादिना शप्रत्यये पुनरन्येन पाघ्रादिना दृशेः पश्यादेशः। पुरीं पुरं ददर्श, प्रोषितभर्तृकाः लम्बालकाः पतिमार्गान् प्रतीक्षन्ते इति भावः ॥ १२१ ॥

पुरीमिति। मनाक् ईषत् पुरीं निरीक्ष्य अन्यमनाः अन्यासक्तचित्तः इति हेतोः प्रियाय भैम्या निभृतं गूढं विसर्जितः तद्दृष्टिपरिणामाय प्रहितः कटाक्षः सहसा निवर्त्तिना भैमीभयात् निवृत्तेन तदीक्षणेन नलदृष्ट्या सह अर्द्धपथे समागमं ययौ, उभावपि अन्योन्याभिप्रायं जज्ञतुः इत्यर्थः।

अथ नगरहतैरमात्यरत्नैः
पथि समियाय स जाययाऽभिरामः ।
मधुरिव कुसुमश्रिया सनाथः
क्रममिलितैरलिभिः कुतूहलोत्कैः ॥ १२३ ॥

कियदपि कथयन् स्ववृत्तजातं
श्रवणकुतूहलचञ्चलेषु तेषु ।
कियदपि निजदेशवृत्तमेभ्यः
श्रवणपथं स नयन् पुरीं विवेश ॥ १२४ ॥

अथ पथि पथि लाजैरात्मनो बाहुवल्ली-
मुकुलकुलसकुल्यैः पूजयन्त्यो जयेति ।

---

ईषदपि भर्त्तुरन्यासङ्गं न सहते सा सोऽपि तथैव तामनुवर्त्तते इति भावः ॥ १२२ ॥

अथेति । अथ जायया अभिरामः रमणीयः सः नलः कुसुमश्रिया सनाथः पुष्पसम्पदा युक्तः मधुः वसन्तः क्रमेण आनन्तर्य्येण मिलितैः कुतूहलोत्कैः विनोदोत्सुकैः अलिभिः इव नगरे धृतैः संरक्षिताय स्थितैः, ध्रियतैः कर्त्तरि क्तः । अमात्यरत्नैः मन्त्रिवर्य्यैः सह पथि नगरपथे मार्गे समियाय सङ्गतः ॥ १२३ ॥

कियदिति । सः नलः श्रवणकुतूहलेन चञ्चलेषु व्यग्रेषु तेषु अमात्येषु विषये स्ववृत्तजातं स्वचरितस्वरूपं कियत् अपि स्तोकं कथयन्, तथा निजदेशवृत्तं स्वराष्ट्रवृत्तान्तम् एभ्यः सकाशात् कियत् अपि किञ्चित् श्रवणपथं नयन् शृण्वन् पुरीं विवेश ॥ १२४ ॥

अथेति । अथ पथि पथि अमृतकलस्य या मृणाली

क्षितिपतिमुपनेमुस्तं दधाना जनानाम्
[illegible] सौकुमार्यं कुमार्य्यः ॥१२५॥

अभिनवदमयन्तीकान्तिजालावलोक-
प्रवणपुरपुरन्ध्रीवक्त्रचन्द्रान्वयेन ।
निखिलनगरसौधाट्टावलीचन्द्रशालाः
क्षणमिव निजसंज्ञां सान्वयामन्वभूवन् ॥१२६॥

निषधनृपमुखेन्दुश्रीसुधां सौधवाता-
यनविवरगरश्मिश्रेणिनालोपनीताम् ।
पपुरतुलपिपासापांशुलत्वोपरागा-
ण्यखिलपुरपुरन्ध्रीनेत्रनीलोत्पलानि ॥१२७॥

---

त्रिमतन्तुः तद्वत् सौकुमार्य्यं दधानाः कोमलाङ्ग्यः कुमार्य्यः नार्य्यः आत्मनः बाहुवल्लीनां मुकुलकुलसकुल्यैः मुकुलोत्कर-तुल्यैः लाजैः जयेति जयशब्दपूर्वं पूजयन्त्यः जनानां मध्ये तं क्षितिपतिं नलम् उपनेमुः उपतस्थिरे इत्यर्थः ॥ १२५ ॥

अभिनवेति । निखिलासु नगरे सौधानाम् अट्टावलीषु अट्टा-लकपङ्क्तिषु चन्द्रशालाः, चन्द्रशाला शिरोगृहमिति हलायुधः । अभिनवस्य दमयन्त्याः कान्तिजालस्य लावण्यराशेः अवलोक-प्रवणानां दर्शनतत्पराणां पुरपुरन्ध्रीणां पौराङ्गनानां वक्त्र-चन्द्रैः अन्वयेन योगेन क्षणं निजां संज्ञां चन्द्रशालाभिधानं सान्वयां चन्द्राणां शाला इत्येवम् उचिताम् अन्वभूवन् इव ॥ १२६ ॥

निषधेति । अतुलया पिपासया पांशुलत्वं तत् एव उप-रागः उपप्लवः येषां तानि, अखिलपुरपुरन्ध्रीणां पौराङ्गनानां नेत्राणि एव नीलोत्पलानि सौधवातायनविवरैः गच्छ-न्तीति तद्गाः ताभिः रश्मीनां नयनरश्मीनां श्रेणिभिः एव

अवनिपतिरयोर्द्ध्वैणपाणिप्रवाल-
स्खलितसुरभिलाजव्याजभाजः प्रतीच्छन् ।
उपरि कुसुमवृष्टीरेष वैमानिकानाम्
अभिनवकृतभैमीसौधभूमिं विवेश ॥ १२८ ॥

इति परिणयमित्थं यानमेकत्र याने
दरचकितकटाक्षप्रेक्षितं चानयोस्तत् ।
दिवि दिविषदधीशाः कौतुकेनावलोक्य
प्रणिदधुरिव गन्तुं नाकमानन्दसान्द्राः ॥१२९॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।

---

नालैः उपनीताम् आकृष्टाम् अपि निषधनृपस्य मुखेन्दुश्रीसुधां मुखचन्द्रशोभामृतं पपुः सायहम् अद्राक्षुः इत्यर्थः ॥ १२७ ॥

अवनीति । एषः अवनीपतिः ऊर्द्ध्वेषु उपरिगृहेषु ये स्त्रणाः स्त्रीसम्बन्धिनः, स्त्रीपुंसाभ्यां नञ्स्नञावित्यादिना नञ्प्रत्ययः । तेभ्यः पाणिप्रवालेभ्यः स्खलिताः ये सुरभयः सुगन्धयः लाजाः तद्व्याजं भजन्ते तद्भाजः वैमानिकानां विमानैः चरतां देवानां, चरतीति ठक् । उपरि उपरिष्टात् कुसुमवृष्टीः प्रतीच्छन् स्वीकुर्वन् अभिनवकृतां प्रत्यग्रनिर्मितां भैम्याः सौधभूमिं विवेश ॥ १२८ ॥

इतीति । अनयोः दमयन्तीनलयोः इति एवंविधं परिणयं विवाहम् इत्थम् एकत्र रथे यानं यातां तत् हि पूर्वोक्तं दरचकितम् ईषद्भयस्वभावं कटाक्षप्रेक्षितं कटाक्षवीक्षणं च दिवि आकाशे दिविषदाम् अधीशाः देवाः कौतुकेन अवलोक्य अथ आनन्दसान्द्राः आनन्दपूर्णाः सन्तः नाकं स्वर्गलोकं गन्तुं प्रणिदधुः चिन्तयामासुः ॥ १२९ ॥

काश्मीरैर्महिते चतुर्दशतयीं विद्यां विदद्भिर्महा-
काव्ये तद्भुवि नैषधीयचरिते सर्गोऽगमत् षोड़शः ॥१३०॥

---

## सप्तदशः सर्गः ।

—॰◡॰—

अथारभ्य वृथाप्रायं धरित्रीधावनश्रमम् ।
सुराः सरस्वदुल्लोललीला जग्मुर्यथागतम् ॥१॥
भैमीं पत्ये भुवस्तस्मै चिरं चित्ते धृतामपि ।
विद्यामिव विनीताय न विषेदुः प्रदाय ते ॥२॥

---

श्रीहर्षमिति । चतुर्दशतयीं चतुर्दशावयवां चतुर्दशविधाम् इत्यर्थः, सङ्ख्याया अवयवे तयप्, टिड्ढाणञ् द्वयसच् दघ्नञ् मात्रच् तयप् ठक्ठञ् क्वरप् इत्यादिना ङीप् । विद्यां विदद्भिः विपश्चिद्भिः चतुर्दशविद्यास्थानानि जानद्भिः काश्मीरैः काश्मीरदेशीयैः विद्वद्भिः महिते पूजिते तद्भुवि श्रीहर्षोत्पन्ने तद्विरचिते इत्यर्थः, षोड़शानां पूरणः षोड़शः, पूरणे डट् । गतमन्यत् ॥ १३० ॥

---

अथेति । अथ नागलोकजिगमिषानन्तरं सुराः इन्द्रादयः वृथाप्रायम् इति मृदूक्तिः, वृथैव इत्यर्थः धरित्रीधावनश्रमं भूभ्रमणायासम् आरभ्य कृत्वा सरस्वदुल्लोलानां समुद्रमहोर्मीणां लीला इव लीला येषां ते सन्तः यथागतं जग्मुः; यथा वृथैव सागरतरङ्गाः तटं धावित्वा यथातथं गच्छन्तीति तद्वत् गताः इत्यर्थः ॥ १ ॥

भैमीमिति । ते देवाः चिरं चित्ते धृताम् आकाङ्क्षिताम्

कान्तिमन्ति विमानानि भेजिरे भासुराः सुराः ।
स्फटिकाद्रेस्तटानीव प्रतिबिम्बा विवस्वतः ॥३॥
जवाज्जातेन वातेन बलाक्कष्टबलाहकैः ।
श्वसनात् स्वस्य शीघ्रत्वं रथैरेषामिवाकथि ॥४॥
क्रमाद् दवीयसां तेषां तदानीं समदृश्यत ।
स्पष्टमष्टगुणैश्वर्य्यात् पर्य्यवस्यन्निवाणिमा ॥ ५ ॥

---

अपि तां भैमीं भुवः पत्ये नलाय विनीताय प्रश्रिताय विद्याम् इव प्रदाय न विषेदुः च न हि महान्तो दत्त्वानुतापिनश्च न तेषामदेयमस्ति इति भावः ॥ २ ॥

कान्तिमन्तीति । भासुराः भास्वराः इन्द्रादयः कान्तिमन्ति दीप्तानि विमानानि व्योमयानानि विवस्वतः अर्कस्य प्रतिबिम्बाः स्फटिकाद्रेः कैलासस्य तटानि इव भेजिरे, एतेन विमानानां तदधिष्ठातॄणां च अतितेजस्वित्वमुक्तम् ॥३॥

जवादिति । जवात् निजवेगात् जातेन वातेन बलात् आक्कष्टाः बलाहकाः मेघाः यैः तेषाम् इन्द्रादीनां रथैः विमानैः स्वस्य आत्मनः श्वसनात् शीघ्रत्वं वायुवेगत्वम् अकथि इव इत्युत्प्रेक्षा, अन्यथा कथं तथा मेघाकर्षणमिति भावः । कथेश्चौरादिकात्कर्मणि लुङ्, मित्वात् ह्रस्वत्वम् ॥ ४ ॥

क्रमादिति । क्रमात् दवीयसां दविष्ठानां सतां, दूरशब्दादियसुनि स्थूलदूरेत्यादिना यणादिव रलोपः पूर्वगुणश्च । तेषाम् इन्द्रादीनां तदानीं दूरिभावकाले अणिमा अणुत्वम् अष्टगुणम् अणिमाद्यष्टमगुणं यत् ऐश्वर्य्यं सामार्थ्यं तस्मात् सकाशात् पर्य्यवस्यत् स्वयमेव परिशिष्यमाणम् इव स्पष्टं समदृश्यत संदृष्टं दूरे अणुत्वेन अवभासादियमुत्प्रेक्षा ॥ ५ ॥

ततान विद्युता तेषां रथे पीतपताकताम्।
लब्धकेतुशिखोल्लेखा लेखा जलमुचः क्वचित्॥ ६॥
पुनः पुनर्मिलन्तीषु पथि पाथोदपङ्क्तिषु।
नाकनाथरथालम्बि बभूवाभरणं धनुः॥ ७॥
जले जलदजालानां वज्रिवज्रानुबिम्बनैः।
जाने तत्कालजैस्तेषां जाताऽशनिसनाथता॥ ८॥
स्फुटं सावर्णिवंश्यानां कुलच्छत्रं महीभुजाम्।
चक्रे दण्डभृतश्चुम्बन् दण्डश्चण्डरुचिं क्वचित्॥ ९॥

ततानेति। क्वचित् प्रदेशे जलमुचः मेघस्य लेखा, लब्धैः केतुशिखाभिः ध्वजाग्रैः उल्लेखा विदारणं यस्याः सा सती विद्युता करणेन तेषाम् इन्द्रादीनां रथे पीताः पीतवर्णाः पताकाः येषां तेषां भावः तत्ता तां ततान ध्वजदण्डाग्रोल्लेखने-नोत्थाः तड़ितो रथेषु पीतपताकाः इव रेजुः इत्यर्थः॥ ६॥

पुनः पुनरिति। नाकनाथरथालम्बि इन्द्ररथस्थं धनुः पथि पुनः पुनः मिलन्तीषु संसृज्यमानासु पाथोदानां मेघानां पङ्क्तिषु आभरणं बभूव यद्दत् मेघवृन्दं सङ्गच्छते तस्य तस्य आभरणं बभूव इत्यर्थः। पूर्वं कृत्रिमेन्द्रधनुर्योगेन अद्य मुखे-न्द्रधनुर्योगात् लब्धः इति भावः, अथवा तादृशासम्बन्धे सम्ब-न्धोक्तेरतिशयोक्तिरलङ्कारः॥ ७॥

जले इति। जलदजालानां मेघवृन्दानां जले तत्कालजैः तत्कालजातैः वज्रिवज्रस्य इन्द्रकुलोशस्य अनुबिम्बनैः प्रति-बिम्बैः तेषां जलदजालानाम् अशनिसनाथता वज्रसाहित्यं रोहितयोगित्वम् इति यावत्, इन्द्रायुधं शक्रधनुस्तदेव ऋजु रोहितं इत्यमरः। जाता जाने इत्युत्प्रेक्षायाम्॥ ८॥

स्फुटमिति। क्वचित् प्रदेशे दण्डभृतः यमस्य दण्डः गदा

नलभीमभुवोः प्रेमणि विस्मितायाः बभौ दिवः ।
पाशिपाशः शिरःकम्पस्रस्तभूषश्रवःश्रियम् ॥ १० ॥
पवनस्कन्धमारुह्य नृत्यत्तरकरः शिखी ।
अनेन प्रापि भैमीति भ्रमश्चक्रे नभःसदाम् ॥ ११ ॥
तत्कर्णा भारती दूना विरहाद् भीमजागिराम् ।
अध्वनि ध्वनिभिर्वैणैरनुकल्पैर्व्यनोदयत् ॥ १२ ॥

---

चण्डरुचिं सूर्यं चुम्बन् सूर्य्यमण्डलं स्पृशन् इत्यर्थः, सावर्णिः सूर्य्यमित्रः तद्वंश्यानां महीभुजां कुलस्य छत्रं चक्रे दण्डसंयोगात् अर्कमण्डलं तद्वंश्यराजकुलस्य उद्धृतं छत्रमिव बभौ इत्यर्थः । स्फुटमित्युत्प्रेक्षायाम् ॥ ८ ॥

नलेति । पाशिनः वरुणस्य पाशः पाशवलयं नलभीमभुवोः नलभैम्योः प्रेमणि अन्योन्यानुरागे विषये विस्मितायाः विस्मयाविष्टायाः दिवः नभसः शिरःकम्पेन स्रस्तभूषस्य गलितावतंसस्य श्रवसः श्रोत्रस्य श्रियं शोभां दधौ । अत्र श्रियमिव श्रियमिति सादृश्याक्षेपान्निदर्शनाभेदः ॥ १० ॥

पवनेति । पवनस्कन्धं वायुस्कन्धाख्यं नभोदेशम् आरुह्य अतएव नृत्यत्तराः अतिशयेन नृत्यन्तः कराः अंशवः हस्ताश्च यस्य सः शिखी अग्निः नभःसदां नभश्चराणाम् अनेन अग्निना नूनं भैमी प्रापि प्राप्ता, अन्यथा कथमेतज्जृम्भणमिति भ्रमं चक्रे भ्रान्तिं जनयामास इत्यर्थः ॥ ११ ॥

तदिति । भारती सरस्वती भीमजागिरां विरहात् अभावात् दूना परितप्ता तेषां देवानाम् अनुकल्पैः कुशकाशवत् भैमीगिरां प्रतिनिधिभिः, मुख्यः स्यात्प्रथमः कल्पोऽनुकल्पस्तु ततोऽधमः इत्यमरः । वैणैः वीणासम्बन्धिभिः, तस्येदमित्यण् । ध्वनिभिः शब्दैः व्यनोदयत् विनोदितवती ॥ १२ ॥

अथायान्तमवैचन्त ते जनौघमसित्विषम्।
तेषां प्रत्युद्गमप्रीत्या मिलद्व्योमेव मूर्त्तिमत् ॥ १३ ॥
अद्राक्षुराजिहानं ते स्मरमग्रेसरं सुराः।
अक्षाविनयशिक्षार्थं कलिनेव पुरस्कृतम् ॥ १४ ॥
अगम्यार्थं तृणप्राणाः पृष्ठस्थीकृतभीह्रियः।
शम्भलीभुक्तसर्वस्वा जना यत्पारिपार्श्वकाः ॥ १५ ॥

---

अथेति। अथ ते देवाः आयान्तम् आगच्छन्तम्, असेरिव त्विट् यस्य तम् असित्विषम् असिशोभं जनौघं जनसमाजं तेषां देवानां प्रत्युद्गमप्रीत्या प्रत्युद्गमनकौतुकात् मिलत् आगच्छत् मूर्त्तिमत् विग्रहवत् व्योम आकाशमिव इत्युत्प्रेक्षा, अवैचन्त अपश्यन् ॥ १३ ॥

अद्राक्षुरिति। ते सुराः इन्द्रादयः आजिहानम् आगच्छन्तम्, ओहाङ्गताविति धातोर्लटः शानजादेशः। अग्रेसरं सङ्घाग्रवर्त्तिनम् अतएव अक्षाणाम् इन्द्रियाणां च पाचकानां च, अक्षो रथस्यावयवे पाचकेऽप्यक्षमिन्द्रियमिति विश्वः। अविनयस्य दुर्व्यापारस्य शिक्षार्थम् अभ्यासार्थं कलिना कलिपुरुषेण पुरस्कृतं पूजितम् अग्रतः कृतम् इव स्थितं स्मरं कामम् अद्राक्षुः, दृशेर्लुङि इटो वेति विकल्पादङभावपक्षे सिचि वृद्धिः ॥१४॥

अगम्येति। अगम्यार्थम् अगम्यागमनार्थम् इत्यर्थः तृणप्राणाः तृणप्रायप्राणाः प्राणान् अविगणय्य अगम्यागन्तारः इत्यर्थः, पृष्ठस्थीकृते पृष्ठतः कृते भीह्रियौ यैः ते लज्जाभयवर्जिताः इत्यर्थः, शम्भलीभिः धात्रीभिः भुक्तं सर्वस्वं सर्वधनं येषां ते, कुट्टनी शम्भली समेत्यमरः। एवंविधाः जनाः यस्य स्मरस्य पारिपार्श्वकाः परिपार्श्ववर्त्तिनः परिजनाः इत्यर्थः। परिमुखञ्चेति चकारात् ठक् ॥ १५ ॥

बिभर्त्ति लोकजिद्भावं बुद्धस्य स्पर्द्धयेव यः।
यस्येशतुलयेवात्र कर्त्तृत्वमशरीरिणः ॥ १६ ॥
ईश्वरस्य जगत् कृत्स्नं सृष्टिमाकलयन्निमाम्।
अस्ति योऽस्त्रीकृतस्त्रीकस्तस्य वैरमनुस्मरन् ॥ १७ ॥
चक्रे शक्रादिनेत्राणां स्मरः पीतनलश्रियाम्।
अपि दैवतवैद्याभ्यामचिकित्स्यमरोचकम् ॥ १८ ॥

---

बिभर्त्तीति। यः स्मरः बुद्धस्य, सम्बन्धसामान्ये षष्ठी। बुद्धेन इत्यर्थः, स्पर्द्धया इव लोकजिद्भावं लोकजितत्वं बिभर्त्ति, यस्य स्मरस्य ईशतुलया ईश्वरसाम्यापेक्षया इत्यर्थः, शरीरं न भवतीति अशरीरि तस्य अनङ्गस्य सतः अत्र लोके कर्त्तृत्वम् एकत्र जेतृत्वम् अन्यत्र स्रष्टृत्वम् उपादानादि गोचरज्ञानादि मत्वा देवेश्वरस्य कर्त्तृत्वं, शरीरमतन्त्रमिति तार्किकाः। पराभिभूताः तन्मत्सराः तत्साम्याय तद्वत् आचरन्तीति भावः ॥१६॥

ईश्वरस्येति। स्मरः कृत्स्नं जगत् ईदृशीं स्त्रीपुंसात्मिकाम् इत्यर्थः, ईश्वरस्य सृष्टिम् आकलयन् अधिगच्छन् तस्य ईश्वरस्य वैरम् अनुस्मरन् स्त्रियः न भवन्तीति अस्त्रियः अस्त्राणि कृताः अस्त्रीकृताः, अभूततद्भावे च्विः। अस्त्रीकृताः स्त्रियः येन सः अस्त्रीकृतस्त्रीकः सन्, नद्यृतः कप्। अस्ति वर्त्तते ईश्वरवैरात् स्त्रीणामीश्वरकृतस्त्रीत्वमस्त्रं तं च अकरोत् इत्यर्थः ॥ १७ ॥

चक्रे इति। स्मरः पीतनलश्रियां साक्षात्कृतनलसौन्दर्य्याणां शक्रादिनेत्राणाम् इन्द्रादिचक्षुषां दैवतवैद्याभ्याम् अचिकित्स्यं चिकित्सितुम् अशक्यं न रोचयते इति अरोचकं रोगविशेषं चक्रे नलरूपदर्शिभ्यः तेभ्यः स्मररूपं न अरोचत इत्यर्थः। स्मरादपि रमणीयत्वात् तस्येति भावः ॥ १८ ॥

यत्तत् चिपन्तमुत्कम्प्यमुत्थायुकमथाह्वयम् ।
बुबुधुर्विबुधाः क्रोधमाक्रोशक्रोशघोषणम् ॥ १८ ॥
यमुपासन्त दन्तौष्ठक्षतासृक्क्लिन्नचक्षुषः ।
भ्रुकुटीफणिनीनादनिभनिःश्वासफूत्कृताः ॥ २० ॥
दुर्गं कामाशुगेनापि दुर्लङ्घ्यमवलम्ब्य यः ।
दुर्वासोहृदयं लोकान् सेन्द्रानपि दिधक्षति ॥ २१ ॥
वैराग्यं यः करोत्युच्चैरञ्जनं जनयन्नपि ।

---

यदिति । अथ स्मरदर्शनानन्तरं विबुधाः देवाः यत्तत् यत्किञ्चित् वस्तु चिपन्तं प्रेरयन्तम् उत्कम्प्यं कम्पितं आक्रोशेन क्रोशघोषणा उच्चैर्घोषः यस्य तं दूरात् आह्वानघोषणं कुर्वाणम् इत्यर्थः, क्रोधं क्रोधिपुरुषं बुबुधुः ददृशुः इत्यर्थः । बुधेर्भौवादिकाल्लिट् ॥ १८ ॥

यमिति । यं क्रोधं दन्तैः ओष्ठस्य चतेन यत् असृक् रक्तं तच्छ्रक्ताणि तत्कल्पानि चक्षूंषि येषां ते, भ्रुकुटी एव फणिनी भुजङ्गी तन्नादनिभानि तत्फूत्कारकल्पानि निःश्वासफूत्कृतानि येषां ते, ईदृशाः परिजनाः उपासत, आसेलँङ् । तत्सेवका अपि तादृशा एवेत्यर्थः ॥ २० ॥

दुर्गमिति । यः क्रोधः कामाशुगेन कामवाणेन अपि दुर्लङ्घ्यं दुरतिक्रमं दुर्वाससः मुनेः हृदयम् एव दुर्गम् अवलम्ब्य सेन्द्रान् सनाथान् अपि लोकान् दिधक्षति दग्धुम् इच्छति, दहतेः सनन्ताल्लटि ढत्वकत्वभावाः । दुर्लङ्घ्यदुर्गावलम्बनो दुर्जयोऽस्तीति भावः । नित्यक्रुद्धो भगवान् दुर्वासा दुर्द्धर्षश्चेति प्रसिद्धम् ॥ २१ ॥

वैराग्यमिति । यः क्रोधः उच्चैः अपि रञ्जनं रागं रक्त-

सूते सर्वेन्द्रियाच्छादि प्रज्वलन्नपि यस्तमः ॥ २२ ॥
पञ्चेषुविजयासक्तौ भवस्य क्रुध्यतो जयात् ।
येनान्यविग्रहीतारिजयकालनयः श्रितः ॥ २३ ॥
हस्तौ विस्तारयन्निभ्ये बिभ्यदर्द्धपथस्थवाक् ।
सूचयन् काकुमाकूतैर्लोभस्तत्र व्यलोकि तैः ॥ २४ ॥

---

वर्णतां जनयन् अपि वैराग्यं तद्राहित्यं करोतीति विरोधः। नैस्पृह्यं करोतीति तदाभासीकरणात् विरोधाभासोऽलङ्कारः। क्रुद्धस्य न कुत्रापि अनुरागः इति भावः। क्रोधः प्रज्वलन् प्रकाशमानः अपि अन्तः सन्तापश्च सर्वेन्द्रियाणि आच्छादयतीति तदाच्छादि तदावरकं तमः मोहम् अन्धकारञ्च सूते जनयति क्रोधान्धो न किञ्चित् पश्यतीति भावः। अत्र प्रज्वलत्तमःशब्दयोः अर्थभेदेन विरोधपरिहारात् पूर्ववदलङ्कारः ॥ २२ ॥

पञ्चेष्विति। येन क्रोधेन पञ्चेषुविजयासक्तौ स्मरविग्रहसक्तिकाले क्रुध्यतः स्मराय कुप्यतः भवस्य, कर्मणि षष्ठी। जयात् हेतोः नूनम् अन्येन कार्य्यान्तरेण विग्रहीतस्य विरुद्धस्य अरेः जये कालनयः श्रितः तत्कालोचितां नीतिमाश्रितः। स्मरसंहारकाले स्मरहरं क्रोधो जिगाय तत्काले तस्य क्रोधवशीकृतत्वादिति भावः। अत्र कामन्दकः—"बलिना विग्रहीतस्य द्विषता कृच्छ्रवर्त्तिनः। कुर्वतापचयं शत्रोरात्मोच्छित्तिविशङ्कया॥" इति ॥ २३ ॥

हस्ताविति। तत्र सङ्घे तैः इन्द्रादिभिः इभ्ये धनिके, इभ्य आढ्यो धनी स्वामीत्यमरः। हस्तौ विस्तारयन् याच्ञामुद्रया प्रसारयन् बिभ्यत् त्रस्यन् अतएव अर्द्धपथस्थवाक् अर्द्धो-

दैन्यस्तैन्यमया नित्यमत्याहारामयाविनः ।
भुञ्जानजनसाकूतपश्या यस्यानुजीविनः ॥ २५ ॥
धनिदानाम्बुवृष्टेर्यः पात्रपाण्यवग्रहः ।
स्वान् दासानिव हा निःस्वान् विक्रिणोतीर्थवत्सु यः ॥२६॥
एकद्विकरणे हेतू महापातकपञ्चके ।
न तृष्णे मन्यते कोपकामौ यः पञ्च कारयन् ॥ २७ ॥

तवाक् आकूतैः वितर्कैः काकुं विकृतस्वरं सूचयन् गद्गदः सन्नित्यर्थः, लोभः व्यलोकि विग्रहवान् दृष्टः इत्यर्थः ॥ २४ ॥

दैन्येति । यस्य लोभस्य अनुजीविनः अनुचराः दैन्यं कार्पण्यं स्तैन्यं स्तेयं, स्तेनाद्यं नलोपश्चेत्यत्र स्तेनादिति योगविभागात्कालिकः ष्यञ्प्रत्ययः । तदुभयमयाः तत्प्रचुराः, नित्यं सर्वदा अत्याहारेण बह्वशित्वेन आमयाविनः रोगिणः, सर्वत्रामयस्येत्युपसङ्ख्यानाद् दीर्घश्च । भुञ्जानानाम् अश्नतां जनानां साकूतं साभिप्रायं पश्यन्तीति पश्याः द्रष्टारः, पाघ्रादिना शप्रत्ययः पश्यादेशश्च ॥ २५ ॥

धनिदानेति । यः लोभः पात्रपाणौ सम्प्रदानीयहस्ते धनिनां दानाम्बुवृष्टेः दानोदकवर्षस्य अवग्रहः प्रतिबन्धकस्वरूपः, तथा निःस्वान् धनहीनान् स्वान् स्वजनान् पुत्रदारादीन् दासान् इव अनायासदेयान् इव अर्थवत्सु आढ्येषु विक्रीणीते वितरति लोभात् इति भावः । हा इति विषादे, अहो लोभस्य वैचित्र्यमयी शक्तिरिति भावः ॥ २६ ॥

एकेति । यः लोभः महापातकानां ब्रह्महत्यादीनां पञ्चके पञ्चकमध्ये एकं च द्वे च एकद्वीनि, सङ्ख्येयद्वन्द्वे बहुत्वोपजननात् बहुवचनं । तेषाम् एकद्वीनां करणे यथासङ्ख्यं एकस्य ब्रह्महननस्य द्वयोः पानगमयोः करणे हेतू इत्यर्थः । कोप-

यः सर्वेन्द्रियसद्मापि जिह्वां बह्वावलम्बते ।
तस्यामाचार्य्यकं याच्ञापटवे वटवेऽर्जितुम् ॥ २८ ॥

पथ्यां तथ्यामगृह्णन्तः मन्दा बन्धुप्रबोधनाम् ।
शून्यमाश्लिष्य नोज्झन्तं मोहमैवन्त हन्त ते ॥ २९ ॥

श्वः श्वः प्राणप्रयाणेऽपि न स्मरन्ति स्मरद्विषम् ।
मग्नाः कुटुम्बजम्बाले बालिशा यदुपासिनः ॥ ३० ॥

---

कामी स्वयं पञ्च अपि पातकानि कारयन् तृणेन मन्यते आद्रियते इत्यर्थः । न हि बहुकारी स्वल्पकारिणं गणयतीति भावः । कामक्रोधाभ्यामपि पापिष्ठो लोभ इति रहस्यम् ॥२७॥

य इति । यः लोभः सर्वेन्द्रियाणि सद्म आश्रयः यस्य सः सन् अपि जिह्वां बहु प्रचुरम् अवलम्बते प्रायेण तथैवास्ते इत्यर्थः । किमर्थं तत्राह—तस्यां जिह्वायाम् अध्ययनशाला-भूतायाम् इति भावः । याच्ञापटवे भिक्षानिपुणाय शिष्याय वटवे ब्राह्मणाय आचार्य्यकं गुरुत्वम् अर्जितुम् इवेत्युत्प्रेक्षा । गुरवस्तु अध्ययनशालायां स्वशिष्येभ्यो विद्याशिक्षां ददतीति प्रसिद्धम् । अत्रोपमोत्प्रेक्षाभ्यां स्वजातीयकाभ्यां वाक्यार्थयोः शब्दहेतुत्वात् शब्दार्थहेतुककाव्यलिङ्गमलङ्कारो सङ्कीर्य्यते इत्य-लङ्कारत्रयस्य परस्परसम्बन्धेनाङ्गाङ्गिभावः ॥ २८ ॥

पथ्यामिति । ते देवाः मन्दाः मूढ़स्वभावाः अतएव पथ्यां हितां तथ्यां सत्यां बन्धुप्रबोधनां सुहृदुपदेशम् अगृह्णन्तम् अस्वीकुर्वाणं शून्यं यत्किञ्चित् तुच्छं वस्तु आश्लिष्य आदाय न उज्झन्तं मौढ्यात् अत्यजन्तं अतएव हन्तेति खेदे, मोहं ऐवन्त ॥ २९ ॥

श्वः श्वः इति । यदुपासिनः यत्सेवकाः बालिशाः मूर्खाः

पुंसामलब्धनिर्वाणज्ञानदीपमयात्मनाम्।
अन्तर्ज्ञापयति व्यक्तं यः कज्जलवदुज्ज्वलम्॥ ३१॥
ब्रह्मचारिव्रतस्थायियतयो गृहिणं यथा।
त्रयो यमुपजीवन्ति क्रोधलोभमनोभवाः॥ ३२॥
जाग्रतामपि निद्रा यः पश्यतामपि योऽन्धता।
श्रुते सत्यपि जाड्यं यः प्रकाशेऽपि च यस्तमः॥ ३३॥

---

अतएव कुटुम्बजम्बाले पुत्रकलत्रादिपङ्के मग्नाः स्वः स्वः परस्तो वेत्यर्थः, प्राणानां प्रयाणे निष्क्रमणे सति अपि स्मरद्विषम् ईश्वरं न स्मरन्ति॥ ३०॥

पुंसामिति। यः मोहः, अलब्धः अप्राप्तः निर्वाणज्ञानदीपमयः सुखचित्प्रकाशात्मकः आत्मा यैः तेषाम् अनात्मज्ञानानां पुंसाम् उज्ज्वलं निर्मलम् अन्तः अन्तःकरणं कज्जलवत् अञ्जनवत् व्यक्तं स्फुटं ज्ञापयति, मोक्षसाधनात्मसाक्षात्कार-विघातकोऽयं दुरात्मेत्यर्थः॥ ३१॥

ब्रह्मचारीति। ब्रह्मचारिव्रतस्थायियतयः ब्रह्मचार्य्यादयः त्रयः आश्रमाः इत्यर्थः, गृहिणं यथा क्रोधलोभमनोभवाः क्रोधादयः त्रयः इत्यर्थः, यं मोहम् उपजीवन्तीति मोहमूलास्ते तन्निवृत्तौ ते निवर्त्तन्ते इति भावः॥ ३२॥

जाग्रतामिति। यः मोहः जाग्रतां प्रबुद्धानाम् अपि निद्रा, यः पश्यतां चक्षुष्मताम् अपि अन्धता तद्राहित्यं, यः श्रुते शास्त्रे श्रवणे सति अपि जाड्यं मौढ्यं, यः प्रकाशे तेजसि सति अपि तमश्च, निद्रादिचतुष्टयकार्य्यकारित्वात् तद्वत् जागरचक्षुराद्यनिवर्त्यत्वाच्च प्रसिद्धनिद्रादिचतुष्टयविलक्षणे कापि तत्समष्टिरित्यर्थः॥ ३३॥

चिह्निता: कतिचिद् दैवै: प्राच: परिचयादमी।
अन्ये न केचनाचूडमेनःकञ्चुकमेचका: ॥ ३४ ॥
तत्रोदीर्ण इवार्णोधौ सैन्ये ऽभ्यर्णमुपेयुषि।
कस्याप्याकर्णयामासुस्ते वर्णान् कर्णकर्कशान् ॥ ३५ ॥
ग्रावोन्मज्जनवद् यज्ञफलेऽपि श्रुतिसत्यता।
का श्रद्धा तत्र धीवृद्धा: ! कामाद् वा यत्खिलीकृत: ॥३६॥
केनापि बोधिसत्त्वेन जातं सत्त्वेन हेतुना।

---

चिह्निता इति। कतिचित् अमी पूर्वोक्तस्मरादय: अन्ये च आचूडम् आशिखम् एनस: कञ्चुकेन मेचका: मलिना: केचन दैवै: कर्त्तृभि: प्राच: परिचयात् पूर्वानुभवजन्यसंस्कारात् चिह्निता: लक्षिता: अतएव अमी ते इति प्रत्यभिज्ञाता: इति यावत् ॥ ३४ ॥

तत्रेति। उदीर्णे उच्छलिते अर्णोधौ अम्भोधौ इव अभ्यर्णम् उपेयुषि समीपं गते तत्र तस्मिन् सैन्ये ते देवा: कस्यापि कस्यचित् पुरुषस्य कर्णकर्कशान् कर्णकटून् वर्णान् वाक्यानि आकर्णयामासु: ॥ ३५ ॥

अथ सप्तचत्वारिंशता श्लोकैस्तानेव वर्णानाह ग्रावेत्यादि। हे धीवृद्धा: ! ज्ञानवृद्धा: ! यज्ञफले स्वर्गादौ श्रुतिसत्यता ज्योतिष्टोमादिवेदवाक्यप्रामाण्यं ग्रावोन्मज्जनवत् ग्रावप्लवनवाक्यस्येव तदेतदर्थे तत्र तादृशी श्रुतौ का श्रद्धा क: विश्वास: ? यदृच्छया कामाद्वा तृतीयपुरुषार्थमार्ग: खिलीकृत:, द्वेऽखिलाप्रहते समे इत्यमर:। प्रमाणं सिद्धं विहाय तद्विरुद्धे न श्रद्धेयम् इत्यर्थ: ॥ ३६ ॥

केनेति। बोधिसत्त्वेन बुद्धेन, बुद्धस्तु श्रीघन: शास्ता

यद्वेदमर्मभेदाय जगदे जगदस्थिरम् ॥ ३७ ॥
अग्निहोत्रं त्रयी तन्त्रं त्रिदण्डं भस्मपुण्ड्रकम् ।
प्रज्ञापौरुषनिःस्वानां जीवो जल्पति जीविकाः ॥ ३८ ॥
शुद्धं वंशद्वयीशुद्धौ पित्रोः पित्रोर्यदेकशः ।
तदनन्तकुलादोषाददोषा जातिरस्ति का ? ॥ ३९ ॥

---

बोधिसत्त्वो विनायक इति यादवः । केनापि अवाच्यमहिम्ना जातं, भावे क्तः । स एव श्रद्धेयवचन इत्यर्थः । यत् यस्मात् वेदस्य कालान्तरभाविफलयोगिनित्यात्मसाधकश्रुतेः मर्मभेदाय प्रामाण्यभङ्गाय सत्त्वेन हेतुना यत् सत् तत् क्षणिकम् इति अनुमानेन जगत् अस्थिरं क्षणिकं जगदे गदितम् अतो न पारलौकिकसुखाशया हस्तगतम् ऐहिकं सुखं हातव्यम् इत्यर्थः ॥ ३७ ॥

सम्प्रति बृहस्पतिमतावलम्बेन वैदिकं विडम्बयति अग्निहोत्रमिति । अग्निहोत्रम् अग्निहोत्राख्यं कर्म त्रयी त्रिवेदी तन्त्रं तदर्थविचारात्मकं मीमांसाशास्त्रं त्रिदण्डं सन्न्यासः, पात्रादिपाठात् नपुंसकत्वम् । भस्मनः पुण्ड्रकं तिर्य्यक्तिलकम् एतानि जीवः बृहस्पतिः प्रज्ञापौरुषाभ्यां निःस्वानां तद्रहितानाम् इत्यर्थः, जीविकाः जीवनोपायान् जल्पति ब्रूते । अस्मात् नास्ति परलोकः इति निश्चयात् यथेष्टचेष्टितमेव हितम् इति भावः ॥ ३८ ॥

शुद्धमिति । यत् यतः कारणात् पित्रोः मातापितृपरम्परयोः मध्ये, निर्धारणे सप्तमी, षष्ठ्यां द्विरुक्तिः, पितामात्रेत्येकशेषः । एकशः एकैकस्य इव वंशद्वयीशुद्धौ उभयकुलशुद्धौ सत्यां शुद्धं पुत्रस्य शुद्धता भवति, तत् तस्मात् अनन्तानां कुलानाम् अदोषात् दोषराहित्यात् अदोषा निर्दोषा

कामिनीवर्गसंसर्गैर्न कः संक्रान्तपातकः।
नाश्नाति स्नाति हा मोहात् कामक्षाममिदं जगत् ॥४०॥
ईर्ष्यया रक्षतो नारीं धिक् कुलस्थितिदाम्भिकान्।
स्मरान्धत्वाविशेषेऽपि तथा नरमरक्षतः ॥ ४१ ॥
परदारनिवृत्तिर्या सोऽयं स्वयमनादृतः।
अहल्याकेलिलोलेन दम्भो दम्भोलिपाणिना ॥ ४२ ॥

जातिः का अस्ति? न कुत्रापि इत्यर्थः। यथाहुः—"अनादाविह संसारे दुर्वारे मकरध्वजे। कुले च कामिनीमूले का जातिपरिकल्पना?॥" इति ॥ ३८ ॥

कामिनीति। किञ्च, कामिनीवर्गस्य स्त्रीजातस्य संसर्गः सन्निकर्षः कः पुमान् संक्रान्तपातकः अपि? न सर्वः अपि पातकी एव। अतएव इदं जगत् कामेन कामुकदोषेण क्षामव्रतं क्षीणव्रतं, क्षायो मः इति निष्ठातकारस्य मकारः। तथा मोहात् स्ववृत्तानाकलनात् न अश्नाति उपवसति स्नाति शुद्धत्वबुद्धैव पुनः व्रतानि चरति इत्यर्थः। हा इति खेदे। किञ्चन व्रतसहस्रे सत्यपि एकेनैव पातकेन सर्वनाशात् इति भावः ॥ ४० ॥

ईर्ष्ययेति। स्मरान्धत्वस्य अविशेषे समाने अपि ईर्ष्यया असहिष्णुतया नारीं स्त्रियं रक्षतः निरुन्धतः, तथा तद्वत् नरं पुरुषम् अरक्षतः अनिवारयतः कुलस्थित्या कुलवृत्तेन दम्भेन कैतवेन चरन्तीति तथोक्ताः तान् दाम्भिकान् वञ्चकान्, चरतीति ठक्। दम्भस्तु कैतवे कल्क इति विश्वः। धिक्, धिगुपर्यादिषु इति द्वितीया। स्त्रीदोषादिव पुरुषदोषेऽपि कुलहानेरेकत्राभिनिवेशे दम्भादप्येको हेतुरिति भावः ॥४१॥

परेति। या परदारेभ्यः निवृत्तिः सः अयं दम्भः अहल्या-

गुरुतल्पगतौ पापकल्पनां त्यजत द्विजाः ! ।
येषां वः पत्यु रत्यु र्वैगुरुदारग्रहे ग्रहः ॥ ४३ ॥
पापात् तापा मुदः पुण्यात् परासोः स्युरिति श्रुतिः ।
वैपरीत्यं ध्रुवं साक्षात् तदाख्यात बलाबले ॥ ४४ ॥
सन्देहेऽप्यन्यदेहाप्तेर्विवर्ज्यं वृजिनं यदि ।
त्यजत श्रोत्रियाः ! सत्रं हिंसादूषणसंशयात् ॥ ४५ ॥

---

केलिलोलेन गौतमस्त्रीरतिलालसेन दम्भोलिपाणिना इन्द्रेण स्वयम् आत्मना अनादृतः, अतो न पारदार्य्यम् अनाचारः इति भावः ॥ ४२ ॥

गुरुतल्पेति। किञ्च, हे द्विजाः ! गुरुतल्पगतौ गुरुदारगमने, तल्पं शय्याट्टदारेषु इत्यमरः। पापकल्पनां पापसम्भावनां त्यजत। कुतः ? येषां वः पत्युश्च तस्मात्सोमराजानो ब्राह्मणा इति श्रुतेः। गुरोः बृहस्पतेः दारग्रहे तद्भार्य्यागमने अत्युच्चैः अतिमहान् ग्रहः निर्बन्धः, तस्मात् अत्रापि न दोषबुद्धिः कार्य्या इति भावः ॥ ४३ ॥

पापादिति। परासोः मृतस्य पुनः पापात् पापाचरणात् तापाः दुःखानि, पुण्यात् पुण्याचरणात् मुदः सुखानि स्युः इति श्रुतिः। विधिनिषेधाभ्यामगम्यं तदित्यर्थः। वैपरीत्यं पानगमनादिपापात् सुखं तथा यज्ञादिपुण्यात् दुःखञ्च विपरीतफलं ध्रुवं सत्यम् एव साक्षात् प्रत्यक्षं तदित्यव्ययं तयोरित्यर्थः। तयोः प्रत्यक्षागमयोः बलाबले आख्यात हे द्विजाः ! कथयत ग्रावप्लवनवाक्यवत् प्रत्यक्षविरोधात् श्रुतिरिह दुर्बलेत्यर्थः ॥ ४४ ॥

सन्देहे इति। हे श्रोत्रियाः ! छान्दसाः ! श्रोत्रियच्छान्दसौ समौ इत्यमरः। श्रोत्रियवच्छन्दोऽधीते इति छन्दः

यस्त्रिवेदीविदां वन्द्यः स व्यासोऽपि जजल्प वः ।
रामाया जातकामाया: प्रशस्ता हस्तधारणा ॥ ४६ ॥
सुकृते वः कथं श्रद्धा सुरते च कथं न सा ? ।
तत् कर्म पुरुषः कुर्य्यात् येनान्ते सुखमेधते ॥ ४७ ॥

---

शब्दात्तदधीत इत्यर्थः। विकल्पेन घप्रत्ययः, श्रोत्रभावयो- र्निपातनात् साधुः। अन्यदेहाप्तेः मृतस्य देहान्तरप्राप्तेः सन्देहेऽपि देहात्मवादिना विप्रतिपत्तेरिति भावः। वृजिनं पारदार्य्यादिपापं, कलुषं वृजनैनोऽघमित्यमरः। विवर्ज्यं पाचिकदोषस्यापि परिहार्य्यत्वात् त्याज्यं यदि तर्हि हिंसा- दूषणसंशयात् वैधहिंसायामपि सांख्यादिभिः प्रत्यवायाङ्गी- कारादिति भावः। सतं यज्ञं त्यजत पारदार्य्यादिः पुनर- हिंसात्मकत्वात् प्रत्युत परवृत्तिकरत्वाच्च न कश्चित् प्रत्यवायः इति भावः ॥ ४५ ॥

थ इति। किञ्च, यः व्यासः त्रयाणां वेदानां समाहारः त्रिवेदी, त्रिलोकीवत् प्रक्रिया। तद्विदां त्रयीज्ञानां वन्द्यः सः अपि जातकामायाः जाताभिलाषायाः रामायाः हस्तधा- रणा करग्रहणं प्रशस्ता कर्त्तव्येति प्रशस्ता वः युष्माकं जजल्प व्यक्तम् उक्तवान् स्वयं चित्राङ्गदाविचित्रवीर्य्यभार्य्यासु पुत्रो- त्पादनादिति भावः। वृद्धाचारोऽप्यत्र प्रमाणमित्यर्थः ॥४६॥

सुकृते इति। सुकृते तपोयज्ञादौ वः कथं श्रद्धा विश्वासः ? सा श्रद्धा सुरते वः कथं न ? तत्रैव भवितव्यम् इत्यर्थः। कुतः ? पुरुषः तत् कर्म कुर्य्यात् एव कर्मणाम् अन्ते कर्मान्ते सुखं कर्म एधते वर्धते सुखार्थं कर्म कुर्य्यात् इत्यर्थः। तच्च सुरतम् एव अनुभवसिद्धत्वात् न सुकृतं वैपरीत्यात् इति भावः ॥ ४७ ॥

बलात् कुरुत पापानि सन्तु तान्यकृतानि वः ।
सर्वान् बलकृतानर्थानकृतान् मनुरब्रवीत् ॥ ४८ ॥
स्वागमार्थेऽपि मा स्मास्मिं स्तीर्थिकाः ! विचिकित्सवः ।
तं तमाचरतानन्दं स्वच्छन्दं यं यमिच्छथ ॥ ४९ ॥
श्रुतिस्मृत्यर्थबोधेषु क्वैकमत्यं महाधियाम् ।
व्याख्या बुद्धिबलापेक्षा सा नोपेक्ष्या सुखोन्मुखी ॥५०॥

---

बलादिति । किञ्च, बलात् बलात्कारात् पापानि कुरुत तानि बलात्कृतपापानि वः युष्माकम् अकृतानि सन्तु, अकृतान्येव भविष्यन्तीत्यर्थः । कुतः ? सर्वान् बलकृतान् अर्थान् व्यापारान् अकृतान् मनुः अब्रवीत् तस्मात् बलाच्चेत् कृते अपि दोषो नास्तीत्यर्थः । अत्र मनुः—"बलाद्दत्तं बलाद्भुक्तं बलाद्यच्चापि लेखितम् । सर्वान् बलकृतानर्थानकृतान्मनुरब्रवीत् ॥" यद्यपि बलात्कृतं व्यवहारपराधृत्तिपरमेतत् तथापि पापमाकलयतां चार्वाकविषयतया प्रलपनमिति द्रष्टव्यम् ॥ ४८ ॥

स्वेति । हे तीर्थिकाः ! शास्त्रिणः ! मत्वर्थीयष्ठन्प्रत्ययः । तीर्थं शास्त्राऽध्वरक्षेत्रोपायोपाध्यायमन्त्रिष्वित्यमरः । अस्मिन् मनुप्रोक्ते स्वागमार्थे बलात्कारलक्षणे स्वशास्त्रार्थेऽपि विचिकित्सवः सांशयिकाः, विचिकित्सा तु संशय इत्यमरः । कितः सनन्तादुप्रत्ययः, अस्तेर्लटि धादेशः । मा स्म भवत किन्तु, यं यम् आनन्दम् इच्छथ तं तम् आनन्दं स्वच्छन्दं यथेच्छम् आचरत अनुभवत इत्यर्थः ॥ ४९ ॥

ननु मनुवचनस्य व्यवहारविषयत्वान्नायमर्थ इत्याक्षेपन्तं प्रत्याह श्रुतीति । महाधियां चित्रबुद्धीनां पुंसां श्रुतिस्मृत्यर्थानां बोधेषु ऐकमत्यं सम्प्रतिपत्तिः क्व ? न क्वापि इत्यर्थः ।

यस्मिन्नस्मीति धीर्देहे तद्दाहे व: किमेनसा ?।
क्वापि किं तत् फलं न स्यादात्मेति परसाक्षिके ॥ ५१ ॥
मृत: स्मरति कर्माणि मृते कर्मफलोर्मय:।
अन्यभुक्तैर्मृते तृप्तिरित्यलं धूर्त्तवार्त्तया ॥ ५२ ॥
एकं सन्दिग्धयोस्तावत् भावि तत्रेष्टजन्मनि।

---

किन्तु बुद्धिबलापेक्षा ज्ञानशक्त्यनुसारेण व्याख्या प्रतिपादनं सा एव निर्णायिका इति शेष:। एवं स्थिते व्याख्या सुखोन्मुखी सुखप्रवणा न उपेक्ष्या सा एव ग्राह्या इत्यर्थ:। अन्यथा भ्रष्टो भवेदिति भाव: ॥ ५० ॥

नन्वेवं सुखलौल्यात् पापाचरणे परत्रानिष्टं स्यादित्याह यस्मिन्निति। यस्मिन् देहे अस्मीति धी: अहंबुद्धि:, अस्मीत्यव्ययमस्मदर्थानुवादे अहमर्थेऽपि इति गणव्याख्याने। "पादप्रहारमिति सुन्दरि! नास्मि दूये" इत्यादिप्रयोगश्च। तस्य देहस्य दाहे सति व: युष्माकम् एनसा किम् ? न स्यात्। गौरोऽहं कृशोऽहमित्यादिबुद्धिप्रामाण्याद्देहादतिरिक्त: फलभोक्ताऽस्मीत्यभिमान:। तर्हि परसाक्षिके परोक्तिमात्रप्रमाणके न तु वेदवदनुभवसिद्धे इत्यर्थ:। आत्मेति कृतनाम क्व क्वापि कुत्रचित् कल्पितेऽर्थे तस्य एनस: फलं किम् ? न स्यात् अस्तु नाम किं नश्छिन्नं वस्तुतस्तूभयमप्यसन्दिग्धमेवेति भाव: ॥५१॥

नन्वत्रागमो बलवदस्ति प्रमाणमत आह मृत इति। मृत: कर्माणि स्वकृतानि स्मरति, मृते जन्तौ कर्मणां फलोर्मय: सुखदु:खसन्ताना भवन्तीति शेष:। अन्यभुक्तै: श्राद्धादिब्राह्मणभोजनै: मृते तृप्ति: इति धूर्त्तवार्त्तया प्रतारकप्रवादेन अलम् आगमोऽपि कस्यचित् प्रलाप एव इत्यर्थ: ॥ ५२ ॥

धौर्त्त्यप्रकारमेवाह एकमित्यादि। सन्दिग्धयो: इष्टसिद्ध्यो:

हेतूनाहुः स्वमन्त्रादीनसाङ्गानन्यथा विटाः ॥ ५३ ॥
अनेन जानताऽस्मीति कायं नायं त्वमित्यसौ ।
त्याज्यते ग्राह्यते चान्यदहो धूर्त्यातिधूर्त्तया ॥ ५४ ॥
एकस्य विश्वपापेन तापेऽनन्ते निमज्जतः ।
कः श्रौतस्यात्मनो भीरो ! भरः स्याद् दुरितेन ते ॥५५॥
किं ते वृन्तच्युतात् पुष्पात् तस्मात्रे हि फलत्यदः ।
न्यस्य तन्मूर्ध्नि नन्यस्य न्यास्यमेवात्मनो यदि ॥ ५६ ॥

---

मध्ये एकं तावत् अवश्यं भावि, तत्र इष्टजन्मनि इष्टसिद्धौ सति विटाः धूर्त्ताः स्वमन्त्रादीन् स्वमन्त्रादिप्रयोगान् हेतून् कारणानि आहुः, अन्यथा तदसिद्धौ मन्त्रादीन् असाङ्गान् अङ्गविकल्पान् आहुः ॥ ५३ ॥

धूर्त्तस्य इत्थं कर्मकाण्डं विडम्ब्य ज्ञानकाण्डं विडम्बयति अनेनेति । अतिधूर्त्तया अतिप्रतारिकया श्रुत्या कायं देह-मस्माहमिति जानता देहादौ आत्मबुद्धिं कुर्वता जनेन प्रयो-ज्येन अयं कायः त्वम् आत्मा न इति त्याज्यते मोच्यते अन्यत् देहात् अन्यत् ब्रह्म ग्राह्यते तत्त्वमस्यादिवाक्यैः अङ्गीकार्य्यते, सत्यस्य असत्यकरणात् असत्यस्य सत्यकरणाच्च अहो इत्या-श्चर्य्यकरम् ॥ ५४ ॥

एकस्येति । एकस्य परमार्थतः अद्वितीयस्य श्रौतस्य उप-निषदस्य आत्मनः आत्मभूतस्य तथा विश्वपापेन अशेषपापेन अनन्ते तापे दुरन्तदुःखे निमज्जतः ते तव हे भीरो ! दुरितेन एकेन स्त्रीसंग्रहणपापेन कः भरः ? आत्मवाददाम्भिकस्य पापै-ककलभरेण एतेन किम् ? अत्रैव वैराग्येण वा किम् ? इत्यर्थः ॥ ५५ ॥

किमिति । हे मूर्ख ! वृन्तच्युतात् बन्धनच्युतात् पुष्पात् ते तव

तृणानीव घृणावादान् विधूनय वधूरनु ।
तवापि तादृशस्यैव का चिरं जनवञ्चना ? ॥ ५७ ॥
कुरुध्वं कामदेवाज्ञां ब्रह्माद्यैरप्यलङ्घिताम् ।
वेदोऽपि देवकीयाज्ञा तत्राज्ञाः ! काधिकार्हणा ? ॥५८॥

---

किं ? न किञ्चित् उपकारकम् इत्यर्थः। प्रत्युत अदः इदं पुण्यं तन्मात्रे तस्मिन् हन्ते एव फलति, अदः फलं सूते अपि सम्भावनायाम्। अथ अश्मनः देवताधिष्ठितस्य प्रस्तरस्य मूर्ध्नि न्यास्यम् अर्पणीयम् एव यदि, ऋहलोण्यत्। तत् तर्हि अनन्यस्य स्वस्य एव मूर्ध्नि न्यस्य निधेहि, अस्यतेर्लोटि सिचि हेलुक्। अन्योपासनात् वरं स्वयमुपभोग इति भावः ॥ ५६ ॥

तृणानीति। वधूः अनु स्त्रीविषये घृणावादान् "हासोऽस्थिसन्दर्शनमक्षियुग्ममत्युज्ज्वलं तत्कलुषं वसायाः। स्तनौ च पीनौ पिशितौ च पिण्डौ स्थानान्तरे किं नरकोऽपि योषित्॥" इत्यादिजुगुप्सावादान्, घृणा जुगुप्साकृपयोरिति यादवः। तृणानि इव विधूनय विसर्जय, धूञ् प्रीणे नुग्वक्तव्यः। तव अपि तादृशस्य जुगुप्सितस्य एव सतः चिरम् अत्यन्तं जनवञ्चना विरक्तप्रलापैः लोकवञ्चना का किमर्था ? ॥ ५७ ॥

कुरुध्वमिति। हे अज्ञाः ! मूढाः ! ब्रह्माद्यैः अलङ्घितां कामदेवस्य आज्ञां कुरुध्वम्। न चायमवैदिकाचार इत्याह—वेदः अपि देवस्य इयं देवकीया, गर्हादिभ्यश्चेति छप्रत्यये जनवरयोः कुग्वक्तव्यः, देवस्येति कुगागमः। आज्ञा शासनं, श्रुतिः स्मृतिर्ममैवाज्ञेति भगवद्वचनादिति भावः। तत्र वेदे अधिका अर्हणा पूजा का ? किंनिमित्ता इत्यर्थः। इत्यम् अविशेषे कामदेवाज्ञा एव कार्य्या ब्रह्माद्यैरप्यलङ्घ्यत्वादिति भावः ॥ ५८ ॥

प्रलापमपि वेदस्य भागं मन्यध्वमेव चेत् ।
केनाभाग्येन दुःखान्न विधीनपि तथेच्छथ ॥ ५९ ॥
श्रुतिं श्रद्धध्वं विक्षिप्ताः प्रक्षिप्तां ब्रूथ च स्वयम् ।
मीमांसामांसलप्रज्ञाः ! तां यूपद्विपदापिनीम् ॥६०॥
को हि वेत्तास्त्यमुष्मिन् वा लोक इत्याह या श्रुतिः ।
तत्प्रामाण्यादमुं लोकं लोकः प्रत्येति वा कथम् ? ॥६१॥
धर्माधर्मौ मनुर्जल्पन्नशक्यार्जनवर्जनौ ।

---

प्रलापमिति। हे मूढाः ! वेदस्य भागम् अर्थवादांशं प्रलापम् अनर्थकम् अपि मन्यध्वं जानीथ एव चेत् केन अभाग्येन भाग्यविपर्य्ययेण दुःखयन्तीति दुःखाः, पचाद्यच् । तान् दुःखकरार्थान् विधीन् अपि विधिभागम् अपि तथा प्रलापान् न इच्छथ न मन्यध्वं एकदेशोपहतान्नराशिवत् कृत्स्नस्यापि अनुपादेयत्वादिति भावः ॥ ५९ ॥

श्रुतिमिति। हे मीमांसया मांसलप्रज्ञाः ! निशितबुद्धयः ! इति परिहासोक्तिः। विक्षिप्ताः भ्रान्ताः सन्तः श्रुतिं वेदं श्रद्धध्वं विश्वसिथ। अथ यूपद्विपदापिनीं सयूपक्रतुषु जगद्दक्षिणादां प्रतिपादिकां तां श्रुतिं स्वयमेव प्रक्षिप्तां विप्लुतार्थाञ्च ब्रूथ, तत् कुतो वेदस्य प्रामाण्यमित्यर्थः ॥ ६० ॥

को हीति। किञ्च, या श्रुतिः कः हि तत् वेत्ता अस्ति यत् अमुष्मिन् लोके परलोके अस्ति वा न वेति फलमिति शेषः। कः हि वेद न कोऽपि इत्याह, तस्याः एवंसन्दिहानायाः श्रुतेः प्रामाण्यात् प्रामाण्यावलम्बनात् अमुं लोकं परलोकं लोकः कथं प्रत्येति ? विश्वसिति ? न प्रत्ययार्ह इत्यर्थः। अतो प्रतिष्ठावादिनी श्रुतिर्न श्रद्धेया इत्यर्थः ॥ ६१ ॥

एवं श्रुतेरप्रामाण्यमुक्त्वा स्मृतेरप्याह धर्मेत्यादि। व्याघात्

व्याजान्मण्डलदण्डार्थी श्रद्दधायि मुधा बुधैः ॥ ६२ ॥
व्यासस्यैव गिरा तस्मिन् श्रद्धेत्यद्धा स्थ तान्त्रिकाः!।
मत्स्यस्याप्युपदेशात् वः को मत्स्यानपि भाषताम् ॥६३॥
पण्डितः पाण्डवानां स व्यासश्चाटुपटुः कविः।
निनिन्द तेषु निन्दत्सु स्तुवत्सु स्तुतवान्न किम्? ॥६४॥

---

धर्माधर्मोपदेशकैतवात् मण्डले राष्ट्रे दण्डार्थी दण्डनार्थी सन् अशक्ये कर्त्तुः अशक्ये अर्जनवर्जने यथासङ्ख्यं करणाकरणे ययोः तौ धर्माधर्मौ जल्पन् यथासङ्ख्यम् अर्ज्यत्वेन वर्ज्यत्वेन उपदिशन् मनुः बुधैः विद्वद्भिः मुधा एव श्रद्दधायि श्रद्धितम् इत्यर्थः ॥ ६२ ॥

व्यासस्येति। हे तान्त्रिकाः! तन्त्रशास्त्रवेदिनः! तदधीते तद्वेदेति ठक्। व्यासस्य गिरा मनूक्तं ग्राह्यम् इति व्यासोक्त्या एव तस्मिन् श्रद्धेति श्रद्धा सत्ये स्थ स्थिराः स्थ चेत्तर्हि व्यासोक्तिः मत्स्यपुराणे मत्स्यस्य मत्स्यदेशस्य मीनस्य च उपदेशात् अनुशासनीयात् अतएव मत्स्यप्रायान् वः युष्मान् कः भाषतां कस्यापि न सम्भाष्याः इत्यर्थः। मत्स्यः उपदेष्टा इति स्वकपोलकल्पितं वदन् व्यासो न श्रद्धेयवचनः इत्यर्थः ॥ ६३ ॥

पुनर्व्यासमेव विडम्बयति पण्डित इत्यादि। पण्डितः पण्डितमानी चाटुपटुः चाटुवादकुशलः पाण्डवानां कविः व्यासः अपि तेषु पाण्डवेषु निन्दत्सु सः न निनिन्द किं? स्तुवत्सु सत्सु न स्तुतवान् किं? तान्निन्द्यान् निन्दन् स्तुत्यान् स्तुवन् व्यासोऽपि पाण्डवपक्षपाती कश्चित् कविर्न यथार्थवादीत्यर्थः ॥ ६४ ॥

न भ्रातुः किल देव्यां स व्यासः कामात् समासजत्।
दासीरतस्तदासीद् यन्माता तत्राप्यदेशि किम्? ॥६५॥
देवैर्द्विजैः कृता ग्रन्थाः पन्था येषां तदादृतौ।
गां नतैः किं न तैर्व्यक्तं ततोऽप्यात्माऽधरीकृतः॥ ६६ ॥
साधु कामुकता मुक्ता शान्तस्वान्तैर्मखोन्मुखैः।
सारङ्गलोचनासारां दिवं प्रेत्यापि लिप्सुभिः॥६७॥
उभयी प्रकृतिः कामे सज्जेदिति मुनेर्मतम्।
अपवर्गे तृतीयेति भणतः पाणिनेरपि॥ ६८ ॥

---

कामचारी च स इत्याह नेति। सः व्यासः भ्रातुः विचित्र-वीर्य्यस्य देव्यां पत्न्यां कामात् अनुरागात् न समासजत् आसक्तः चेत् किल। गुर्वनुज्ञानान्न दोषश्चेत् तत्राह—यत् यस्मात् तदा तत्काले दासीरतश्च आसीत् विदुरोत्पादायेति भावः। तत्रापि माता सत्यवत्या अदेशि किम्? आदिष्टः किम्? ॥ ६५ ॥

देवैरिति। हे मूढाः! येषां वः देवैः ब्रह्मादिभिः द्विजैः व्यासादिभिश्च कृताः ग्रन्थाः गां प्रणमेत् इत्यादिस्मृतयः पन्थाः प्रमाणं, तदादृतौ तद्ग्रन्थादरे सति गां धेनुं नतैः प्रणतैः तैः भवद्भिः ततः गोः अपि आत्मा स्वं व्यक्तम् अधरीकृतः न किं? कृतः एव इत्यर्थः। पशुप्रणामात् पशोरपि निकृष्टता स्यान्नान्याः किञ्चित् फलमस्तीति भावः॥ ६६ ॥

साध्विति। प्रेत्य मृत्वापि सारङ्गलोचनाः मृगाक्ष्यः एव साराः मुख्यांशाः यस्यां तां दिवं लिप्सुभिः अतएव शान्तस्वान्तैः शुद्धचित्तैः सद्भिः मखोन्मुखैः क्रतुप्रवणैः मूढैः कामुकता अभिरति रतिः साधु सम्यक् यथा तथा मुक्ता त्यक्ता इति सिद्धं विहाय साध्यप्रवृत्तेरुपहासः॥ ६७ ॥

उभयीति। अपवर्गे तृतीया इति भणतः सूत्रयतः

बिभ्रत्युपरि यानाय जना जनितमज्जनाः।
विग्रहायाग्रतः पश्चाद्गत्वरोरभ्रविभ्रमम् ॥ ६९ ॥
कः शमः क्रियतां प्राज्ञाः! प्रियाप्राप्तौ परिश्रमः।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः? ॥ ७० ॥

---

पाणिनेः मुनेः अपि उभयी प्रकृतिः स्त्रीपुंसात्मिका या तृतीया प्रकृतिः पदव्यक्तिः अपवर्गे मोक्षाख्ये चतुर्थे पुरुषार्थे सज्जेदिति मतं स्फुटम्, अयमेवास्य सूत्रस्यार्थो न द्वितीयाविभक्तिविधानमित्यर्थः। तथाच वृथा कामं विहाय अपवर्गे प्रवर्त्तमाना यूयं नपुंसका हताः स्थेति भावः ॥ ६८ ॥

बिभ्रतीति। उपरि यानाय ऊर्ध्वलोकगमनाय जनितमज्जनाः तीर्थेषु कृतमज्जनाः अधः गच्छन्तः इत्यर्थः, ईदृशाः जनाः अग्रतः विग्रहाय युद्धाय, योद्धुम् अग्रतः गमनाय इत्यर्थः, पश्चाद्गत्वराणां पश्चाद्गामिनां, गत्वरश्चेति क्वरबन्तो निपातः। उरभ्राणां मेषाणां विभ्रमम् इव विभ्रमं चेष्टां बिभ्रतीति निदर्शनालङ्कारः। स च ऊर्ध्वगमनाय अधो गच्छन्त इति स्थूलबुद्धीनां स्थूलबुद्धिप्रयासरूपविचित्रालङ्कारोत्थापित इति सङ्करः। तेन तेषामविमृश्यकारित्वं व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥६९॥

क इति। हे प्राज्ञाः! प्रज्ञावन्तः! इति सोपहासमामन्त्रिताः, प्रज्ञाहीनाः इत्यर्थः। प्रज्ञा अर्बेत्यादिना मत्वर्थीयेणप्रत्ययः। शमः शान्तिः वैराग्यं कः किमर्थं? किन्तु प्रियाप्राप्तौ इष्टस्त्रीसङ्गतौ परिश्रमः क्रियताम्। न च तत्पापेन शारीरयातनाप्राप्तिशङ्का कार्य्येत्याह—भस्मीभूतस्य देहस्य पुनः आगमनं कुतः? पुनर्जन्म इति भ्रमः एव इत्यर्थः। देहातिरिक्तात्मसद्भावाभिमानोऽपि तादृगेव इति भावः ॥ ७० ॥

एनसानेन तिर्य्यक् स्यादित्यादिः का विभीषिका ?।
राजिलोऽपि हि राजेव स्वैः सुखी सुखहेतुभिः ॥ ७१ ॥
हताश्चेद्दिवि दीव्यन्ति दैत्या दैत्यारिणा रणे।
तत्रापि तेन युध्यन्तां हता अपि तथैव ते ॥ ७२ ॥
स्वञ्च ब्रह्म च संसारे मुक्तौ तु ब्रह्म केवलम्।
इति स्वोच्छित्तिमुक्त्युक्तिवैदग्धी वेदवादिनाम् ॥७३॥

---

अस्तु वा यातनाशरीरं तत्रापि सुखमेवेत्याह एनसेति। अनेन एनसा एवंविधपापेन तिर्य्यग्यातनाशरीरं स्यात् इति का विभीषिका त्रासनं ? विपूर्वात् भीषयतेर्धात्वर्थनिर्देशे ण्वुल् कात्पूर्वस्येकारः। हि यस्मात् राजिलः डुण्डुभाख्यः तिर्य्यगपि, समौ राजिलडुण्डुभावित्यमरः। राजा इव स्वैः स्वजात्यनुरूपैः सुखहेतुभिः सुखसाधनैः सुखी सुखवान् एव, तिरश्चामपि शरीरेन्द्रियाभिमानिनां सुखमेवेति तद्धेतोः पापात् न भेतव्यम् इति भावः ॥ ७१ ॥

अन्यच्च शास्त्रं विडम्बयति हता इति। रणे हताः दिवि स्वर्गे दिव्यन्ति क्रीडन्ति चेत् तर्हि दैत्याः ते असुराः दैत्यारिणा विष्णुना रणे हताः अपि तथैव पूर्ववदेव तत्रापि स्वर्गेऽपि तेन विष्णुना सह युध्यन्तां युद्धेरन् न चैतदस्ति तस्मादपि शास्त्रं मृषा इत्यर्थः ॥ ७२ ॥

अथ मोक्षशास्त्रं विडम्बयति स्वमित्यादि। संसारे संसारावस्थायां स्वं च ब्रह्म च जीवब्रह्मणी केवलं मुक्तौ मोक्षावस्थायां तु केवलम् एकं ब्रह्म इति वेदवेदिनां स्वस्य जीवस्य उच्छित्तिः एव मुक्तिः तस्याः उक्तौ प्रतिपादने वैदग्धी वैदग्ध्यं गुणवचनेत्यादिना ष्यञ्, स्त्रीत्वविवक्षायां षिद्गौरादिभ्यश्चेति ङीप्। वावदूका एव एवं वदन्तीति भावः ॥ ७३ ॥

मुक्तये यः शिलात्वाय शास्त्रमूचे सचेतसाम्।
गोतमं तमवेतैव यथा वित्थ तथैव सः॥ ७४॥
दारा हरिहरादीनां तन्मग्नमनसो भृशम्।
किं न मुक्ताः पुनः सन्ति कारागारे मनोभुवः?॥७५॥
देवश्चेदस्ति सर्वज्ञः करुणाभागबन्ध्यवाक्।
तत् किं वाग्व्ययमात्रान्नः कृतार्थयति नार्थिनः?॥७६॥

---

अद्वैतमोक्षं दूषयित्वा द्वैतमोक्षं दूषयति मुक्तये इति। यः शास्त्रकर्त्ता सचेतसां प्राणिनां शिलात्वाय नवगुणात्यन्तोच्छेदरूपत्वात् तत्सदृशमुक्तस्वरूपनिर्वहणाय शास्त्रम् ऊचे प्रणिनाय तं तच्छास्त्रकर्त्तारं गोतमं गोपशुश्रेष्ठं न तु गोतमाख्यं गोतममित्यर्थः अवेत जानीथ, अवपूर्वादिणो मध्यमपुरुषबहुवचनम्। एवं च सति यथा वित्थ जानीथ, वेत्तेः पूर्ववद्रूपम्। तथा एव सः अथ पुरुषार्थोपदेशात् गोतमः पशुतमः मूढतमः एवेत्यर्थः। गौणोऽयं शब्दो न तु रूढः, इति भावः॥ ७४॥

हरिहरहिरण्यगर्भोपासनया मुक्तिरिति मतं निरस्यति दारा इति। हरिहरादीनां दाराः लक्ष्म्यादयः भृशं तेषु हरिहरादिषु एव मग्नमनसः लग्नचित्ताः सन्तः अपि किं न मुक्ताः? प्रत्युत कुतः हेतो मनोभुवः कामस्य कारागारे बन्धनालये, कारा स्याद् बन्धनालये इत्यमरः। पुनः सन्ति वसन्ति वर्त्तन्ते इत्यर्थः। ततस्तदपि मिथ्यैवेति भावः॥ ७५॥

किञ्च, देवोऽपि नास्ति यत्प्रसादात् मुच्येमहीत्याह देव इति। सर्वज्ञः करुणाभाक् कारुणिकः वैषम्यनैर्घृण्यरहितः इत्यर्थः, अबन्ध्यवाक् अमोघवचनः देवः ईश्वरः अस्ति चेत्तत् तर्हि किं किमर्थम् अर्थिनः मोक्षार्थिनः नः अस्मान् वाग्-

भविनां भावयन् दुःखं स्वकर्मजमपीश्वरः ।
स्यादकारणवैरी नः कारणादपरे परे ॥ ७७ ॥
तर्काप्रतिष्ठया साम्यादन्योन्यस्य व्यतिघ्नताम् ।
नाप्रामाण्यं मतानां स्यात् केषां सत्प्रतिपक्षवत् ॥ ७८ ॥
अक्रोधं शिक्षयन्त्यन्यान् क्रोधना ये तपोधनाः ।
निर्धनास्ते धनायैव धातुवादोपदेशिनः ॥ ७९ ॥

---

व्ययमाम्नात् वाक्योच्चारणमात्रेण न कृतार्थयति न मोचयतीत्यर्थः । अतः सोऽपि नास्तीति भावः ॥ ७६ ॥

ननु सर्वस्यैवेश्वरः किन्त्वस्मत्कर्मानुसारात् फलं प्रयच्छन्न दुष्यतीत्याशङ्क्याभ्युपेत्य दूषयति भविनामिति। भविनां संसारिणां स्वकर्मजम् अपि दुःखं भावयन् औदासीन्यं विहाय निमित्तं भवन् ईश्वरः नः अस्माकम् अकारणात् वैरी स्यात्, अपरे परे अन्ये शत्रवः कारणात् अन्योन्यापकारलक्षणात् वैरिणः अतः सर्वोऽपि न विश्वसनीयः इति भावः ॥ ७७ ॥

किञ्च, सर्वाण्यप्यास्तिकमतानि परस्परविरोधादप्रामाण्यान्येवेत्याह तर्केति। तर्कस्य युक्तेः अप्रतिष्ठया अप्रतिष्ठत्वेन कारणेन साम्यात् समबलत्वात् हेतोः अन्योन्यस्य व्यतिघ्नतां परस्परं प्रतिरुन्धतां, सर्वनाम्नो वृत्तिमात्रे द्वे भवत इति अन्यशब्दस्य द्विरुक्तिः, पूर्वपदात् प्रथमैकवचनं, शेषे कर्मणि षष्ठी, कर्मव्यतीहारे द्योतनार्थोऽप्युपसर्गप्रयोगः इतरेतरान्योन्योपपदाच्चेति प्रतिषेधात् कर्मव्यतीहारेऽप्यात्मनेपदाभावः । केषां मतानां दर्शनानां सत्प्रतिपक्षवत् मिथःप्रतिरुद्धहेतूनाम् इव अप्रामाण्यं न स्यात् तस्मादेव इत्यर्थः ॥ ७८ ॥

अक्रोधमिति। क्रोधनाः स्वयं कोपनशीलाः, नन्द्यादिभ्यश्चेति युच् । ये तपोधनाः दुर्वासःप्रभृतयः अन्यान् इतरान्

किं वित्तं दत्त तुष्टेयमदातरि हरिप्रिया।
दत्त्वा सर्वं धनं मुग्धो बन्धनं लब्धवान् बलि: ॥ ८० ॥
दोग्धा द्रोग्धा च सर्वोऽयं धनिनश्चेतसा जन:।
विसृज्य लोभसंक्षोभमेकद्वा यद्युदासते ॥ ८१ ॥
दैन्यस्यायुष्यमस्तैन्यमभक्ष्यं कुक्षिवञ्चना।
स्वाच्छन्द्यमृच्छतानन्दकन्दलीकन्दमेककम् ॥ ८२ ॥

---

अक्रोधं शान्तं शिक्षयन्ति उपदिशन्ति, ब्रुविशासीति द्विकर्मकत्वम्। ते निर्धना: स्वयं नि:स्वा: सन्त: धनाय धनार्थं धातुवादोपदेशिन: परेषां धातुविद्योपदेष्टार: इव तद्वत् उपहास्या: स्युरिति भाव: ॥ ७९ ॥

किमिति। हे वदान्या:! वित्तं धनं किं किमर्थं दत्त? न दत्तेत्यर्थ:, सम्प्रश्ने लोट्। न चादाने लक्ष्मीक्षोभ इत्याह—इयं हरिप्रिया लक्ष्मी: अदातरि तुष्टा अदानेनैव तुष्यतीत्यर्थ:। तथाहि, मूढ: दुर्बुद्धि: बलि: वैरोचनि: सर्वं धनं दत्त्वा बन्धनं प्राप्तवान् वामनाय विष्णवे दत्त्वा त्रिविक्रमेण तेनैव बद्ध: इत्यर्थ: ॥ ८० ॥

दोग्धेति। अयं सर्व: जन: चेतसा अन्तरात्मना धनिन: धनिकान् दोग्धा रिक्तीकर्त्ता धनहरणाय मनसि कृतनिश्चय इत्यर्थ: अतएव द्रोग्धा जिघांसुश्च, ताच्छील्ये तृन्, अतएव न लोकेत्यादिना षष्ठीप्रतिषेध:। किन्तु लोभसंक्षोभं विकारं याच्ञादैन्यं विसृज्य उदासते यदि नि:स्पृहा: तिष्ठन्ति यदि एको द्वौ वा एकद्वा नास्तिक: कश्चिदित्यर्थ:। सङ्ख्याव्ययेत्यादिना बहुव्रीहौ डच्समासान्त: ॥ ८१ ॥

दैन्यस्येति। अस्तैन्यम् अस्तेयं क्वचित् प्रसज्यप्रतिषेधेऽपि नञ्समास दृश्यते अहिंसेतिवत्। दैन्यस्य शोचनाया: आयुषे

इत्थमाकर्ण्य दुर्वर्णान् शक्रः सक्रोधतां दधे ।
अवोचदुच्चैः कस्कोऽयं धर्ममर्माणि कृन्तति ॥ ८३ ॥
लोकत्रयीं त्रयीनेत्रां वज्रवीर्य्यस्फुरत्करे ।
क इत्थं भाषते पाकशासने मयि शासति ? ॥ ८४ ॥
वर्णासङ्कीर्णतायां वा जात्यलोपेऽन्यथापि वा ।
ब्रह्महादेः परीक्षासु भङ्गमङ्ग ! प्रमाणय ॥ ८५ ॥

---

हितम् आयुष्यं तदर्थमित्यर्थः। हितार्थे यत्प्रत्ययः। अभक्ष्यं भोजनविरतिः कुक्षेः जठरस्य वञ्चना प्रतारणा एव इत्यर्थः। आनन्दकन्दलीकन्दम् आनन्दाङ्कुरमूलकम् एककम् एकाकि, असहाये कन्प्रत्ययः। स्वाच्छन्द्यं स्वेच्छाचारित्वम् ऋच्छत गच्छत मा वृथा हताः स्थ इत्यर्थः ॥ ८२ ॥

इत्थमिति। इत्थम् एवंविधान् दुर्वर्णान् दुर्वाक्यानि आकर्ण्य शक्रः सक्रोधतां दधे चुक्रोध। कः कोऽयं क इत्यस्य सम्भ्रमे द्विरुक्तिः, कस्कादिषु चेति सकारः। धर्ममर्माणि कृन्तति भिनत्तीति उच्चैः तारम् अवोचत् ॥ ८३ ॥

लोकेति। त्रयीनेत्रां वेदचक्षुषं लोकत्रयीं त्रिलोकीं वज्रवीर्य्येण कुलिशप्रभावेण स्फुरत्करे दीप्यमानहस्ते पाकशासने देवेन्द्रे मयि शासति कः इत्थम् अस्पष्टं भाषते प्रलपति ? ॥८४॥

ग्रावोन्मज्जनवदित्यादिना शास्त्राप्रामाण्यं प्रलपितं तन्निरस्यन्नाह वर्णेत्यादि। वर्णानां ब्राह्मणादिवर्णानाम् असङ्कीर्णतायाम् असाङ्कर्य्ये अन्यथा वाणिज्यादि[illegible]वृत्त्यनाश्रयणमति जात्यलोपे जातिभ्रंशाभावेऽपि विषये ब्रह्महादेः पातकिनः परीक्षासु तुलादिदिव्यशोधनेषु भङ्गं पराजयम् अङ्ग ! भोः ! प्रमाणय प्रमाणीकुरु एतदेव सर्वत्र वर्णसाङ्कर्य्यादि शास्त्रे प्रामाण्येऽपि दर्शनमित्यर्थः ॥ ८५ ॥

ब्राह्मण्यादिप्रसिद्धाया गन्ता यन्नेच्छते जयम्।
तद्विशुद्धिमशेषस्य वर्णवंशस्य शंसति ॥ ८६ ॥
जलानलपरीक्षादौ संवादो वेदवेदिते।
गलहस्तितनास्तिक्यां धिक् धियं कुरुते न ते ॥८७॥
सत्येव पतियोगादौ गर्भादेरध्रुवोदयात्।
आक्षिप्तं नास्तिकाः! कर्म न किं मर्म भिनत्ति वः? ॥८८॥

---

ब्राह्मण्यादीति। किञ्च, ब्राह्मणी आदिः यस्याः प्रसिद्धायाः प्रख्यातवर्णस्त्रियाः गन्ता सम्भोक्ता जयं दिव्यपरीक्षणे विजयं न ईच्छत इति यत् तत् पराजयनम् एव अशेषस्य वर्णवंशस्य ब्राह्मणादिकुलस्य विशुद्धिम् उत्कर्षं शंसति अन्यथा कथं तद्गन्तुः पातकित्वशंसी पराजयः इति भावः ॥ ८६ ॥

जलेति। किञ्च, वेदवेदिते शास्त्रचोदिते जलानलपरीक्षादौ जलादिदिव्यशोधनादौ आदिशब्दात्कारियादिसंग्रहः। संवादः फलप्रत्यभिज्ञा ते तव गलहस्तेन तुल्यं गलहस्तितं नास्तिक्यं यया तां धियम् आस्तिक्यबुद्धिं न कुरुते धिक् त्वामिति शेषः। धिङ् निर्भर्त्सननिन्दयोः इत्यमरः ॥ ८७ ॥

सतीति। हे नास्तिकाः! नास्तिपरलोकाः! अस्ति नास्ति दिष्टं मतिः इति ठक्। पतियोगादौ भर्तृसम्पर्कादिकारणसाकल्ये सति एव आदिशब्दान्मघोदयादिकारणसंग्रहः। अध्रुवोदयात् कादाचित्कोत्पत्तिकात् गर्भोदयादिकार्य्यात् आदिशब्दात् दृष्ट्यादिकार्य्यसंग्रहः। तस्मात् आक्षिप्तम् अर्थापत्तिसिद्धं कर्म जन्मान्तरादृष्टं वः युष्माकं नास्तिकानां मर्म हृदयं किं न भिनत्ति? एतेनैव अदृष्टमस्तीति बोद्धव्यम् इत्यर्थः ॥ ८८ ॥

याचतः स्वं गयाश्राद्धं भूतस्याविश्य कञ्चन ।
नानादेशजनोपज्ञाः प्रत्येषि न कथाः कथम् ? ॥ ८९ ॥
नीतानां यमदूतेन नामभ्रान्तेरुपागतौ ।
श्रद्धत्से संवदन्तीं न परलोककथां कथम् ? ॥ ९० ॥
जज्वाल ज्वलनः क्रोधादाचख्यौ चाक्षिपन्नमुम् ।
किमात्थ रे ! किमात्थेदमस्मदग्रे निरर्गलम् ॥ ९१ ॥

---

यदुक्तमन्यस्युक्ते मृते तृप्तिरिति अलं धूर्त्तवार्त्तयेति तत्रो-त्तरमाह याचत इति । कञ्चन जनम् आविश्य स्वम् आत्मनः गयाश्राद्धं याचतः भूतस्य ब्रह्मराक्षसादेः सम्बन्धिनीः नाना-देशजनोपज्ञाः नानादेशजनाः एव उपज्ञा ज्ञानं प्रमाणं यासां ताः तत्प्रमाणकाः इत्यर्थः । उपज्ञा ज्ञानमाद्यं स्यादित्यमरः । कथाः उपाख्यानानि गयाश्राद्धात् तस्य मुक्तिरासीत् इत्येवं-रूपाणि कथं न प्रत्येषि न विश्वसिसि ? प्रत्येतव्य एवायमर्थः प्रमाणात् संवादादित्यर्थः ॥ ८९ ॥

नीतानामिति । किञ्च, यमकिङ्करेण नाम्ना नामसाम्येन भ्रान्तेः इतः एव नेतव्याः इति भ्रमेण नीतानां यमसन्निधिं प्रापितानां वा उपागतौ यूयं निवर्त्तध्वमिति यमाज्ञया सद्यः पुनः स्वदेहसंक्रान्तौ सत्यां संवदन्तीं तन्नामकप्रातिवेशिकपु-रुषान्तरमरणेन प्रत्यभिज्ञायमानार्थां परलोककथां पुनरागत-पुरुषोक्तां कथां किन्तु स नेतव्यः इति यमाज्ञा आसीदिति वार्त्तां कथं न श्रद्धत्से न प्रत्येषि ? श्रद्धयैव संवादादित्यर्थः ॥९०॥

जज्वालेति । अथ ज्वलनः अग्निः क्रोधात् जज्वाल दिदीपे रे इति तुच्छसम्बोधने । अस्मदग्रे निरर्गलम् अप्रतिबन्धं किम् आत्थ किं प्रलपसीत्यर्थः । सम्भ्रमे द्विरुक्तिः । इति आक्षिपन् अमुं चार्वाकवन्दिनम् इति आचख्यौ जगाद ॥९१॥

महापराक्रिण: श्रौतधर्मैकबलजीविन:।
क्षणाभक्षणमूर्च्छाल ! स्मरन् विस्मयसेऽपि न ? ॥८२॥
पुत्रेष्टिश्येनकारीरीमुखा दृष्टफला मखा:।
न व: किं धर्मसन्देहमन्देहजयभानव: ॥ ८३ ॥
दण्डताण्डवनै: कुर्वन् स्फुलिङ्गाङ्कितं नभ:।
निर्ममेऽथ गिरामूर्मीर्भिन्नमर्मेव धर्मराट् ॥ ८४ ॥

---

अथ यदन्यत् प्रलपितम् अग्निहोत्रं त्रयीत्यादि तत् निराचष्टे महापराक्रिण इति। हे क्षणम् अभक्षणे अभोजने मूर्च्छाल ! मूर्च्छामापन्न ! म्रियमाण ! इत्यर्थ:, क्षुद्रजन्तूपतापाच्चेति वक्तव्ये लच्प्रत्यय:। श्रौतस्य श्रुतिचोदितस्य धर्मस्य एकस्य एव बलेन सामर्थ्येन जीविन: प्राणधारिण:, महान्त: ये पराक्रिण: मासोपवासव्रतिन: तान् स्मरन् अपि न विस्मयसे ? धर्मोपजीविनो वैदिका न तु दम्भोपजीविन: इत्यर्थ: ॥ ८२ ॥

पुत्रेति। हे नास्तिका: ! पुत्रेष्टि: पुत्रकामेष्टि: श्येन: नाम शत्रुमारणार्थं क्रतुविशेष: कारीरी वृष्टिकामेष्टि: सा मुखम् आदि: येषां ते तन्मुखा: दृष्टफला: फलसम्पादनात् निश्चितप्रमाणभावात् इत्यर्थ:। अतएव मखा: क्रतव: व: युष्माकं धर्मे अयं सन्देह: अतएव मन्देहा: सूर्य्येण सह युध्यान: राक्षसविशेषा: तेषां जये निरासे भानव: सूर्य्या: न किम् ? एकदेशसम्पादनादन्यदेशान्तरेऽपि न सन्दिग्धम् इत्यर्थ:। मन्देहजये भानव इत्यत्र रक्षांसीह वा पुरोऽनुवाक्यार्थोऽनुसन्धेय: ॥८३॥

दण्डेति। अथ धर्मराट् यम: भिन्नमर्मा चार्वाकप्रलापै: विदीर्णमर्मा इव स: दण्डस्य दण्डयुद्धस्य ताण्डवनै: भ्रमणै:

तिष्ठ भोस्तिष्ठ कण्ठोष्ठं कुण्ठयामि हठादहम् ।
अपष्ठु पठतः पाठ्यमधिगोष्ठि शठस्य ते ॥ ८५ ॥
वेदैस्तद्वेषिभिस्तद्वत् स्थिरं मतशतैः कृतम् ।
परं कस्ते परं वाचा लोकं लोकायत ! त्यजेत् ? ॥८६॥
असज्ज्ञानाल्प ! भूयिष्ठपाप्यवैमत्यमेत्य यम् ।
लोके प्रयासि पन्थानं परलोके न तं कुतः ? ॥८७॥

---

नभः स्फुलिङ्गालिङ्गितम् अग्निकणाकीर्णं कुर्वन् गिराम् ऊर्मीः वाक्परम्पराः, वाक्परम्परोर्मिर्वा स्त्रियामित्यमरः । निर्ममे उवाच इत्यर्थः ॥ ८४ ॥

तिष्ठेति । भोः पातकापसद ! तिष्ठ तिष्ठ, सम्भ्रमे द्विरुक्तिः । अधिगोष्ठि गोष्ठ्यां, विभक्त्यर्थे अव्ययीभावः । अपतिष्ठतीति अपष्ठु प्रतिकूलं, प्रसव्यं प्रतिकूलं स्यादपसव्यमपष्ठु चेत्यमरः । अपः दुःसुषु स्थ इति तिष्ठतेः औणादिक उप्रत्यये आतो लोप इटि चेत्याकारलोपः, उपसर्गात् सुनोति इत्यादिना षत्वम् । पाठ्यं पठनीयप्रबन्धं पठतः शठस्य धूर्त्तस्य ते तव कण्ठम् ओष्ठौ च कण्ठोष्ठं, प्राण्यङ्गत्वात् एकवद्भावः । अहं हठात् बलात् पार्ष्णिकप्रसभौ हठाविति वैजयन्ती। कुण्ठयामि स्तम्भयामि ॥ ८५ ॥

वेदैरिति । हे लोकायत ! चार्वाक ! वेदैः श्रुतिभिः तद्द्वेषिभिः वेदविरोधिभिः मतशतैः बौद्धादिदर्शनशतैश्च स्थिरं कृतं स्थापितं परं लोकं परं केवलं ते तव वाचा कः त्यजेत् ? न कोऽपीत्यर्थः । बहुश्रद्धत्वात् तस्यैव प्रामाणिकत्वादिति भावः ॥ ८६ ॥

असेति । असज्ज्ञानेन अल्पः अल्पसंख्यकः तत्सम्बुद्धौ हे असज्ज्ञानाल्प ! हे नास्तिक ! लोके इह लोके भूयिष्ठाः अधिकाः

स्वकन्यामन्यसात्कर्त्तुं विश्वानुमतिदृश्वनः।
लोके परत्र लोकस्य कस्य न स्याद् दृढं मनः? ॥८८॥
कस्मिन्नपि मते सत्ये हताः सर्वमतत्यजः।
तद् दृष्ट्वा व्यर्थतामात्रमनर्थस्तु न धर्मजः॥ ८९ ॥

---

पान्थाः परलोकपथिकाः आस्तिकाः इत्यर्थः, तैः वैमत्यं विरोधम् एत्य सर्वसम्मतं मार्गम् उत्सृज्य इत्यर्थः, यं पन्थानं दुर्मार्गं प्रयासि अनुयासि तं पन्थानं परोलोके अपि कुतः न प्रयासि? प्रयास्यस्येव तत्फलमनुभविष्यसीत्यर्थः। इह प्रच्छन्नपापानां शास्ता वैवस्वतो मतः इति शास्त्रात् अहमेव नियन्ता इति भावः॥ ८७॥

स्वेति। स्वकन्यां स्वदुहितरम् अन्यसात्कर्त्तुम् अन्यस्मै दातुम् इत्यर्थः, देये त्रा चेति सातिप्रत्ययः। विश्वानुमतिं दृष्टवानिति तद्दृश्वा तस्य तद्दृश्वनः, ब्राह्मे विवाहे आहूय दीयते शक्त्यलङ्कृता। तज्जः पुनात्युभयतः पुरुषानेकविंशतिम्। तिस्याहु रतिदानानि कन्या पृथ्वी सरस्वती इत्यादि सर्वशास्त्रसम्मतिदर्शकस्य इत्यर्थः। दृशेः क्वनिप्। कस्य लोकस्य जनस्य मनः परत्र परलोके दृढं न स्यात्? स्यादेव न तु त्वत्प्रलापैश्चालम् इत्यर्थः॥ ८८॥

ननु नास्तिकानामिह तावत् सुखं सिद्धम् आस्तिकानान्तु तन्नास्ति आमुष्मिकन्तु सन्दिग्धं तथा च वृथानुष्ठानक्लेश इति कुतो दार्ढ्यमित्यत्राह कस्मिन्नपीति। आस्तिकमतमध्ये कस्मिंश्चिदपि मते सत्ये प्रमाणे सति सर्वमतत्यजः सर्वास्तिकमतत्याजिनः हताः परलोकभ्रष्टाः स्युः। तद्दृष्ट्वा सर्वास्तिकमताप्रामाण्येन तु व्यर्थतामात्रम् अनुष्ठानवैयर्थ्य-

क्वापि सर्वैरवैमत्यात् पातित्यादन्यथा क्वचित् ।
स्थातव्यं श्रौत एव स्यात्तस्मिं श्शेषेऽपि तत्कृते ॥ १०० ॥
बभाण वरुणः क्रोधादरुणः करुणोज्झितम् ।
किं न प्रचण्डात् पाषण्डपाश ! पाशाद् बिभेषि नः ? ॥१०१
मानवाशक्यनिर्माणा कूर्माद्यङ्कविला शिला ।
न श्रद्धापयते मुग्धाः ! तिर्थिकाध्वनि वः कथम् ? ॥१०२।

---

मेव। धर्मजः धर्मोपचारजन्यः अनर्थः परलोकभ्रंशरूपस्तु नास्त्येव। एतच्च पाचिकत्वमभ्युपेत्योक्तं परमार्थं तु आस्तिकमतमेव ग्राह्यम् इति भावः ॥ ९९ ॥

तत्रापि वैदिकमतमेव ग्राह्यमित्याह क्वापीति। क्वापि कुत्रापि वैदिकमते अवैमत्यात् परलोकं प्रति असंविधानात् अन्यथाकरणाच्च पातित्वात् प्रत्यवायात् शेषे अवैदिकाचारे अपि तत्कृते पातित्यापातात् च क्वचित् कुत्रापि श्रौते एव धर्मे वैदिकाचारे एव सर्वैः स्थातव्यं स्थितिः करणीया स एव ग्राह्यः इत्यर्थः, तयोरेव कृत्यार्थखलर्थाः इति भावे कृत्यस्तव्यप्रत्ययः ॥ १०० ॥

बभाणेति। अथ वरुणः क्रोधात् अरुणः रक्ताङ्गः सन् करुणोज्झितम् उज्झितकरुणं निष्कृपं यथा तथा बभाण। तदेवाह—याप्यः पाषण्डः पाषण्डपाशः देवब्राह्मणापसदः याप्ये पाशप्। याप्यः कुत्सितः। हे पाषण्डपाश ! प्रचण्डात् क्रूरात् नः अस्माकं पाशायुधात् न बिभेषि किं? निजपाशेन बध्नाति वरुणः पापकारिणः इति किं न श्रुतम् ? इति भावः ॥ १०१ ॥

मानवेति। हे मुग्धाः ! मूढाः ! मानवानाम् अशक्यनिर्माणा निर्मातुम् अशक्या, कूर्माद्यङ्कं कूर्मवराहादिचिह्न

शतक्रतूरुजाद्याख्याविख्यातिर्नास्तिकाः! कथम्।
श्रुतिवृत्तान्तसंवादैर्न वश्चमदचीकरत्? ॥ १०३ ॥
तत्तज्जनकृतावेशान् गयाश्राद्धादियाचिनः।
भूताननुभवन्तोऽपि कथं श्रद्धथ न श्रुतीः? ॥ १०४ ॥
नामभ्रमाद् यमं नीतानथ स्वतनुमागतान्।
संवादवादिनो जीवान् वीक्ष्य मा त्यजत श्रुतीः ॥१०५॥

---

यस्य तद्विलं वक्त्रं यस्याः सा शिला शालग्रामशिला वः युष्मान् तिर्यिकाध्वनि श्रोत्रियमार्गे कथं न श्रद्धापयते न विश्वासयति? शास्त्रोक्तलक्षणसंवादित्वादिति भावः ॥ १०२ ॥

शतेति। हे नास्तिकाः! शतक्रतूरुजा इति आदिः यासां ताः आख्याः इन्द्रस्य वैश्यादिवर्णानां समाख्याः आदिशब्दात् पुरन्दरादिसंग्रहः। तासां विख्यातिः प्रसिद्धिः श्रुतिवृत्तान्तसंवादैः वेदव्यवहारप्रत्यभिज्ञानैः वः युष्मान् कथं न चमदचीकरत् न व्यस्मिस्मयत्? श्रुतिसंवादात् ग्रहीतव्येऽर्थे कुतो नास्तिवादावकाशः इत्यर्थः। १०३ ॥

श्रुतिप्रामाण्यमेव कुत इत्याशङ्क्य द्वाभ्यामुपपादयति तदित्यादि। तेषु तेषु जनेषु कृतावेशान् तन्मुखेन यत्किञ्चित् याचितुं कृतप्रवेशान् गयाश्राद्धादियाचिनः पिशाचित्वादिविमोचककर्मयाचकान् भूतान् ब्रह्मराक्षसादिदेवयोनिभेदान्, भूतोऽमी देवयोनयः इत्यमरः। अनुभवन्तः प्रत्यक्षेण पश्यन्तः अपि श्रुतीः तद्विधायकवेदान् कथं न श्रद्धथ न विश्वसिथ? ॥ १०४ ॥

नामेति। किञ्च, नामभ्रमात् नामसाम्यकृतभ्रान्तेः यमं नीतान् अथ स्वतनुम् आगतान् पुनर्यमाज्ञया स्वकार्यं प्रवि-

संरम्भैर्जम्भजैत्रादेः स्तभ्यमानाद् बलाद् बलन्।
मूर्ध्नि बद्धाञ्जलिर्देवानथैवं कश्चिदूचिवान्॥ १०६॥
नापराधी पराधीनो जनोऽयं नाकनायकाः!।
कालस्याहं कलेर्वन्दी तच्चाटुचटुलाननः॥ १०७॥
इति तस्मिन् वदत्येव देवाः स्यन्दनमन्दिरम्।
कलिमाकलयाञ्चक्रुर्द्वापरञ्चापरं पुरः॥ १०८॥
सन्ददर्शोन्नमद्ग्रीवः श्रीवद्दुत्वक्कताङ्कितान्।
तत्तत्पापपरीतस्तान् नाकीयान् नारकीव सः॥१०९॥

---

ष्टान् संवादवादिनः वेदसंवादियमलोकवृत्तान्तकथकान् जीवान् मर्त्त्यान् वीक्ष्य श्रुतीः वेदान् मा त्यजत, एकत्र प्रामाण्यदर्शनादन्यत्राप्यश्रद्धा न कार्य्या इत्यर्थः॥ १०५॥

संरम्भैरिति। जम्भजैत्रादेः इन्द्रादिवर्गस्य संरम्भैः कोपैः, संरम्भः सम्भ्रमे कोप इति विश्वः। स्तभ्यमानात् प्रतिबध्यमानात् बलात् सैन्यात् बलन् निर्गच्छन् कश्चित् धूर्त्तः वन्दी मूर्ध्नि बद्धाञ्जलिः सन् देवान् नत्वा नमस्कृत्य एवं वक्ष्यमाणम् ऊचिवान् उक्तवान्, ब्रुवः क्वसुः॥ १०६॥

यदूचिवान् तदाह। हे नाकनायकाः देवाः! अयं जनः पराधीनः न अपराधी, अहं कलेः कालस्य कलियुगादिदेवस्य तच्चाटुभिः तत्प्रियवादैः चटुलाननः चपलमुखः स्वामिचित्तानुकूल्यवन्दी क्षन्तव्य इति भावः॥ १०७॥

इतीति। इति इत्थं तस्मिन् वन्दिनि वदति जल्पति एव सति देवाः इन्द्रादयः स्यन्दनमन्दिरं रथस्थं कलिम् अपरं ततः अन्यं द्वापरं द्वापरयुगादिदेवञ्च पुरः अग्रे आकलयाञ्चक्रुः ददृशुः॥ १०८॥

सन्ददर्शेति। तैः तैः पापैः ब्रह्महत्यादिभिः परीतः परि-

गुर्व्या व्रीडावलीढ: प्रागभून्नमितमस्तक:।
स त्रिशङ्कुरिवाक्रान्तस्तेजसैव विडौजस: ॥ ११० ॥
विमुखान् द्रष्टुमप्येनं जनङ्गम इव द्विजान्।
एष मत्त: सहेलं तानुपेत्य समभाषत ॥ १११ ॥
स्वस्ति वास्तोष्पते ! तुभ्यं ? शिखिन्नस्ति न खिन्नता ?।
सखे काल ! सुखेनासि ? पाशहस्त ! मुदस्तव ? ॥११२॥

---

वेष्टित: स: कलि: श्रीबहुलेन कान्तिभूम्ना ज्ञाताद्भुतान् जनितविस्मयान् तान् नाकीयान् स्वर्गस्थान् इन्द्रादीन्, नरक: अस्यास्तीति नारकी नरकस्थ: इव, स्यान्नरकस्थस्तु नारकी इत्यमर:। उन्नमद्ग्रीव: उत्कन्धर: सन् सन्ददर्श ॥१०९॥

गुर्विति। प्राक् प्रथमं गुर्व्या व्रीड़या अवलीढ़: ग्रस्त:, व्रीड़ावमाननावज्ञा इत्यमर:। अथ त्रिशङ्कु: वशिष्ठशापदग्धवंश्य: राजा इव विड़ौजस: इन्द्रस्य तेजसा एव आक्रान्त: अभिभूत: स: कलि: नमितमस्तक: अभूत् ॥ ११० ॥

विमुखानिति। जनात् गच्छति इति जनङ्गम: चण्डाल:, चण्डालप्लवमातङ्गदिवाकीर्त्ति जनङ्गमा: इत्यमर:। गमश्चेति संज्ञायां खच्प्रत्यय इति क्षीरस्वामी। तं द्रष्टुम् अपि विमुखान् द्विजान् इव एनं कलिम् अपि द्रष्टुं विमुखान् किमुत सम्भाषणमिति भाव:। तान् इन्द्रादीन् मत्त: मदान्ध: कलि: सहेलं सावज्ञम् उपेत्य, हेलावज्ञाविलासयो: इति विश्व:। समभाषत सम्भाषितवान् ॥ १११॥

स्वस्तीति। वास्तोष्पते ! भुव:पते ! इन्द्र ! वास्तोष्पते इन्द्र वास्तोष्पति गृहमेधाच्छ: चेत्यस्मादेव निपातनादलुकि षत्वम्। तुभ्यं स्वस्ति क्षेमं ? स्वस्त्याशी: क्षेम पुण्यादौ

स्वयंवरमहे भैमीवरणाय त्वरामहे।
तदस्मानंनुमन्यध्वमध्वने तत्र धाविने ॥ ११३ ॥
ते ऽवज्ञाय तमस्योच्चैरहङ्कारमकारणम्।
ऊचिरेऽतिचिरेणैनं स्मित्वा दृष्टमुखा मिथः ॥ ११४ ॥
पुनर्वक्ष्यसि मा मैवं कथमुद्वक्ष्यसे नु सः।
सृष्टवान् परमेष्ठी यन्नैष्ठिकब्रह्मचारिणम् ॥ ११५ ॥

---

इत्यमरः। नमःस्वस्तीत्यादिना चतुर्थी। शिखिन्! अग्ने! खिन्नता खेदः न? सखे काल! यम! सुखेन असि वर्त्तसे? पाशहस्त! वरुण! तव मुदः मोदाः? सन्तीति शेषः। सर्वत्र काकुरनुसन्धेया ॥ ११२ ॥

स्वयमिति। हे देवाः! स्वयंवरः एव महः तस्मिन् उत्सवे भैमीवरणाय त्वरामहे। तत् तस्मात् अस्मान् तत्र धाविने स्वयंवरगामिने अध्वगमनाय इत्यर्थः अनुमन्यध्वम् अनुजानीध्वम् ॥ ११३ ॥

ते इति। ते देवाः अस्य कलेः तं पूर्वोक्तं उच्चैः उत्कटम् अकारणम् अहेतुकम् अहङ्कारं गर्वम् अवज्ञाय अविगणय्य अत एव अतिचिरेण अतिविलम्बेन मिथो दृष्टमुखाः परस्परमुखावलोकिनः सन्तः स्मित्वा ईषत् हसित्वा एनं कलिं ऊचिरे ऊचुः ॥ ११४ ॥

पुनरिति। हे कले! पुनः एनं मा मा वक्ष्यसि, सम्भ्रमे द्विरुक्तिः। नैवं वक्तव्यं यतो न सहामहे इत्यर्थः। अनक्लिप्त्यमर्षयोः किं वृत्ते ऽपीत्यमर्षार्थे वचेर्लृट्। सः त्वं कथं नु उद्वक्ष्यसे परिणेष्यसि, वहेर्लृट्। कुतः? यं त्वां परमे तिष्ठतीति परमेष्ठी पितामहः, परमे स्थः किच्चेति निराकरण-

द्रोहिणं द्रुहिणो वेत्तु त्वामाकर्ण्यावकीर्णिनम्।
त्वज्जनैरपि वा धातुः सेतुर्लङ्घ्यस्त्वया न किम्? ॥११६॥
अतिवृत्तः स वृत्तान्तस्त्रैलोक्ययुवगर्वनुत्।
आगच्छतामुपादानं स स्वयंवर एव नः॥ ११७॥
नागेषु सानुरागेषु पश्यत्सु दिविषत्सु च।
भूमिपालं नलं भैमी वरं साववरद् वरम्॥११८॥

---

मिति वक्तव्यात् षत्वम्। नैष्ठिकब्रह्मचारिणं यावज्जीवब्रह्मचारिणं सृष्टवान् स चालङ्घ्यशासनः इति भावः॥ ११५॥

द्रोहिणमिति। अथवा त्वज्जनैः त्वद्भृत्यैः कामक्रोधादिभिरपि धातु ब्रह्मणः सेतुः मर्यादानियोगः इति यावत् लङ्घ्यः लङ्घयितुं शक्यः, शकि लिङ् चेति चकारात् शक्यार्थे क्यप्रत्ययः। त्वया तत्स्वामिना द्रुहिणः किं न लङ्घ्यः? लङ्घ्यः एव इत्यर्थः। किन्तु अवकीर्णं स्खलितम् अनेनेत्यवकीर्णी क्षतव्रतः, इष्टादिभ्यश्चेति इप्रत्ययः। तम् अवकीर्णिनं अतएव द्रोहिणम् आज्ञालङ्घनापराधिनं त्वाम् आकर्ण्य द्रुहिणः ब्रह्मा एव वेत्तु जानातु यत् कर्त्तव्यं तत् इत्यर्थः॥ ११६॥

अतीति। किन्तु त्रैलोक्ये यूनां गर्वनुत् गर्वहन्ता सः वृत्तान्तः स्वयंवरप्रसङ्गः अतिवृत्तः अतीतः। कुतः? आगच्छतां नः अस्माकं स्वयंवरः एव उपादानम् अवस्थानं ततः एव आगच्छामः इत्यर्थः॥ ११७॥

नागेष्विति। नागेषु नागकुमारेषु च सानुरागेषु अनुरागयुक्तेषु दिविषत्सु देवेषु पश्यत्सु सत्सु, षष्ठी चानादरे इति चकारात् अनादरे सप्तमी। सा भैमी भूमिपालं नलं वरं नलमेव वरं वोढारम् अववरत् वृणोति स्म, वरयतेश्चौरादिकात् वीप्सायां तदन्ताल्लङ्, अग्लोपत्वेनासन्वद्भावादित्वदीर्घयोरभावः॥११८॥

भुजगेशानसद्देशान् वानरानितरान् नरान्।
अमरान् पामरान् भैमी नलं वेद गुणोज्ज्वलम्॥ ११८॥
इति श्रुत्वा स रोषान्धः परमश्चरमं युगम्।
जगन्नाशनिशारुद्रमुद्रस्तानुक्तवानदः॥ १२०॥
कयापि क्रीड़तु ब्रह्मा दिव्याः स्त्रीर्दीव्यत स्वयम्।
कलिस्तु चरतु ब्रह्म प्रैतु चातिप्रियाय वः॥ १२१॥

---

भुजगेति। भैमी भुजगेशान् महानागान् असद्देशान् अनाचारवेशान् इतरान् नलात् अन्यान् नरेन्द्रान् वानरान् अमरान् इन्द्रादीन् पामरान् नीचान्, विवर्णः पामरो नीचः इत्यमरः। वेद वेत्ति, विदो लटो वेति णलादेशः। नलम् एव गुणोज्ज्वलं गुणाढ्यं वेद॥ ११८॥

इतीति। इति इदं श्रुत्वा अतएव रोषेण अन्धः परमः अज्ञानपरवशः चरमं युगं चतुर्युगम् अपि सः कलिः जगन्नाशनिशा कालरात्रिः तत्र रुद्रः कालान्तकः तस्य मुद्रा इव मुद्रा प्रकारः यस्य सः तादृशः सन् तान् इन्द्रादीन् अदः वक्ष्यमाणं वाक्यम् उक्तवान्॥ १२०॥

यदुक्तं पुनर्वक्ष्यसीत्यादिना श्लोकद्वयेन तत्रोत्तरं सोल्लुण्ठमाह कयापीत्यादिना श्लोकद्वयेन। हे देवाः! ब्रह्मा कयापि अगम्ययापीति भावः। प्रजापतिर्वै स्वां दुहितरमभ्यगादिति श्रुतेः। क्रीडतु, स्वयं यूयञ्च दिव्याः स्त्रीः दिव्याभिः वेश्यादिभिरपीति भावः। कर्म चेति करणस्य कर्मत्वम्। दीव्यत क्रीडत, कलिस्तु वः युष्माकम् अतिप्रियाय अत्यन्तप्रियार्थं ब्रह्म चरतु नैष्ठिकः तिष्ठतु, प्रैतु म्रियतु म्रियताञ्च॥ १२१॥

चर्य्येव कतमेयं वः परस्मै धर्मदेशिनाम् ।
स्वयं तत् कुर्वतां सर्वं श्रोतुं यद् बिभितः श्रुतौ ॥ १२२ ॥
तत्र स्वयंवरेऽलम्भि भुवः श्रीर्नैषधेन सा ।
जगतो ह्रीश्च युष्माभिर्लाभस्तुल्याभ एव वः ॥ १२३ ॥
दूरान्नः प्रेक्ष्य यौष्माकी युक्तेयं वक्त्रवक्रणा ।
लज्जयैवासमर्थानां सुखमास्माकमीक्षितुम् ॥ १२४ ॥

---

ततः किं तत्राह चर्य्येवेति । परस्मै धर्मदेशिनां स्वयं तु यत् कर्म श्रुतौ कर्णौ श्रोतुं बिभितः, भीयो ह्रोऽन्यतरस्यामिति विकल्पादिकारः । सर्वं तत् पारदार्य्यादिकं कुर्वताम्, महत्यायै आरेति श्रुतेः । वः युष्माकं चर्य्या कतमा कीदृशी? अवाच्या इत्यर्थः । स्वयमनाचरिणां परोपदेशवचनं न विश्वसनीयम् इति भावः ॥ १२२ ॥

यदुक्तमिति स वृत्तान्त इत्यादिना श्लोकत्रयेण तत्रोत्तरं प्रपञ्चेनाह तत्रेत्यादिभिः षोडशभिः । हे देवाः! तत्र स्वयंवरे भुवः श्रीः भूलोकलक्ष्मीः सा भैमी नैषधेन नलेन अलम्भि लब्धा, लभेर्ण्यन्तात्कर्मणि लुङि विभाषा चिण्णमुलोः विकल्पान्नुमागमः । युष्माभिस्तु जगतः स्वर्लोकस्य ह्रीः अलम्भि स्वर्लोकलज्जाकरमिदमवमानमिति भावः । एवं वः युष्माकं लाभः नलस्य च, त्यदादीकशेषः । तुल्याभः समानस्फूर्त्तिः एकरूपः एव लब्धं एवं भिन्नमिति भावः ॥ १२३ ॥

दूरादिति । हे देवाः! दूरात् नः अस्मान् प्रेक्ष्य युष्माकम् इयं यौष्माकी, युष्मदस्मदोरन्यतरस्याम् इत्यण्प्रत्यये तस्मिन्नणि चेत्यादिना युष्माकादेशे टिड्ढाणञित्यादिना ङीप् । इयं वक्त्राणां वक्रणा वक्रीकरणं तिर्यङ्मुखत्वं, तत्करोतीति

स्थितं भवद्भिः पश्यद्भिः कथं भोः! तदसाम्प्रतम्।
निर्दग्धा दुर्विदग्धा किं सा दृशा न ज्वलत्क्रुधा? ॥१२५॥
महावंशानानादृत्य महान्तमभिलाषुका।
स्वीचकार कथङ्कारमहो सा तरलं नलम्॥ १२६॥
भवादृशैर्दिशामीशैर्मृग्यमाणां मृगीदृशाम्।
स्वीकुर्वाणः कथं सोढः क्षतव्रीडस्तृणं नलः॥ १२७॥

---

यस्मात् शुच्। लज्जया एव स्वापराधित्वादिति भावः। अस्माकम् इदम् आस्माकं यौष्माकीवत् प्रक्रिया, मुखम् ईक्षितुम् असमर्थानां सतां युक्ता॥ १२४॥

स्थितमिति। भोः देवाः! कथं पश्यद्भिः भवद्भिः स्थितम् उदासितं, भावे क्तः। तत् औदासीन्यम् असाम्प्रतम् अयुक्तम्। किं तर्हि तदकार्य्यं तदाह—दुर्विदग्धा दुर्विनीता सा भैमी ज्वलत्क्रुधा दीप्यमानकोपया दृशा किं न निर्दग्धा दग्धा एव उचिता इत्यर्थः॥ १२५॥

दाक्षत्वे हेतुमाह महेति। महान्तम् उत्कृष्टपुरुषम् अभिलाषुका कामयमाना, लषपतेत्यादिना उकङ्प्रत्ययः, न लोकेत्यादिना षष्ठीप्रतिषेधः। सा भैमी महावंशान् उत्कृष्टकुलान् महतः वेणून् च, वंशो वेणौ कुले वर्गे इति विश्वः। अनादृत्य अवधीर्य्य तरलं चपलं नलं राजानं तृणविशेषञ्च, नलः पोटगले राज्ञि इति विश्वः। कथङ्कारं कथम् इत्यर्थः अन्यथैव कथं इत्यादिना णमुल्प्रत्ययः। स्वीचकार वव्रे, अहो! इत्याश्चर्य्ये। नदीवेगे सति वेणुं परित्यज्य तृणावलम्बनवदुपहास्यमिदं चेष्टितमिति भावः॥ १२६॥

भवादृशैरिति। भवादृशैः भवद्विधैः दिशाम् ईशैः दिक्-

दारुणः कूटमाश्रित्य शिखो साक्षी भवन्नपि।
नावहत् किं तदुद्वाहे कूटसाक्षिक्रियामयम्॥ १२८॥
अहो महःसहायानां सम्भूता भवतामपि।
क्षमैवास्मै कलङ्काय देवस्येवामृतद्युतेः॥ १२९॥
सा वव्रे यं तमुत्सृज्य मन्नमीर्ष्याजुषः स्व किम्?।
कृतागःसद्मनस्तस्मात्क्षमनाद्याच्छिनद्मि ताम्॥१३०॥

---

पालैः मृग्यमाणाम् अन्विष्यमाणां मृगेक्षणां भैमीं स्वीकुर्वाणः गृह्णन् अतएव कृतव्रीडः भवतां कृतावज्ञः, व्रीड़ावमाननाव-ज्ञेत्यमरः। तृणं तृणकल्पः नलः कथं सोढः क्षान्तः? महद्भिः हि परिभवो न सोढव्यः इत्यर्थः॥ १२७॥

दारुण इति। अयं शिखो शिखावान् अग्निः दारुणः काष्ठस्य कूटं राशिं आश्रित्य साक्षित्वादिति भावः। अन्यत्र दारुणः क्रूरकर्मा सर्वदाहकत्वादिति भावः। अएव कूटं कपटं आश्रित्य साक्षी भवन्नपि कपटसाक्षिशीलोऽपि सन्निति च गम्यते। तदुद्वाहे तयोः दमयन्तीनलयोः विवाहे कूटसा-क्षिणः क्रियां अनृतवचनव्यापारं किं नावहत् तदानग्निसा-क्षिकोऽयं न सिध्येदिति भावः॥ १२८॥

अहो इति। अहो देवाः! महःसहायानां तेजस्विनां भवताम् अमृतद्युतेः देवस्य इन्दोः इव क्षमा क्षान्तिः एव। अन्यत्र क्षितिः एव अस्मै ओपरिभवरूपाय कलङ्काय अपवा-दाय सम्भूता सञ्जाता क्षमाकारणात् स्त्रियः अपि न गणय-न्तीति भावः। क्षितिक्षान्त्योः क्षमा कलङ्कोऽङ्कापवादयोरिति चामरः। चन्द्रे श्यामिका भूच्छायैवेति केचित्॥ १२९॥

सेति। हे देवाः! सा भैमी यं नलं वव्रे तम् उत्सृज्य

यतध्वं सहकर्त्तुं मां पाञ्चाली पाण्डवैरिव।
सापि पञ्चभिरस्माभिः संविभज्यैव भुज्यताम् ॥ १३१ ॥
अथापरिहृढा सोढुं मूर्खतां मुखरस्य ताम्।
चक्रे गिरा शराघातं भारती सारतीव्रया ॥ १३२ ॥
कीर्त्तिं भैमीं वरांश्चास्मै दातुमेवागमन्नमी।
न सोढे धीरवैदग्ध्यां धीरगम्भीरगाहिनी ॥ १३३ ॥

---

अपराधिनं तं विहाय किं किमर्थं मह्यं मां प्रति, क्रुधद्रुहेत्यादिना सम्प्रदानत्वाच्चतुर्थी। ईर्ष्याजुषः स्थ कोपभाजः स्थ ब्रूत। अस्तु वा अहमेव आगःसद्मनः अपराधाकरात् तस्मात् नलात् अद्यैव तां भैमीं छद्मना कपटेन आच्छिनद्मि आहरामि, सामीप्ये वर्त्तमाननिर्देशः ॥ १३० ॥

ततः किमस्माकमत आह यतध्वमिति। पाञ्चाली द्रौपदी पाण्डवैः इव सा भैमी च अस्माभिः मया युष्माभिः चतुर्भिश्च, त्यदाद्येकशेषः। पञ्चभिः संविभज्य भुज्यतां, किन्तु मां सहकर्त्तुं सहायीभवितुं यतध्वम् अतो माम् अनुमन्यध्वं इति भावः ॥ १३१ ॥

अथेति। अथ कलिप्रलापानन्तरं भारती सरस्वती मुखरस्य प्रलपतः कलेः तां तादृशीं मूर्खतां मूढतां सोढुम् अपरिहृढा असमर्था सती, प्रभौ परिहृढ इति निपातनात् साधुः। सारेण अभिनिवेशेन तीव्रया तीक्ष्णया गिरा वाचा एव शराघातं शरप्रहारं चक्रे वाक्सायकेन जघान इत्यर्थः ॥ १३२ ॥

कीर्त्तिमिति। हे शठ! अमी देवाः अस्मै नलाय कीर्त्तिं पुण्यश्लोकतां भैमीं वरान् ईप्सितान् च दातुम् एव अगमन् आगताः, न तु स्वयं तां परिग्रहीतुं परिणेतुं, गमेर्लुङि-

वाग्मिनीं जडजिह्वस्तां प्रतिवक्तुमशक्तिमान्।
लीलावहेलितां कृत्वा देवानेवावदत् कलिः ॥ १३४ ॥
प्रोज्झि वाञ्छितमस्माभिरपि तां प्रति सम्प्रति।
तस्मिन् नले न लेशोऽपि कारुण्यस्यास्ति नः पुनः ॥१३५॥
वृत्ते कर्मणि कुर्मः किं तदा नाभूम तत्र यत्।
कालोचितमिदानीं नः शृणुतालोचितं सुराः! ॥१३६॥
प्रतिज्ञेयं नले विज्ञाः! कलेर्विज्ञायतां मम।

---

त्वात् चूरङादेशः। तथाहि, अगम्भीरगाहिनी असूक्ष्मग्राहिणी धीः त्वादृशां बुद्धिः धीराणां मनीषिणां वैदग्धीं धीरवैदग्धीं स्थिराभिप्रायं न लीढे न आस्वादयति न वेत्ति इत्यर्थः ॥१३३॥

वाग्मिनीमिति। जडजिह्वः अप्रगल्भवाक् कलिः वाग्मिनीं प्रगल्भवाचं तां भारतीं सरस्वतीं प्रतिवक्तुम् अनीश्वरः असमर्थः सन् लीलाविशेषेण अवहेलिताम् अवधीरितां कृत्वा अगणयित्वेत्यर्थः देवान् एव अवदत् ॥ १३४ ॥

प्रोज्झीति। सम्प्रति अस्माभिः अपि तां भैमीं प्रति वाञ्छितम् इच्छां प्रोज्झि प्रोज्झितं, उज्झतेः कर्मणि लुङ्। पुनः किन्तु सम्प्रति तस्मिन् नले नः अस्माकं कारुण्यस्य लेशः अपि न अस्ति ॥ १३५ ॥

अकरणस्तं कृतार्थं किं करिष्यतीत्याशङ्क्याह वृत्ते इति। हे सुराः! देवाः! वृत्ते गते कर्मणि भैमीवरणकर्मणि किं कुर्मः? न किञ्चित् इत्यर्थः। यत् यस्मात् तदा तत्काले तत्र स्वयंवरे न अभूम नास्म इत्यर्थः। किन्तु कालोचितम् एतत् कालोचितं इदानीम् अस्मिन् काले नः अस्माकम् आलोचितं पुनः, भावे क्तः। शृणुत ॥ १३६ ॥

प्रतिज्ञेति। हे विज्ञाः! नले विषये कलेः मम इयं

तेन भैमीञ्च भूमिञ्च त्याजयामि जयामि तम्॥ १३७॥
नैषधेन विरोधं मे चण्डतामण्डितौजसः।
जगन्ति हन्त गायन्तु रवेः कैरववैरवत्॥ १३८॥
द्वापरः साधुकारेण तद्विकारमदीदिपत्।
प्रणीय श्रवणे पाणिमवोचन्नमुचेः रिपुः॥ १३९॥
विस्मेयमतिरस्मासु साधु वैलक्ष्यमीक्षसे।
यद्दत्तेऽल्पमनल्पाय तद्दत्ते ह्रियमात्मने॥ १४०॥

---

प्रतिज्ञा विज्ञायताम् अवधार्य्यताम्। तामेवाह—तेन नलेन प्रयोज्येन भैमीञ्च भूमिञ्च राज्यञ्च त्याजयामि अतएव तं नलं जयामि, उभयत्र सामीप्ये वर्त्तमानप्रत्ययः॥ १३७॥

नैषधेनेति। चण्डतामण्डितौजसः क्रौर्य्योपस्कृततेजसः मे कलेः नैषधेन नलेन सह विरोधं रवेः कैरवैः कुमुदैः वैरवत् तत्तुल्यं जगन्ति लोकाः गायन्तु, हन्तेति हर्षे॥ १३८॥

द्वापर इति। द्वापरः कलेः सहचारियुगविशेषः साधुकारेण साधु इति अनुकरणेन तस्य कलेः विकारं प्रलापम् अदीदिपत् अवीवृधत्, दीप्यतेर्णौ चङि भ्राजभासभाषदीपजीवेत्यादिना विकल्पादुपधाह्रस्वः, दीर्घो लघोरित्यभ्यासदीर्घः। अथ नमुचेः रिपुः इन्द्रः श्रवणे कर्णौ पाणिं प्रणीय निधाय कर्णौ पिधाय इत्यर्थः, अवोचत्॥ १३९॥

विस्मयेति। हे कले! विस्मेयमतिः विस्मयनीयबुद्धिः त्वम् अस्मासु वैलक्ष्यं क्षीणताम् ईक्षसे पश्यसि साधु जगतो क्षीणस्त्वं युष्माभिरिति यदुक्तं तत् साधु उक्तम् इत्यर्थः। कुतः? अनल्पाय महार्हाय यत् दत्ते तत् अल्पदत्तम् आत्मने दात्रे ह्रियं दत्ते अधिकदानार्हाय अल्पदानं दातुरेव ह्रीकरम् इत्यर्थः॥ १४०॥

फलसीमां चतुर्वर्गं यच्छतांशोऽपि यच्छति ।
नलस्यास्मदुपज्ञा सा भक्तिर्भूतावकेशिनी ॥ १४१ ॥
भव्यो न व्यवसायस्ते नले साधुमतौ कले ! ।
लोकपालविशालोऽसौ निषधानां सुधाकरः ॥ १४२ ॥
न पश्यामः कलेस्तस्मिन्नवकाशं क्षमाभृति ।
निचिताखिलधर्मे च द्वापरस्योदयं वयम् ॥ १४३ ॥

---

ततः किमत आह फलेति। यच्छतांशः यस्याः भक्तेः शततमांशः अपि, सङ्ख्याशब्दस्य वृत्तिविषये पूरणार्थत्वं विभागवत्। फलसीमां फलावधिं चतुर्वर्गं पुरुषार्थचतुष्टयं यच्छति ददाति, पाघ्रादिना यच्छादेशः। वयम् उपज्ञः आश्रयः यस्याः सा अस्मदुपज्ञा, उपज्ञ आश्रय इति निपातः। सा नलस्य भक्तिः अवकं शून्यम् इष्टे इत्यवकेशिनी निष्फला, ताच्छील्ये निःस्वनेभ्यो ङीप्। वन्ध्योऽफलोऽवकेशी चेत्यमरः। भूता तद्भक्तिः चतुर्वर्गदानम् अपि न फलं न पर्य्याप्तं किं पुनर्भैमीदानमिति ऋणिनाम् अस्माकं युक्ता एव स्त्रीः इति भावः ॥ १४१ ॥

भव्य इति। हे कले! साधुमतौ सद्बुद्धौ नले ते तव व्यवसायः उद्योगः भव्यः स्वन्तः न। कुतः ? निषधानां सुधाकरः असौ नलः लोकपालविशालः, अतः तदपकारो न श्रेयस्करः इति भावः ॥ १४२ ॥

नेति। किञ्च, क्षमाभृति क्षान्तिभृति अतएव तस्मिन् नले कलिपुरुषस्य कलहस्य च अवकाशं वयं न पश्यामः, धर्मेण भूमिं पालयतः क्षान्तस्य कुतः कलिदोषः कलहो वेति भावः। किन्तु निचिताः अखिलधर्माः येन तस्मिन् नले

सा विनीततमा भैमी व्यर्थानर्थग्रहैरहो ।
कथं भवद्भिर्वाध्या प्रमितिर्विभ्रमैरिव ॥ १४४ ॥
तन्नासत्ययुगं तां वा त्रेता स्पर्द्धितुमर्हति ।
एकप्रकाशधर्माणं न कलिद्वापरौ ! युवाम् ॥ १४५ ॥
करिष्येऽवश्यमित्युक्त्वा करिष्यन्नपि दुष्यसि ।
दृष्टादृष्टा हि नायत्ताः कार्य्योपा हेतवस्तव ॥ १४६ ॥

---

द्वापरस्य तृतीययुगस्य सन्देहस्य च अवकाशं न पश्यामः, द्वापरौ युगसंशयौ इत्यमरयादवौ। धर्मसाकल्यनिश्चयज्ञानयोः तद्विरोधित्वात् इति भावः ॥ १४३ ॥

सेति। किञ्च, विनीततमा अतिसाध्वी सा भैमी व्यर्थः निष्प्रयोजनः अनर्थग्रहः अकार्य्याभिनिवेशः येषां तैः भवद्भिः युष्माद्दृशैः प्रमितिः सम्यगनुभूतिः विभ्रमैः मिथ्याज्ञानैः इव कथं बाध्या बाधितुं शक्या ? न शक्या इत्यर्थः। पातिव्रत्यतेजसो दुर्धर्षत्वात् इति भावः। अतएवाहो इत्याश्चर्य्याविष्कारः ॥ १४४ ॥

तदिति। हे कलिद्वापरौ ! युगविशेषौ ! प्रकाशधर्मा प्रकाशपुण्यः तेजःस्वभावश्च, धर्मादनिच्केवलादन्। धर्मः पुण्ययमन्यायस्वभावाचारसोमपाः इत्यमरः। एकः केवलसहायः प्रकाशधर्मा तम् एकप्रकाशधर्माणम्, एतत् स्त्रियामपि योज्यम्। ईदृशं तं नलं तां दमयन्तीं वा [illegible]त्यस्य युगं कृतयुगापेक्षया अधर्मयुगं त्रेता युगविशेषः अग्नित्रयञ्च, त्रेताग्नित्रितये युगः इत्यमरः। स्पर्धितुं नार्हति नासत्ययोर्युगमश्विनोर्द्वयञ्च तं नलं स्पर्धितुं नार्हति, सौन्दर्य्येणेति च गम्यते ॥ १४५ ॥

करिष्ये इति। हे कले ! अवश्यं करिष्ये इत्युक्त्वा सर्वथा

द्रोहं मोहेन यस्तस्मिन्नाचरेदचिरेण सः।
तत् पापसम्भवं तापमाप्नुयादनयात् ततः॥ १४७॥
युगश्रेष! तव द्वेषस्तस्मिन्नेष न साम्प्रतम्।
भविता न हितायैतत् वैरं ते वैरसेनिना॥ १४८॥
तत्र यामीत्यसज्ज्ञानं राजसं परिहार्य्यताम्।
इति तत्र गतो मा गाः राजसंसदि हास्यताम्॥ १४९॥
अपरेऽपि दिशामीशा वाचमेनां शचीपतेः।

---

पापं करिष्यामि इति प्रतिज्ञाय करिष्यन् अपि चिकीर्षुरपि दुष्यसि दुष्टोऽसि, किमुत कृत्वा इति भावः। तथाहि, कार्य्यस्य इमे कार्य्योयाः, वृद्धाच्छः। दृष्टादृष्टहेतवः दृष्टादृष्टकारणानि तव आयत्ताः अधीनाः न, किन्तु बलादपि कार्य्यमुत्पादयन्ति तस्मात् दूर्वारस्ते दोषभावः॥ १४६॥

द्रोहमिति। किञ्च, यः मोहेन तस्मिन् नले विषये द्रोहम् अपकारम् आचरेत्, सः अचिरेण ततः तस्मात् अनयात् दुर्नयात् हेतोः तत्पापसम्भवं ततः द्रोहजन्यं तापं तीव्रयातनाम् आप्नुयात्॥ १४७॥

युगेति। हे युगश्रेष! युगाधम! कले! तव तस्मिन् नले एषः द्वेषः न साम्प्रतं न युक्तं, वैरसेनिना नलेन सह एतत् वैरं ते तव हिताय न भविता न भविष्यति॥ १४८॥

तत्रेति। हे कले! तत्र स्वयंवरे यामि यास्यामीति सामीप्ये वर्त्तमानप्रयोगः। उत्पद्यमानं राजसं रजःप्रयुक्तम् असत् ज्ञानं दुर्बुद्धिः परिहार्य्यतां निरस्यताम्, इति इत्थं रागात् तत्र गतः सन् राजसंसदि राजसभायां हास्यताम् उपहास्यतां मा गाः॥ १४९॥

अपरे इति। अपरे अन्ये दिशाम् ईशाः अम्बादयः अपि

अन्वमन्यन्त किन्त्वेनां नाद्दत युगयोर्युगम् ॥ १५० ॥
कलिं प्रति कलिं देवा देवान् प्रत्येकशः कलिः।
सोपहासं समैर्वर्णैरित्थं व्यरचयन्मिथः ॥ १५१ ॥
तवागमनमेवार्हं वैरसेनौ तया वृते।
उद्वेगेन विमानेन किमनेनापि धावता ? ॥१५२॥
पुरा यासि वरीतुं यामग्र एव तया वृते।
अन्यस्मिन् भवतो हास्यं वृत्तमेतत्त्रपाकरम् ॥ १५३ ॥

---

एनां शचीपतेः वाचम् अन्वमन्यन्त, ते अपि तथैव ऊचुः इत्यर्थः, किन्तु एनां वाचं युगयोः कलिद्वापरयोः युगं युग्मं कर्त्तृ न आददे न स्वीचकार ॥ १५० ॥

कलिमिति। देवाः कलिं प्रति कलिश्च देवान् प्रति एकशः प्रत्येकं, वीप्सायां शस्। सोपहासं समैः वर्णैः उभयसाधारणशब्दैः इत्थं वक्ष्यमाणभङ्ग्या मिथः कलिं कलहं व्यरचयन् ॥ १५१ ॥

कलहप्रकारमेवाह तवेति। हे मूर्ख ! तया भैम्या वैरसेनौ नले वृते सति तव स्वयंवरे अगमनम् अप्रयाणम् एव अर्हम्, अतएव उद्वेगेन धावता अनेन विमानेन व्योमयानेन किम् ? अन्यत्र, हे देवाः ! तव स्वयंवरे तया नले वृते सति आगमनं ततः प्रत्याहरणम् अर्हं, गमेर्ण्यन्तात् ल्युट्। तव अनेन अपिधा अपिधानम्, आतश्चोपसर्गे इ[illegible]त्ययः। तद्वता निगूहितेन विमानेन मानराहितेन उद्वेगेन वृथा व्यर्थम् अनेन किम् ? अत्र द्वयोः अर्थयोः प्रकृतत्वात् केवलप्रकृतश्लेषः ॥ १५२ ॥

पुरेति। यां भैमीं वरीतुं पुरा यासि यास्यसि, यावत्पुरानिपातयोर्लट्। तया अग्रे एव प्राक् एव अन्यस्मिन्

पत्यौ तया वृतेऽन्यस्मिन् यदर्थं गतवानसि ।
भवतः कोपरोधस्तादधमस्य वृथारुषः ॥ १५४ ॥
यासि स्मरं जयन् कान्त्या योजनौघं महार्वता ।
समूढस्त्वं वृतेऽन्यस्मिन् किं न ह्रीस्तेऽत्र पामर ! ॥१५५॥

---

वृते सति त्रपायाः आकरम् आकरायितं वृत्तं जातम् एतत् भवतः आस्यं मुखं हा शोचामः इत्यर्थः । हा विषादादिष्वित्यमरः । अभितः परितः इत्यादिना हाशब्दयोगे द्वितीया ॥ १५३ ॥

पुनः पूर्ववत् श्लोकद्वयेन मिथः कलहमाह पत्याविन्यादि । हे कले ! यस्यै यदर्थं गतवान् असि, तया भैम्या अन्यस्मिन् पत्यौ वृते सति अधमस्य कार्य्याशक्तस्य अतएव वृथारुषः निष्फलकोपस्य भवतः कोपरोधः स्तात् कोपस्य निरोधः अस्तु, अस्तेर्लोटि तातङादेशः । अन्यत्र तु, हे शक्र ! अधमस्य भवतः तव अधस्तात् अधरः कः अपरः कः अन्यः त्वत्तः अधमः कश्चिन्नास्ति इत्यर्थः । समानमन्यत् । दिक्शब्देभ्यः सप्तमी इत्यादिना अधरशब्दात् प्रथमार्थे अस्तातिप्रत्ययः, अस्तोति चेत्युदादेशः, षष्ठ्यतसर्थप्रत्यये नेति तद्योगे षष्ठी ॥ १५४ ॥

यासीति । हे पामर ! नीच ! कले ! विवर्णः पामरो नीचः इत्यमरः । त्वं महार्वता महाश्वेन विमानेन समूढः सम्यक् ऊढः सन् कान्त्या सौन्दर्य्येण स्मरं स्मरकायं जयन् तत्कल्पः सन्नित्यर्थः, योजनानां योजनाख्याध्वमानानां ओघं, योजनन्तु चतुष्क्रोशमिति भावः । यासि गच्छसि, किन्तु अत्र स्वयंवरे अन्यस्मिन् वृते सति ते ह्रीः न किम् ? अन्यत्र तु, हे अत्रप ! निर्लज्ज ! अमर ! दैवत ! यः त्वं कान्त्या कामनीयकेन जनौघं जनसङ्घं रञ्जयन् महार्वता महाश्वेन यासिस्म,

नलं प्रत्यनपेतार्त्ति तार्त्तीयीकतुरीययोः ।
युगयोर्युगलं बुद्धा दिवि देवा धियं दधुः ॥१५६॥
द्वापरैकपरीवारः कलिर्मत्सरमूर्च्छितः ।
नलनिग्राहिणीं यात्रां जग्राह ग्रहिलः किल ॥१५७॥
नलेष्टापूर्त्तसम्पूर्त्तैर्दूरदुर्गानमुं प्रति ।
निषेधन् निषधान् गन्तुं विघ्नः सम्भ्रमटे घनः ॥१५८॥

---

स त्वं मूढः असि, अतएव अमुष्मिन् व्रते तव क्षोः किम् ? पूर्ववदलङ्कारः ॥ १५५ ॥

नलमिति। अथ देवाः तार्त्तीयीकतुरीययोः तृतीयचतुर्थयोः युगयोः द्वापरकल्योः युगं कर्म नलं प्रति अनपेता आर्त्तिः पीड़नेच्छा यस्य तत् बुद्धा विविच्य दिवि धियं दधुः दिवं गन्तुम् ऐषुः इत्यर्थः। तृतीयादौ कः स्वार्थे वक्तव्यः चतुरश्छयतै तावित्कतुरीयमिति ॥ १५६ ॥

द्वापरेति। मत्सरमूर्च्छितः मूर्च्छितमत्सरः मत्सरप्रवृद्ध-वैरः, आहिताग्न्यादिषु द्रष्टव्यः। अतएव ग्रहिलः आग्रह-वान् पिच्छादित्वात् मत्वर्थीय इलच्प्रत्ययः। कलिः द्वापरः एकः एव परीवारः यस्य तथाभूतसहायः सन्नित्यर्थः नलनिग्राहिणीं नलनिग्रहार्थाम् इत्यर्थः, यात्रां जग्राह किल खलु ॥ १५७ ॥

नलेति। नलस्य इष्टापूर्त्तयोः क्रतुखातादिकर्मणोः, त्रिष्वथ क्रतुकर्मेष्टं पूर्त्तं खातादिकर्मणीत्यमरः। सम्पूर्त्तैः अभिव्याप्तैः अमुं कलिं प्रति दुःखेन गच्छन्ति एष्विति दुर्गेषु, दुरोर्धिकरणमुपसङ्ख्यानमिति डप्रत्ययः। तान् दूरदुर्गान् अतिदुर्गमान् निषधान् देशान् गन्तुं निषेधन् गमनं प्रति-

कियतापि च कालेन कालः कलिरुपेयिवान् ।
भैमीभर्त्तुरवंमानो राजधानीं महीभुजः ॥१५९॥
वेदानुच्चरतां तत्र मुखादाकर्णयन् पदम् ।
न प्रसारयितुं कालः कलिः पदमपारयत् ॥१६०॥
श्रुतिपाठकवक्त्रेभ्यस्तत्राकर्णयतः क्रमम् ।
क्रमः सङ्कुचितस्तस्य पुरे दूरमवर्त्तत ॥१६१॥
तावन्नतिर्धृताटोपा पादयोस्तेन संहिता ।

---

बध्नन् घनः निरन्तरः विघ्नः सञ्चघटे घटितवान् इत्यर्थः । धर्मगुप्ततया निषधदेशाः कलिनापि दुष्प्रवेशा बभूवुरित्यर्थः ॥ १५८ ॥

कियतेति । अथ कियता च कालेन अवंमानो अहङ्कारी कलिः कालः भैमीभर्त्तुः महीभुजः नलस्य राजानः धीयन्ते अस्यामिति राजधानी नगरी, करणाधिकरणयोश्चेत्यधिकरणार्थे ल्युट् । ताम् उपेयिवान् उपगतः, निपातनात् साधुः ॥ १५९ ॥

अथात्र संहितादित्रिविधाध्ययनसम्पत्तिं क्रमादनादरेणाह वेदानिति । तत्र राजधान्यां वेदान् उच्चरताम् उच्चारयताम् अधीयानानाम् इत्यर्थः, मुखात् पदं मन्त्रचतुर्थांशपराख्यं पदजातम् आकर्णयन् पदं प्रसारयितुं न अपारयत् न अशक्नोत् ॥ १६० ॥

श्रुतीति । तत्र पुरे श्रुतिपाठकवक्त्रेभ्यः वेदाध्येतृमुखेभ्यः क्रमम् उभयापराख्यं पदजातम् आकर्णयतः तस्य कलेः क्रमः पादन्यासः सङ्कुचितः सन् दूरम् अवर्त्तत प्रवेशाशक्त्या दूरे स्थितः इत्यर्थः ॥ १६१ ॥

तावदिति । तावत् तत्पर्य्यन्तं तेन कलिना पादयोः

न वेदपाठिकण्ठेभ्यो यावदश्रावि संहिता ॥१६२॥
तस्य होमाज्यगन्धेन नासा नाशमिवाऽगमत् ।
तत्रातत दृशौ नासौ क्रतुधूमकदर्थिते ॥१६३॥
अतिथीनां पदाम्भोभिरिमं प्रत्यतिपिच्छिले ।
अङ्गणे गृहिणामत्र खलेनानेन चस्खले ॥ १६४ ॥
पुटपाकमिव प्राप क्रतुशुष्ममहोऽम्भिः ।
तत्प्रत्यङ्गमिवाकर्त्ति पूर्त्तोर्मिव्यजनानिलैः ॥ १६५ ॥

---

धृताटोपा ससम्भ्रमा गतिः संहिता सङ्गता यावत् वेदपाठिनाम् अध्येतॄणां कण्ठेभ्यः मुखेभ्यः संहिता न अश्रावि न श्रुता; तच्छ्रृणोतिस्तुभय एव पादयोरिति भावः। तदेतदारण्यके— "श्रुतं अन्नाद्यकामो निर्भुजं ब्रूयात् स्वर्गकामः प्रतृण्णन् उभयमन्तरेण" इति ॥ १६२ ॥

तस्येति। तत्र पुरे होमाज्यगन्धेन तस्य कलेः नासा घ्राणेन्द्रियं नाशम् अगमत् इव, असौ कलिः क्रतुधूमेन कदर्थिते अन्धीकृते दृशौ नेत्रे नातत न अतनिष्ट नोन्मीलितवान् इत्यर्थः। तनोतेर्लुङि तङ्, तनादिभ्यस्तथासोरिति सिच्लुक् पक्षे अनुदात्तोपदेशेत्यादिना अनुनासिकलोपः ॥१६३॥

अतिथीनामिति। अत्र पुरे अतिथीनां पदाम्भोभिः पादप्रक्षालनोदकैः अमुं कलिं प्रति अतिपिच्छिले तोयबाहुल्यात्, अतिमसृणे पिच्छादित्वादिलच्प्रत्ययः। गृहिणां गृहस्थानां अङ्गणे चत्वरे खलेन धूर्त्तेन अनेन कलिना चस्खले स्खलितम्। भावे लिट् ॥ १६४ ॥

पुटेति। असौ कलिः क्रतुषु शुष्माणाम् अग्नीनां महोऽम्भिः महाविदाहैः, वह्निः शुष्मा कृष्णवर्त्मा इत्यमरः। पुट-

पितृणां तर्पणे वर्णैः कीर्णाद् वेश्मनि वेश्मनि ।
कालादिव तिलात् कालाद् दूरमत्रसदत्र सः ॥ १६६ ॥
स्नातॄणां तिलकैर्मेने स्वमन्तर्दीर्णमेव सः ।
कृपाणीभूय हृदयं प्रविष्टैरिव तस्य तैः ॥१६७॥
पुमांसं मुमुदे तत्र विन्दन् मिथ्यावदावदम् ।
स्त्रियं प्रति तथा वीक्ष्य तमथ म्लानवानयम् ॥ १६८ ॥

---

पाकं गूढपाकं प्रापत् इवेत्युत्प्रेक्षा। पूर्त्तानां वापीतड़ागादीनाम् ऊर्मयः एव व्यञ्जनानि तेषाम् अनिलैः तत्प्रत्यङ्गं तस्य कलेः अङ्गजातं, वीप्सायामव्ययीभावः। अकर्त्ति इव कृत्तम् इवेत्युत्प्रेक्षा। कृतिच्छेदन इति धातोः कर्मणि लुङ् ॥१६५॥

पितृणामिति। सः कलिः तत्र पुरे वेश्मनि वेश्मनि गृहे गृहे, वीप्सायां द्विर्भावः। वर्णैः चातुर्वर्ण्येन पितृणां तर्पणे तर्पणकर्मणि कीर्णात् विक्षिप्तात् कालात् तिलात् कृष्णतिलात् कालात् मृत्योः इव अत्रसत् त्रस्तः, कालो मृत्यौ महाकाले यमयोर्यमकृष्णयोः इति विश्वः ॥ १६६ ॥

स्नातॄणामिति। तस्य कलेः हृदयं कृपाणीभूय खड्गीभूय प्रविष्टैः इव स्थितैः प्रसिद्धैः स्नातॄणां स्नायिनां तिलकैः सः कलिः स्वम् आत्मानम् अन्तर्दीर्णम् एव मेने ॥ १६७ ॥

पुमांसमिति। अथ कलिः तत्र पुरे मिथ्या अनृतं तस्याः वदावदं वक्तारं, चरिचलीत्यादिना द्वित्वमात्वमभ्यासस्येति साधुः। पुमांसं विन्दन् पश्यन् मुमुदे तद्द्वारा प्रावत्तमिति भावः। अथ स्त्रियं प्रति तथा मिथ्या वदन्तं वीक्ष्य नर्मोक्तिं ज्ञात्वेत्यर्थः, म्लानवान् म्लानः अभूत् अत्र दोषाभावादिति भावः। संयोगादेरातोधातोर्यण्वत इति निष्ठानत्वम् ॥ १६८ ॥

यज्ञयूपघनां जज्ञौ स पुरं शङ्कुसङ्कुलाम् ।
जनैर्धर्मधनैः कीर्णां व्यालक्रोडीकृताश्च ताम् ॥ १६९ ॥
स पार्श्वमशकद्गन्तुं न वराकः पराकिणाम् ।
मासोपवासिनां छाया लङ्घने घनमस्खलत् ॥ १७० ॥
आवाहितां द्विजैस्तत्र गायत्रीमर्कमण्डलात् ।
स सन्निदधतीं पश्यन् दृष्टनष्टोऽभवद्भिया ॥ १७१ ॥
स गृहे गृहिणां पूर्णे वने वैखानसैर्वृते ।
यत्याधारेऽमरागारे क्वापि न स्थानमानशे ॥ १७२ ॥

---

यज्ञेति । सः कलिः यज्ञयूपैः घनां निरन्तरां पुरं शङ्कुसङ्कुलां शूलाकीर्णां तां पुरीं व्यालैः सर्पैः श्वापदैः वा क्रोडीकृतां अङ्गीकृतां जज्ञौ तथा दुरासदाम् अमन्यत इत्यर्थः । व्यालो भुजङ्गमे क्रूरे श्वापदे दुष्टदन्तिनि इति विश्वः ॥१६९॥

स इति । वराकः तुच्छः सः कलिः पराकिणां कृच्छ्रविशेषचारिणां "द्वादशाहोपवासस्तु पराकः परिकीर्त्तितः" इति स्मरणात् । पार्श्वं समीपं गन्तुं न अशकत्, शक्नोतेर्लिदित्वात् च्लेरङादेशः । मासोपवासिनां तु छायालङ्घने छायाक्रमणे घनं भृशम् अस्खलत् दुरासदत्वात् तपस्विनाम् इति भावः ॥ १७० ॥

आवाहितामिति । सः कलिः तत्र पुरे द्विजैः आवाहिताम् आहुताम् अतएव अर्कमण्डलात् सन्निदधतीं सन्निहितां सतीं गायत्रीं गायत्रीदेवीं पश्यन् भिया दृष्टनष्टः पूर्वं दृष्टः अनन्तरम् अदृष्टः सद्यः एव अदर्शनं गतः अभवत्, स्नातानुलिप्तवत् पूर्वकालसमासः ॥ १७१ ॥

स इति । सः कलिः गृहिणां पूर्णे गृहस्थैः पूर्णे, सम्बन्धसामान्ये षष्ठी । गृहे वैखानसैः वानप्रस्थैः, वैखानसो वने-

हिंसागवीं मखे वीक्ष्य रिरंसुर्धावति स्म सः।
सा तु सौम्यवृषासक्ता खरं दूरं निरास तम्॥ १७३॥
क्वापि नापश्यदन्विष्यन् हिंसामात्मप्रियामसौ।
स्वमित्रं तत्र न प्रापदपि मूर्खमुखे कलिम्॥१७४॥
मौनेन व्रतनिष्ठानां स्वाक्रोशं मन्यते स्म सः।
वन्यवन्दारुभिर्जज्ञौ स्वशिरश्च पदाहतम्॥ १७५॥

---

वासी वानप्रस्थश्च तापसः इति यादवः। वृते घने निरन्तरे यतिनाम् आधारे यत्यधिष्ठिते इत्यर्थः, अमरागारे देवालये क्वापि स्थानं स्थितिं न आनशे न लेभे, अत आदेरश्नोते-र्यस्येत्यभ्यासदीर्घनुडागमौ॥ १७२॥

हिंसेति। सः कलिः मखे हिंसायां गौः तां हिंसागवीम् आलभ्यार्थाम् इत्यर्थः। गोरतद्धितलुगिति समासान्तष्टच्। वीक्ष्य रिरंसुः रन्तुम् इच्छुः विहर्त्तुम् इच्छुः, रमेः सनन्तादुप्रत्ययः। धावति स्म द्रुतम् अगात्। सा गौस्तु सौम्यः सोमयागः सः एव वृषः धर्मः तत्र आसक्ता सङ्गता तदर्था सतीत्यर्थः। तरुणवृषभाक्रान्ता चेति गम्यते। सुकृते वृषभे वृषः इत्यमरः। अतएव खरं क्रूरं कलिं खरं गर्दभं दूरं निरास, वृषाक्रान्ताया गोः खरनिःसारणं युक्तमिति भावः॥ १७३॥

क्वापीति। असौ कलिः तत्र पुरे क्वापि आत्मनः प्रियाम् इष्टां हिंसाम् अन्विष्यन् न अपश्यत्, मूर्खमुखे मूढवक्त्रे अपि स्वस्य मित्रम् अनुकूलं कलिं कलहञ्च न प्रापत्, प्रजानां तथा नियमनात् इति भावः॥ १७४॥

मौनेनेति। सः कलिः व्रतनिष्ठानां मौनेन वाग्यमनेन स्वस्य आक्रोशं शापं मन्यते स्म मामयम् अशपत् इति मम-

मुनीनां स वृसीः पाणौ पश्यन्नाचामतामपः।
मेने घनैरमी हन्तुं शस्तुं मामङ्गिरुद्यताः॥ १७६ ॥
मौञ्जीभृतो धृताषाढानाशशङ्के स वर्णिनः।
रज्ज्वाऽमी बद्धुमायान्ति हन्तुं दण्डेन मां ततः॥ १७७ ॥
दृष्ट्वा पुरः पुरोडाशमासीदुत्त्रासदुर्मनाः।
मन्वानः फणिनीस्तत्र स मुमोचाश्रु च स्रुचः॥१७८॥

---

न्यत इत्यर्थः। वन्द्यानाम् अभिवाद्यानाम् वन्दारुभिः वन्दनशीलैः, शृवन्द्योरारुः। स्वशिरः पदेन आहतं जघ्नौ मेने, तत् सर्वं तस्य तादृग्दुःखजनकं सञ्जातम् इत्यर्थः॥ १७५॥

मुनीनामिति। सः कलिः मुनीनां पाणौ वृसीः आसनानि उपवेशनार्थं गृहीताः इत्यर्थः। व्रतिनामासनं वृसी इत्यमरः। तथा आचमताम् उपस्पृशताम् एषां पाणौ अपश्च पश्यन् अमी मुनयः मां घनैः मुद्गरैः हन्तुं, द्रुहणे मुद्गरे घनाविति वैजयन्ती। अद्भिः शस्तुञ्च उद्यताः इति मेने तादृग्दुःखं प्राप इत्यर्थः॥ १७६ ॥

मौञ्जीति। सः कलिः मौञ्जीभृतः मुञ्जविकारमेखलाधारिणः धृताषाढान् धृतपलाशदण्डान्, पालाशो दण्ड आषाढः इत्यमरः। विशाखाषाढादण्मन्थदण्डयोरित्यण्प्रत्ययः। वर्णिनः ब्रह्मचारिणः, वर्णाद् ब्रह्मचारिणीति इनिप्रत्ययः। मां रज्ज्वा पाशेन बद्धुं ततः बन्धनानन्तरं दण्डेन हन्तुञ्च आयान्ति इति आशशङ्के तथा विव्यथे इत्यर्थः॥ १७७ ॥

दृष्ट्वेति। सः कलिः पुरः अग्रे पुरोडाशं पिष्टपिण्डविशेषं दृष्ट्वा उत्त्रासेन भयेन दुर्मनाः विह्वलः आसीत्, स्वघातार्थं पाषाणभ्रमादिति भावः। स्रुचः होमादिपात्राणि फणिनीः

आनन्दन्मदिरादानं विन्दन्नेव द्विजन्मनः ।
दृष्ट्वा सौत्रामणीमिष्टिं तं कुर्वन्तमदूयत ॥ १७९ ॥
अपश्यद् यावतो ब्रह्मविदां ब्रह्माञ्जलीनसौ ।
उदडीयन्त तावन्तस्तस्यास्राञ्जलयो हृदः ॥ १८० ॥
स्नातकं घातुकं जज्ञे जज्ञौ दान्तं कृतान्तवत् ।
वाचंयमस्य दृष्ट्यैव यमस्येव बिभाय सः ॥ १८१ ॥

---

भुजङ्गीः मन्वानः त्रस्तः आसीत्, अश्रु बाष्पञ्च मुमोच । अत्र खलु फणिनीभ्रान्त्या भ्रान्तिमदलङ्कारः ॥ १७८ ॥

आनन्ददिति । एषः कलिः द्विजन्मनः ब्राह्मणस्य मदिरायाः आदानं सुराग्रहं विन्दन् इव आनन्दत् अनाचारबुद्ध्या मुमुदे । अथ तं ब्राह्मणं सौत्रामणीं सुत्रामख्याख्याम् इष्टिं कुर्वन्तं दृष्ट्वा ज्ञात्वा अदूयत पर्य्यतप्यत । सुराग्रहविधानात् निष्पापे तत्र कर्मणि निराशोऽभूत् इत्यर्थः ॥ १७९ ॥

अपश्यदिति । असौ कलिः ब्रह्मविदां ब्रह्माध्यायिनां यावतः ब्रह्माञ्जलीन् अध्ययनकालीनमञ्जलिं "संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः" इति स्मरणात् । पाठे ब्रह्माञ्जलिः इत्यमरः । अपश्यत्, तावतः तस्य कलेः अस्राञ्जलयः रक्ताञ्जलयः हृदः कलिहृदयात् उदडीयन्त उड्डीनाः इत्यर्थः ॥ १८० ॥

स्नातकमिति । सः कलिः स्नातकं समाप्तवेदं, स्नातकाद्वेदसमाप्ताविति कन्प्रत्ययः । तं घातुकं हन्तारं, लषपतेत्यादिना उकञ्प्रत्ययः । जज्ञे मेने, दान्तं तपस्विनं, तपःक्लेशसहो दान्तः इत्यमरः । कृतान्तवत् कृतान्ततुल्यं जज्ञौ, वाचं यच्छतीति वाचंयमः मौनव्रती, वाचि यमो व्रत इति खच्,

स पाषण्डजनान्वेषी प्राप्नुवन् वेदपण्डितम् ।
जलार्थीवानलं प्राप्य पापस्तापादपासरत् ॥१८२॥
तत्र ब्रह्महणं पश्यन्नतिसन्तोषमानशे ।
निर्वर्ण्य सर्वमेधस्य यज्वानं ज्वलति स्म सः ॥ १८३ ॥
यतिहस्तस्थितैर्यस्य राभैरारम्भि तर्जना ।
दुर्जनस्याजनि क्लिष्टिर्गृहिणां वेदयष्टिभिः ॥ १८४ ॥

---

प्रत्ययः । वाचंयमपुरन्दरौ चेति निपातनात्साधुः । यमस्य यमस्येव दृष्ट्या दर्शनेनैव बिभाय भीतवान्, भियो लिट् । सर्वत्रैषां तपसो दुर्धर्षत्वात् भीतिरिति द्रष्टव्या ॥ १८१ ॥

स इति । पापः क्रूरः सः कलिः पाषण्डजनान्वेषी सन् वेदपण्डितं वैदिकं प्राप्नुवन् जलार्थी अनलं प्राप्य इव तापात् तत्प्राणिजन्यसन्तापात् हेतोः अपासरत् अपसृतः ब्रह्मतेजसः पाषण्डदाहकत्वादिति भावः ॥ १८२ ॥

तत्रेति । सः कलिः तत्र पुरे ब्रह्महणं ब्राह्मणं हतवन्तं, ब्रह्मभ्रूणवृत्रेति क्विप् । पश्यन् सन्तोषम् आनशे प्राप । अथ तं ब्रह्महणं सर्वमेधाख्ययागस्य यज्वानं तद्याजिनं निर्वर्ण्य निश्चित्य ज्वलति स्म सन्तप्तोऽभूत्, ब्रह्मणे ब्राह्मणमालभत इति श्रुत्या सर्वमेधे ब्राह्मणादिसर्वलम्भविधानात् तस्य धर्मत्वादिति भावः ॥ १८३ ॥

यतीति । दुर्जनस्य तस्य यतीनां मस्करिणां हस्तेषु स्थितैः राभैः वेणुदण्डैः "त्रिदण्डेन कमण्डलुः" इति स्मृतेरिति भावः । तर्जना त्रासनम् आरम्भि कृता इत्यर्थः । तथा गृहिणां वेदयष्टिभिः सन्दर्भवेणुदण्डैश्च "वेणुमान् स कमण्डलुः" इति स्मृतेः इति भावः । क्लिष्टिः क्लेशः अजनि

मण्डलत्यागमेवैच्छद् वीक्ष्य स्थण्डिलशायिनः।
पवित्रालोकनादेव पवित्रासमविन्दत॥ १८५॥
अपश्यज्जिनमन्विष्यन्नजिनं ब्रह्मचारिणम्।
क्षपणार्थी सदीक्षस्य स चाक्षपणमैक्षत॥ १८६॥
जपतामक्षमालासु वीजाकर्षणदर्शनात्।
स जीवाकृष्टिकष्टानि विपरीतदृगन्वभूत्। १८७॥

---

जनिता, जनेण्यन्तात्कर्मणि लुङ्। यतिः पाराशरी भीम-स्तत् कर्म मस्करी यति.। बहुदर्भा वेदर्याष्टर्दर्भो रामस्तु वैणवः इति सर्वत्र यादवः॥ १८४॥

मण्डलेति। एषः कलिः स्थण्डिलशायिनः अथ शयेन व्रतिनः, व्रत इति णिनिः। यः स्थण्डिले व्रतवशाच्छेते स्थण्डिलशाय्यसौ इत्यमरः। वीक्ष्य मण्डलत्यागं देशत्यागम् एव ऐच्छत्, पवित्राणां कुशानाम् आलोकनात्, पवेः कुलि-शात् त्रासम् अविन्दत "यथा शक्रकरे वज्रं तथा विप्रकरे कुशाः" इति स्मृतेरिति भावः। अस्त्री कुशं कुशो दर्भः पवित्रमथ कत्तृणम् इत्यमरः॥ १८५॥

अपश्यदिति। सः कलिः जिनं जिनाख्यं वौद्धदैवतम् अन्विष्यन् ब्रह्मचारिणम् अजिनं कृष्णाजिनं जिनराहित्यञ्च अपश्यत्, किञ्च क्षपणार्थी क्षपणकान्वेषी सदीक्षस्य दीक्षि-तस्य राज्ञः अक्षपणम् अक्षदेवनं क्षपणकराहित्यम् ऐक्षत राजसूये अभिषेचनीये अष्टावक्षैर्दिव्यन्तीति श्रवणादिति भावः। तदुभयमप्यस्य दुःसहमिति भावः॥ १८६॥

जपतामिति। विपरीतदृक् वेदविरुद्धदर्शी सः कलिः जपताम् अक्षमालासु वीजानां पद्मादिवीजानां जपसङ्ख्याना-

त्रिसन्ध्यं तत्र विप्राणां स पश्यन्नघमर्षणम्।
परमैच्छद् दृशोरेव निजयोरपकर्षणम्॥ १८८॥
अद्राक्षीत् तत्र कश्चिन्न कलिः परिचितं क्वचित्।
भैमीनलव्यलीकाणुप्रश्नकामः परिभ्रमन्॥ १८९॥
तपःस्वाध्याययज्ञानामकाण्डद्विष्टतापसः।
स्वविद्विषां श्रियं तस्मिन् पश्यन्नुपततताप सः॥१९०॥
कम्रं तत्रोपनम्राया विश्वस्या वीक्ष्य तुष्टवान्।
स मन्त्री तं विभाव्याथ वामदेवाभ्युपासकम्॥१९१॥

---

र्थानाम् आकर्षणस्य दर्शनात् जीवाकृष्टिकष्टानि प्राणाकर्षणदुःखानि अन्वभूत्॥ १८७॥

त्रिसन्ध्यमिति। त्रिसन्ध्यं सन्ध्यात्रये, समाहारैकत्वे वा तस्येति नपुंसकत्वम्, अत्यन्तसंयोगे द्वितीया। विप्राणाम् अघमर्षणं मन्त्रसाध्यं पापहरं स्नानकर्म पश्यन् निजयोः दृशोः आकर्षणम् उत्पाटनम् एव परम् केवलम् अप्रियम् ऐच्छत्॥१८८॥

अद्राक्षीदिति। तत्र कलिः भैमीनलव्यलीकाणोः भैमीनलयोः दोषलेशस्य प्रश्नं कामयते इति तत्कामः, शिलिकामभिक्षाचरिभ्यो णः। परिभ्रमन् क्वचित् कञ्चिदपि परिचितं जनं न अद्राक्षीत्॥ १८९॥

तप इति। अकाण्डे अनवसरे द्विष्टाः विरुद्धा तापसाः येन सः कलिः तस्मिन् पुरे स्वविद्विषां स्वविरोधिनां तपः चान्द्रायणादिचर्य्या स्वाध्यायः वेदपाठः यज्ञाः सोमादयः तेषां श्रियं समृद्धिं पश्यन् उपततताप, सर्वत्र तद्दुर्वारत्वात् इति भावः॥ १९०॥

कम्रमिति। सः कलिः तत्र पुरे उपनम्रायाः स्वयम् आगतायाः विश्वस्याः सर्वस्याः स्त्रियाः कम्रं कमितारं रन्ता-

वैरिणी शुचिता तस्मै न प्रवेशं ददौ भुवि ।
न वेदध्वनिरालम्बमम्बरे वितताार च ॥१८२॥
दर्शस्य दर्शनात् कष्टमग्निष्टोमस्य चानशे ।
जुघूर्ण पौर्णमासेष्टौ सौमं सोऽमन्यतान्तकम् ॥१८३॥
तेनादृश्यन्त वीरघ्ना न तु वीरहणो जिनाः ।
नापश्यत् सोऽभिनिर्मुक्तान् जीवन्मुक्तानवैक्षत ॥१८४॥

---

रम् इत्यर्थः । नमिकम्पीत्यादिना रप्रत्ययः । वीक्ष्य तुष्टवान् तुतोष । अथ तं कल्किं वामदेवः नाम देवताविशेषः तस्य अभ्युपासकं विभाव्य विसृज्य मन्त्रौ, तदुपासकानां न काञ्चन क्षयमागतां परिहरेदिति श्रुतेरुपगमस्य धर्मत्वादिति भावः ॥ १८१ ॥

वैरिणीति । वैरिणी विरोधिनी शुचिता शुद्धता तस्मै कलये भुवि प्रदेशं न ददौ, अम्बरे वा नभसि च वेदध्वनिः ब्रह्मघोषः आलम्बम् आलम्बनम् अवकाशं न वितताार ॥ १८२ ॥

अनन्तरश्लोकद्वयं प्रक्षिप्तमिति पूर्वैरुपेक्षितं तथापि स्थितत्वाद् व्याख्यायते दर्शस्येत्यादि । सः कलिः दर्शस्य दर्शस्येष्टेः अग्निष्टोमस्य सोमयागविशेषस्य च दर्शनात् कष्टं महत् दुःखम् आनशे प्राप तथा पौर्णमासं पूर्णमासेष्टिं ईक्षते इति पूर्णमासेक्षी तद्दर्शी सन् जुघूर्ण भ्रान्तः अभूत, सौमं सोमयागम् अन्तकं मृत्युम् अमन्यत ॥ १८३ ॥

तेनेति । तेन कलिना वीरघ्नाः रणे वीरघातिनः जनाः अमनुष्यकर्त्तृके चेति चकारादच्, अतएव क्वचिन्मनुष्यकर्त्तृके चेति कौमारं सूत्रम् । अदृश्यन्त वीरहणः क्षत्रियघातिनः जिनाः भट्टभास्कराः अग्नित्यागिनः वा विरहा वा एष देवानां योऽग्निमुद्वासयत इति श्रुतेरित्यनेन उपलक्षिताः न अदृश्यन्त,

स तुतोषाश्नतो विप्रान् दृष्ट्वा स्पृष्टपरस्परान् ।
सोमशेषोभवत्सोमभुजस्तान् वीक्ष्य दूनवान् ॥ १९५ ॥
दृष्ट्वा जनं रजोजुष्टं तुष्टिं प्राप्नोत् झटित्यसौ ।
तं पश्यन् पावनस्नानावस्थं दुःखस्ततोऽभवत् ॥१९६॥
अधावत् क्वापि गां वीक्ष्य हन्यमानामयं मुदा ।
अतिथिभ्यस्तु तां बुद्धा मन्दं मन्दो न्यवर्त्तत ॥ १९७ ॥

---

सः कलिः अभिनिर्मुक्तान् यान् सुप्तान् अभि सूर्य्योऽस्तमेति ते अभिनिर्मुक्ताः, मुच्यतेः कर्मणि क्तः। तान् पापिष्ठान् न अपश्यत् किन्तु जीवन्मुक्तान् आत्मारामान् पुण्यान् जनान् अवैक्षत ॥१९४॥

स इति। सः कलिः स्पृष्टं परस्परं यैः तान् स्पृष्टपरस्परान् अश्नतः भक्षयतः विप्रान् दृष्ट्वा तुतोष, सोमशेषोभवन्तं सोमं भुजः तान् बुभुक्षयिषून् इत्यर्थः, वीक्ष्य ज्ञात्वा दूनवान् म्लानवान् परितप्तवान्, सोमभक्षणे परस्पर्शदोषाभावादिति भावः ॥ १९५ ॥

दृष्टेति। असौ कलिः रजोभिः जुष्टं जनं दृष्ट्वा झटिति द्राक् तुष्टिं प्राप, ततः अनन्तरं रजोभिः धूसरं पावनस्नानावस्थं पश्यन् वायव्यस्नाननिष्ठं जानन् दुःस्थः दूनः अभवत् ॥ १९६ ॥

अधावदिति। मन्दः मूढ़ः अयं कलिः क्वापि देशे हन्यमानाम् आलभ्यमानां गां वीक्ष्य मुदा अधावत्, किन्तु तां गां अतिथिभ्यः अतिथ्यर्थं हन्यमानां बुद्धा मन्दं सखेदं न्यवर्त्तत, "महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्" इति विधानादिति भावः ॥ १९७ ॥

हृष्टवान् स द्विजं दृष्ट्वा नित्यनैमित्तिकत्यजम् ।
यजमानं निरूप्यैनं दूरं दीनमुखोऽद्रवत् ॥ १९८ ॥
आननन्द निरीक्ष्यायं पुरे तत्रात्मघातिनम् ।
सर्वस्वारस्य यज्वानमेनं दृष्ट्वाऽथ विव्यथे ॥ १९९ ॥
क्रतौ महाव्रते पश्यन् ब्रह्मचारीत्वरीरतम् ।
जज्ञौ यज्ञक्रियामज्ञः स भाण्डाकाण्डताण्डवम् ॥२००॥

---

हृष्टवानिति । सः कलिः नित्यनैमित्तिकत्यजं दानहोमादिकर्मत्यागिनं, क्विप् । द्विजं दृष्ट्वा हृष्टवान्, अथ एनं द्विजं यजमानं दीक्षितं निरूप्य निश्चित्य दीनमुखः विवर्णमुखः सन् दूरम् अद्रवत् पलायत, न ददाति न जुहोति न वदतीति दीक्षितस्य तन्निषेधे तेन दोषाभावादिति भावः ॥१९८॥

आननन्देति । अयं कलिः तत्र पुरे आत्मघातिनं निरीक्ष्य आननन्द, अथ एनम् आत्मघातिनं, सर्वस्वारनामा आत्माहुतिकः यागविशेषः । तथा रघुवंशेऽप्युक्तं—"यो मन्त्रपूतां तनुमप्यहौषीत्" इति । तस्य यज्वानं दृष्ट्वा तद्याजिनं विदित्वा सः कलिः विव्यथे ॥ १९९ ॥

क्रताविति । अज्ञः मूर्खः सः कलिः महाव्रते महाव्रताख्ये क्रतौ ब्रह्मचारिणः इत्वर्याः कुलटायाश्च रतं, ब्रह्मचारी पुंश्चल्यः सम्प्रवाद इति श्रुतिविहितं ग्राम्यभाषणम् । असती कुलटेत्वरी इत्यमरः । इण्नजि सर्त्तिभ्यः क्वरप् । पश्यन् यज्ञक्रियां भाण्डानां ग्राम्यभाषिणाम् अकाण्डताण्डवम् अनेकान्तत्वात् असमयविजृम्भणं जज्ञौ भण्डचेष्टितम् अमन्यत इत्यर्थः ॥ २०० ॥

यज्वभार्य्याश्वमेधाश्वलिङ्गालिङ्गिवराङ्गताम्।
दृष्ट्वाचष्ट स कर्त्तारं श्रुतेर्भण्डमपण्डितः॥ २०१॥
अथ भीमजया जुष्टं व्यलोकत कलिर्नलम्।
दुष्टदृग्भिर्दुरालोकं प्रभयेव प्रभाविभुम्॥ २०२॥
तयोः सौहार्दसान्द्रत्वं पश्यन् शल्यमिवानशे।
मर्म्मच्छेदमिवानर्च्छ स तन्नर्म्मोक्तिभिर्मिथः॥ २०३॥
अमर्षादात्मनो दोषात् तयोस्तेजस्विताग्गुणात्।
अष्टुं दृशाप्यनीशस्तौ तस्मादप्यचलत् कलिः॥ २०४॥

---

यज्वेति। अपण्डितः मूर्खः सः कलिः यज्वभार्य्यायाः यजमानस्य पत्न्याः अश्वमेधे अश्वस्य लिङ्गेन मेहनेन आलिङ्गिवराङ्गतां संयोजितयोनितां, निरायत्याश्वस्य शिश्नं महिष्युपस्थे निधत्ते इति श्रुतिविहितामिति भावः। दृष्ट्वा श्रुतेः कर्त्तारं वेदप्रणेतारं भण्डम् आचष्ट केनचित् भण्डेन प्रणीताः वेदाः इति अमन्यत इत्यर्थः॥ २०१॥

अथेति। अथ कलिः भीमजया भैम्या जुष्टं सेवितं दुष्टदृग्भिः पापदृष्टिभिः अन्यत्र रोगोपहतदृष्टिभिः दुरालोकं दुर्दर्शनं नलं प्रभया दीप्त्या जुष्टं प्रभाविभुं सूर्य्यम् इव व्यलोकत अपश्यत्॥ २०२॥

तयोरिति। सः कलिः तयोः भैमीनलयोः, सुहृदो भावः सौहार्दं प्रेम, युवादिभ्योऽण्, हृद्भगेत्यादिना उभयपदवृद्धिः। तेन सान्द्रत्वं सद्रवत्वं पिच्छिलत्वं पश्यन् शल्यम् आनशे इव प्राप इव, तथा मिथः परस्परं तयोः भैमीनलयोः नर्म्मोक्तिभिः परिहासविशेषैः मर्म्मच्छेदम् आनर्च्छ इव प्राप इव॥२०३॥

अमर्षादिति। सः कलिः अमर्षात् क्रोधात् आत्मनः दोषात् पापिष्ठत्वदोषात् तयोः भैमीनलयोः तेजस्विताग्गुणाच्च

अगच्छदाश्रयान्वेषी नलद्वेषी स निःश्वसन्।
अभिरामं गृहारामं तस्य रामसमश्रियः॥ २०५॥
रक्षिलक्षवृतत्वेन बाधनं न तपोधनैः।
मेने मानी मनाक् तत्र स्वानुकूलं कलिः किल॥ २०६॥
दलपुष्पफलैर्देवद्विजपूजाभिसन्धिना।
स नलेनार्जितान् प्राप तत्र नाक्रमितुं द्रुमान्॥ २०७॥
अथ सर्वोद्भिदासत्तिपूरणाय स रोपितम्।

---

तौ दृष्ट्वापि स्प्रष्टुं द्रष्टुम् अपि अनीशः सन् तस्मादपि देशात् अचलत् पलायत॥ २०४॥

अगच्छदिति। नलद्वेषी सः कलिः आश्रयान्वेषी सन् अतएव तदलाभात् निःश्वसन् रामसमश्रियः रामचन्द्रसमानकान्तेः तस्य नलस्य अभिरामं रमणीयं गृहारामम् अगच्छत्॥ २०५॥

रक्षीति। रक्षिणां गृहपालानां लक्षेण शतसहस्रावृतत्वेन तत्र गृहारामे तपोधनैः कर्तृभिः बाधनं नास्ति स्वस्येति शेषः। अतएव उभयप्राप्तौ कर्मणीति षष्ठी न कर्त्तरि। तथैवं निर्बाधत्वात् मानी आग्रही कलिः स्वस्य अनुकूलं निवासयोग्यं मनाक् इतस्ततः कारणात् मेने किल तम् आरामम् इति शेषः॥ २०६॥

दलेति। सः कलिः तत्र आरामे दलैः पत्रैः पुष्पैः फलैश्च देवानां द्विजानाञ्च पूजायाः अभिसन्धिना तदर्थाभिप्रायेण नलेन अर्जितान् द्रुमान् आक्रमितुम् अधिष्ठातुं न प्राप क्षमतां न प्राप इत्यर्थः। उदीच्यानां प्रायेणायं भावानुसारिप्रयोगः॥ २०७॥

अथेति। सः कलिः सर्वेषाम् उद्भिदां तरुगुल्माद्यङ्कुरा-

विभीतकं ददर्शैकं कुटं धर्मेऽप्यकर्मठम् ॥ २०८ ॥
स तं नैषधसौधस्य निकटं निष्कुटध्वजम् ।
बहु मेने निजं तस्मिन् कलिरालम्बनं वने ॥ २०९ ॥
निष्पदस्य कलेस्तत्र स्थानदानाद् विभीतकः ।
कलिद्रुमः परं नासीदासीत् कल्पद्रुमोऽपि सः ॥२१०॥
ददौ पदेन धर्मस्य स्यातुमेकेन यत् कलिः ।
एकः सोऽपि तदा तस्य पदं मन्येऽमिलत् ततः ॥२११॥

---

णाम् आसत्तेः विद्यमानतायाः पूरणाय रोपितम्, अङ्कुरोऽभिनवोद्भिद इत्यमरः। कर्मणि घटते इति घटं क्षमं, कर्मणः कर्मणि घटोऽठच्। धर्मे अपि अकर्मठम् अनुपयुक्तं विभीतकं नाम एकं कुटं वृक्षं ददर्श। अनोकहः कुट शालः इत्यमरः॥ २०८ ॥

स इति। सः कलिः तस्मिन् वने निजम् आत्मीयम् आलम्बनम् आश्रयं सौधस्य नलप्रासादस्य निकटं नेदिष्ठं निष्कुटस्य गृहारामस्य ध्वजं चिह्नं, गृहारामस्तु निष्कुटः इत्यमरः। तं विभीतकं बहु अधिकं यथा तथा मेने ॥२०९॥

निष्पदस्येति। सः विभीतकः अक्षवृक्षः निष्पदस्य निराश्रमस्य कलेः तत्र आरामे स्थानदानात् आवासदानात् कलिद्रुमः परं कलिद्रुमः एव न आसीत्, किन्तु कल्पद्रुमः अपि आसीत्, सङ्कल्पार्थदानादिति भावः। भूतावासः कलिद्रुमः इत्यमरः ॥ २१० ॥

ददाविति। यत् यस्मात् कलिः धर्मस्य एकेन पदेन स्थातुं ददौ इत्यर्थः। पूर्वजन्मनि इत्यर्थः। ततः कारणात् सः तरुः अपि एकः एव तस्य कलेः पदं स्थानम् अमिलत् एकपदस्थान-

उद्भिद्विरचितावासः कपोतादिव तत्र सः।
राज्ञः साग्नेर्द्विजात् तस्मात् सन्त्रासं प्राप दीक्षितात् ॥२१२॥
विभीतकमधिष्ठाय तथाभूतेन तिष्ठता।
तेन भीमभुवोऽभीकः स राजर्षिरधर्षि न ॥ २१३ ॥
तमालम्बनमासाद्य वैदर्भीनिषधेशयोः।
कलुषं कलिरन्विष्यन्नवात्सीत् वत्सरान् बहून् ॥२१४॥

---

दानात् एकवृक्षस्थानं प्रापत् इत्यर्थः, दानानुरूपं फलमश्नुत इति भावः ॥ २११ ॥

उद्भिदिति। उद्भिदि वृक्षे विरचितावासः कल्पितस्थितिः सः कलिः साग्नेः आहिताग्नेः सजाठराग्नेश्च द्विजात् द्विजातेः वर्णिकात् अण्डजाच्च दीक्षितात् कृतदीक्षात् अन्यत्र उभयत्रापि वा ईक्षितात् दृष्टात् तस्मात् राज्ञः नलात् कपोतात् उलूकात् वायसः इव सन्त्रासं तापं प्राप। प्राप इति लिट्। प्रापत् इति पदच्छेदे लुङ् ॥ २१२ ॥

विभीतकमिति। विभीतकम् अक्षम् अधिष्ठाय तिष्ठता तथाभूतेन नलरन्ध्रान्वेषिणा सता तेन कलिना भीमभुवः भैम्याः, अभिकामयते इति अभीकः कमिता, अनुकोऽभीकः कमितेति कच्प्रत्ययान्तो निपातनात् साधुः। सः राजर्षिः नलः न अधर्षि न अभ्यभावि तं जनमाविष्टेन भीतेन पिशाचेन भीमभुवोऽयं करस्थानादभीको निर्भीकः कश्चिद् दृष्टिमन्त्रवादिनाऽधर्षीति ध्वनिः। तेन च राजमन्त्रवादिनोरौपम्यं गम्यते ॥ २१३ ॥

तमिति। कलिः तं वृक्षम् आलम्बनम् आसाद्य वैदर्भीनिषधेशयोः भैमीनलयोः कलुषम् अशुचित्वम् अन्विष्यन्

यथासीत् कानने तत्र विनिद्रकलिका लता ।
तथा नलच्छलासक्तिविनिद्रकलिकालता ॥ २१५ ॥
दोषं नलस्य जिज्ञासुर्बभ्राज द्वापरः क्षितौ ।
नादोषः कोऽपि लोकस्य मुखेऽस्तीति दुराशया ॥२१६॥
अमुष्मिन्नारामे सततनिपतद्दोहदतया
प्रसूनैरुन्निद्रैरनिशममृतांशुप्रतिभटे ।
असौ बद्धालम्बः कलिरजनि कादम्बविहग-
च्छदच्छायाभ्यङ्गोचितरुचितया लाञ्छनमृगः ॥२१७॥

---

बह्वन् वत्सरान्, अत्यन्तसंयोगे द्वितीया। अवात्सीत् उवास, वसेर्लुङि सिचि सस्यार्द्धधातुकेति तत्वं, वदव्रजेत्यादिना वृद्धिः ॥ २१४ ॥

यथेति। तत्र कानने वने यथा विनिद्रकलिका उन्निद्र-कोरका लता आसीत्, तथा नलस्य छले छलने आसक्त्या अभिनिवेशेन विनिद्रः जागरूकः कलिः कालपुरुषितः यस्मिन् तस्य भावः तत्ता आसीत्। अत्रार्थभेदेऽपि विनिद्रकलिकाल-तेति शब्दमात्रसाम्यात्तथेत्युक्तम् ॥ २१५ ॥

दोषमिति। अथ द्वापरः अपि नलस्य दोषम् अनाचारं जिज्ञासुः लोकस्य मुखे वाचि अदोषः निर्दोषः कोऽपि नास्तीति दुराशया लोको हि सर्वत्र दोषदृष्टिपरत्वात्सर्वथा दोषलेशं द्रक्ष्यति वक्ष्यति चेति दुराग्रहेण क्षितौ बभ्राज ॥ २१६ ॥

अमुष्मिन्निति। सततं निपतद्दोहदतया मिलद्धूपादि-संस्कारतया तरुगुल्मलतादीनामकाले कुशलैः कृतम्। पुष्पा-द्युत्पातकं द्रव्यं दोहदं स्यात्तु तत्क्रिया ॥ इति शब्दार्णवे। उन्निद्रैः विकसितैः प्रसूनैः अनिशम् अमृतांशुप्रतिभटे चन्द्र-

स्फारे तादृशि वैरसेनिनगरे पुण्यैः प्रजानां घनं
विघ्नं लब्धवतश्चिरादुपनतिस्तस्मिन् किलासीत् कलेः।
एतस्मिन् पुनरन्तरेऽन्तरमितानन्दः स भैमीनलौ
साराद्धुं व्यधित स्मरः श्रुतिशिखावन्दारुचूडं धनुः ॥२१८॥
श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मा मल्लदेवी च यम्।
यातः सप्तदशः स्वसुः सुसदृशि छन्दप्रशस्तेर्महा-
काव्ये तद्भुवि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥२१९॥

---

कल्पे अमुष्मिन् आरामे बद्धालम्बः कृताश्रयः असौ कलिः कादम्बविहगस्य धूम्रपक्षिविशेषस्य छदच्छायाभ्यङ्गोचितरुचितया पत्रप्रभालेपयोग्यवर्णतया लाञ्छनमृगः अजनि जनितः, चन्द्रस्यायं कलङ्कः अभूत् इत्यर्थः ॥ २१७ ॥

स्फारे इति। प्रजानां पुण्यैः धर्मैः एव तादृशि स्फारे तथा नीरन्ध्रे वैरसेनेः नलस्य नगरे निरन्तरं विघ्नं कार्य्यप्रतिबन्धं लब्धवतः प्राप्तवतः कलेः चिरात् चिरकालम् उपनतिः स्थितिः अभूत् किल, एतस्मिन् घने निरन्तरे अस्मिन् अवकाशे अन्तः अन्तःकरणे अमितानन्दः अतिहृष्टः सः स्मरः भैमीनलौ साराद्धुं वशीकर्त्तुं श्रुतिशिखां कर्णौ वन्दारुः उपनम्रा चूड़ा कोटिः यस्य तत् धनुः व्यधित विहितवान् कलिविघ्नवान् प्राक् यथाकामं कामसुखम् अन्वभूताम् इत्यर्थः ॥२१८॥

श्रीहर्षमिति। स्वसुः सोदर्य्याः छन्दः नाम राजा तत्प्रशस्तेः सुकृतेः सुसदृशि अत्यन्तसदृशि तस्मात् श्रीहर्षात् भवतीति तद्भुवि एककर्त्तृत्वात् एकोदरत्वव्यपदेशः। गतमन्यत् ॥ २१९ ॥

---

# अष्टादशः सर्गः।

—•◡•—

सोऽयमित्थमथ भीमनन्दिनीं दारसारमधिगम्य नैषधः।
तां तृतीयपुरुषार्थवारिधेः पारलम्भनतरीमरीरमत् ॥१॥
आत्मवित् सह तया दिवानिशं भोगभागपि न पापमाप सः।
आहृता हि विषयैकतानता ज्ञानधौतमनसं न लिम्पति ॥२॥

---

सोऽयमिति। सः अयं नैषधः नलः इत्थं एवं परमार्थेन दारसारं दारेषु सारं स्थिरांशं, सारो बले स्थिरांशे च इति विश्वः। अतएव पुंलिङ्गनिर्देशः। भीमनन्दिनीं भैमीं, नन्द्यादित्वात् ल्युट्प्रत्ययः। अधिगम्य प्राप्य अथ तृतीयपुरुषार्थवारिधेः शृङ्गारसारस्य पारलम्भनेन परतीरप्राप्तौ तरीं नावं तां दमयन्तीम् अरीरमत् रमयामास, रमेर्णौ चङ्। अस्मिन् सर्गे रथोद्धतावृत्तम्। रो नराविह रथोद्धता लगाविति लक्षणात् ॥ १ ॥

आत्मेति। आत्मवित् आत्मज्ञानी सः नलः तया भैम्या सह दिवानिशम् अहर्निशं, द्वन्द्वैकवद्भावः। अत्यन्तसंयोगे द्वितीया। भोगभाक् अपि सम्भोगवान् अपीत्यर्थः। भजो ण्विः। पापं न आप। ननु "निग्रहाच्च [illegible]णान्तु नरः पतनमृच्छति" इति निषेधात् कथं दिवानिशं विषयलोलुपस्य न पापमत आह आहृतेति। तथाहि, आहृता विकृता विषयेषु शब्दादिषु एकतानता एकनिष्ठत्वं ज्ञानेन धौतमनसं क्षालितान्तःकरणं न लिम्पति न पातयति इत्यर्थः "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन!" इति भग

न्यस्य मन्त्रिषु स राज्यमादरादाराराध मदनं प्रियासख:।
नैकवर्णमणिकोटिकुट्टिमे हेमभूमिभृति सौधभूधरे ॥ ३ ॥
वीरसेनसुतकण्ठभूषणीभूतदिव्यमणिपङ्क्तिशक्तिभि:।
कामनोपनमदर्थतागुणात् यस्तृणीकृतसुपर्वपर्वत: ॥४॥
धूपितं यदुदराम्बरं चिरं मेचकैरगुरुसारदारुभि:।
जालजालधृतचन्द्रचन्दनक्षोदमेदुरसमीरशीतलम् ॥ ५ ॥

---

वद्दचनादिति भाव:। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यास: ॥ २ ॥

न्यस्येति। स: राजा मन्त्रिषु राज्यं न्यस्य राज्यभारं निधाय, नैकवर्णा: अनेकवर्णा:, नञर्थस्य नशब्दस्य सुप्सुपेति समास:। ता: मणिकोटय: यस्मिन् तादृशं कुट्टिमं यस्मिन् तथोक्ते हेमभूमिभृति सुवर्णभूसम्भृते, भृञ: क्विप्। सौध: एव भूधर: तस्मिन् प्रियासख: भैमीसहित: सन् आदरात् मदनम् आरराध सिषेवे, शच्या सह मेरौ इन्द्र: इव स: भैम्या सह तत्र सौधे रतिसुखम् अन्वभूत् इति भाव: ॥ ३ ॥

अथ चतुर्विंशतिश्लोक्या सौधं वर्णयति वीरेत्यादि। य: सौध: वीरसेनसुतस्य नलस्य कण्ठभूषणीभूताया: दिव्याया: मणिपङ्क्ते: मणिमालिकाया: शक्तिभि: चिन्त्यप्रभावै: कामनया सङ्कल्पमात्रेण उपनमदर्थता समासेष्टार्थता सैव गुण: उत्कर्ष: तस्मात् तृणीकृत: सुपर्वपर्वत: अवधीरितसुराचल:, न केवलसौख्येन अपितु सम्पदापि मेरोरधिक: इत्यर्थ: ॥ ४ ॥

धूपितमिति। यस्य सौधस्य उदराम्बरम् अभ्यन्तराकाशं चिरं नित्यं मेचकै: कृष्णै: अगुरुण: सारदारुभि: सारयुक्तकाष्ठै: धूपितं तद्धूमवासितम् इत्यर्थ:। किञ्च, जालजालेषु

क्वापि कामशरवृत्तवर्त्तयो यं महासुरभितैलदीपिकाः।
तेनिरे वितिमिरं स्मरस्फुरद्दोःप्रतापनिकराङ्कुरश्रियः॥ ६॥
कुङ्कुमैणमदपङ्कलेपिताः क्षालिताश्च हिमवालुकाम्बुभिः।
रेजुरध्वततशैलजस्रजो यस्य मुग्धमणिकुट्टिमा भुवः॥७॥
नैषधाङ्गपरिमर्दमेदुरामोदमार्दवमनोज्ञवर्णया।
यद्भुवः क्वचन सूनशय्यया भाजि भालतिलकप्रगल्भता॥ ८॥

---

गवाक्षसमूहेषु धृतैः स्थितैः चन्द्रचन्दनक्षोदैः कर्पूरश्रीखण्ड-चूर्णैः मेदुरेण सान्द्रेण समीरेण वायुना शीतलम्॥५॥

क्वापीति। कामशरः कर्पूरः इति प्रसिद्धः तेन वृत्ताः निष्पन्नाः वर्त्तयः दशाः यासां ताः। अन्यत्र कामबाणोत्पन्नाः इत्यर्थः। महान्ति सुरभितैलानि यासां ताः दीपिकाः, स्मरस्य स्फुरतः दोःप्रतापनिकरस्य भुजतेजोमण्डलस्य अङ्कुराणां श्रीः इव श्रीः यासां ताः सत्यः यं सौधं क्वापि वितिमिरं तमोरहितं तेनिरे चक्रिरे॥ ६॥

कुङ्कुमेति। कुङ्कुमैणमदयोः काश्मीरकस्तूरिकयोः पङ्केन लेपिताः दिग्धाः हिमवालुकाम्बुभिः कर्पूरोदकैः क्षालिताः धौताः, सिताभ्रो हिमवालुकेति कर्पूरपर्य्यायेष्वत्यमरः। अध्वसु प्रवेशमार्गेषु तताः विस्तृताः शैलजस्य शैलेयस्य शिला-कुसुमाख्यगन्धद्रव्यस्य स्रजः यासु ताः, यस्य सौधस्य मुग्धाः सुन्दराः मणीनां कुट्टिमाः कुट्टिमरूपभुवः कुट्टिमोऽस्त्री निबद्धा भूरिति यादवः। चूतवृक्षवत् सामान्ये विशेषभावादपौन-रुक्त्यं सम्बद्धिमद्वस्तुवर्णनादुदात्तालङ्कारः॥ ७॥

नैषधेति। नैषधस्य नलस्य अङ्गपरिमर्दन मेदुराः सान्द्राः आमोद मार्दवेण मनोज्ञाः वर्णाश्च यस्याः तया, क्वचन स्थितया

क्वापि यन्निकटनिष्कुटस्फुटत्कोरकप्रकरसौरभोर्मिभि:।
सान्द्रमध्रियत भीमनन्दिनी नासिकापुटकुटीकुटुम्बिताम् ॥९॥
रुद्धसर्वऋतुवृक्षवाटिकाकोरक्रत्तसहकारशीकरै:।
यज्जुष: स्वकुलमुख्यमाशुगो घ्राणवातमुपदाभिरञ्चति ॥१०॥
कुत्रचित् कनकनिर्मिताखिल: क्वापि यो विमलरत्नज: किल।
कुत्रचित् रचितचित्रशालिक: क्वापि चास्थिरविधेन्द्रजालिक:११

---

सूनशय्यया कुसुमशय्यया कुसुमशयनेन यस्य सौधस्य भुव: भालतिलकप्रगल्भता ललाटिकालक्ष्मी: अभाजि प्राप्ता इति निदर्शनालङ्कार: ॥ ८ ॥

क्वापीति। क्वापि क्वचित् प्रदेशे यस्य सौधस्य निकटे निष्कुटे गृहारामे स्फुटतां कोरकप्रकराणां कलिकानिवहानां सौरभोर्मिभि: परिमलपरम्पराभि: भीमनन्दिनी भैमी नासिकापुटानां कुटीकुटुम्बितां गार्हस्थ्यं सान्द्रं निरन्तरम् अध्रियत अधारि, नन्दनविहारसुखम् अनुभूयते तया इति भाव: ॥९॥

रुद्धेति। आशुग: पवन: आशुग: पवनस्पर्शाविति यादव:। स्वकुलमुख्यं स्वकुलश्रेष्ठं यज्जुष: सौधसेविन: जनस्य घ्राणवातं नि:श्वासमारुतं, रुद्धा: अवरुद्धा:, रुद्धते: कर्मणि क्त:। ऋद्धा: समृद्धा: वा, ऋद्धते: कर्त्तरि क्त:। ते सर्वे ऋतव: यस्याम्, ऋत्यक इति प्रकृतिभाव:। तस्य वृक्षवाटिकायां कीरै: शुकै: क्रत्तानां खण्डितानां सहकाराणां शीकरै: एव उपदाभि: उपायनै: अञ्चति पूजयति स्म ॥ १० ॥

कुत्रचिदिति। य: सौध: कुत्रचित् प्रदेशे कनकनिर्मितम् अखिलं यस्य स:, क्वापि प्रदेशे विमलरत्नेभ्य: जात: स: तज्ज: किल, कुत्रचित् भागे रचिता: चित्रा: शालिका: यस्य स:, क्वापि च भागे क्वापि च भागान्तरे अस्थिरविधाभि: क्षीण-

चित्रतत्तदनुकार्य्यविभ्रमाधायिनैकविधरूपरूपकम्।
वीक्ष्य यं बहु धुवन् शिरो जरावातकी विधिरकल्पि शिल्पिराट्
॥ १२ ॥
भित्तिगर्भगृहगोपितैर्जनैर्यः कृताद्भुतकथादिकौतुकः।
सूत्रयन्त्रजविशिष्टचेष्टयाऽऽश्चर्य्यसञ्चिबहुशालभञ्जिकः॥ १३ ॥
तामसीष्वपि तमीषु भित्तिगैरत्नरश्मिभिरमन्दचन्द्रिकः।

---

प्रकारैः ऐन्द्रजालिकः इन्द्रजालवान्, मत्वर्थीयठन्। प्रतिक्षणमन्यथान्यथान्यथाप्रतीयमानः इत्यर्थः॥ ११ ॥

चित्रेति। चित्रेषु आलेख्येषु तेषां तेषाम् अनुकार्य्याणाम् अभिनयानां राजर्षिमनुष्यादीनां विभ्रमं विलासम् आधायीनि उत्पादकानि नैकविधरूपाणि नानाप्रकारस्वरूपाणि रूपकाणि प्रतिमाः यस्मिन् तं यं सौधं वीक्ष्य बहु यथा तथा शिरः धुवन् कम्पयन्, शिल्पिराट् राजशिल्पी विधिः स्रष्टा जरया वातकी वातरोगी, वातातिसाराभ्यां कुकच् इतीनिप्रत्ययः कुगागमश्च। अकल्पि अतर्कि आश्चर्य्यावेशात् तदा शिरः कम्पितम् इत्यर्थः॥ १२ ॥

भित्तीति। यः सौधः भित्तिगर्भेषु ये गृहाः तेषु गोपितैः गुप्तैः जनैः कृतं अद्भुतकथादिकौतुकं चित्रकथावर्णनादिविनोदः येन सः स्वयमेव सौधः कथयतीति भ्रान्तिकरः इत्यर्थः। कौतूहलं विनोदः स्यात् कुतुकञ्च कुतूहलम् इति हलायुधः। किञ्च, सूत्राणां यन्त्रेण जाता तया तज्जया विशिष्टचेष्टया हसितनिमिषोन्मेषादिचेष्टाविशेषेण आश्चर्य्यं सञ्चयन्ति कुर्वन्तीति तत्सञ्चिन्यः बह्व्यः शालभञ्जिकाः दारुपुत्रिकाः यस्य सः॥ १३ ॥

तामसीष्विति। यः सौधः तामसीषु तमस्विनीषु अपि,

यस्तपेऽपि जलयन्त्रपातुकासारदूरधुततापतन्द्रिकः ॥ १४ ॥
यत्र पुष्पशरशास्त्रकारिका शारिकाध्युषितनागदन्तिका।
भीमजानिषधसार्वभौमयोः प्रत्यवैक्षत रते कृताकृते ॥ १५ ॥
यत्र मत्तकलविङ्कशारिकाश्लेषकेलिपुनरुक्तिवत्तयोः।
क्वापि दृष्टिभिरवापि वापिकोत्तंसहंसमिथुनस्मरोत्सवः ॥१६॥
यत्र वैणरववैणवस्वरैश्च्छन्नैरुपवनोपिकालिनाम्।
कङ्कणालिकलहैश्च नृत्यतां गोपितं सुरतकूजितं तयोः ॥१७॥

---

अण् प्रकरणे ज्योत्स्नादिभ्य इत्युपसङ्ख्यानान्मत्वर्थीयोऽण्-प्रत्ययः। तमीषु रात्रिषु भित्तिगैः कुड्यगतैः रत्नरश्मिभिः मणिप्रभाभिः अमन्दा चन्द्रिका यस्य सः। यः तपे अपि ग्रीष्मे अपि जलयन्त्रेभ्यः पातुकैः पतनशीलैः आसारैः सम्पातैः दूरं धुता तापतन्द्रिका यस्य सः ॥ १४ ॥

यत्रेति। यत्र सौधे पुष्पशरशास्त्रस्य कारिका कर्त्री शारिकाभिः पक्षिविशेषैः, वाचाला मुखरा शारीति यादवः। अध्युषिता अधिष्ठिता नागदन्तिका भित्तिनिर्गतः दारुविशेषः यस्य, दन्तिका नागदन्ताः स्युरिति यादवः। भैमीनलयोः रते कृताकृते प्रत्यवैक्षत, इदं कृतम् इदं सुकृतम् इति अनुसन्दधे ॥ १५ ॥

यत्रेति। यत्र सौधे क्व अपि प्रदेशे तयोः भैमीनलयोः दृष्टिभिः वापिकोत्तंसानां दीर्घिकालङ्काराणां हंसमिथुनानां स्मरोत्सवः सुरतकेलिः मत्तैः कलविङ्कैः चटकैः शारिकाभिश्च आश्लेषकेलिभिः ग्राम्यक्रीड़ाभिः पुनरुक्तिवत् पुनरुक्तिमत् यथा तथा अपि वा तत्तुल्यम् अदर्शि इत्यर्थः ॥ १६ ॥

यत्रेति। यत्र सौधे वैणैः वीणासम्बन्धिभिः रवैः वैणवैः

कृष्णसारमृगशृङ्गभङ्गुरा स्वादुरुज्ज्वलरसैकसारणिः।
यानिशं त्रुटति यत् पुरःपुरा किन्नरीविकटगीतिझङ्कृतिः ॥१८॥
भित्तिचित्रलिखिताखिलक्रमा यत्र तस्थुरितिहाससङ्कथाः।
पद्मनन्दनसुतारिरंसुतामन्दसाहसहसन्मनोभुवः ॥ १९ ॥

---

वेणुसम्बन्धिभिः स्वरैः उपवन्याम् आरामे अपि पिकानाम् अलिनां भृङ्गाणाञ्च हुङ्कृतैः हुङ्कारैश्च नृत्यतां नर्त्तकीजनानां कङ्कणालिकलहैः भूषणकलहैः भूषणावलीकलकलैश्च तयोः दम्पत्योः सुरतकूजितं मणितादिकूजितं गोपितं तिरस्कृतम्, अतो न विस्रम्भविघातः इति भावः ॥ १७ ॥

कृष्णेति। कृष्णसारमृगस्य शृङ्गवत् भङ्गुरा भङ्गवती एकत्र तथोच्चारणात् अन्यत्र स्वभावादिति भावः। अतएव उज्ज्वलरसस्य शृङ्गाररसस्य, शृङ्गारः शुचिरुज्ज्वलः इत्यमरः। एका मुख्या सारणिः कुल्या, स्वादुः मधुरा, किन्नरीणां प्रवीणगायकानां विकटा विपुला गीतस्य झङ्कृतिः झङ्काराख्यस्वरः अनुकारिशब्दः अयम् अनिशं नित्यं पुरा न त्रुटति न त्रुटिता न विच्छिन्ना इत्यर्थः। पुरा लुङ् च स्म इति भूते लुङ्। अत्र गीतझङ्कृतेः शृङ्गाररसस्मरणीयत्वेन रूपणात् रूपकालङ्कारः ॥ १८ ॥

भित्तीति। पद्मनन्दनस्य ब्रह्मणः सुतया रिरं[illegible]ता रन्तुम् इच्छुता सा एव अमन्दं महत् साहसं तेन हसन् स्वप्रयाससाफल्यसन्तोषात् स्मयमानः मनोभूः कामः यासु ताः, इतिहाससङ्कथाः इतिहासोक्तवृत्तान्ताः यत्र सौधे भित्तिषु चित्रलिखिताः अखिलाः क्रमाः विशेषाः यासां ताः सत्यः तस्थुः ॥ १९ ॥

पुष्पकाण्डजयडिण्डिमायितं यत्र गौतमकलत्रगामिनः ।
पारदारिकविलाससाहसं देवभर्त्तुरुदटङ्कि भित्तिषु ॥२०॥

उच्चलत्कलरवालिकैतवात् वैजयन्तविजयार्जिता जगत् ।
यस्य कीर्त्तिरवदायति स्म सा कार्त्तिकीतिथिनिशीथिनीस्वसा ॥२१॥

गौरभानुगुरुगेहिनीस्मरोद्भूतभावमितिवृत्तमाश्रिताः ।
रेजिरे यदजिरेऽभिनीतिभिर्नाटिका भरतभारतीसुधाः ॥२२॥

---

पुष्पेति। पुष्पकाण्डस्य पुष्पेषोः जयडिण्डिमायितं तद्वत् आचरितम्, उपमानादाचरक्यजन्तात् कर्तरि क्तः। गौतमकलत्रगामिनः अहल्यागन्तुः देवभर्तुः इन्द्रस्य परदारान् गच्छतीति पारदारिकः, गच्छतौ परदारादिभ्य इत्युपसङ्ख्यानात् ठक्। तस्य विलासः विजृम्भणं तत् एव साहसं यत्र सौधभित्तिषु उदटङ्कि उट्टङ्कितम् उन्मीलितम् ॥ २० ॥

उच्चलदिति। कृत्तिकाभिः नक्षत्रेण युक्ता पौर्णमासी कार्त्तिकी, नक्षत्रेण युक्तः काल इत्यण्। सा एव तिथिः तस्याः निशीथिनी रात्रिः तस्याः स्वसा भगिनी सदृशी इत्यर्थः, वैजयन्तस्य इन्द्रप्रासादस्य विजयेन अर्जिता, स्यात् प्रासादो वैजयन्तः इत्यमरः। उच्चलत्कलरवाणां उड्डीनपारावतानां आलिकैतवात् श्रेणीव्याजात् इत्यपह्नवभेदः। यस्य कीर्तिः कान्तिः जगत् अवदायति स्म तेऽपि तावन्तस्तत्र सन्तीति भावः। दैपो लटि वाच्यायादेशः ॥२१॥

गौरेति। गौरभानोः चन्द्रस्य गुरुगेहिन्यां बृहस्पतिपत्न्यां स्मरस्य उद्भूतभावं तुच्छं खलत्वं तत् एव इतिवृत्तं वर्ण्यत्वम् आश्रिताः तद्वर्णनपराः इत्यर्थः, भरतभारतीसुधाः भरत-

शम्भुदारुवनसम्भुजिक्रियामाधवव्रजवधूविलासयोः।
गुम्फितैरुशनसा सुभाषितैर्यस्य हाटकविटङ्कमङ्कितम् ॥२३॥
अङ्कि भानुभुवि दासदारिकां यश्चरः परिचरन्तमुज्जगौ।
कालदेशविषयासहस्मरादुत्सुकं शुकपितामहं शुकः ॥२४॥
नीतमेव करलभ्यपारतामप्रतीर्य मुनयस्तपोऽर्णवम्।

---

शास्त्रसारभूताः नाटिकाः रूपकविशेषाः, चतुरङ्गा तु नाटिका इत्युक्तलक्षणात्। तस्य सौधस्य अजिरे प्राङ्गणे अभिनीतिभिः अभिनयैः रेजिरे शुशुभिरे ॥ २२ ॥

शम्भुदाविति। यस्य सौधस्य हाटकस्य विटङ्कं हिरण्मयकपोतपालिकाः, हिरण्यं हेम हाटकं, कपोतपालिकायान्तु विटङ्कं पुं नपुंसकमिति चामरः। शम्भोः दारुवने देवदारुवने सम्भुजिक्रिया सम्भोगविहारः माधवस्य कृष्णस्य व्रजवधूविलासः गोपाङ्गनाविहारः, व्रजो गोभूमिषु इति यादवः। तयोः विषये उशनसा गुम्फितैः विरचितैः सुभाषितैः सूक्तैः अङ्कितं शुक्राचार्य्यविरचितशिवकृष्णाचरितं तत्र लिखितम् इत्यर्थः ॥ २३ ॥

अङ्कीति। यश्चरः यः सौधचारी शुकः कीरः कालदेशविषयाणाम् असहात् योग्यायोग्यविचाराक्षमात् स्मरात् कामवशात् उत्सुकम् आसक्तम् अतएव अङ्कि न रात्रौ भानुभुवि यमुनायां न विविक्ते, कालिन्दी सूर्य्यतनया यमुना शमनस्वसा इत्यमरः। दासदारिकां कैवर्त्तकन्यां सत्यवतीम् इत्यर्थः न तु कुलीनां, कैवर्त्ते दासधीवरावित्यमरः। परिचरन्तं रमयन्तं शुकपितामहं पराशरम् उज्जगौ गायति स्म, शुको व्याससुते कीर इति विश्वः ॥ २४ ॥

नीतमिति। करलभ्यपारतां करप्राप्यपारत्वं आसन्नफल-

अप्सरःकुचघटावलम्बनात् स्थायिनः क्वचन यत्र चित्रगाः ॥२५॥
यत्र वीक्ष्य नलभीमसम्भवे मुह्यतोरतिरतीशयोरपि ।
स्पर्द्धयेव जयतोर्जयाय ते कामकामरमणी बभूवतुः ॥२६॥
तत्र सौधसुरभूधरे तयोराविरासुरथ कामकेलयः ।
ये महाकविभिरप्यवीक्षिताः पांशुलाभिरपि ये न शिक्षिताः॥२७॥

---

त्वच्छ नीतम् एव तीर्णप्रायम् एव तपोऽर्णवम् अप्रतीर्य्य तरणात् विरत्य इत्यर्थः, अप्सरसां कुचाः एव घटाः कुचघटाः, घटः कुचनिभावस्तोत्यमरः। तेषाम् अवलम्बनात् स्थायिनः विश्रान्ताः तरणश्रान्ताः घटादिकमवलम्ब्य विश्राम्यन्तीति भावः। एवम्भूताः मुनयः यत्र सौधे क्वचन प्रदेशे चित्रगाः स्थिताः इत्यर्थः ॥ २५ ॥

यत्रेति। यत्र सौधे नलभीमसम्भवे नलभैम्यौ वीक्ष्य मुह्यतोः असूयतोः अतएव स्पर्द्धया मत्सरेण एव जयतोः अभिभवतोः रतिरतीशयोः अपि जयाय अभिभवाय ते नलदमयन्त्यौ कामकामरमणीबभूवतुः तज्जयाय स्वयमन्ये ततोऽप्युत्कृष्टे कामतद्रमण्यौ बभूवतुः ते अतिशय्य स्थिते इत्यर्थः, अभूततद्भावे च्विः ॥ २६ ॥

तत्रेति। अथ तत्र सौधसुरभूधरे प्रासादमेरौ तयोः भैमीनलयोः कामकेलयः कामकेलिविहाराः आविरासुः आविर्बभूवुः, प्रादुराविःशब्दयोः कृभ्वस्तिपरनियमात् तत्राप्रत्ययवत् कृभ्वस्तिग्रहणसामर्थ्यात् नास्ति भूभावः। ये केलयः, अस्त्री केलिः परिहारः स इति यादवः। महाकविभिः वात्स्यायनशास्त्रज्ञैः अपि अवीक्षिताः अदृष्टाः ये पांशुलाभिः साधारणीभिः अपि न शिक्षिताः न अभ्यस्ताः ॥ २७ ॥

पौरुषं दधति योषिता नले स्वामिनि श्रिततदीयभावया ।
यूनि शैशवमतीर्णया कियत् प्रापि भीमसुतया न साध्वसम् २८
दूत्यसङ्गतिगतं यदात्मना प्रागशिश्रवदियं प्रियं गिरः ।
तं विचिन्त्य विनयव्ययं ह्रिया न स्म वेद करवाणि कीदृशम् २९
यत् तया सदसि नैषधः स्वयं प्राग्वृतः सपदि वीतलज्जया ।
तन्निजं मनसिकृत्य चापलं सा शशाक न विलोकितुं नलम् ३०

---

पौरुषमिति। पौरुषं पुरुषत्वं, युवादित्वादण्प्रत्ययः। दधति दधाने स्वामिनि पत्यौ यूनि नले विषये क्रमात् योषिता श्रितः तदीयभावः तदधीनत्वं यया तया अस्वतन्त्रया शैशवम् अतीर्णया अद्यापि अनिःशेषितबाल्यया, कर्तरि क्तः। भीमसुतया साध्वसं सङ्गमभयं कियत् न प्रापि, महदेव प्रापि इत्यर्थः। तच्च रसोभवतः स्थायिनः कार्य्यं पत्युः अत्यानन्दकरञ्च इति प्रपञ्चितं कुमारसम्भवसञ्जीवन्यां भावसाध्वसपरिग्रहादित्यत्र। अत्र भयहेतुनाऽनागतपौरुषादीनां त्रयाणां भैमीगतस्त्रीत्वादीनां त्रयाणाञ्च यथासंख्यं सम्बन्धात् यथासङ्ख्यालङ्कारः॥ २८॥

दूत्येति। यत् यस्मात् इयं दमयन्ती प्राक् पूर्वं दूत्यकर्मणि सङ्गतिगतम् इन्द्रदूत्यावस्थाम् आगतं प्रियं नलम् आत्मना गिरः अशिश्रवत् श्रावयति स्म, श्रावयतेर्णौ चङ्युपधाया ह्रस्वे सन्वद्भावः, वचःश्रुतिः शृणोतीत्यादिना विकल्पादभ्यासस्येत्वम्। तं विनयव्ययं विनयलोपं विचिन्त्य अनुस्मृत्य ह्रिया सा भैमी कीदृशं करवाणीति न वेद स्म इतिकर्त्तव्यतामूढा अभवत् इत्यर्थः॥ २९॥

यदिति। किञ्च, प्राक् पूर्वं सपदि वीतलज्जया विगतलज्जया तया भैम्या सदसि नैषधः स्वयं वृतः इति यत् निजम्

आसने मणिमरीचिमांसले यां दिशं स परिरभ्य तस्थिवान्।
तामसूयितवतीव मानिनी न व्यलोकयदियं मनागपि ॥३१॥
ह्रीसरिन्निजनिमज्जनोचितं मौलिदूरनमनं दधानया।
द्वारि चित्रयुवतिश्रिया तया भर्त्तृह्रतिशतमश्रुतीकृतम् ॥३२॥
वेश्म पत्युरविशन्न साध्वसात् वेशितापि शयनं बभाज न।
भाजितापि सविधं न साखपत् स्वापितापि न च सम्मुखाभवत्
॥३३॥

---

आत्मीयं तत् स्वयंवरणरूपं चापलं मनसिकृत्य हृदि निधाय अनित्याधाना उरसि मनसीति समासे कृञो ल्यवादेशः। सा भैमी नलं विलोकितुं न शशाक ॥ ३० ॥

आसने इति। सः नलः मणिमरीचिभिः मांसले सान्द्रे आसने मणिपीठे यां दिशं परिरभ्य तस्थिवान् यद्दिशाभिमुख्येनास्थित इत्यर्थः। मानिनी इयं दमयन्ती तां प्रियपरिरब्धां दिशम् असूयितवती इव, सापत्न्यात् ईर्ष्यतीव इत्युत्प्रेक्षा। मनाक् ईषत् अपि न व्यलोकयत् नलं तु किमु वक्तव्यम् इति भावः ॥ ३१ ॥

ह्रीति। ह्रीसरिति निजं निमज्जनं तस्य उचितं तदनुभावत्वात् तस्येति भावः। मौलेः मूर्ध्नः दूरनमनं दधानया द्वारि द्वारदेशे चित्रयुवतेः श्रीः इव श्रीः यस्याः तया तद्वन्निश्चलया इत्यर्थः, तया भैम्या भर्त्तुः नलस्य ह्रतिशतम् आह्वानशतम् अश्रुतीकृतम्, अभूततद्भावे च्विः। ह्रिया प्रियं न किञ्चित् प्रत्युवाच इत्यर्थः ॥ ३२ ॥

वेश्मेति। सा भैमी साध्वसात् पत्युः वेश्म न अविशत्, वेशिता कथञ्चित् सखीभिः प्रवेशिता शयनं तल्पं न बभाज न भेजे, भाजिता प्रापिता अपि सविधं समीपं, अत्यन्तसंयोगे

आत्मनापि हरदारसुन्दरी यत् किमप्यभिललाष चेष्टितुम्।
स्वामिना यदि तदर्थमर्थिता मुद्रितस्तदनया तदुद्यमः ॥३४॥
ह्रीभराद् विमुखया तया भियं सञ्चितामननुरागशङ्किनि।
स स्वचेतसि लुलोप संस्मरन् दूत्यकालकलितं तदाशयम् ॥३५॥
पार्श्वमागमि निजं सखालिभिस्तेन पूर्वमथ सा तयैकया।
क्वापि तामपि नियुज्य मायिना स्वात्ममात्रसचिवावशेषिता॥३६

---

द्वितीया। न अस्वपत् न निदद्रौ, स्वापिता अपि समीपे निद्रापिता अपि संमुखा अभिमुखी न अभवत् बभूव। एतेन नवोढ़ाया मौग्ध्यात् लज्जाविजितमन्मथत्वमुक्तम् ॥ ३३ ॥

आत्मनेति। हरदाराः पार्वती इव सुन्दरी सा आत्मना स्वयम् अपि यत् किमपि चेष्टितुं यत् किञ्चन कर्त्तुम् अभिललाष, स्वामिना पत्या तदर्थं तत्कारणार्थम् अर्थिता यदि प्रार्थिता चेत् तर्हि अनया भैम्या तदुद्यमः तस्य नलस्य उद्यमः मुद्रितः प्रतिबद्धः भवति, स्वयं चिकीर्षितमपि न करोति इत्यर्थः ॥ ३४ ॥

ह्रीभरादिति। सः नलः ह्रीभरात् विमुखया तया भैम्या अननुरागशङ्किनि वैमुख्यदर्शनात् अनुरागाभावशङ्किनि स्वचेतसि सञ्चितां संक्रामितां भियं दूत्यकाले कलितं अवगतं तस्याः आशयं चित्तवृत्तं संस्मरन् लुलोप, तदनु ... ।स्यानुसन्धानेन भयं नुनोद इत्यर्थः ॥ ३५ ॥

पार्श्वमिति। मायिना कपटपटुना तेन नलेन सा भैमी पूर्वम् आलिभिः सखीभिः सखीभिः सह निजं पार्श्वं समीपम् आगमि आगमिता, गमेर्ण्यन्तात् कर्मणि लुङ्, मित्त्वात् ह्रस्वत्वम्। अथ एकया तया आल्या सह अवशेषिता अथ ताम्

सन्निधावपि निजे निवेशितामालिभि: कुसुमशस्त्रशास्त्रवित्।
आनयद् व्यवधिमानिव प्रियामङ्कपालिवलयेन सन्निधिम् ॥३७॥
प्रागचुम्बदलिके ह्रिया नतां तां क्रमाद्दरनतां कपोलयो:।
तेन विश्वसितमानसां झटित्यानने स परिचुम्ब्य सिस्मिये ॥३८॥
लज्जया प्रथममेत्य हुङ्कृत: साध्वसेन वलिनाथ तर्जित:।
किञ्चिदुच्छ्वसित एव तद्धृदि न्यग्बभूव पुनरर्भक: स्मर: ॥३९॥

---

एकाम् अपि क्वापि नियुज्य स्वात्ममात्रं स्वयम् एव सचिव: अन्तिकचर: यस्या: सा अवशेषिता विविक्तामकरोत् इत्यर्थ: ॥ ३६ ॥

सन्निधाविति। कुसुमशस्त्रशास्त्रवित् कामशास्त्रपारग: स: आलीभि: निजे सन्निधौ निवेशिताम् अपि प्रियां विविच्य व्यवधिमान् इव असन्निहित: इव अङ्कपालि: प्रयोज्य: तद्वलयेन तत्रापि चालिङ्गनपूर्वम् आनयदिति कामशास्त्रादिति भाव: ॥ ३७ ॥

प्रागिति। प्राक् पूर्वं अलिके ललाटपट्टके अचुम्बत्, अत: ह्रिया नतां नम्रमुखीं क्रमात् दरनतां किञ्चिदुन्नमितमुखीम् इत्यर्थ:, तां कपोलयोश्च गण्डयो: अचुम्बत्, तेन विश्वसितमानसां विस्रब्धचित्तां तां दमयन्तीं झटिति द्राक् आनने मुखे परिचुम्ब्य सिस्मिये स्मितवान् अनुप्रवेशलाभात् इति भाव: ॥ ३८ ॥

लज्जयेति। स्मर: एव अर्भक: डिम्भ:, अप्रगल्भावस्थत्वात् तथा रूपणम्। तस्या: हृदि किञ्चित् उच्छ्वसित: एव पूर्वोक्तचुम्बनाद्युपलालनेन किञ्चित् उल्लसित: सन् एव पुन: लज्जया ह्रिया एत्य आगत्य हुङ्कृत: हुङ्कारेण वारित: अथ तथाप्युन्न-

वल्लभस्य भुजयोः स्मरोत्सवे दित्सतोः प्रसभमङ्कपालिकाम् ।
एककश्चिरमरोधि बालया तल्पयन्त्रणनिरन्तरालया ॥ ४० ॥
हारसाधिमविलोकने मृषा कौतुकं किमपि नाटयन्नयम् ।
कण्ठमूलमदसीयमस्पृशत् पाणिनोपकुचधाविना धवः ॥४१॥
यत् त्वयास्मि सदसि स्रजाञ्चितस्तन्मयाऽपि भवदर्हणार्हति ।
इत्युदीर्य्य निजहारमर्पयन्नस्पृशत् स तदुरोजकोरकौ ॥४२॥

---

सनं बलिना ततः अपि प्रबलेन साध्वसेन त्रासेन पुंसा तर्जितः भर्त्सितः सन् न्यग्बभूव सञ्चुकोच ॥ ३८ ॥

वल्लभस्येति । स्मरोत्सवे सुरते प्रसभं बलात् अङ्कपालिकाम् आलिङ्गनं, संपरीरम्भ आश्लेषः परिष्वङ्गः प्रगूहनम् । आलिङ्गनमपि क्रोड़ीकरणं चाङ्कपाल्यपीति यादवः । दित्सतोः दातुम् इच्छतोः आलिङ्गनप्रवृत्तयोः इत्यर्थः, ददातेः सनन्तात् लटः शत्रादेशः, सनि मीमेत्यादिना इत्वेऽभ्यासलोपः । वल्लभस्य भुजयोः एककः एकाकी, भुजः असहाये कन्प्रत्ययः । तल्पयन्त्रणे तल्पाश्लेषणे निरन्तरालया अव्यवधानया निरन्तरालया अव्यवधानया निरन्तराश्लिष्टतल्पया इत्यर्थः, बालया चिरम् अरोधि निरुद्धः तल्पमाश्लिष्य करमरुणत् इत्यर्थः ॥४०॥

हारेति । धवः पतिः अयं नलः हारस्य साधिम्नः रामणीयकस्य विलोकने किम् अपि मृषा कौतुकं नाटयन् उपकुचं कुचसमीपे धावतीति तद्धाविना कुचसङ्घर्षिणा पाणिना, अमुष्याः इदम्, अदसीयत्यादित्वात् वृद्धादञ् । कण्ठमूलम् अस्पृशत् ॥ ४१ ॥

यदिति । हे प्रिये ! यत् यस्मात् त्वया सदसि स्रजा वरणमालया अञ्चितः पूजितः अस्मि, अञ्चेः पूजायामितीडागमः, नाञ्चेः पूजायामित्यनुनासिकलोपप्रतिषेधः । तत् मया

नीविसीम्नि निहितं स निद्रया सुभ्रुवो निशि निषिद्धसंविदः।
कम्पितं शयमपासयन्निजं दोलनैर्जनितबोधयाऽनया ॥४३॥
स प्रियोरुयुगकञ्चुकांशुके न्यस्य दृष्टिमथ सिस्मिये नृपः।
आववार तदथाम्बराञ्चलैः सा निरावृतिरिव त्रपावृता ॥४४॥
बुद्धिमान् व्यधित तां क्रमादयं किञ्चिदित्थमपनीतसाध्वसाम्।
किञ्च तन्मनसि चित्तजन्मना क्षीरनामि धनुषा समं मनाक्॥४५॥

---

अपि भवत्याः अर्हणा पूजा, सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः। अर्हति युज्यते इति उदीर्य्य निजं हारम् अर्पयन् सः नलः तस्याः उरोजकोरकौ कुचकुड्मलौ अस्पृशत् ॥ ४२ ॥

नीवीति। सः नलः निशि निद्रया निषिद्धसंविदः लुप्तसंज्ञायाः सुभ्रुवः प्रियायाः नीविसीम्नि नीवीप्रदेशे निहितं कम्पितं, कम्पमिति सात्त्विकोक्तिः। निजं शयं पाणिं दोलनैः पाणिव्यापारैः जनितबोधया प्रबुद्धया अनया प्रियया प्रयोज्यया अपासयत् निरासयामास ॥ ४३ ॥

स इति। सः नृपः प्रियायाः ऊरुयुगस्य कञ्चुके वर्म्मभूते अंशुके दृष्टिं न्यस्य सिस्मिये स्मितवान्, तदेव दृष्टवान् इति भावः। अथ सा अपि निरावृतिः इव आवरणरहिता इव साक्षाद्दृष्टोरुयुगा इव इत्यर्थः, अतएव त्रपावृता लज्जामग्ना इति तदूरुयुगम् अम्बराञ्चलैः वस्त्रान्तैः आववार आवृतमपि अनावृतमितीव आवृणोदिति अपातिशयोक्तिः ॥ ४४ ॥

अथ शनैर्मौग्ध्यत्यागात् मध्यमावस्थां प्रापितेत्याह बुद्धिमानिति। बुद्धिमान् उपायज्ञः अयं तां प्रियां क्रमात् इत्थम् उक्तरीत्या किञ्चित् अपनीतसाध्वसाम् अपसारितभयां व्यधित विहितवान्। किञ्च, चित्तजन्मना कामेन तस्याः मनसि क्षीः धनुषा समं मनाक् अनामि, मिलाभावपश्चात् वृद्धिः। शनै-

सिस्मिये हसति तेन न स्म सा प्रोणितापि परिहासभाषणैः।
स्वे हि दर्शयति ते परेण कान्यनर्घ्यदन्तकुरुविन्दमालिके ॥४६॥
वीक्ष्य भीमतनयास्तनद्वयं मग्नहारमणिमुद्रयाङ्कितम्।
सोढकान्तपरिरम्भगाढता सा त्वमानि सुमुखी सखीजनैः ॥४७॥
याचते स्म परिधापिकाः सखीः सा स्वनीविनिविडक्रियां यथा
अन्वमिन्वत तथा विहस्य ता वृत्तमत्र नितिगाम्नि नागनन् ॥४८॥

---

लज्जान्यथाकारेण कामः स्वयम् उत्थितः इत्यर्थः। अत्र हि नमनधनुर्नमनयोः कार्य्यकारणयोः पौर्वापर्य्येण सहोक्त्यलङ्कारः ॥ ४५ ॥

सिस्मिये इति। सा तेन परिहासभाषणैः परिहासोक्तिभिः प्रोणिता हर्षिता अपि, प्रीङो ण्यन्तात्कर्मणि क्तः, धूञ्प्रीञो-र्नुक् वक्तव्यः। सिस्मिये न तु हसति स्म, स्मितमेव अकरोत् न तु हसितम् इति गाम्भीर्य्योक्तिः। हसितं लक्ष्यदशनं स्मितञ्च न तथा इति उभयोर्भेदः। तथाहि, का स्त्री दन्ताः एव कुरुविन्दाः पद्मरागाः, कुरुविन्दस्तु मुक्तायां पद्मरागे इ इत्यमरः। अनर्घ्ये सुशोभने तन्मालिके स्वे आत्मीये ते द्वे परेण दर्शयति ॥ ४६ ॥

वीक्ष्येति। मग्नानां निष्पीड़नात् अन्तःप्रविष्टानां हारमणीनां मुद्रया पदेन अङ्कितं भीमतनयास्तनद्वयं वीक्ष्य सखीजनैः सुमुखी सा भैमी सोढः कान्तस्य यः परिरम्भः तस्य गाढता दार्ढ्यं यया सा सती अमानि गाढ़ं परिरब्धा इति अनुमिता इत्यर्थः ॥ ४७ ॥

याचते इति। सा दमयन्ती यथा परिधापिकाः वस्त्रबन्धिनीः सखीः स्वस्य आत्मनः नीवेः निविड़क्रियां दृढ़बन्धं याचते स्म, तथा

कुर्वती निभृतितं क्रिया कियत् सौहृदाद् विवृतसौरभं कियत्।
कुड्मलोन्मिषितसूनसेविनीं पद्मिनीं जयति सा स्म पद्मिनी॥४९॥
नाविलोक्य नलमासितुं स्मरो ह्रीर्न वीक्षितुमदान्मृगीदृश:।
तद्दृश: पतिदिशाऽचलन्नथ व्रीडिता: समकुचन्मुहु: पथ:॥५०॥
नानया पतिरनायि नेत्रयोर्लक्ष्यतामपि परोक्षतामपि।
वीक्षते स खलु यद्विलोकने तत्र तत्र नयने ददानया॥५१॥

---

ता: सख्य: विहस्य अत्र नीविदेशे पत्यु: पाणिचापलम् आकर्षणं वृत्तं भूतम् अन्वमिन्वत अनुमितवत्य:, अन्यथा एतत्-प्रार्थनानुपपत्ते: इति भाव:। मिनोतेर्लङि तङ् ॥ ४८ ॥

कुर्वतीति। पद्मिनी पद्मिनीजाति: स्त्री कमलिनी च च सा भैमी कियत् रतिवृत्तं क्रिया निभृतितं निगूहितं कियत्, सुहृदो भाव: सौहृदं तस्मात् सौहार्दात् स्नेहात्, युवादित्वादण्प्रत्यय:। हृदयस्य हृल्लेख यदण्लेखेलक्षणि हृद्भवाच्चोभयपदवृद्धि:। विवृतं सौरभं मनोज्ञत्वं सौगन्ध्यञ्च यस्य तत् कुर्वती कुड्मलोन्मीषितानि च सूनानि सेवते इति तत्सेविनीं तद्वतीं पद्मिनीं कमलिनीं जयति स्म, तद्वत् बभौ इत्यर्थ: ॥ ४९ ॥

नेति। स्मर: मृगीदृश: सुभ्रुव: भैम्या: नलम् अविलोक्य आसितुं नादात् ह्री: वीक्षितुं न अदात् तदा तस्या: दृश: दृष्टय: पत्यु: दिशा तन्मार्गेण मुहु: अचलन्, अथ व्रीडिता: सत्य: पथ: तन्मार्गात् समकुचन् सङ्कुचिता: ॥ ५० ॥

नेति। अनया भैम्या पति: नेत्रयो: लक्ष्यतां विषयताम् अपि न अनायि न नीत:, तथा परोक्षतां विषयताम् अपि न अनायि। कुत: ? यत् यस्मात् विलोकने निमित्ते तत्र तत्र

वासरे विरहनिःसहा निशां कान्तयोगसमयं समैहत ।
सा ह्रिया निशि पुनर्दिनोदयं वाञ्छति स्म पतिकेलिलज्जिता ॥ ५२ ॥

तत् करोमि परमभ्युपैषि यत् मा ह्रियं व्रज भियं परित्यज ।
आलिवर्ग इव तेऽहमित्यमूं शश्वदाश्वसनमूचिवान् नलः ॥५३॥

येन तन्मदनवह्निना स्थितं ह्रीमहौषधिनिरुद्धशक्तिना ।
सिद्धिमद्भिरुदतेजि तैः पुनः स प्रियप्रियवचोऽभिमन्त्रणैः ॥५४॥

---

नयने ददानया तेषु तेषु विषयेषु दत्तदृष्ट्या तया वीक्ष्यते स्म खलु अवर्जनीयतया वीचितः एव प्राय इति भावः ॥ ५१ ॥

वासरे इति। सा भैमी वासरे विरहस्य निःसहा इति पचाद्यच्। ह्रिया कान्तयोगसमयं प्रियसमागमकालं निशां समैहत ऐच्छत, निशि पुनः पत्युः केलिषु लज्जिता सती दिनोदयं दिनप्रादुर्भावं वाञ्छति स्म ॥ ५२ ॥

तदिति। हे प्रिये! तत्प्रियं परं तत् एव करोमि, यत् अभ्युपैषि अङ्गीकरोषि, ह्रियं मा न व्रज, भियं परित्यज, अहं ते आलिवर्गः सखीजनः इव, इति अमूं प्रियां नलः शश्वत् मुहुर्मुहुः, पुनः पुनः शश्वदित्यमरः। आश्वसनं सान्त्ववचनम् ऊचिवान् ॥ ५३ ॥

येनेति। येन तन्मदनवह्निना तस्याः कामाग्निना ह्रीः एव महौषधिः तया निरुद्धशक्तिना प्रतिबद्धशक्तिना सता स्थितं तस्थे, भावे क्तः। सः कामाग्निः सिद्धिमद्भिः सिद्धिप्रशक्तैः तैः पूर्वोक्तैः प्रियस्य पत्युः प्रियवचोभिः एव अभिमन्त्रणैः मन्त्रप्रयोगैः पुनः उदतेजि उत्तेजितं, तिजनिशातन इति धातोर्ण्यन्तात् कर्मणि लुङ्। औषधप्रतिबद्धोऽग्निः प्रतिमन्त्रेण प्रकृतिस्थो भवतीति भावः। रूपकालङ्कारः ॥ ५४ ॥

यद्विधूय दयितार्पितं करं दोर्द्वयेन पिदधे कुचौ दृढम् ।
पार्श्वगं प्रियमपास्य सा ह्रिया तं हृदि स्थितमिवालिलिङ्ग तत्
॥ ५५ ॥

अन्यदस्मि भवतीं न याचिता वारमेकमधरं धयामि ते ।
इत्यसिस्वददुपांशुकाकुवागुपमर्द्दहठवृत्तिरेव तम् ॥५६॥
चुम्बनादिषु बभूव नाम किं तद्वृथा भयमिहापि मा कृथाः ।
आलपन्निति तदीयमादिमं स व्यधत्त रसनावलिव्ययम् ॥५७॥
अस्तिवाम्यभरमस्तिकौतुकं सास्तिघर्म्मजलमस्तिवेपथु ।

यदिति । सा भैमी दयितेन अर्पितं करं विधूय दोर्द्वयेन भुजयुगेन कुचौ दृढं यथा तथा यत् पिदधे आच्छादयामास, तत् तस्मात् ह्रिया पार्श्वगं बहिःसमीपस्थं प्रियं अपास्य निरस्य हृदि स्थितं तम् आलिलिङ्ग इव आलिङ्गितवती किम् इत्युत्प्रेक्षा ॥ ५५ ॥

अन्यदिति । हे प्रिये ! भवतीम् अन्यत् किम् अपि याचिता अर्थयिता, तृन् दुह्यादित्वात् द्विकर्मता । न अस्मि, किन्तु एकवारं सकृत् ते तव अधरं धयामि पिबामि, धेटः प्रार्थनायां लोटो मिप् । इति इत्थम् उपांशु मन्दं काकुवाक् अविकृतस्वरोक्तिः, सः अयं नलः उपमर्द्दे हठवृत्तिः बलात्कारवृत्तिः यस्य सः एव सन् तम् अधरम् असिस्वदत् स्वादितवान्, स्वदेर्णौ चङ्युपधाया ह्रस्वः ॥ ५६ ॥

चुम्बनेति । हे प्रिये ! चुम्बनादिषु कृतेषु किं नाम अनिष्टं बभूव ? न किञ्चित् इत्यर्थः । तत् तस्मात् इह करिष्यमाणे अपि वृथा भियं मा कृथाः, इत्युदीर्य्य अयं नलः मृगदृशः प्रियायाः आदिमम् आद्यं, आदेश्चेति वचनान्मप्रत्ययः । रशनावलिव्ययं काञ्चीमोचनं चकार ॥ ५७ ॥

अस्तीति । सा भैमी अस्ति वाम्यस्य सर्वत्र प्रतिकूलतायाः

अस्तिभीति रतमस्तिवाञ्छितं प्रापदस्तिसुखमस्तिपीडनम् ॥५८
ह्रीस्तवेयमुचितैव यत्नवस्तावके मनसि मत्समागमः ।
तत्तु निस्त्रपमजस्रसङ्गमात् व्रीडमावहति मामकं मनः ॥५९॥
इत्युपालभत सम्भुजिक्रियारम्भविघ्नघनलज्जितैर्जिताम् ।
तां तथा स चतुरो न सा यथा त्रमुमेव तमनु त्रपाभयात् ॥६०॥
प्रातरात्मशयनाद्विनिर्य्यतीं संनिरुध्य यदसाध्यमन्यदा ।

---

भरः आत्यन्तिकत्वं यस्मिन् तत्, सम्बन्धिकारे अस्तिक्षीरादिवचनमिति बहुव्रीहिः। एवमुत्तरत्रापि द्रष्टव्यम्। अस्ति कौतुकम् औत्सुक्यं यस्मिन् तत्। अस्ति घर्मजलं स्वेदः यस्मिन् तत्। अस्ति वेपथुः कम्पः सात्त्विकमात्रोपलक्षणं, यस्मिन् तत् अस्ति भीतिः भयं यस्मिन् तत्। अस्ति वाञ्छितं मनोरथसुखम् यस्मिन् तत्। अस्ति सुखं यस्मिन् तत्। अस्ति पीड़नं नखदन्तक्षतादि यस्मिन् तत्। एवम्भूतं रतं सुरतसम्भोगं प्रापत् ॥ ५८ ॥

ह्रीरिति। हे प्रिये! तव इयं ह्रीः उचिता एव, यत् यस्मात् तावके मनसि मत्समागमः मत्सङ्गतिः नवः साम्प्रतिकः, तत् निस्त्रपं निर्लज्जं मामकं मदीयं मनः अजस्रसङ्गमात् नित्यसमागमात् एव व्रीडम् आवहति ॥ ५९ ॥

इतीति। सम्भुजिक्रियारम्भस्य सम्भोगव्यापारोपक्रमस्य विघ्नैः प्रतिबन्धकैः घनलज्जितैः निविड़व्रीडैः, जितां तां प्रियां चतुरः सः नलः तथा उपालभत यथा सा प्रिया तम् अनु तं प्रति त्रमुम् एव, जड़ित्वात् विकल्पादिदभावः। त्रपाभयात् उक्तोपालम्भभयात् न शक्नोति शेषः। त्रपां जहौ इत्यर्थः ॥ ६० ॥

प्रातरिति। भुवः जम्भजित् भूदेवेन्द्रः नलः प्रातः आत्म-

तत्र मुखार्पणमुखं सुखं भुवो जम्भजित् क्षितिशचीमचीकरत् ॥६१॥
नायकस्य शयनादहर्मुखे निर्गता मुदमुदीक्ष्य सुभ्रुवाम् ।
आत्मना निजनवस्मरोत्सवस्मारिणीयमहृणीयत स्वयम् ॥६२॥
तां मिथोऽभिदधतीं सखीः प्रियस्यात्मनश्च स निशाविचेष्टितम् ।
पार्श्वगः सुरवरात् पिधां दधत् हृष्यतां श्रुतकथो हसन् गतः॥६३

---

शयनात् विनिर्यतीं निर्गच्छन्तीं क्षितिशचीं भूलोकेन्द्राणीं तां प्रियां संनिरुध्य अन्यदा अनन्तरक्षणे असाध्यम् अलभ्यं सखीमिलनादिति भावः। तत् अनुभूतचरं मुखार्पणमुखं मुखचुम्बनप्रमुखं सुखम् अचीकरत् तथा कारयामास इत्यर्थः। करोतेर्णौ चङ्युपधाह्रस्वादिकोऽन्यतरस्यामिति विकल्पादणिकर्त्तुः कर्मत्वम् ॥ ६१ ॥

नायकस्येति। अहर्मुखे ऊषसि, रोः सुपीत्यह्नो नकारस्य रेफादेशः। नायकस्य शयनात् निर्गता इयं भैमी सुभ्रुवां सखीनां मुदं स्वसम्भोगदर्शनजन्यमिति भावः। उदीक्ष्य आत्मना मनसा निजं स्वकीयं नवं स्मरोत्सवं विस्रम्भसम्भोगं स्मरतीति तत्स्मारिणी सती स्वयम् एव अहृणीयत तत्प्रकाशनात् अजिह्रेत्, त्रपायां ह्रीयेति जिह्रेति लज्जते हृणीयते इति भट्टमल्लः। कण्ड्वादियगन्तत्वाल्लङ्। तत्र हृणीङिति ङित्करणादात्मनेपदम् ॥ ६२ ॥

तामिति। सः नलः प्रियस्य पत्युः आत्मनश्च निशाविचेष्टितं रात्रिवृत्तं मिथः रहसि सखीः अभिदधतीं सखीभ्यः कथयन्तीं, ब्रुवेरर्थवत्त्वाद् द्विकर्मकत्वम्। तां प्रियां पार्श्वगः समीपस्थः हसन् सुराणाम् इन्द्रादीनां वरात् वरप्रसादात् पिधाम् अन्तर्धां, आतश्चोपसर्ग इत्यङ्प्रत्ययः। वष्टिभागु-

चक्रदारविरहेक्षणक्षणे बिभ्यती धवहसाय साभवत् ।
क्वापि वस्तु निवदत्यनागतं चित्तमुद्यदनिमित्तवैकृतम् ॥६४॥
चुम्बितुं न मुखमाचकर्ष यत् पत्युरन्तरमृतं ववर्ष तत् ।
सा नुनोद न भुजं यदर्पितं तेन तस्य किमभून्न तर्पितम् ? ॥६५॥
नीतयोः स्तनपिधानतां तया दातुमाप भुजयोः करं परम् ।
वीतबाहुनि ततो हृदंशुके केवलेऽप्यथ स तत्कुचद्वये ॥६६॥

---

रिरल्लोपमित्यकारलोपः । दधत् श्रुतकथः श्रुतप्रियावचनः सन् दृश्यतां गतः प्राप्तः ॥ ६३ ॥

अथास्याः प्रियविरहासहिष्णुतामाह चक्रेति । चक्रदाराणां रात्रौ चक्रवाकवनितायाः विरहेक्षणक्षणे वियोगदर्शनकाले बिभ्यती स्वयं त्रस्यन्ती सा भैमी धवस्य प्रियस्य नलस्य हसाय हास्याय अभवत् प्रियाया अकाण्डत्रासदर्शनात् प्रियो जहास इत्यर्थः । स्वनहसोर्वेति विकल्पादप्प्रत्ययः । अथवा युक्तं भयमित्यत आह—क्वापीति । क्व अपि कुत्रचित् विषये उद्यत् उत्पद्यमानम् अनिमित्तवैकृतम् आकस्मिकविकारः यस्य तत् तादृक् चित्तं कर्त्तृ अनागतं वस्तु आगाम्यर्थः एव निवदति वदतीत्यर्थः । चक्रविरहदर्शनात् बुद्ध्या स्फुटो निज आगामिप्राभातिकविरह एव हेतुभूत इति तात्पर्य्यम् ॥ ६४ ॥

चुम्बितुमिति । सा प्रिया चुम्बितुं मुखं न आचकर्ष इति यत् तत् अनाकर्षणं पत्युः अन्तः अन्तःकरणे अमृतं ववर्ष तत्तुल्यमित्यर्थः । अर्पितम् उपरिन्यस्तं भुजं न नुनोद न निरास तेन अङ्गीकारेण तस्य नलस्य सम्बन्धि किं न तर्पितम् अभूत् ? न आप्यायितम् अभूत् ? सर्वाङ्गसन्तर्पणमभूत् इत्यर्थः ॥ ६५ ॥

नीतयोरिति । सः नलः तया स्तनपिधानतां नीतयोः भुजयोः तद्दोर्युगयोः सतोः ततः वीतबाहुनि अपसारितभुजे

याचनाच्च ददतीं नखार्पणं तां विधाय कथयान्यचेतसम्।
वक्षसि न्यसितुमात्ततत्करः स्वं बिभेद मुमुदे स तन्नखैः ॥६७॥
स प्रसह्य हृदयापवारकं हर्त्तुमक्षमत सुभ्रुवो वहिः।
क्षौमयं न तु तदीयमान्तरं तद्विनेतुमभवत् प्रभुः प्रभुः ॥६८॥
स स्मरेण बलिनाप्यहापिता क्षौमे भृशमशोभताबला।
भाति चापि वसनं विना न तु व्रीडधैर्य्यपरिवर्जने जनः ॥६९॥

---

हृदंशुके स्तनोत्तरीये अथ केवले अपसारितांशुके तत्कुचद्वये अपि परं भूयः करं दातुम् अर्पयितुम् आप करदानमाप इत्यर्थः। अत्रैकस्य करस्य क्रमादनेकेषु भुजांशुककुचेषु वृत्तिकथनात् क्रमेणैकमनेकस्मिन्नित्याद्युक्तलक्षणः पर्य्यायालङ्कारभेदः ॥६६॥

याचनादिति। याचनात् अर्थनात् नखार्पणं न ददतीं नखक्षतम् अकुर्वतीं तां प्रियां कथया केनचित् कथाव्याजेन, चितिपूज्येत्यादिना अङ्प्रत्ययः। अन्यचेतसम् अन्यमानसां व्यासक्तचित्तां विधाय वक्षसि स्वोरसि न्यसितुम् आत्ततत्करः गृहीतप्रियाकरः सन् तन्नखैः प्रियानखैः स्वम् आत्मानं बिभेद अभिनत् व्यदारयत् मुमुदे ननन्द च ॥ ६७ ॥

स इति। प्रभुः स्वामी सः नलः सुभ्रुवः वहिः वाह्य-हृदयापवारकम् उत्तरीयं प्रसह्य हर्त्तुं अक्षमत, तदीयं दम-न्तीयम् आन्तरं अन्तर्वर्त्ति क्षौमयं न तु तत् हृदयापवारकं विनेतुम् अनुनेतुं प्रभुः समर्थः अभवत् ॥ ६८ ॥

सेति। बलिना स्मरेण क्षौमे लज्जाधैर्य्ये अहापिता अत्याजिता, जहातेर्ण्यन्तात् सन्वद्भावे द्विकर्मकादप्रधाने कर्मणि क्तः। सा अबला भृशम् अशोभत। तथाहि, जनः वसनं विनापि भाति व्रीडधैर्य्ययोः परिवर्जने परित्यागे तु न भाति न शोभते न तु निर्लज्जाधैर्य्या इति भावः ॥ ६९ ॥

आत्थ नेति रतयाचितं न चेत् मामतोऽनुमतवत्यसि स्फुटम् ।
इत्यमुं तदभिलापनोत्सुकं धूनितेन शिरसा निरास सा ॥७०॥
या शिरोविधुतिरात्थ नेति ते सा मया न किमियं समाकलि ।
तन्निषेधसमसङ्ख्यताविधिर्व्यक्तमेव तव वक्ति वाञ्छितम् ॥७१॥
नात्थ नात्थ शृणवानि तेन किं ? ते न वाचमिति तां निगद्य सः ।
सा स्म दूत्यगतमाह तं यथा तज्जगाद सृदुभिस्तदुक्तिभिः ॥७२॥

---

आत्थेति। हे प्रिये! रतयाचितं सुरतभिक्षां मां न इति न आत्थ न च ब्रवीषि चेत्, ततः प्रतिषेधात् स्फुटं व्यक्तम् अनुमतवती असि, अप्रतिषिद्धम् अनुमतं भवतीति न्यायात् इति भावः। इति इत्थं तस्याः अभिलापने उत्सुकम् अमुं प्रियं सा भैमी धूनितेन कम्पितेन, धूञ्कम्पने ओनुसू वक्तव्यः। शिरसा निरास, अहो अत्यन्ताभिमतार्थेऽपि निषेधशीलता स्त्रीणामिति भावः ॥ ७० ॥

येति। हे प्रिये! या ते शिरोविधुतिः कर्त्री न इति आह निषेधं ब्रूते, सा इयं शिरोविधुतिः मया समकलि गृहीतार्थैव इत्यर्थः, कलयतेः कर्मणि लुङ्। तस्य शिरोविधुतिरूपस्य निषेधस्य समसङ्ख्यता विषमेतरसङ्ख्यता सा एव विधिः, द्वौ नञौ प्रकृतमर्थं ब्रूते इति न्यायात् तव वाञ्छितम् अभिलाषं व्यक्तम् एव वक्ति, वचेर्लट्। निषेधादपि शिरोविधूननं व्यर्थमेव भवति इत्यर्थः ॥७१॥

नेति। हे प्रिये! न आत्थ न आत्थ न आलपसि न आलपसि, सम्भ्रमे द्विरुक्तिः। तेन अनालपनेन ते तव वाचं न शृणवानि किं ? न शृणुयां किं ? शृणुयामेव इत्यसम्भावनानिषेधः। इति तां प्रियां निगद्य सः नलः सा प्रिया दूत्य-

नीविसीम्नि निबिडं पुराऽरुधत् पाणिनाथ शिथिलेन तत्करम्।
सा क्रमेण न न नेति वादिनी विघ्नमाचरदमुष्य केवलम् ॥७३॥
रूपवेषवसनाङ्गवासनाभूषणादिषु पृथग्विदग्धताम्।
सान्यदिव्ययुवतिभ्रमक्षमा नित्यमेत्य तमगान्नवा नवा ॥७४॥
इङ्गितेन निजरागसागरं संविभाव्य चटुभिर्गुणज्ञताम्।
भक्तताश्च परिचर्य्ययानिशं साधिकाधिकवशं व्यधत्त तम् ॥७५॥

---

गतं दूत्यावस्थां गतं तम् आत्मानं यथा येन प्रकारेण आह स्म उक्तवती तत् सर्वं मृदुभिः तस्याः उक्तिभिः जगाद इत्यर्थः। तदा तथा निःशङ्कत्वमालम्ब्य सम्प्रति किमर्थं वृथा सङ्कुचसि इत्यर्थः॥ ७२॥

नीवीति। सा प्रिया नीविसीम्नि वस्त्रग्रन्थिदेशे तत्करं प्रियहस्तं पुरा प्रथमं पाणिना निबिडं भृशम् अरुणत् रुद्धवती, रुन्धतेः कर्त्तरि लङ्। क्रमेण केवलं अथ शिथिलेन मनाक् चलितेन पाणिना ननेति वादिनी वाचिकनिषेधम् एव कुर्वती अमुष्य प्रियकरव्यापारस्य विघ्नम् आचरत् क्रमात् प्रियकरव्यापारमसहिष्ट इत्यर्थः। अत्रैकस्मिन् नीविदेशे क्रमा-दनेकव्यापारसम्बन्धोक्तिपर्य्यायालङ्कारभेदः। ७३॥

रूपेति। रूपं सौन्दर्य्यं वेषं नेपथ्यं वसनं वस्त्रं अङ्गवासना धूपादिना शरीरसंस्कारः भूषणं कङ्कणादि तानि आदिः येषां तेषु शोभासाधनेषु पृथग्विदग्धतां विलक्षणशोभां नित्यम् एत्य अतएव नवा नवा, आभीक्ष्ण्ये नित्यार्थे द्विर्भावः। सा भैमी अन्या काचित् दिव्या युवतिः इति भ्रमे भ्रान्तिजननं क्षमा समर्था सा इति तं नलम् अगात्, इणो गा लुङ्॥ ७४॥

इङ्गितेनेति। सा भैमी इङ्गितेन कटाक्षवीक्षणादिचेष्टि-तेन निजं रागसागरं चटुभिः प्रियवादैः गुणज्ञतां पतिगुणा-

स्वाङ्गमर्पयितुमेत्य वामतां रोषितं प्रियमथानुनीय सा ।
आतदीयहठसम्भुभुक्षुतां नान्वमन्यत पुनस्तमर्थिनम् ॥७६॥
आद्यसङ्गमसमादराण्यधात् वल्लभाय दधती कथञ्चन ।
अङ्ककानि घनमानवामताव्रीडलम्भितदुरापतानि सा ॥७७॥
पत्यु रागिरिशमातरु क्रमात् स्वस्य चागिरिजमालतं वपुः ।
तस्य चार्द्धमखिलं पतिव्रता क्रीडति स्म तपसा विधाय सा ७८

भिन्नतां परिचर्य्यया भक्तां भक्तिमत्त्वञ्च अनिशं संविभाव्य सम्यग् ज्ञापयित्वा, एवन्ताच्चिचि रूपम्। तं प्रियम् अधिकाधिकवशम् अत्यन्तवशंवदं, प्रकारे गुणवचनस्येति द्विरुक्तिः, कर्मधारयवद्भावात् सुपो लुक्। व्यधत्त। इङ्गिताद्यनुमितैः रागादिगुणैस्तस्याः सोऽत्यन्तवशंवदोऽभूत् इत्यर्थः ॥७५॥

स्वाङ्गमिति। सा दमयन्ती स्वाङ्गम् अर्पयितुं वामतां वक्रताम् एत्य अथ रोषितं प्रियम् अनुनीय प्रसाद्य अथ अर्थिनम् अङ्गार्पणकाङ्क्षिणं तं प्रियं तदीया प्रियसम्बन्धिनी या हठात् बलात् सम्भुभुक्षता सम्भोक्तुम् इच्छा तावत्पर्य्यन्तम् आतदीयहठसम्भुभुक्षुताम्, आङो मर्य्यादाभिविध्योरित्यव्ययीभावेन नपुंसकह्रस्वत्वम्। न अन्वमन्यत दृष्टप्रियप्रसादनमात्रे स्वयं प्रवृत्तिः न सम्भोगे सत्यपि रागवेगः इति भावः ॥७६॥

आद्येति। सा प्रिया घनैः निविडैः मानवामताव्रीडैः कोपवक्रतामन्दाचैः लम्भिता प्रापिता दुरापता [illegible] येषां तानि दुर्लभानि अङ्ककानि कथञ्चन कृच्छ्रेण वल्लभाय दधती धारयन्ती आद्यसङ्गमेन हेतुना समादराणि तुल्याकाङ्क्षाणि अधात् दधार अर्पितवती इत्यर्थः ॥ ७७ ॥

पत्युरिति। पतिव्रता सा दमयन्ती तपसा अस्खलितचारित्ररूपेण क्रमात् पत्युः नलस्य आगिरिशं गिरिशं ईश्वरम्

न स्थली न जलधिर्न काननं नाद्रिभूर्न विषयो न विष्टपम्।
क्रीड़िता न सह यत्र तेन सा सा विधैव न यया यया न वा ७८
नम्रयांशुकविकर्षिणि प्रिये वक्त्रवातहतदीप्तदीपया।
भर्तृमौलिमणिदीपितास्तया विस्मयेन ककुभो निभालिताः ८०
कान्तमूर्ध्नि दधती पिधित्सया तन्मणेः श्रवणपूरमुत्पलम्।
रन्तुमर्चनमिवाचरत् पुरः सा स्ववल्लभतनोर्मनोभुवः॥८१॥

---

आरभ्य आतरु तरुपर्य्यन्तं स्वस्य आत्मनश्च आगिरिजं गिरिजाम् अम्बिकाम् आरभ्य आलतं लतापर्य्यन्तं, सर्वत्राभिविधावव्ययीभावः। वपुः देवगन्धर्वोरगमृगविहगादिदेहश्शरीरं तथा तस्य वपुषः अर्हम् अनुरूपम् अखिलं क्रीड़ायाः साधनञ्च विधाय क्रीड़ति स्म, निरङ्कुशमहिमत्वात् पतिव्रतानामिति भावः॥ ७८॥

नेति। सा भैमी तेन नलेन सह यत्र न क्रीडिता न क्रीड़ितवती, कर्त्तरि क्तः। सा स्थली अकृत्रिमभूमिः न अस्ति, जानपदेत्यादिना अकृत्रिमार्थे ङीप्। एवं सः जलधिः नास्तीति योज्यम्। विषयः देशः किञ्च सा विधा प्रकारः न न अस्ति यया विधया क्रीड़ितवती न वा, धेनुकादिबन्धप्रकारेण तेन सह विजहार इत्यर्थः॥ ७८॥

नम्रयेति। प्रिये अंशुकविकर्षिणि सति नम्रया नतया वक्त्रवातेन फुत्कारेण हतदीप्तदीपया तया भैम्या भर्त्तृमौलिमणिना दीपिताः प्रकाशिताः ककुभः दिशः विस्मयेन निभालिताः दृष्टाः॥ ८०॥

कान्तेति। सा प्रिया तस्य मणेः पिधित्सया पिधातुम् इच्छया कान्तस्य मूर्ध्नि श्रवणपूरम् उत्पलं दधती सती रन्तुं रतिकर्म कर्त्तुं पुरः कर्मादौ स्ववल्लभः एव तनुः यस्य तस्य

तं पिधाय मुदिताथ पार्श्वयोर्वीक्ष्य दीपमुभयत्र सा स्वयोः ।
चित्तमाप कुतुकाद्भुतत्रपातङ्कसङ्कटनिवेशितस्मरम् ॥८२॥
एककस्य शमने परं पुनर्जाग्रतं शमितमप्यवेक्ष्य तम् ।
जातवह्निवरसंस्मृतिः शिरः सा विधूय निमिमील केवलम् ॥८३॥
पश्य भीरु ! न मयापि दृश्यसे यन्निमेषितवती दृशावसि ।

---

नलमूर्त्तेः मनोभुवः कामस्य रत्यधिदैवतस्य अर्चनम् आचरत् इव इत्युत्प्रेक्षा ॥ ८१ ॥

तमिति । सा भैमी तं शिरोमणिं पिधाय कर्णोत्पलेन आच्छाद्य मुदिता अथ स्वयोः स्वकीययोः उभयत्र उभयोः पार्श्वयोः दीपं वीक्ष्य कुतुकं कौतुकम् अद्भुतालोकनात् अद्भुतञ्च निर्वापितस्य पुनः प्रादुर्भावात् त्रपा वस्त्राकर्षणात् आतङ्कः शङ्का भीतिः वा पुरुषसन्निधानात् तेषां सङ्कटः सम्बाधः तत्र निवेशितः निरुद्धः स्मरः यस्मिन् तत् तादृक् चित्तम् आप तथा प्रवृद्धोऽपि कामः तदा किञ्चित् सङ्कुचितः इव आसीत् इत्यर्थः ॥ ८२ ॥

एककस्येति । एककस्य दीपस्य शमने निर्वापणे सति शमितम् अपि पूर्ववत् निर्वापितम् अपि पुनः जाग्रतं नलमायया ज्वलन्तं, नाभ्यस्ताच्छतुरिति नुमः प्रतिषेधः । अपरं तं दीपम् अवेक्ष्य सा जाता वह्नेः वरस्य या दाहण ...पयिकी तनुरित्यादिनोक्तवरदानस्य संस्मृतिः यस्याः सा सती शिरः विधूय कम्पयित्वा दुर्वारत्वं निश्चित्य इत्यर्थः, निमिमील केवलं स्वयं निमीलिताक्षी जाता, भीरूणामेष स्वभावः इति भावः ॥ ८३ ॥

पश्येति । हे भीरु ! भयशीले ! भियः क्रुत्लुकना-

इत्यनेन परिहस्य सा तमः संविधाय समभोजि लज्जिता ॥८४॥
चुम्बसेऽयमयमङ्क्षसे नखैः श्लिष्यसेऽयमयमर्प्यसे हृदि।
नो पुनर्न करवाणि ते गिरं हुं त्यज त्यज तवास्मि किङ्करा ८५
इत्यलीकरतकातरा प्रियं विप्रलभ्य सुरते श्रियं च सा।
चुम्बनादि वितताार मायिनी किं विदग्धमनसामगोचरः ॥८६॥
खेपितोऽङ्गमितमाचलुम्पया दीपिकाचपलया तमोघने।
निर्विशङ्करतजन्मतन्मुखाकूतदर्शनसुखान्यभुङ्क्त सः ॥८७॥

---

विति कुप्रत्ययः। मया अपि न दृश्यते पश्य। यत् यस्मात् दृशौ निमेषितवती निमीलितवती असि तत् इति इत्थम् अनेन नलेन परिहस्य लज्जिता सा तमः अन्धकारं संविधाय समभोजि सम्भुक्ता, अन्यथा भुक्तानां दुराराध्यत्वादिति भावः ॥ ८४ ॥

अथान्धकारकल्पनायाः फलं युग्मेनाह चुम्बसे इत्यादि। मायिनी वचनचतुरा सा भैमी अयं चुम्बसे, नखैः अङ्क्षसे चिह्नसे, अयं श्लिष्यसे, अयं हृदि हृदये अर्प्यसे, पुनः ते तव गिरम् आज्ञां न नो करवाणि करवाणि एव हुमिति निवारणे, त्यज त्यज तव किङ्करा दासी अस्मि किं यत्तत् बहुषु कञ्विधानमित्यङ्प्रत्यये टाप् ॥ ८५ ॥

इतीति। इति इत्थम् अलीकं यथा तथा रतकातरा रतकातर्यं नाटयन्ती श्रियं प्रियञ्च विप्रलभ्य प्रतार्य सुरते चुम्बनादि वितताार ददौ। तथाहि, विदग्धमनसां कुशलधियां किम् अगोचरः अविषयः किं ? किम् असाध्यम् इत्यर्थः। प्रियवाक्यभीतेर्विस्रब्धं विजहार आपत्काले नास्ति मर्यादा इति न्यायात् इति भावः ॥ ८६ ॥

खेति। सः नलः तमः एव घनः मेघः तस्मिन् खेपितेन

यद्भ्रुवौ कुटिलिते तया रते मन्मथेन तदनामि कार्मुकम्।
यत्तु हुं हुमिति सा तदा व्यधात्तत् स्मरस्य शरमुक्तिहुङ्कृतम् ८८
इङ्गितोपदिशतीव नर्त्तितुं तत्क्षणोदितमुदं मनोभुवम्।
कान्तदन्तपरिपीडिताधरा पाणिधूननमियं वितन्वती ॥८९॥
सा शशाक परिरम्भदायिनी गाहितुं हृदुरः प्रियस्य न।
चक्षमे स च न भङ्गुरभ्रुवस्तुङ्गपीनकुचदूरतां गतम् ॥९०॥

---

स्वेच्छया उद्गमिता एव उत्पादिता एव उद्गमितमात्रा सा च सा लुप्ता च तया तथोक्तया क्षणिकया दीपिका एव चपला विद्युत्, विद्युच्चञ्चला चपलापि चेति यादवः। तया निर्विशङ्करतात् जन्म येषां तेषां तस्याः मुखाकूतानां मुखचेष्टितानां दर्शनाद्यानि सुखानि तानि अभुङ्क्त स्थिरप्रकाशे तद्विस्रम्भविघातभयात् क्षणिकप्रकाशेन तच्च अन्वभुङ्क्त दर्शनसुखम् अन्वभूत् इत्यर्थः ॥ ८७ ॥

अथ चेष्टितान्येवाह यदित्यादि। तया रते भ्रुवौ कुटिलिते नखदन्तादिपीडनेषु वक्रिते तत् एव मन्मथेन कार्मुकम् अनामि नमितं, सा तदा तत्काले हुं हुम् इति यत् अकरोत् सुखातिरेककृतं तत् हुङ्कृतं स्मरस्य शरमुक्तिहुङ्कृतं बाणमोक्षकालहुङ्कारं तत्सर्वं तस्य उद्दीपकम् अभूत् इत्यर्थः ॥ ८८ ॥

इङ्गितेति। कान्तस्य दन्तैः परिपीडिताधरा अतएव पाणिधूननं वितन्वती इयं दमयन्ती तत्क्षणे विधूननक्षणे उदितमुदं सञ्जातहर्षं मनोभुवं नर्त्तितुम् उपदिशती नृत्यं कुरु इति उपदिशन्ती इव स्थिता, पाच्छिनयोर्नुमिति विकल्पानुमभावः। इङ्गिता प्रियेण इति शेषः ॥ ८९ ॥

सेति। परिरम्भदायिनी आश्लिष्यन्ती सा प्रियस्य बृहत् विशालम् उरः अतएव गाहितुम् अभिव्याप्तुं न शशाक

बाहुवल्लिपरिरम्भमण्डली या परस्परमपीड़यत् तयो:।
आस्त हेमनलिनीमृणालज: पाश एव हृदयेशयस्य स: ॥८१॥
वल्लभेन परिरम्भपीडितौ प्रेयसीहृदि कुचाववापतु:।
केलतीमदनयोरुपाश्रये तत्र वृत्तमिलितोपधानताम् ॥८२॥
तत् प्रियोरुयुगलं नलार्पितै: पाणिजस्य मृदुभि: पदैर्बभौ।
उप्रशस्ति रतिकामयोर्जयस्तम्भयुग्ममिव शातकुम्भजम् ॥८३॥

---

इत्याश्रयाधिक्येनाधिकालङ्कारभेद:। स: नलश्च भङ्गुर-भ्रुव: प्रियाया: तुङ्गपीनकुचाभ्यां दूरतां गतम् उर: गाहितुं न चक्षमे न शशाक इति सम्बन्धेऽप्यसम्बन्धरूपातिशयोक्ति: ॥ ८० ॥

बाह्विति। तयो: सम्बन्धिनीभ्यां बाहुवल्लिभ्यां परिरम्भ: स: एव मण्डली वेष्टनं परस्परम् अपीडयत्। स: हेमनलिनीमृणालात् जात: तज्ज: हृदये शेते इति हृदयेशय: काम:, अधिकरणे शेतेरित्यच्प्रत्यय:। शयवासवासिष्वकालादित्यलुक्। तस्य पाश: पाशाख्य: बन्ध: एव आस्त स्थित: इत्युत्प्रेक्षा ॥ ८१ ॥

वल्लभेनेति। वल्लभेन प्रियेण परिरभ्य आश्लिष्य पीड़ितौ मण्डलीकृतौ कुचौ एव केलतीमदनयो: रतिकामयो: उपाश्रये अवष्टम्भविशेषे, आसन्दिमञ्चक: खट्टोपाश्रयो मत्तवारण इति यादव:। तत्र प्रेयस्या: हृदि वक्षसि वृत्ते वर्त्तुले मिलिते सङ्गते उपधाने उपबर्हे, उपधानं तूपबर्हमित्यमर:। तयो: भाव: तत्ता तां गण्डोपधानतां अवापतु: इत्युत्प्रेक्षा ॥८२॥

तदिति। तत् तादृशं प्रियाया: ऊरुयुगलं नलेन अर्पितै: न्यस्तै: मृदुभि: अनतिक्षतै: पाणिजस्य नखस्य पदै: चिह्नै:

बह्वमानि विधिनापि तावकं नाभिमूरुयुगमन्तराङ्ककम् ।
स व्यधादधिकवर्णकैरिदं काञ्चनैर्यदिति तां पुराह सः ॥८४॥
पीडनाय मृदुनो विगाह्य तौ कान्तपाणिनलिने स्पृहावती ।
तत्कुचौ कलशपीननिष्ठुरौ हारहासमकिहते वितेनतुः ॥८५॥
या कुरङ्गमदकुङ्कुमाञ्चितौ नीललोहितरुचौ वधूकुचौ ।
स प्रियोरसि तयोः स्वयम्भुवोराचकार नखकिंशुकार्चनम् ॥८६॥

---

उन्नता प्रशस्तिः यस्य तत् उन्प्रशस्ति शातकुम्भजं हिरण्मयं रतिकामयोः जयस्तम्भयुग्मम् इव बभौ इत्युत्प्रेक्षा ॥ ८३ ॥

बह्विति। हे प्रिये! नाभिम् ऊरुयुगं च अन्तरा तन्मध्यवर्त्ति, अन्तरान्तरेण युक्ते इति द्वितीया। अन्तराशब्दो मध्यमाधेयप्रधानमाचष्टे इति काशिका। तावकम् अङ्कं वराङ्गं विधिना वेधसा अपि बहु अमानि बहु मतम्। कुतः? यत् यस्मात् इदम् अङ्ककम् अधिवर्णकैः उत्कृष्टवर्णैः काञ्चनैः सुवर्णैः व्यधात्। किमिति? तां प्रियां सः नलः पुरा आह उक्तवान्, पुरा लङ् च स्मे इति भूते लट् ॥ ८४ ॥

पीड़नायेति। कलशवत् पीनौ निष्ठुरौ कठिनौ च तस्याः कुचौ कर्त्तारौ मृदुनो कोमले तथापि तौ तादृक् कुचौ विगाह्य प्राप्य पीड़नाय पीडनं कर्त्तुं स्पृहावती व्याप्रियमाणा इत्यर्थः, कान्तस्य पाणिनलिने करकमले कर्मणी हारः एव हासः तेन विहते तिरस्कृते वितेनतुः चक्रतुः अशक्यार्थप्रवृत्ताः परिहासास्पदं भवन्तीति भावः ॥८५ ॥

येति। कुरङ्गमदकुङ्कुमाभ्यां कस्तूरिकाकाश्मीराभ्यां अञ्चितौ लेपितौ अतएव नीला च सा लोहिता च, वर्णो वर्णेनेति तत्पुरुषसमासः। सा रुक् ययोः तौ, नीलः कण्ठे लोहितः

अम्बुधेः कियदनुत्थितं विधुं स्वानुबिम्बमिलितं व्यडम्बयत् ।
चुम्बदम्बुजमुखीमुखं तदा नैषधस्य वदनेन्दुमण्डलम् ॥९७॥
पूगभोगबहुताकषायितैर्वासितैरुदयभास्करेण तौ ।
चक्रतुर्निधुवनेऽधरामृतैस्तत्र साधु मधुपानविभ्रमम् ॥९८॥
आह नाथवदनस्य चुम्बतः सा स्म शीतकरतामनक्षरम् ।
सीत्कृतानि सुदती वितन्वती सत्त्वदत्तपृथुवेपथुस्तदा ॥९९॥

---

केशेषु इति नीललोहितः तस्य रुक् इव रुक् ययोः तौ बधूकुचौ प्रियायाः उरसि स्वयम्भुवोः स्वतः उत्पन्नयोः ईश्वरमूर्त्योश्च तयोः कुचयोः सः नलः नखैः नखक्षतैः एव किंशुकैः पलाशकुसुमैः अर्चनम् आचचार इति गम्योत्प्रेक्षा ॥ ९६ ॥

अम्बुधेरिति। तस्याः अम्बुजमुख्याः प्रेयस्याः मुखं चुम्बत् पिबत् नैषधस्य वदनेन्दुमण्डलं तथा अम्बुधेः कियत् किञ्चित् अनुत्थितम् ईषत् न्यूनम् उदितं स्वानुबिम्बेन स्वप्रतिबिम्बेन मिलितं युक्तं विधुं इन्दुं व्यडम्बयत् अनुचकार। तथा मुखयोर्मिथः संश्लेषात् कार्त्स्न्येन अदृश्यमानत्वात् इदमुपमीतम् ॥ ९७ ॥

पूगेति। तौ कामिनौ तत्र निधुवने रते, व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतं, पूगः क्रमुकवृन्दोरिति च चमरः। पूगभोगः क्रमुकभक्षणं ताम्बूलचर्वणम् इति यावत्, तस्य बहुतया बाहुल्येन कषायितैः सञ्जातकषायरसैः उदयभास्करेण कर्पूरविशेषेण वासितैः सुरभितैः अधरामृतैः साधु मधुपानस्य विभ्रमम् इव विभ्रमं लीलां चक्रतुः इति सादृश्याक्षेपात् निदर्शनालङ्कारः ॥ ९८ ॥

आहेति। तदा अधरपानकाले सीत्कृतानि वितन्वती वेदनया सीत्कारान् कुर्वती सत्त्वेन दत्तः सत्त्वगुणकृतः पृथु-

चुम्बनाय कलितप्रियाकुचं वीरसेनसुतवक्त्रमण्डलम्।
प्राप भर्त्तुमम्रतैः सुधांशुना सक्तहाटकघटेन मित्रताम् ॥१००॥
वीक्ष्य वीक्ष्य पुनरैक्षि सामुना पर्य्यरम्भि परिरभ्य चासकृत्।
चुम्बिता पुनरचुम्बि चादरात्तृप्तिरापि न कथञ्चनापि च ॥१०१॥
छिन्नमप्यतनु हारमण्डलं मुग्धया सुरतलास्यकेलिभिः।
न व्यतर्कि सुदृशा चिरादपि स्वेदबिन्दुकितवक्षसा हृदि ॥१०२॥

---

वेपथुः कम्पाख्यः सात्त्विकः यस्याः सा सुदती भैमी चुम्बतः स्वयं पिबतः नाथवदनस्य प्रियमुखस्य शीतकरतां शीतांशुत्वं शीतकारित्वञ्च, कृञो हेत्वित्यादिना ताच्छील्ये टप्रत्ययः। अनक्षरम् अशब्दम् एव आह स्म ज्ञापयामास इत्यर्थः, अन्यथा कथं सीत्काराद्रिकार्य्यमिति भावः ॥ ९९ ॥

चुम्बनायेति। चुम्बनाय अधरामृतपानाय कलितः हस्तगृहीतः प्रियाकुचः येन तत् नलमुखबिम्बं कर्तृ भर्त्तुं पूरयितुं सक्तः हस्तगतः हाटकस्य कनकस्य घटः यस्य तेन सुधांशुना चन्द्रेण मित्रतां सदृशतां प्राप। अमृतसम्भरणार्थं कनककलशहस्तः आगतः साक्षात् अमृतांशुरिव इत्युत्प्रेक्षया अमृतकरत्वं व्यज्यते इति अलङ्कारेण वस्तुध्वनिः ॥ १०० ॥

वीक्ष्येति। अमुना नलेन सा प्रिया वीक्ष्य वीक्ष्य मुहुः वीक्ष्यापि पुनः ऐक्षि ईक्षिता, सा असकृत् परिरभ्य अपि पुनः पर्य्यरम्भि परिरब्धा, रभेरशब्लिटोरिति नुमागमः। सा असकृत् चुम्बिता अपि आदरात् पुनः अचुम्बि चुम्बिता, कथञ्चन अपि तृप्तिश्च न आपि रागातिरेकात् इति भावः। सर्वत्र कर्मणि लुङ् ॥ १०१ ॥

छिन्नमिति। सुरतानि एव लास्यानि तैः एव केलिभिः

यत् तदीयहृदि हारमौक्तिकैरासि तत्र गुण एव कारणम् ।
अन्यथा कथममुत्र वर्त्तितुं तैरशाकि न तदा गुणच्युतैः ॥१०३॥
एकवृत्तिरपि मौक्तिकावलिश्छिन्नहारविततौ तदा तयोः ।
छाययान्यहृदयेऽपि भूषणं श्रान्तिवारिभरभाविते ऽभवत् ॥१०४

---

छिन्नम् अपि अतनु महत् हारमण्डलं मुक्ताकलापः स्वेदविन्दवः एव विन्दुकाः, स्वार्थे कः। ते अस्य सञ्जाताः स्वेदविन्दुकितं, तारकादित्वादितक् । तद्वचः यस्याः तया मुग्धया सुदृशा भैम्या चिरात् अपि हृदि चित्ते न व्यतर्कि न व्यभावि, स्वेदविन्दुषु हारभ्रमात् इति भावः । अतएव भ्रान्तिमदलङ्कारः ॥ १०२ ॥

यदिति । तदीये भैमीसम्बन्धिनि हृदि वक्षसि हारमौक्तिकैः मुक्ताहारैः आसि आच्छादि इति यत् आसेर्भावे लङ् । तत्र स्थितौ गुणः सूत्रं कान्त्यादिश्च सः एव कारणम् अन्यथा गुणच्युतैः गुणभ्रष्टैः हारमौक्तिकैः तदा तस्मिन् समये अमुत्र अस्मिन् वक्षसि वर्त्तितुं कथं न अशाकि न शक्तञ्च । ततो गुण एव अत्र कारणम् अन्यथापतनप्रसङ्गादनुपादेयत्वाच्चेति भावः ॥ १०३ ॥

एकेति । तदा तत्काले तयोः उभयोः मध्ये एकस्मिन् नले एव वृत्तिः यस्याः सा अपि मौक्तिकावलिः छिन्ना हारविततिः मुक्ताकलापः यस्य तस्मिन् पुंस्कत्वात् पुंवद्भावः । श्रान्तिवारिभरेण स्वेदपूरेण भाविते प्लाविते अन्यस्याः भैम्याः हृदये, सर्वनाम्नो वृत्तिमात्रे पूर्ववद्भावस्य पुंवद्भावः । छायया प्रतिबिम्बेन विभूषणम् अभवत् । अत्र एकस्यैव हारस्य उभयत्र भूषणत्वेन असम्बन्धेऽपि सम्बन्धोक्तेः तद्रूपातिशयोक्तिरलङ्कारः ॥ १०४ ॥

वामपादतललुप्तमन्मथश्रीमदेन मुखवीक्षिणाऽनिशम्।
भुज्यमाननवयौवनामुना पारसीमनि चचार सा मुदाम्॥१०५॥
आन्तरानपि तदङ्गसङ्गमैस्तर्पितानवयवानमन्यत।
नेत्रयोरमृतसारपारणां तद्विलोकनमचिन्तयन्नलः॥ १०६॥
बह्वमन्यत विदर्भजन्मनो भूषणानि स दृशा न चेतसा।
तैरभावि कियदङ्गदर्शने यत् पिधानमयविघ्नकारिभिः॥१०७॥
योजनानि परिरम्भणेऽन्तरं रोमहर्षजमपि स्म बोधतः।

---

वामेति। वामपादस्य तलेन अधःप्रदेशेन लुप्तः हृतः मन्मथस्य श्रियः मदः सौन्दर्य्यदर्पः येन तेन अनिशं मुखवीक्षिणा अनाक्रष्टदृष्टिना अमुना नलेन भुज्यमानं नवयौवनं यस्याः सा भैमी मुदाम् आनन्दानां पारसीमनि चचार परमानन्दमाप इत्यर्थः॥ १०५॥

आन्तरानिति। नलः तस्याः अङ्गसङ्गमैः वाह्यावयवसम्पर्कैः आन्तरान् अवयवान् तर्पितान् आप्यायितान् अमन्यत। तस्याः विलोकनं साक्षात्कारं नेत्रयोः स्वाक्ष्णोः अमृतसारपारणाम् अमृतविशेषास्वादम् अचिन्तयत् अभावयत्॥ १०६॥

बह्विति। सः नलः विदर्भजन्मनः वैदर्भ्याः भूषणानि दृशा दृष्ट्या बहु अमन्यत तदीयत्वादिति भावः। चेतसा न बहु अमन्यत। कुतः? यत् यस्मात् तैः भूषणैः कियताञ्चित् अङ्गानां दर्शने पिधानमयं छादनरूपं विघ्नं कुर्वन्तीति तत्कारिभिः अभावि भूतम्। अतः भूषणबहुमानः नातिपुष्कलः इति भावः॥ १०७॥

योजनानीति। तौ भैमीनलौ परिरम्भणे रोमहर्षात्

तौ निमेषमपि वीक्षणे मिथो वत्सरव्यवधिमध्यगच्छताम् १०८॥
वीक्ष्य भावमधिगन्तुमुत्सुकां पूर्वमच्छमणिकुट्टिमे मृदुम्।
कोऽयमित्युदितसम्भ्रमोक्षतां स्वानुबिम्बमददर्शदेष ताम् ॥१०९॥
तत्क्षणावहितभावभावितद्वादशात्मसितदीधितिस्थितिः।
आत्मनोऽनभिमतक्षणोदयां भावलाभलघुतां नुनोद सः ॥११०॥

---

जातं तज्ज्ञं तन्मात्रम् अपि अन्तरं योजनानि बोधतः स्म योजनव्यवधानम् अबुध्यताम् इत्यर्थः। बोधतेर्भौवादिकात् भूते लट् स्म। इति मिथः अन्योन्यं वीक्षणे निमेषम् अपि वत्सर-व्यवधिं व्यवधानम् अध्यगच्छतां मन्येते स्म॥ १०८॥

अथानयोः च्युतिसुखं पञ्चभिर्वर्णयति वीक्ष्येत्यादि। एषः नैषधः मृदुं श्लथावयवाम् अतएव पूर्वम् आत्मनः प्राक् भावं च्युतिसुखापराख्यकलापान्तसुखम् अधिगन्तुं प्राप्तुम् उत्सुकाम् इच्छन्तीं तां वीक्ष्य लिङ्गैः ज्ञात्वा कोऽयम् इति उक्त्वा इति शेषः। उदितः सम्भ्रमः यस्याः सा आततां क्षतां सम्भ्रमो-क्षताम्, अभूततद्भावे च्विः। तां प्रियाम् अच्छे मणिकुट्टिमे स्वानुबिम्बं स्वप्रतिबिम्बम् अददर्शत् दर्शितवान् मत्प्रतिबिम्ब-दर्शनात् भ्रान्तम् अनया इति तस्याः त्रासम् अपाचकार इत्यर्थः। दृशेर्णौ चङि णिचश्चेति तङ्। अभिवादि दृशोरा-त्मनेपद उपसङ्ख्यानादणिकर्त्तुः कर्मत्वम्, उभययुगपद्भावप्राप्तये तस्याः प्राक् प्राप्तिव्यासङ्गेन प्रत्यवघ्नात् अन्यथा वैरं स्यात् इति भावः॥ १०९॥

तदिति। सः नलः तस्मिन् क्षणे अवहितभावेन अव-हितत्वेन भाविता ध्याता द्वादशात्मसितदीधित्योः सूर्य्याचन्द्र-मसोः स्थितिः येन सः सन् आत्मनः अनभिमतक्षणे असंभूत-काले उदयः प्रादुर्भावः यस्याः तां भावलाभस्य च्युतिसुखप्राप्तेः

स्वेन भावभजने स तु प्रियां बाहुमूलकुचनाभिचुम्बनैः ।
निर्ममे रतरहःसमापनाग्रमंसारसमसंविभागिनीम् ॥१११॥
विश्लथैरवयवैर्निमीलया लोमभिर्द्रुतमितैर्विनिद्रताम् ।
सूचितं श्वसितसीत्कृतैश्च तौ भावमक्रमजमध्यगच्छताम् ॥११२॥

---

लघुताम् आशुभावितां नुनोद निवारयामास । तत्काले हृदि सोमार्कधारणासिद्धिरिति रतिरहस्ये । अत्र पुंस एव शक्त्याधिक्योक्त्या योषितो बहुशक्तिप्रयुक्तरसाभासशङ्कापि समूलकाषकषितेति द्रष्टव्यम् ॥ ११० ॥

स्वेनेति । किन्तु सः नलः भावभजने स्वस्य च्युतिसुखे प्रसक्ते प्रियां बाहुमूलयोः कुचयोः नाभौ च चुम्बनैः उपायैः तेन स्वेन सह रतरहसः सुरतरहस्यस्य समापनाग्रमंसारे च्युतिसुखोत्कर्षे समसंविभागिनीं निर्ममे समप्रविभागिनीं चक्रे । एतेन तयोर्विप्रलम्भवत् सम्भोगस्यापि समानशक्तित्वमुक्तं भवतीत्यनुसन्धेयम् ॥ १११ ॥

विश्लथैरिति । तौ द्वौ विश्लथैः शिथिलप्रायैः अवयवैः निमीलया निमीलनेन, भिदादित्वादङ् । द्रुतं हठात् विनिद्रताम् इतैः विकासं प्राप्तैः लोमभिः श्वसितैः निःश्वासैः सीत्कारैश्च सूचितं ज्ञापितं,—"स्रस्तता वपुषि मीलनं दृशो मूर्च्छना चरति लाभलक्षणम् । श्लेषयत् स्वजघनं घनं मुहुः सीत्कृतानि गलगर्जितानि च ॥" इत्युक्तत्वादिति भावः । अक्रमं युगपज्जातम् अक्रमजं भावं पातसुखम् अध्यगच्छतां प्राप्तवन्तौ । एवञ्च उभयोः समरागिता सम्भवति अन्यथा पूर्वच्युतस्य उत्तरच्याविनि वैराग्येण तद्भङ्गप्रसङ्गः इति भावः ॥११२॥

आस्त भावमधिगच्छतोस्तयोः सम्मदेषु करजप्रसर्पणा ।
फाणितेषु मरिचावचूर्णना सा स्फुटं कटुरपि स्पृहावहा ॥११३॥
अर्द्धमीलितविलोलतारके सा दृशौ निधुवनक्लमालसा ।
यन्मुहूर्त्तमवहन्न तत् पुनस्तृप्तिरास्त दयितस्य पश्यतः ॥११४॥
तत्क्लमस्तमदिदीपत क्षणं तालवृन्तचलनाय नायकम् ।
तद्विधाधिभवधूननक्रिया वेत्रसोऽपि विदधाति चापलम् ॥११५

---

आस्तेति। भावं च्युतिसुखम् अधिगच्छतोः तयोः सम्मदेषु आनन्दलाभेषु करजप्रसर्पणा नखक्षतकरणम् आस्त स्थिता। सा नखक्षतक्रिया कटुः तीक्ष्णा अपि कटुरसा अपि च, रसे कटुः कटु कार्य्ये त्रिषु मत्सरतीक्ष्णयोः इत्यमरः। स्पृहावहा रुचिकरी, फाणितेषु खण्डविकारेषु। मत्स्यण्डी, फाणितं खण्डविकार इत्यमरः। मरीचस्य अवचूर्णना चूर्णैः अवध्वंसना तच्चूर्णक्षेपः इत्यर्थः, स्फुटं, सत्यापादि ण्यन्तात् ण्यामंश्रये युच्। या इयं सम्मदेषु नखार्पणा सा फाणितेषु मरिचार्पणा तद्वत् इष्टा एव अभूत् इत्यर्थः। अत्र वाक्यार्थयोः सादृश्ययोगेन सादृश्याक्षेपात् असम्भवद्वस्तुसम्बन्धलक्षणो वाक्यार्थवृत्तिनिदर्शनाभेदोऽलङ्कारः ॥ ११३ ॥

अर्द्धेति। निधुवनक्लमालसा सुरतश्रान्तिमन्थरा सा प्रिया अर्द्धमीलिते इव विलोलतारके च, तारकाक्ष्णः कनीनिका इत्यमरः। तादृशौ दृशौ यत् मुहूर्त्तम् ईषत्कालम् अवहत् तदवस्थे दृशौ इत्यर्थः, पश्यतः दयितस्य पुनः तृप्तिः न आस्त नासीत् इत्यर्थः ॥ ११४ ॥

तदिति। तस्याः क्लमः तं नायकं नलं क्षणं तालवृन्तचलनाय व्यजनवीजनाय, व्यजनं तालवृन्तकमित्यमरः। अदिदीपत दीपयति स्म प्रावर्त्तयत् इत्यर्थः। तद्विधा तादृशी

स्वेदविन्दुकितनासिकाशिखं तन्मुखं सुखयति स्म नैषधम् ।
प्रोषिताधरशयालुयावकं संविलुप्ततिलकं कपोलयोः ॥११६॥
क्षीणमेव पृथु सस्मयं कियत् क्लान्तमेव बहु निर्वृतं मनाक् ।
कान्तचेतसि तदीयमाननं तत्तदालभत लक्षमादरात् ॥११७॥
स्वेदवारिपरिपूरितं प्रियारोमकूपनिवहं यथा यथा ।
नैषधस्य दृगपात् तथा तथा चित्रमापदपतृष्णतां न सा ॥११८॥

---

श्राधिभवे सन्तापजन्ये धूननक्रिया व्यजनक्रिया श्रतिश्लाघ्या इत्यर्थः । उक्तप्रकारा क्रिया सुरतश्रान्तिचेष्टा इत्यर्थः । वेधसः श्रपि चापलं विदधाति जनयति किमुतान्यस्य इति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ११५ ॥

स्वेदेति । स्वेदविन्दुकिता सञ्जातस्वेदविन्दुका नासिकाशिखा नासाग्रं यस्य तत् प्रोषिताधरशयालुयावकं पानात् निवृत्तौष्ठगतालक्तकं कपोलयोः संविलुप्ततिलकं प्रविलुप्तकपोलतमालपत्रं, तमालपत्रं तिलकचित्रकाणि विशेषकमित्यमरः । तस्याः दमयन्त्या मुखं नैषधं सुखयति स्म ॥ ११६ ॥

क्षीणमिति । पृथु भूयिष्ठं क्षीणं लज्जितम् एव कियत् किञ्चित् सस्मयं सगर्वं बहु क्लान्तम् ईषत् मनाक् एव निर्वृतं सुखितं तत् तदीयम् श्राननं प्रियामुखं तदा तत्काले कान्तचेतसि श्रादरादासक्तेः लक्षं लक्षसङ्ख्याम् श्रलभत बहुमतम् श्रभूत् इत्यर्थः । सर्वावस्थामनोहरं तन्मुखम् इति भावः ॥ ११७ ॥

स्वेदेति । नैषधस्य सा दृक् दृष्टिः स्वेदवारिणा परिपूरितं प्रियायाः रोमकूपानां निवहं समूहं यथा यथा श्रपात् पिबति स्म, पिबतेर्लुङि गातिस्थेत्यादिना सिचो लुक् । तथा तथा श्रपतृष्णतां न श्रापत् वितृष्णा नाभूत् इत्यर्थः । इति चित्रं बहुकूप-

वान्तमाल्यकचहस्तसंयमन्यस्तहस्तयुगया स्फुटीकृतम्।
बाहुमूलमनया तदुज्ज्वलं वीक्ष्य सौख्यजलधौ ममज्ज सः॥११९॥
वीक्ष्य पत्युरधरं कृशोदरी बन्धुजीवमिव भृङ्गसङ्गतम्।
मञ्जुलं नयनकज्जलैर्निजैः संवरीतुमशकत् स्मितं न सा॥१२०॥
तां विलोक्य विमुखश्रितस्मितां पृच्छतो हसितहेतुमीशितुः।
ह्रीमती व्यतरदुत्तरं वधूः पाणिपङ्करुहि दर्पणार्पणाम्॥१२१॥
लाक्षयाऽऽत्मचरणस्य चुम्बनाच्चारु भालमवलोक्य तन्मुखम्।
सा ह्रिया नतनताननाऽस्मरच्छेषरागमुदितं पतिं निशः॥१२२॥

---

सम्भृतोदकपानेऽपि तृष्णा न अपैति विरुद्धमित्यर्थः। लोकोत्तरवस्तुदर्शने तृष्णा वर्द्धते एवेति विरोधाभासोऽलङ्कारः॥११८॥

वान्तेति। सः नलः वान्तम् उदीर्णं माल्यं येन तस्य कचहस्तस्य केशपाशस्य संयमे बन्धने न्यस्तं विन्यस्तं हस्तयुगं यया तया अनया प्रियया स्फुटीकृतम् उज्ज्वलं बाहुमूलं वीक्ष्य सौख्यजलधौ आनन्दसागरे ममज्ज॥ ११९॥

वीक्ष्येति। सा कृशोदरी निजैः नयनकज्जलैः नेत्रचुम्बनसंक्रान्तैः इति भावः, मञ्जुलं मनोहरम् अतएव भृङ्गसङ्गतं बन्धुजीवं बन्धूकपुष्पम् इव स्थितं पत्युः अधरं वीक्ष्य स्मितं मन्दहासं संवरीतुं निरोद्धुं न अशकत्, हासः प्रसक्तः एवेति भावः॥ १२०॥

तामिति। विमुखं तिर्य्यक् यथा तथा श्रितस्मितां कृतस्मितां तां विलोक्य हसितहेतुं स्मितकारणं पृच्छतः ईशितुः पत्युः ह्रीमती वधूः नवोढ़ा सा अपि पाणिपङ्करुहि पाणिपद्मे दर्पणार्पणाम् एव उत्तरं व्यतरत्॥ १२१॥

लाक्षयेति। सा प्रिया आत्मचरणस्य लाक्षेः चुम्बनात्

खेदभाजि हृदयेऽनुविम्बितं वीक्ष्य मूर्त्तमिव हृद्गतं प्रियम् ।
निर्ममे धुतरतश्रमं निजैर्ह्रीनताऽतिमृदुनासिकानिलैः ॥१२३॥
सूनसायकनिदेशविभ्रमैरप्रतीततरवेदनोदयम् ।
दन्तदंशमधरेऽधिगामुका साऽस्पृशन्मृदु चमच्चकार च ॥ १२४ ॥
वीक्ष्य वीक्ष्य करजस्य विभ्रमं प्रेयसार्जितमुरोजयोरियम् ।
कान्तमैक्षत हसस्पृशं कियत् कोपसङ्कुचितलोचनाञ्चला॥१२५॥

---

प्रणामकाले सम्पर्कात् हेतोः लाक्षया: चारुभालं रम्यललाटं तस्य नलस्य मुखम् अवलोक्य ह्रिया नतनतानना अतिनम्रमुखी सती शेषरागम् उदितं निशः निशायाः, पद्दन्नादिना निशायाः निशभावः। पतिं चन्द्रम् अस्मरत् इति स्मरणालङ्कारः ॥१२२॥

खेदेति। खेदभाजि खिन्ने हृदये वक्षसि अनुविम्बितं प्रतिविम्बितम् अतएव मूर्त्तं मूर्त्तिमन्तं हृद्गतम् इव स्थितं प्रियं वीक्ष्य ह्रीनता लज्जानता निजैः अतिमृदुभिः नासिकानिलैः निःश्वासमारुतैः धुतः निरस्तः रतश्रमः सुरतजनितक्लेशः यस्य तं निर्ममे चकार तस्य श्रममपनुदतीव स्थिता इत्युत्प्रेक्षा ॥ १२३ ॥

सूनेति। सूनसायकस्य कामस्य निदेशविभ्रमैः आज्ञाविलासैः अप्रतीततरः वेदनोदयः यस्मिन् तं मदनपारवश्यात् अज्ञायमानदुःखम् इत्यर्थः, अधरे दन्तदंशं अधिगामुका प्राप्ता, लषपतेत्यादिना उकञ्, न लोकेत्यादिना षष्ठीनिषेधः। सा भैमी कियत् किञ्चित् चमच्चकार चमत्कृता चपिता सती मृदु मन्दम् यथा तथा दन्तदंशम् अस्पृशत् करतलेन दन्तदंशं परामृशत् इत्यर्थः ॥ १२४ ॥

वीक्ष्येति। इयं भैमी प्रेयसा प्रियतमेन उरोजयोः कुचयोः अर्जितं करजस्य विभ्रमं नखक्षतं वीक्ष्य वीक्ष्य दृष्टं

रोषभूषितमुखीमिव प्रियां वीक्ष्य भीतिदरकम्पिताधरम् ।
तां जगाद स न वेद्मि तन्वि ! तं ब्रूहि शास्मि तव कोपरोपकम्
॥ १२६ ॥

रोषकुङ्कुमविलेपनान्मनाङ्मन्ववाचि कृशतन्ववाचि ते ।
भूदयुक्तसमयैव रञ्जना मानने विधुविधेयमानने ॥ १२७ ॥

क्षिप्रमस्यतु रुजा नखादिजाः तावकीरसृतशीकरं किरत् ।
एतदर्थमिदमर्जितं मया कण्ठचुम्बि मणिदाम कामदम् ॥१२८॥

---

दर्शं कियत् किञ्चित् कोपेन सङ्कुञ्चिताः मुकुलिताः विलोचनाञ्चलाः कटाक्षाः यस्याः सा सती हसं स्पृशतीति तत्स्पृशं हसन्तं कान्तम् ऐक्षत दृष्टवती ॥ १२५ ॥

रोषेति । रोषेण भूषितमुखीम् इव स्थितां प्रियां वीक्ष्य सः नलः भीत्या दरकम्पिताधरम् ईषच्चलाधरं यथा तथा तां जगाद । किमिति ? हे तन्वि ! तव कोपरोपकं कोपजनकम् अपराधिनं न वेद्मि तं ब्रूहि शास्मि दण्डयामि ॥ १२६ ॥

रोषेति । ननु कृशतनु ! कृशाङ्गि ! सम्बुद्धौ नदीह्रस्वः । अवाचि अवनते, अवपूर्वादञ्चतेः क्विन् । अवाचि वाचंयमे विधोः अपि विधेया मानना पूजा यस्य तस्मिन् विधोः अपि पूज्ये ते तव आनने अयुक्तसमया अप्राप्तकाला रोषः एव कुङ्कुमं तस्य विलेपनात् मनाक् ईषत् रञ्जना मा भूत् एव निष्कलङ्के मुखे रोषकलङ्को मा भूत् इत्यर्थः ॥ १२७ ॥

क्षिप्रमिति । हे प्रिये ! कण्ठचुम्बि कण्ठसङ्गि कामदम् अभीष्टदं मणिदाम मणिमालिका कर्तृ नखादिजाः नखदन्तक्षतादिजन्याः तावकीः त्वदीयाः रुजाः पीड़ाः, भिदादित्वादङ्प्रत्ययः । क्षिप्रम् अस्यतु निरस्यतु इदं मणिदाम मया एतदर्थम् एतत्पीडानिरासार्थम् एव अर्जितं सम्पादितम् ॥ १२८ ॥

**स्वापराधमलुपत् पयोधरे मत्करः सुरधनुःकरस्तव।**
**सेवया व्यजनचालनाभुवा भूय एव चरणौ करोतु वा॥ १२९॥**
**आननस्य मम चेदनौचिती निर्दयं दशनदंशदायिनः।**
**शोध्यते सुदति! वैरमस्य तत् किं त्वया वद विदश्य नाधरम्१३०**
**दीपलोपमफलं व्यधत्त यस्ते पटाहृतिषु मच्छिखामणिः।**
**नो तदागसि परं समर्थना सोऽयमस्तु पदपातुकस्तव॥१३१॥**

---

स्वेति। हे प्रिये! तव पयोधरे स्तने मेघे च, स्त्रीस्तनाब्दौ पयोधरौ इत्यमरः। सुरधनुः नखाङ्कविशेषः इन्द्रधनुश्च करोतीति तत्करः। दिवाविभादिना टप्रत्ययः। मत्करः व्यजनस्य चालनया धूननेन भवति इति तद्भुवा सेवया स्वापराधम् अलुपत् नुनोद, लुम्पेर्लृदित्वात् च्लेरङादेशः। भूय एव पुनः अपि चरणौ करोतु सेवतां वा, सामान्येन विशेषलक्षणा॥ १२९॥

आननस्येति। हे प्रिये! निर्दयं यथा तथा दशनदंशं ददातीति तद्दायिनः दष्टवतः मम आननस्य मन्मुखस्य अनौचिती अनौचित्यं चेत् तर्हि हे सुदति! सुदशने! त्वया अधरं विदश्य अस्य आननस्य वैरं किं न शोध्यते न निर्यात्यते? मद्दशनदंशस्य प्रतिदंशनमेव प्रतीकारः इति भावः॥ १३०॥

दीपेति। हे प्रिये! पटाहृतिषु वस्त्राकर्षणेषु यः मच्छिखामणिः ते तव कर्त्र्याः दीपलोपं दीपनिर्वापणम् अफलं व्यधत्त यश्चकार निष्फलीचकार इत्यर्थः। तदागसि तस्मिन् अपराधे समर्थना समाधानं नो परं, नास्ति एव, किन्तु सः अयं शिखामणिः तव पदपातुकः पादपाती, लषपतेति उकञ्। अस्तु प्रणिपातः एवात्र प्रतीकारः॥ १३१॥

इत्थमुक्तिमुपहृत्य कोमलां तल्पचुम्बिचिकुरश्चकार स:।
आत्ममौलिमणिकान्तिभङ्गिनीं तत्पदारुणसरोजसङ्गिनीम् १२
तत्पदाखिलनखानुबिम्बनै: स्वै: समेत्य समतामियाय स:।
रुद्रभीतिविजिगीषया रतिस्वामिनोपदशमूर्त्तिताभृता ॥१३३॥
आख्यतैष कुरु कोपलोपनं पश्य नश्यति क्षपा मधोर्निशा।
एवमेव तु निशान्तरे वरं रोषशेषमनुरोत्स्यसि चणम् ॥१३४॥

---

इत्थमिति। स: नल: इत्थम् उक्तप्रकारेण कोमलां ललितपदां उक्तिं वाणीं उपहृत्य उपायनीकृत्य तल्पचुम्बिन: शय्यावलम्बिन: चिकुरा: स्वकेशा: यस्य स:, आत्ममौलिमणिकान्ति: एव भङ्गिनीं तरङ्गिणीं तत्पदे भैमीचरणे एव अरुणसरोजे कोकनदे तत्सङ्गिनीं तद्युक्तां चकार नमश्चकार इत्यर्थ:। नद्यो हि रक्तनीलकमलादियुक्ता भवन्तीति प्रसिद्धि: ॥१३२॥

तदिति। स: नल: स्वै: तस्या दमयन्त्या पदयो: अखिलेषु दशसु नखेषु अनुबिम्बनै: प्रतिबिम्बै: समेत्य दशभि: मिलित्वा रुद्रेभ्य: एकादशभ्य: भीते: विजिगीषया परिजिहीर्षया उप समीपे दशानाम् उपदशा: एकादश इत्यर्थ:। सङ्ख्याव्ययेत्यादिना बहुव्रीहौ समासान्तो डच् टिलोप:। उपदशा: मूर्त्तय: यस्य तस्य भाव: तत्ता तद्भृता रतिस्वामिना कामेन समतां साद्दश्यम् इयाय एकादशरुद्रजिगीषया एकादशमूर्त्तिधारी साचात् काम इव अलच्यत इत्युत्प्रेचा ॥ १३३ ॥

आख्यतैष इति। हे प्रिये! कोपस्य लोपनं निवर्त्तनं कुरु मा कुप्यस्व इत्यर्थ:। मधो: वसन्तस्य निशा उत्तरायणरात्रि: क्षपा अल्पा पश्य नश्यति निर्याति. तु किन्तु निशान्तरे हेमन्तादिरात्रौ एवम् एव चणं तत्रापि न चिरमिति भाव:।

साऽथ नाथमनयत् कृतार्थतां पाणिगोपितनिजाङ्घ्रिपङ्कजा ।
तत्प्रणामधुतमानमाननं स्मेरमेव सुदती वितन्वती ॥१३५॥
तौ मिथोरतिरसायनात् पुनः सम्बुभुक्षुमनसौ बभूवतुः ।
चक्षमे न तु तयोर्मनोरथं दुर्जनो रजनिरल्पजीविता ॥१३६॥
स्वप्तुमात्तशयनीययोस्तयोः स्वैरमाख्यत वचः प्रियां प्रियः ।

---

रोषशेषं क्रोधशेषम् अनुरोत्स्यसि अनुसरिष्यसि वरं किञ्चित् प्रियम् इति इत्थम् एषः नलः आख्यत आह स्म, चक्षिङो लुङि ख्याञादेशे तङ्, अस्यतिवक्तिख्यातिभ्योऽङ् इति च्लेरङादेशः ॥ १३४ ॥

सेति । अथ प्रियप्रणामानन्तरं पाणिभ्यां गोपिते तच्छिरः-स्पर्शभयात् छादिते निजाङ्घ्रिपङ्कजे यया सा तस्य प्रणामेन धुतमानं निरस्तकोपम् अतएव आननं स्मेरं सस्मितम् एव वितन्वती सा सुदती भैमी नाथं स्वामिनं नलं कृतार्थतां पूर्णकामम् अनयत् ॥ १३५ ॥

ताविति । तौ द्वौ मिथो रतिः अन्योन्यानुरागः सा एव रसायनम् औषधविशेषः, "यज्जराव्याधिविध्वंसि भेषजं तद्रसायनम्" इति वाग्भटः । तस्मात् प्रवृत्तिहेतोः पुनः सम्बुभुक्षुणी सम्भोक्तुमिच्छुनी मनसी ययोः सम्भोक्तुकामौ बभूवतुः, किन्तु दुर्जनो दुष्टजन्मा परशुभद्वेषित्वादिति भा.., अल्पजीविता गतरात्रीणाम् अतिक्रामात् अचिरस्थायिनी रजनिः तयोः मनोरथं न चक्षमे न सेहे, दुर्जनः परशुभासहोऽल्पजीवी चेति युक्तमिति भावः । अल्पावशिष्टत्वान्निद्रासम्भोगयोरपर्य्याप्ततेति तात्पर्य्यम् ॥ १३६ ॥

स्वप्तुमिति । स्वप्तुं निद्रातुम् आत्तशयनीययोः प्राप्तत-

उत्सवैरधरदानपानजैः सान्तरायपदमन्तरान्तरा ॥१३७॥
देवदूत्यमुपगत्य निर्दयं धर्मभीतिकृततादृशागसः।
अस्तु सेयमपराधमार्जना जीविताववधि नलस्य वश्यता ॥१३८॥
स क्षणः सुमुखि! यस्त्वदीक्षणं तच्च राज्यमुरु येन रज्यसि।
तन्नलस्य सुधयाऽभिषेचनं यस्त्वदङ्गपरिरम्भविभ्रमः ॥१३९॥

---

त्वयोः तयोः प्रिययोः मध्ये प्रियः प्रियाम् अधरयोः अन्योन्यदानपानाभ्यां जातः तज्जैः उत्सवैः आनन्दैः अन्तरान्तरा मध्ये मध्ये सान्तरायाणि सप्रतिबन्धानि विच्छिद्य विच्छिद्य प्रयोज्यमानानि पदानि पदाख्यशब्दाः यस्मिन् तद्वचः वाक्यं स्वैरं यथेच्छम् आख्यत् अवोचत् ॥ १३७ ॥

किं तत् वाक्यं तदेवाष्टभिराचष्टे देवेत्यादि। हे प्रिये! देवदूत्यं दूतकृत्यम् उपगम्य निर्दयं यथा तथा धर्मभीत्या धर्मलोपभीत्या कृतं तादृक् तथा प्रतिकूलाचरणरूपम् आगः अपराधः येन तस्य अपराद्धनलस्य मम सम्बन्धिनी सा इयं जीविताववधि जीवितान्तं यथा तथा वश्यता वशवर्त्तिता, वशङ्गत इति यत्प्रत्ययः। अपराधस्य मार्जना परीहारः अस्तु यावज्जीवं दास्यमेवास्य प्रतीकारः भवतु इत्यर्थः ॥ १३८ ॥

स इति। हे सुमुखि! नलस्य सः क्षणः उत्सवः, क्षण उद्धर्षो मह उद्धव इत्यमरः। यत् त्वदीक्षणं त्वद्दर्शनम् उरु महत् राज्यञ्च तत् येन त्वं रज्यसि रक्ता भवसि, कुशि रजीत्यादिना श्यन्, परस्मैपदञ्च। तत् एव सुधया अभिषेचनम् अमृताभिषिक्तस्य यत् त्वदङ्गस्य परिरम्भविभ्रमः आलिङ्गनलीला त्वत्सम्बन्धं विना मे न किञ्चित् रोचते इत्यर्थः ॥१३९॥

शर्म किं हृदि हरेः प्रियार्पणं? किं शिवार्द्धघटनं शिवस्य वा ?।
कामये तव मयेह तन्वि ! तं नन्वहं सरिदुदन्वदन्वयम् ॥१४०॥
दीयतां मयि दृढ़ं ममेति धीर्वक्तुमेवमवकाश एव कः ?।
यद्विधूय तृणवद्दिवस्पतिं क्रीतवत्यसि दयापणेन माम् ॥१४१॥
शृण्वता निभृतमालिभिर्भवद्वाग्विलासमसकृन्मया किल।
मोघराघवविसर्ज्यजानकीश्राविणी भयचलासि वीक्षिता १४२

---

शर्मेति। हरेः विष्णोः हृदि वक्षसि प्रियार्पणं लक्ष्मी-धारणं किं शर्म ? शिवस्य शिवायाः गौर्य्याः अर्द्ध अर्द्धाङ्गे घटनं किं शर्म ? नेति भावः। किन्तु ननु तन्वि ! कृशाङ्गि ! इह इदानीं तव मया सह तं प्रसिद्धं सरिदुदन्वतोः सरित्स-मुद्रयोः अन्वयं मेलनं संयोगम् अहं कामये मिथुनान्तरसम्भे-दवत् सिन्धुमङ्गमे भेदानवभासात् इति भावः॥ १४०॥

दीयतामिति। हे प्रिये! मयि विषये मम इति धीः ममत्वबुद्धिः दृढ यथा तथा दीयताम् इत्येवं वक्तुम् अवकाशः एव कः ? यत् यस्मात् दिवस्पतिम् इन्द्रं तृणवत् विधूय निरस्य दयया एव पणेन मूल्येन मां क्रीतवती स्वीकृतवती असि क्रीतदासोऽस्मि इति भावः॥ १४१॥

शृण्वतेति। हे प्रिये! आलिभिः सखीभिः सह भवत्याः वाग्विलासं, सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः। असकृत् अने-कशः निभृतं गूढं शृण्वता मया मोघं व्यर्थम् एव राघवस्य विसर्ज्यां त्याज्यां जानकीं सीतां शृणोतीति तच्छ्राविणी अत-एव भयेन चला कम्पा सती सीतावृत्तान्तश्रवणेन स्वयं तथा-भूता वीक्षिता दृष्टा असि किल॥ १४२॥

क्षुतपत्रविनिमीलितक्षुपात् कच्छपस्य धृतचापलात् पलात्।
त्वत्सखीषु सरटाच्छिरोधुतेः स्वं भियोऽभिदधतीषु वैभवम् ॥१४३॥
त्वं मदीयविरहाद्भया निजां भीतिमीरितवती रहःश्रुता।
नोज्झितास्मि भवतीं तदित्ययं व्याहरद्वरमसत्यकातरः ॥१४४॥
सङ्गमय्य विरहेऽस्मि जीविका यैव वामथ रताय तत्क्षणम्।
हन्त दत्थ इति दूष्ययावयोर्निद्रयाद्य किमु नोपसद्यते ॥१४५॥

---

अथ युग्मेनाह क्षुतेत्यादि। क्षुतेति क्वचित्पाठः। क्षुविस्तुपि स्पर्शनार्थावानटौ। क्षुतेन स्पर्शेन पत्रेषु विनिमीलति सङ्कुचति यः तस्मात् क्षुपात् शिफात्, ह्रस्वशाखःशिफः क्षुप इत्यमरः। तथा धृतचापलात् कच्छपस्य पलात् मांसात् सरटात् कृकलासात् शिरोधुतेः मस्तककम्पनात् त्वत्सखीषु स्वं स्वकीयं भियः वैभवं भयातिरेकम् अभिदधतीषु वर्णयन्तीषु सतीषु ॥ १४३ ॥

त्वमिति। मदीयविरहात् निजां स्वाभाविकीं भीतिं रहः रहसि ईरितवी उक्तवती त्वञ्च, मया श्रुता। तत् तस्मात् वाक्यश्रवणात् कारणात् भवतीं न उज्झिता अस्मि न त्यक्ष्यामि, उज्झतेः लुटि मिप्। इति इत्थम् असत्यकातरः अनृतभीतः अयं नलः वरं व्याहरत् अपरित्यागवरं ददौ इत्यर्थः। उक्तसखीक्षणादिभयश्रवणात् तथा विरहभीता असि तथापि न भेतव्यम् इत्यर्थः ॥ १४४ ॥

सङ्गमय्येति। या एव अहं विरहे विरहदशायां वां युवां सङ्गमय्य स्वप्नसङ्गतिसुखम् अनुभाव्य जीविका जीवितवती अस्मि, अथ इदानीं तस्याः मम क्षणः अवकाशः उपरतिरूपः तं रताय सुरताय एव तत् दत्थः तं प्रयच्छथः, ददातेर्लटि

ईदृशं निगदति प्रिये दृशौ सम्मदात् कियदियं न्यमीलयत्।
प्रातरालपति कोकिले कलं जागरादिव निशः कुमुद्वती ॥१४६॥
मिश्रितोरु मिलिताधरं मिथः स्वप्नवीक्षितपरस्परक्रियम्।
तौ ततोऽनु परिरम्भसम्पुटे पीडनां विदधतौ निदद्रतुः ॥१४७॥
तद् यातायातरंहश्छलकलितरतिश्रान्तिनिःश्वासधारा-
ऽजस्रव्यामिश्रभावस्फुटकथितमिथःप्राणभेदव्युदासम्।

---

थम्। हन्त इति हृष्ट्या ब्रूढ्या किमु तत् इत्युत्प्रेक्षा। निद्रया अद्य आवयोः न उपसद्यते न संनिकृष्यते, सीदतेर्भावे लट् ॥ १४५ ॥

ईदृशमिति। प्रिये नले ईदृशम् ईदृक् वाक्यं निगदति सति तदा प्रातः ऊषसि कोकिले कलं यथा तथा आलपति सति निशः सम्बन्धिनः जागरात् रात्रिजागरात् हेतोः कुमुद्वती इव इयं भैमी सम्मदात् सन्तोषात् कियत् दृशौ न्यमीलयत् मीलयति स्म, भ्राजभासेत्यादिना विकल्पादुपधादीर्घो लघोरित्यभ्यासदीर्घः ॥ १४६ ॥

मिश्रितेति। ततः दृङ्निमीलनानन्तरं तौ मिथः परस्परं मिश्रितौ ऊरू यस्मिन् मीलितौ अधरौ यस्मिन् कर्मणि तत् यथा तथा स्वप्नवीक्षिताः वासनावशात् स्वप्नदृष्टाः परस्परक्रियाः चुम्बनादिव्यापाराः यस्मिन् तत् यथा तथा च परिरम्भसम्पुटे आलिङ्गनपञ्जरे पीडनां मिथःसंश्लेषं विदधतौ कुर्वन्तौ निदद्रतुः निद्रासुखम् अनुबभूवतुः ॥ १४७ ॥

तदिति। यातायातानां गतागतानां रंहसः वेगस्य छलेन कलिता प्रापिता रतिश्रान्तिः याभिः तासां निःश्वासधाराणां निःश्वासपरम्पराणां अजस्रव्यामिश्रभावेन अनवरतमेलनेन

बालावक्षोजपत्राङ्कुरकरिमकरीमुद्रितोर्वीन्द्रवक्ष-
श्चिह्नाख्यातैकभावोभयहृदयमगाद् द्वन्द्वमानन्दनिद्राम् ॥१४८॥
श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।
यातोऽस्मिन् शिवशक्तिसिद्धिभगिनी सौभ्रात्रभव्ये महा-
काव्ये तस्य कृतौ नलीयचरिते सर्गोऽयमष्टादशः ॥१४९॥

---

स्फुटं कथितः मिथःप्राणभेदस्य व्युदासः अभावः यस्य तत् बालायाः प्रियायाः वक्षोजयोः कुचयोः याः पत्राङ्कुरकरिमकर्थ्यः ताभिः मुद्रितेन उर्वीन्द्रस्य वक्षसा एव चिह्नेन लिङ्गेन आख्यातः व्याख्यातः एकभावः ऐक्यं ययोः ते उभये हृदये यस्मिन् तत् एकचिह्नत्वात् एकमिति भावः। वृत्तिविषये उभशब्दस्थाने उभयशब्दप्रयोगः इत्युक्तं प्राक्। तत् द्वन्द्वम् आनन्दनिद्रां सुखशायिकां अगात् ॥ १४८ ॥

श्रीहर्षमित्यादि। शिवशक्तिसिद्धिः नाम काचित् स्वकृतिः सा एव भगिनी तया सह सौभ्रात्रं सुभ्रातृत्वं, युवादित्वादण्प्रत्ययः। भ्राता च भगिनी च भ्रातरौ भ्रातृभगिन्यौ भ्रातरावित्यमरः। भ्रातृपुत्रौ स्वसृदुहितृभ्यामित्येकशेषः। तेन सौभ्रात्रेण भव्ये, एककर्तृकत्वादित्थं निर्देशः। अष्टौ च दश च अष्टादश, द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योरित्यात्त्वम्। तेषां पूरणः अष्टादशः, तस्य पूरणे डट् टिलोपः। गतमन्यत् ॥ १४९ ॥





# ऊनविंशः सर्गः।

—•◯•—

निशि दशमितामालिङ्गन्त्यां विबोधविधित्सुभिः
निषधवसुधामीनाङ्कस्य प्रियाङ्कमुपेयुषः।
श्रुतिमधुपदस्रग्वैदग्धीविभावितभाविक-
स्फुटरसभृशाभ्यक्ता वैतालिकैर्जगिरे गिरः॥ १ ॥

---

अथ काव्ये प्रयोगे वैचित्र्यस्याप्यलङ्कारत्वादस्मिन् सर्गे तद्वैचित्र्यमाश्रित्य प्रभातवर्णनमारभते निशीति। निशि निशायां, पद्दन्नादिना निशादेशः। दशमः वयोऽवस्थाविशेषः अस्याः अस्तीति दशमी वृद्धा, वर्षीयान् दशमी ज्यायानित्य-मरः। वयसि पूरणादितीणप्रत्ययः। तस्या भावः तत्ता दशमिता, त्वतलोर्गुणवचनस्य पुंवद्भावः। ताम् आलिङ्गन्त्यां प्राप्नुवन्त्यां प्रभातकल्पायां सत्याम् इत्यर्थः, प्रियायाः अङ्कम् उत्सङ्गम् उपेयुषः प्राप्तस्य निषधवसुधामीनाङ्कस्य निषधदेश-मन्मथस्य नलस्य विबोधविधित्सुभिः विधातुम् इच्छुभिः, गम्यादिपाठात् द्वितीयासमासः। वैतालिकैः बोधकरैः वन्दिभिः, वैतालिका बोधकरा इत्यमरः। श्रुतिमधुपदस्रजां श्रवणमधुपदपङ्क्तीनां वैदग्धी यत् रचनातुर्य्यं कौशिक्यादि वृत्तिसम्पत्तिः तया विभाविताः व्यञ्जिताः भावाः अस्य सन्तीति भाविः रसबोधकविभावादिचतुर्विधविभाववान्, मत्वर्थीयष्टन्-प्रत्ययः। अतएव स्फुटः अभिव्यक्तः सवामत्वं प्राप्तः इत्यर्थः। एवं विशेषणविशेषेण रसेन शृङ्गारादिना भृशम् अभ्यक्ताः रस-भरिताः इत्यर्थः, गिरः गीतवाचः वक्ष्यमाणाः जगिरे गीयन्ते

जय जय महाराज ! प्राभातिकीं सुषमामिमां
सफलयतमां दानादक्ष्णोर्दराजसपक्ष्मणोः ।
प्रथमशकुनं शय्योत्थायं तवास्तु विदर्भजा
प्रियजनमुखाम्भोजात् तुङ्गं यदङ्ग ! न मङ्गलम् ॥ २ ॥
वरुणगृहिणीमाशामासादयन्तममुं रुचो-
निचयसिचयांशांशभ्रंशक्रमेण निरंशुकम् ।
तुहिनमहसं पश्यन्तीव प्रसादमिषादसौ
निजमुखमिव स्मेरं धत्ते हरेर्महिषी हरित् ॥ ३ ॥

---

स्म, गायतेः कर्मणि लिट् । अस्मिन् सर्गे हरिणीवृत्तम् । रसयुगहयैर्नसौ म्रौ स्लौ गो यदा हरिणी तदेति लक्षणात् ॥ १ ॥

जय जयेति । हे महाराज ! नल ! जय जय प्रभो त्वं सर्वोत्कर्षेण वर्त्तस्व, नित्यादौ द्विर्भावः । इमां पुरोवर्त्तिनीं प्राभातिकीं सुषमां परमां शोभां दरम् ईषत् अलसानि पक्ष्माणि ययोः तयोः, अल्पार्थे त्वव्ययं दरमिति यादवः । अक्ष्णोः दानात् दृष्टिक्षेपात् सफलयतमां अतिशयेन सफलय, तिङ्व्ययादामुप्रत्ययः । तव ते विदर्भजा वैदर्भी शय्यायाः सत्वरम् उत्थाय शय्योत्थायं, अपादाने परीप्सायामिति णमुल् । परीप्सा त्वरा स्त्रियः प्रथमोत्थानं लभ्यते । अतएव प्रथम-शकुनं प्रथममङ्गलम् अस्तु, तदा तस्यामेव प्रथमाक्षिपातात् इति भावः । कुत इत्यत आह—अङ्ग ! भो ! यत् यस्मात् प्रिय-जनस्य मुखाम्भोजात् तुङ्गम् अधिकं मङ्गलं नास्ति इत्यर्थान्त-रन्यासः ॥ २ ॥

वरुणेति । असौ हरेः इन्द्रस्य महिषी हरित् प्राचीदिक् वरुणगृहिणीम् आशां प्रतीचीं दिशम् आसादयन्तं सङ्ग-

अमहतितरास्ताहक् तारा न लोचनगोचराः
तरणिकिरणा द्यामञ्चन्ति क्रमादपरस्पराः।
कथयति परिश्रान्तिं रात्रीतमःसहयुध्वनाम्
अयमपि दरिद्राणप्राणस्तमोदयितस्त्विषाम्॥ ४॥

---

च्छन्नम् अमुं पुरस्थं रुचोनिचयः अंशुसमूहः, कृदिकारादिति ङीष्। सः एव सिचयः पटः, सिचयो वस्त्रवसनमंशुकमिति यादवः। तस्य अंशांशस्य भ्रंशः, वीप्सायां द्विरुक्तिः। क्रमेण निरंशुकं नीरुचिं, शैषिकः कप्। विवसनञ्च तुहिनमहसं चन्द्रं पश्यन्ती इव प्रसादमिषात् प्राभातिकवैशद्यच्छलात् स्मेरं यस्मिन् तत् स्मेरं निजमुखं धत्ते इव। अत्र मिषशब्देन प्रसादरूपापह्नवेन पराङ्गनासङ्गतपुरुषदर्शनजन्यस्मितत्वोत्प्रे-क्षणात् सापह्नवोत्प्रेक्षा॥ ३॥

अमहतीति। अतिशयेन महत्यः महतितराः, प्रिया-दिषु पुंवद्भावप्रतिषेधः, रूपकल्पेत्यादिना ङ्यो ह्रस्वः। ततो नञ्समासे अमहतितराः सूक्ष्माः ताराः तारकाः ताहक् पूर्व-वत् लोचनस्य गोचराः विषयाः न भवन्ति प्रत्येकविषयत्वा-सम्भवात् बहुदोषापत्तौ वा ता न प्रसभादनेकवचनत्वनिर्बे-न्धेन तरणेः अर्कस्य किरणाः अपरे परे च सततक्रियाः अप-रस्पराः सन्तः, अपरस्पराः क्रियासातत्य इति निपातनात् साधुः। क्रमात् द्याम् आकाशम् अञ्चन्ति गच्छन्ति। अयं तमो-दयितः निशापतिः दरिद्राणप्राणः क्षीणबलः सन्, दरिद्रातेः कर्त्तरि ल्युट्। बलान्तर्यामिनोः प्राण इति यादवः। रात्रेः तमांसि, कृदिकाराद्वा ङीप्। तैः सह युध्वनां सहयुध्वतां, सहे चेति क्वनिप्। वनोन स इरति वक्तव्यात् इति पाठः।

स्फुरति तिमिरस्तोमः पङ्कप्रपञ्च इवोच्चकैः
पुरुसितगरुच्चञ्चच्चञ्चूपुटस्फुटचुम्बितः।
अपि मधुकरी कालिम्मन्या विराजति धूमल-
च्छविरिव रवेर्लाक्षालक्ष्मीं करैरभिपातुकैः ॥५॥
रजनिवमथुप्रालेयाम्भःकणक्रमसम्भृतैः
कुशकिशलयस्याच्छैरग्रेशयैरुदविन्दुभिः।
सुषिरकुशलेनायःसूचीशिखाङ्कुरसङ्करं
किमपि गमितान्यन्तर्मुक्ताफलान्यनुमेनिरे ॥ ६ ॥

---

वनो रचेति ङीप्प्रत्ययो नास्ति। त्विषां भासां परिश्रान्तिं कथयति। शोभासमुच्चयोऽलङ्कारः ॥ ४ ॥

स्फुरतीति। तिमिरस्तोमः तमोराशिः पुरु भूयिष्ठं यथा तथा सितगरुतां हंसानां, हंसास्तु श्वेतगरुत इत्यमरः। चञ्चद्भिः चञ्चूपुटैः स्फुटः चुम्बितः विलोलितः उच्चकैः महान् पङ्कप्रपञ्चः पङ्कराशिः इव स्फुरति इत्युपमा। कालिम् आत्मानं मन्यते इति कालिम्मन्या अतिकृष्णा इत्यर्थः। वर्णाज्जानपदादिति ङीप्, कालिशब्दोपपदात् मन्यतेरात्ममाने खजित्यनव्ययस्येति ह्रस्वः। अरुर्द्विषदित्यादिना मुमागमः। सा मधुकरी भृङ्गी अपि लाक्षालक्ष्मीं अलक्तकशोभाम् अभिपातुकैः अभिकामुकैः, लषपतेत्यादिना उकञ्, न लोकेत्यादिना षष्ठीप्रतिषेधात् कर्मणि द्वितीया। रवेः करैः धूमलच्छविः कृष्णलोहितकान्तिः इव विराजति, धूम्रधूमलौ कृष्णलोहिते इत्यमरः। अत्र कान्त्या भृङ्ग्या रविकरैर्लौहित्यादिविकारात् तत्गतेन तदुत्थापिता धूमलत्वोत्प्रेक्षेति सङ्करः ॥५॥

रजनीति। रजनेः रात्रेः वमथवः करशीकराद्युद्भवाः, वमथुः करशीकर इत्यमरः। ते च ते प्रालेयाम्भसः हिमज-

रविरुचिऋचामोङ्कारेषु स्फुटामलबिन्दुतां
गमयितुममूरुच्चीयन्ते विहायसि तारकाः ।
स्वरविरचनायामामुच्चैरुदात्ततयाहृताः
शिशिरमहसो विम्बादस्मादसंशयमंशवः ॥ ७ ॥

तस्य ये कणाः तैः क्रमेण सम्भृतैः आरब्धैः कुशकिशलयस्य, जातावेकवचनं, दर्भाङ्कुराणाम् इत्यर्थः, अग्रे शेरते इति अग्रेशयैः अग्रस्थैः, अधिकरणे शेतेरित्यच् । सुषिरे छिद्रविधाने कुशलानाम् अयसः लौहस्य सूचीनां शिखाङ्कुरं परमाग्रभागसङ्करं सङ्गमं किमपि किञ्चित् गमितानि अन्तर्मुक्ताफलानि अनुमेनिरे अनुचक्रुः इति सादृश्यलक्षणा । अत्र दर्भाग्रबिन्दूनां वेधसूच्यग्रलग्नमुक्ताफलैरुपमा प्रालेयाम्भःकणेषु वमथुत्वरूपणात् रजनेः करिणीत्वरूपणसिद्धिरेकदेशविवर्त्ति इत्यनयोरङ्गाङ्गिभावात् संसृष्टिः ॥ ६ ॥

रवीति । रवेः रुचयः एव ऋचः मन्त्रविशेषाः क्रतुभिः पूर्वाह्णे दिविदेव ईयत इति तत्त्वावेशकस्तन्मयत्वश्रुतेरिति भावः । तासाम् ऋचां ओंकारेषु स्फुटाः व्यक्ताः अमलाः स्वच्छाः बिन्दवः अन्त्यवर्णाः यस्याः तां गमयितुं विहायसि अमूः तारकाः उच्चीयन्ते संगृह्यन्ते । किञ्च, आसाम् ऋचां स्वरविरचनाय उदात्ताख्यस्वरसम्पादनार्थम् उच्चैः अत्यन्तम् उदात्ततया स्वच्छतया उच्चैरुदात्तः इत्युक्तलक्षणस्वरविशेषतया च, उदात्तः स्वरभेदे स्यात् काव्यालङ्कारहृदययोरिति विश्वः । अस्मात् शिशिरमहसः चन्द्रस्य विम्बात् अंशवः आहृताः अनेनेति शेषः अन्यथा स्वांशवस्तारकाश्च गता इति भावः । असंशयमित्युत्प्रेक्षायामर्थाभावेऽव्ययीभावः ॥ ७ ॥

व्रजति कुमुदे दृष्टा मोहं दृशोरपिधायके
भवति च नले दूरं तारापतौ च हतौजसि ।
लघु रघुपतेर्जायां मायामयीमिव रावणिः
तिमिरचिकुरग्राहं रात्रिं छिनत्ति गभस्तिराट् ॥८॥
त्रिदशमिथुनक्रीडातल्पे विहायसि गाहते
निधुवनधुतस्रग्भागश्रीभरं ग्रहसङ्ग्रहः ।
मृदुतरकराकाकारैस्तूलोत्करैरुदरम्भरिः
परिहरति नाखण्डो गण्डोपधानविधां विधुः ॥९॥

---

व्रजतीति । कुमुदे कैरवे कपिविशेषे च, कुमुदः कैरवे रक्तपङ्कजे कुमुदः कपौ इति विश्वः । दृष्टा हिंसां कर्त्तुं दृष्टा मोहं सङ्कोचं मूर्च्छनञ्च व्रजति, तथा नले भवति नैषधे त्वयि इव दृशोः अपिधायके निद्रया निमीलिताक्षे इत्यर्थः । अन्यत्र नले कपिविशेषे दृशोः अपिधायके भवति सति, नलो योगे नले राज्ञि पितृदेवे कपीश्वर इति विश्वः । तथा तारापतौ चन्द्रे सुग्रीवे च, ऋक्षाक्षिमध्ययोस्तारा सुग्रीवगुरुयोषितोरिति विश्वः । दूरम् अत्यन्तं हतौजसि निस्तेजस्के सति मायामयीं मायाकल्पितां रघुपतेः जायां सीतां रावणस्य अपत्यं रावणिः इन्द्रजित्, इञ् । लघु क्षिप्रं गभस्तिराट् सूर्य्यः रात्रिं तिमिराणि एव चिकुराः तेषु गृहीत्वा तिमिरचिकुरग्राहं, स्वाङ्गे उपपदे णमुल्भावः । छिनत्ति ॥ ८ ॥

त्रिदशेति । ग्रहेति उपलक्षणं, ग्रहसङ्ग्रहः तारकागणः त्रिदशमिथुनानां देवद्वन्द्वानां क्रीड़ातल्पे विहायसि आकाशे निधुवने सुरते धुतस्रग्भागानां निर्माल्यानां श्रीभरं शोभा-व्यतिरेकं गाहते । किञ्च, आखण्डः विधुः मृदुतरकराः एव

दशशतचतुर्वेदीशाखाविवर्त्तनमूर्त्तयः
सविधमधुनाऽलङ्कुर्वन्ति ध्रुवं रविरश्मयः।
वदनकुहरेष्वध्येतॄणामयं तदुदश्चति
श्रुतिपदमयस्तेषामिव प्रतिध्वनिरध्वनि॥ १०॥
नयति भगवानम्भोजस्यानिबन्धनबान्धवः
किमपि मघवत्प्रासादस्य प्रघाणमुपन्नताम्।

---

आकारः येषां तैः तदाकारैः तद्रूपैः तूलोत्करैः तूलपटलैः उदरं बिभर्त्ति इति उदरम्भरिः उदरेण पूरितमध्यः व्याप्तोदरः सन् इत्यर्थः, फलेग्रहिरात्मम्भरिश्चेति चकारात् सिद्धः। गण्डोपधानस्य कपोलोपबर्हस्य, विधानन्तूपबर्हः इत्यमरः। विधां प्रकारं न परिहरति गण्डोपधानत्वं भजते इत्यर्थः। अत्र श्रियमिव श्रियं विधामिव विधामिति साद्दश्याक्षेपात् उभयत्र निदर्शनोत्थानात् सजातीयसंसृष्टिः॥ ८॥

दशेति। दश शताः यासु ताः सहस्रसुख्याः इत्यर्थः, ताश्च ताः चतुर्वेदीशाखाश्च इति विशेषणसमासः अन्यथोभयद्विगुप्राप्तौ बहु स्यादिति। तासां विवर्त्तनं मूर्त्तिः येषां ते तद्विवर्त्तनरूपाः रवेः रश्मयः ध्रुवं सविधम् अलङ्कुर्वन्ति समीपं गच्छन्ति। कुतः ? तत् तस्मात् तत्सामीप्यात् एव तेषां रश्मीनाम् एव अयं श्रुतिपदमयः वेदाक्षरमयः प्रतिध्वनिः अध्येतॄणां सूर्य्यशिष्याणां वदनकुहरेषु उदश्चति उद्गच्छति, अध्वनि सूर्य्यशिष्याध्ययनध्वनिव्याजेन तेषामेव, वेदरश्मीनां तेषु प्रतिध्वनीनां प्रापणात् तत्सावाप्यम् उन्नीयते इत्यर्थः॥ १०॥

नयतीति। अम्भोजस्य पद्मकुलस्य अनिबन्धनबान्धवः निर्व्याजबन्धुः भगवान् सूर्य्यः, अपरसन्ति अरीणि विरोधीनि

अपसरदरिध्वान्तप्रत्यग्वियत्पथमण्डली-
लगनफलदश्रान्तस्वर्णाचलभ्रमविभ्रमः ॥ ११ ॥
नभसि महसां ध्वान्तध्वांक्षप्रमापणपक्षिणाम्
इह विहरणैः श्येनम्पातां रवेरवधारयन् ।
शशिविशसनत्रासादाशामगाच्चरमां शशी
तदधिगमनात्तारापारावतैरुदडीयत ॥ १२ ॥

---

ध्वान्तानि यस्याः तस्याः प्रत्यक्वियत्पथमण्डल्यां पश्चिमाकाशमार्गे देशे लगनात् ध्वान्तोदयध्वंसनात् इत्यर्थः फलदः फलीभवन् अश्रान्तस्वर्णाचलभ्रमे विभ्रमः निरन्तरमेरुप्रदक्षिणीकरणप्रयासः यस्य सः सन् किम् अपि कस्य अपि हेतोः मघवत्प्रासादस्य वैजयन्तस्य प्रघाणम् अलिन्दं, प्रघाणप्रघणाःलिन्दा वहिर्द्वारप्रकोष्ठक इत्यमरः। अगारैकदेशे प्रघणः प्रघाणश्चेति निपातः। उपघ्नताम् आश्रयतां नयति प्रघाणम् आश्रितवान् इत्यर्थः। सूर्य्य इव अन्धकारं निरस्य क्षणादुदयाद्रिमाश्रितः इत्यर्थः॥ ११ ॥

नभसीति। ध्वान्तानाम् एव ध्वांक्षाणां वायसानां प्रमापणे मारणे पक्षिणां श्येनानां, ध्वांक्षात्मघोषपरभृद् बलिभुग्वायसा अपि, अथ शशादनः पत्री श्येन इति चामरः। महसां तेजसां नभसि विहरणैः विजृम्भणैः रवेः श्येनपातः अस्यां अयति श्येनं श्येनम्पाता, श्येना खेटः घञः सास्यां क्रियेति श्येनतिलस्य पाते ञ इति सुमागमः। ताम् अवधारयन् निश्चिन्वन् शशी शशः स्वाङ्कः तस्य विशसनत्रासात् तद्भयात् चरमां पश्चिमाम् आशाम् अगात् तस्यां तस्य वृत्तान्तस्य अधिगमनात् तद्वृत्तान्तज्ञानात् ताराभिः एव पारावतैः पक्षि-

भ्रमममविभवस्तारा हाराच्च्युता इव मौक्तिकाः
सुरसुरतजक्रीडालूनाद् द्युसद्मियदङ्गणम् ।
बहुकरकृतात् प्रातः सम्मार्जनादधुना पुनः
निरुपधिनिजावस्थालक्ष्मीविलक्षणमीक्ष्यते ॥१३॥
प्रथममुपहृत्यार्घं तारैरखण्डिततण्डुलैः
तिमिरपरिषद्दूर्वापर्वावलीश्च वलीकृतैः ।
अथ रविरुचां प्रासातिथ्यं नभः स्वविहारिभिः
सृजति शिशिरचोदश्रेणीमयैरुदसक्तुभिः ॥ १४ ॥

---

विशेषैः, पारावतः कलरवः कपोत इत्यमरः । उद्डीयत उड्डीनं, भावे लङ् । रूपकालङ्कारः ॥ १२ ॥

भ्रममिति । ताराः तारकाः सुराणां सुरद्वन्द्वानां, पुमान् स्त्रियेत्येकशेषः । सुरतजया क्रीडया विहारेण लूनात् छिन्नात् हारात् च्युताः मुक्ताः एव मौक्तिकाः, स्वार्थे कप्रत्ययः स्वात्कात्पूर्वस्येतीकारः । ताः इव इत्युत्प्रेक्षा । द्युसद्मियदङ्गणं नभःप्राङ्गणं भ्रमम् अबिभरुः अपूरयन्, डुभाञ् धारणपोषणयोरित्यस्य लङ् रूपं लञ् शाकटायनस्येति झेर्जुसादेशः । अधुना पुनः इदानीं तु बहुकरेण सम्मार्जकरेण, खलपूः स्यात् बहुकर इत्यमरः । कृतात् प्रातः सम्मार्जनात् आच्छादनात् निःशेषीकरणात् इत्यर्थः, निरुपधि निर्व्याज कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतव इत्यमरः । तस्याः निजावस्थाया निजस्वरूपस्य लक्ष्म्याः शोभायाः विलक्षणम् ईक्ष्यते खलपूप रिहृद्विवत् बहुकरहृतमस्तरोचमपि पूर्वविलक्षणमलक्ष्यकमल क्षत इत्यर्थः ॥ १३ ॥

प्रथममिति । नभः कर्तृ रविरुचां प्रथमं तिमिरपरिष तमोवृन्दं सा एव दूर्वापर्वणां दूर्वावृन्दानाम् आवली तय

असुरहितमप्यादित्योत्थां विपत्तिमुपागतं
दितिसुतगुरुः प्राणैर्योक्तुं न किं कचवत् तमः ?।
पठति लुठतीं कण्ठे विद्यामयं मृतजीवनीं
यदि न वहते सन्ध्यामौनव्रतव्ययभीरुताम्॥ १५॥
उदयशिखरिप्रस्थान्यस्मिन् रवोऽत्र निशः क्षणे
दधति विहरत्पूषाश्चस्तु अद्भुताम्बजतुम्बवान्।

---

ावलीकृतैः चित्रीकृतैः तारैः उडुभिः एव, उडुदष्यवतयोरिति
ाराशब्दार्थे यादवः। अखण्डिततण्डुलैः अर्घम् उपहृत्य
त्वात्, अथ स्वविहारिभिः शिशिरस्रोदश्रेणीमयैः हिमशी-
ारपुष्करूपैः उदसक्तुभिः, मन्थदनेत्यादिना उदकशब्दस्योदा-
ेशः इत्यर्थः। प्रासातिथ्यं अतिथ्यर्थं, अतिथेर्ण्यः। सः
ग्रासरूपम् आतिथ्यं सृजति सम्पादयति। रूपकालङ्कारः॥
१४॥

असुरेति। दितिसुतानां दैत्यानां गुरुः शुक्रः असुभिः
ाणैः रहितं अचेतनम् अपि, अन्यत्र असुरेभ्यः हितम् अपि,
चतुर्थी तदर्थेत्यादिना समासः। आदित्योत्थां सूर्य्योत्थां कच-
पक्षे देवोत्थां तथा प्रवृत्तिभूतत्वात् तदुत्थत्वव्यपदेशः। विप-
त्तिम् उपागतं तमः अन्धकारं कचवत् चैनां, बृहस्पतिपुत्रः
सञ्जीवनीविद्यार्थं शुक्रमुपागतः स दैत्यहतः पुनः शुक्रेणोज्जी-
वितः इति भारतीकथा। तं कचम् इव प्राणैः योक्तुं कण्ठे
च लुठतीं परिवर्त्तमानाम्, शाच्छिनद्योरिति विकल्पान्नुम-
भावः। मृतजीविनीं विद्यां न पठति किं? पठेदेव, किन्तु
अयं शुक्रः तत्काले सन्ध्यामौनव्रतव्ययात् भयात् भीरुतां न
वहते न धत्ते यदि अन्यथा कथमीदृक् विद्यावान् पुरोवर्त्ति-
नम् अन्धकारकर्त्तारमुपेक्षते इति भावः॥ १५॥

उदयदरुणप्रह्वीभावादरादरुणानुजे
मिलति किमु तत्सङ्गाच्छङ्का नवेष्टकवेष्टना ? ॥ १६ ॥
रविरथहयानस्वस्यन्त्यो ध्रुवं वडवा बल-
प्रतिबलबलावस्थायिन्यः समीक्ष्य समीपगान्।
निजपरिवृढं गाढप्रेमा रथाङ्गविहङ्गमी
स्मरशरपराधीनस्वान्ता हृषष्यति सम्प्रति ॥१७॥

---

उदयेति। अत्र अस्मिन् क्षणे निशः निशायाः अङ्का दिवसेन रणे सति विद्दरत्पूषाणि सञ्चरत्सूर्य्याणि उदयशिखरिप्रस्थानि सानूनि, प्रस्थोऽस्त्री सानुमानयोरिति यादवः। उष्मणा द्रुतानां विलीनानाम् अश्मजतूनां धातुविशेषाणां स्रवान् दधति रक्तप्रवाहान् इति भावः। यः उदयतः उद्यच्छतः अरुणस्य अनूरोः प्रह्वीभावादरात् प्रणामश्रद्धाभरात् अरुणानुजे गरुडे मिलति सङ्गच्छति सति तत्सङ्गात् गरुड़मिलनात् हेतोः नवाः इष्टकाः यस्यां सा वेष्टना परिधिः शङ्का शङ्कास्पदं किमु ? यद्युक्तहेतुना न सङ्गच्छेत् तदादन्तपक्षव्याप्तिरुदयाद्रिणा नवेष्टकावेष्टना कस्मादिति सम्भावनयोत्प्रेक्षा ॥ १६ ॥

रवीति। बलप्रतिबलस्य बलप्रतिपक्षस्य इन्द्रस्य बलेषु सैन्येषु अवतिष्ठन्ते इति तदवस्थायिन्यः वड़वाः तुरङ्गाः समीपगान् रविरथहयान् समीक्ष्य अश्वस्यन्त्यः कामयन्ते इत्यर्थः। गाढप्रेमा दृढानुरागा अतएव स्मरशराणां पराधीनस्वान्ता परतन्त्रचित्ता रथाङ्गविहङ्गमी चक्रवाकी, जातेरस्त्रीत्यादिना ङीप्। निजपरिवृढं स्वकान्तं सम्प्रति उषःकाले हृषस्यति कामयते इत्यर्थः। ध्रुवम् इत्युत्प्रेक्षायाम्। सुप आत्मनः

निशि निरशना: चोरस्यन्त: क्षुधाऽश्वकिशोरका:
मधुरमधुरं क्षेपन्त्येते विलोलितबालधि।
तुरगसमज: स्थानोत्थायं क्वणन्मणिमन्थभू-
धरभवशिलालेहायेहाचणो लवणस्यति ॥ १८ ॥
उडुपरिषद: किं नार्हन्त्वं ? निशः किमु नौचिती ?
पतिरिह न यत् ताभ्यां दृष्टो गणेयरुचीगण:।

---

क्यच्, अश्वचीरवृषलवणानामात्मप्रीतौ क्यचीत्यनुरागादेश:, अश्ववृषयोर्मैथुनेच्छायां वक्तव्यमित्यर्थनियम: ॥ १७ ॥

निशीति। हे महाराज ! निशि निरशना: निराहारा: अतएव चोरस्यन्त: चोरम् आत्मन: भृशम् इच्छन्त: ते तव अश्वकिशोरका: अश्वबालका:, बाल: किशोर इत्यमर:। विलोलितबालधि व्यालोलितपुच्छं यथा तथा क्षुधा क्षुधया मधुरमधुरं मधुरप्रकारं क्षेपन्ति खनन्ति। किञ्च, मणिमन्थभूधर: मणिमन्थाचल: तद्भवानां शिलानां लवणोपलविशेषाणां लेहाय आस्वादाय ईहाचण: ईहितवित्त:, तेन वित्तं चञ्चुचणपाविति चणप्प्रत्यय:। तुरगाणां समज: समूह:, पशूनां समज इत्यमर:। समुदो रज: पशुष्वित्यप्प्रत्यय:। क्वणन्मणि क्वणत्किङ्किणीकं यथा तथा इत्यर्थ: स्थानात् उत्थाय स्थानोत्थायं, अपादाने परीप्सायामिति णमुल्। लवणस्यति लवणम् आत्मन: भृशम् इच्छति, अश्वचीरेत्यादिना चीरलवणयोर्लालसायामसुगागम:। लालसा तृष्णातिरेक: ॥ १८ ॥

उडुिति। उडुपरिषद: तारागणस्य अर्हत: भाव: अर्हन्त्वम् औचिती न किं ? ब्राह्मणादित्वात् ष्यञ्प्रत्यये अर्हतो नुमिति नुमागम:, षित्वाहाहुलकात् ईकार इति वामन:, यस्येति लोप: यस्य हल इति यकारलोप:। एतेन

स्फुटमुडुपतेराश्मं वक्षः स्फुरन्मलिनाश्मन-
च्छवि यदनयोर्विच्छेदेऽपि स्मृतं वत न द्रुतम्॥ १९॥
अरुणकिरणे वह्नौ लाजानुडूनि जुहोति या
परिणयति तां सन्ध्यामेतामवैमि मणिर्दिवः।
इयमिव स एवाग्निर्भ्रान्तिं करोति पुरा यतः
करमपि न कस्तस्यैवोल्कः सकौतुकमोचितुम्? ॥२०॥

---

औचिती व्याख्याता। मम भावस्तु विशेषः, निशः अपिन औचिती किमु। अनौचित्यमेवाह। यत् यस्मात् इह समये गणेयरुचीगणः परिगणेयकान्तिचयः परिक्षीणकिरणः इत्यर्थः। गणेरेय इत्यौणादिक एयप्रत्ययः। ईदृशः पतिः चन्द्रः ताभ्याम् उडुनिशाभ्याम् अपि न दृष्टः, स्त्रीणां पत्युः क्षीणावस्थाने ईक्षणम् अनुचितम् इत्यर्थः। किञ्च, अश्मनः इयम् आश्मनी, तस्येदमित्यण्, अणीति प्रकृतिभावः। स्फुरन्ती मलिना आश्मनी छविः यस्य तत् नीलाश्मनः सच्छायं उडुपतेः वक्षः अश्मविकारः आश्मं आश्ममयं, विकारार्थेऽण्प्रत्ययः। अश्मनो विकार उपसङ्ख्यानमिति लोपः। स्फुटं सत्यम्। कुतः? यत् यस्मात् अनयोः स्वकान्तयोः विच्छेदे वियोगे अपि द्रुतं शीघ्रं न मृतं वत इति खेदे उभौ अन्योन्यानुरागविरुद्धका-रिणौ इत्यर्थः॥ १९॥

अरुणेति। या सन्ध्या अरुणस्य अनूरोः किरणे तेजसि एव वह्नौ उडूनि एव लाजान् जुहोति, तां एतां सन्ध्यां वधूं दिवः मणिः सूर्य्यः वरः परिणयति* उपगच्छति अवैमि। वाक्यार्थः कर्म। इत्युत्प्रेक्षे इत्यर्थः। किञ्च, इयं सन्ध्या वधूः इव वरः सूर्य्यः अपि भ्रान्तिम् आरुण्यात् अग्निविभ्रमं जलहोमानन्तरकार्य्यम् अग्निप्रदक्षिणं भ्रमणञ्च पुरा करोति

रतिरतिपतिद्वैतश्रीकौ ! ध्रुवं विभ्रमस्तमां
प्रियवचसि यन्नर्म्माचार्य्यौ वदामतमां तत: ।
अपि विरचितो विघ्न: पुण्यद्रुह: खलु नर्मण:
परुषमरुषे नैकस्मै वामुदेतु मुदेऽपि तत् ॥ २१ ॥
भव लघुयुताकान्त: सन्ध्यामुपास्स्व तपोमय !

---

करिष्यत्येव यावत्, पुरानिपातयोर्लट् । किञ्च, तस्य एव परिवेतु: द्युमणे: करम् अग्रं हस्तम् अपि, बलिहस्तांशव: करा इत्यमर: । सकौतुकं सकुतूहलं यथा तथा ससूवस, कौतुकं विषयाभोगे हस्तसूत्रे कुतूहल इति यादव: । ईक्षितुं क: न उत्क: न उत्सुक: ? सर्वेऽपि उत्सुका एव इत्यर्थ: ॥ २० ॥

रतीति । हे रतिरतिपत्यो: द्वैतस्य द्वित्वस्य इव श्री: ययो: तौ द्वितीयौ रतिकामौ ! प्रियवचसि चाटुवादे ध्रुवं विभ्रमस्तमां स्तोत्रम् अतिशयेन विभ्रम:, तथापि यत् यस्मात् नर्म्मसु आचार्य्यौ उपदेशादिकारिणौ नर्म्म चपणवन्दिनोरित्यमर: । तत: वदामतमाम् अवश्यं वदाम इत्यर्थ: । उभयत्रापि तिङव्ययादामुप्रत्यय: । पुण्यद्रुह: सुकृतविरोधिन: नर्मण: सुखविहारस्य विघ्न: विरचित: खलु अपि अत: परुषं निष्ठुरं मुदे हर्षाय तदपि वक्ष्यमाणं वच: वां युवयो: मध्ये एकस्मै अन्यै अरुषे रुष: अभावाय, क्वचिदसन्न्यप्रतिषेधेऽपि नञ्समास इष्यते । न उदेति न जायते किन्तु रुष एवेत्यर्थ:, अप्रियमपि हितं वाच्यमेवेत्यतो वदाम इत्यर्थ: ॥२१॥

भवेति । हे तपोमय ! तपोनिष्ठ ! महाराज ! लघु शीघ्रं युता पृथक्भूता कान्ता प्रिया यस्य स:, युताकान्त: विश्लिष्टकान्त: भव । कान्ताशब्दस्य प्रियादिपाठात् स्त्रिया:

त्वरयति कथं सन्ध्येयं त्वां न नाम निशानुजा ? ।
द्युतिपतिरथावश्यङ्कारी दिनोदयमासिता
हरिपतिहरित्पूर्णभ्रूणायितः कियतः क्षणान् ॥२२॥
मुषितमनसश्चित्रं भैमि ! त्वयाद्य कलागृहैः
निषधवसुधानाथस्यापि श्लथश्लथता विधौ ।

पुंवदित्यादिना पूर्वपदस्य न पुंवद्भावः, प्रियादिष्विति प्रतिषेधात्। सन्ध्याम् उपास्व सेवस्व। इयं निशानुजा सन्ध्या प्रातःसन्ध्या त्वां कथं नाम न त्वरयति ? तथाहि, अथ अनन्तरं दिनोदयं दिनप्रादुर्भावम् अवश्यङ्कारी स्वयं दिनकर्त्ता सः सन् इत्यर्थः। आवश्यकाधमर्ण्ययोरित्यावश्यकार्थे णिनिः, मयूरव्यंसकादित्वात्समासः। आवश्यकार्थत्वादिह भविष्यति इत्यर्थः। अकेनोर्भविष्यदधमर्ण्ययोरितीकारान्तोक्तषष्ठीप्रतिषेधः सम्भवति, अतएव अत्र प्रत्युदाहरणं काशिकायां अवश्यङ्कारी कटस्येति तस्माद्दोना वयमिति द्वितीयाप्रयोगश्चिन्त्यः कृद्योगषष्ठ्या दुर्वारत्वादिति। द्युतिपतिः सूर्य्यः हरिः इन्द्रः पतिः यस्य तस्याः हरितः प्राच्याः पूर्णभ्रूणः सम्पूर्णगर्भः, गर्भो भ्रूण इमौ समावित्यमरः। स एव आचरितः, उपमानक्यजन्तात्कर्त्तरि क्तः। कियतः क्षणान्, अत्यन्तसंयोगे द्वितीया। आसिता न क्षणमपीत्यर्थः। अतः स[illegible]रमुत्तिष्ठ इति तात्पर्य्यम् ॥ २२ ॥

मुषितेति। हे भैमि ! अद्य कलागृहैः कामकलानिवासैः, गृहाः पुंसि च भूम्नि चेत्यमरः। त्वया मुषितमनसः हृतचित्तस्य निषधवसुधानाथस्य नलस्य विधौ अनुष्ठाने श्लथश्लथता अतिशिथिलता, कर्मधारयवत् पुंवद्भावात् सुपो लुक्। चित्रम् अयं नलः सन्ध्यां वन्ध्यां शून्यां विधाय अनुपास्येत्यर्थः,

अजगणदयं सख्यां वध्यां विधाय न दूषणं
नमसितुमना यन्नाम स्यान्न सम्प्रति पूषणम् ॥२३॥
न विदुषितरा कापि त्वत्तस्ततो नियतक्रिया-
पतनदुरिते हेतुर्भर्त्तुर्मनस्विनि! मा स्मभूः।
अनिशभवदत्यागादेनं जनः खलु कामुकी
सुभगमभिधास्यत्युद्दामापराङ्कवदावदः ॥ २४ ॥

---

दूषणं दोषं न अजगणत् न गणयति स्म। यत् यस्मात् सम्प्रति पूषणं सूर्यं, इन्हन्पूषार्य्यमणां साविति नियमा-न्नात्र सर्वनामस्थाने ङीप्। नमसितुमनाः नमस्कर्त्तुकामः, नमो वरिवश्चित्रङः क्यङित्यजन्तात् सुगागमः, अस्याविभा-षेति क्यलोपः, तुं काममनसोरपीति मकारलोपः। न स्यात् नाम भवेत् इत्यर्थः ॥ २३ ॥

नेति। हे मनस्विनि! त्वत्तः प्रभृति पञ्चमी। अति-विदुषी विदुषितरा, घरूपेत्यादिना ह्रस्वः। कापि नास्ति ततो नैव अमुष्मात् हेतोः भर्त्तुः नियतक्रियापतनदुरिते नित्य-कर्मभ्रंशपापे हेतुर्माभूः स्म, स्मोत्तरे लङ् चेति चकाराल्लुङ् माङ्योगादडभावः। तथाहि, उद्दामः उच्छृङ्खलः अतएव अपरेषाम् अङ्कस्य कलङ्कस्य वदावदः वक्ता, चरीत्यादिना वदेर्द्विरुक्तिः, अभ्यासस्यागागमश्च। जनः लोकः अनिशं भवत्या कर्त्र्या अत्यागात् अमोचनात् हेतोः, सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः। एनं सुभगं कामुकी वृषस्यन्ती वल्लभम् अभिधास्यति स्त्रीलोलं वक्ष्यति इत्यर्थः। तस्मादेनं त्वं मुञ्च इति भावः। वृषस्यन्ती तु कामुकीत्यमरः। जानपदादीनां मैथुनेच्छायां ष्यङ् ॥ २४ ॥

रह सहचरीमेतां राजन्नपि क्षिततरां क्षणं
तरणिकिरणैः स्तोकोन्मुक्तैः समालभते नभः।
उदधिनिरयद्भास्वत्स्वर्णोदकुम्भदिदृक्षुतां
दधति नलिनं प्रस्थायिन्यः श्रियः कुमुदान्मुदा ॥२५॥

---

रहेति। राजन्! क्षिततराम् उत्कृष्टश्रियम् अपि, क्षौम-शब्दस्य जातिवाचित्वेऽपि तन्निष्ठगुणगतातिशयविवक्षया तरप्-प्रत्यय इति भगवान् भाष्यकारः। नद्याः शेषस्यान्यतरस्या-मिति ह्रस्वः। सहचरीं सहचारिणीं, पचादिषु चरसीदिति टित्करणेन ङीप्। एतां प्रियां क्षणं रह त्यज, रहति त्यजति त्याग इति भट्टमल्लः। रहेर्भौवादिकाल्लोटि सिप्। नभः कर्त्तृ स्तोकेन लेशेन मुक्तैः स्तोकोन्मुक्तैः, करणे चेति शेषः कर्मणि क्तः, कर्म कर्त्तरि वा क्तः। स्वयं मुक्तैः इत्यर्थः, तर-णिकिरणैः करणैः समालभते आत्मानम् अनुलिम्पति इत्यर्थः। यच्च शक्यं समालम्भनमित्यपीत्यनुलेपनपर्य्याय इति यादवः। किञ्च, कुमुदात् अपादानात् नलिनं पद्मं प्रति गम्यमानो-पदेशेन क्रियापेक्षया कर्मत्वम्। प्रस्थायिन्यः प्रतिष्ठमानाः, ग्रह्यादित्वात् णिनिः। अत्र गमिगाम्यादिपाठादकेनोरिति षष्ठीप्रतिषेधात्कर्मणि द्वितीयेति केचित्। तत्प्रतिष्ठतेः कर्म-कत्वमनालोच्यत इत्युपेक्षणीयम्। श्रियः शोभाः मुदा हर्षेण उदकानि धीयन्ते यस्मिन् इति उदधिः, कर्मण्यधि-करणे चेति कप्रत्ययः। अथवासिवासवाह हृदयेषु चेत्युदा-देशः। तस्मात् निरयन् निर्गच्छन्, अयतेर्लटः शत्रादेशः। स चासौ भास्वान् च स एव स्वर्णस्य उदकुम्भः एकहलादौ पूरयितव्योऽन्यतरस्यामित्युदादेशः। तद्दिदृक्षुतां, न लोके-त्यादिना षष्ठीप्रतिषेधे गमिगाम्यादिपाठात् द्वितीयासमासः।

प्रथमककुभः पान्थत्वेन स्फुटेङ्गितवृत्रहा-
ण्यनुपदमिह द्रक्ष्यन्ति त्वां महांसि महःपतेः।
पटिमवहनादूहापोहक्षमाणि वितन्वताम्
अहह युवयोस्तावन्नक्तोविवेचनचातुरीम्॥ २६॥
अनतिशिथिले पुम्भावेन प्रगल्भबलाः खलु
प्रसभमलयः पाथोजास्ये निविश्य निरित्वराः।

---

तासां भावः तत्ता तां दधति दिदृचन्ते इत्यर्थः। मङ्गमन्दिर-प्रदेशे पूर्णकुम्भदर्शनस्य मङ्गलावहत्वादिति भावः॥२५॥

प्रथमेति। प्रथमककुभः इन्द्रदिशः पन्थानं गच्छतीति पान्थः नित्यपथिकः, पथोर्णतोन्प्रत्ययः पन्थादेशश्च। तत्त्वेन इन्द्रदिग्गतत्वेन इत्यर्थः स्फुटम् ईङ्गितः वृत्रहा यैः तानि, इन्-हन्नित्यादिना सौ सर्वनामस्थाने दीर्घः। महःपतेः सूर्य्यस्य महांसि अनुपदं इन्द्रेचणानन्तरम् इह देशे त्वां द्रक्ष्यन्ति ततः किं तवाह—पटिमवहनात् तीक्ष्णतायाः ज्ञातव्यस्य च वहनात् धारणात्। पटुश्च तारतीक्ष्णयोरिति शाश्वतः। ऊहापोहयोः सदसद्ग्रहत्यागयोः चमाणि शक्तानि तानि महांसि तस्य इन्द्रस्य तव च युवयोः, त्यदादीनि सर्वैर्नित्य-मिति त्यदाद्येकशेषः। तावन्नक्तोविवेचनचातुरीं तावत्मा-कल्येन वितन्वताम् उभयदर्शिनम् उभयतारतम्यं विवेक्तुं युक्तम् इत्यर्थः। अहह इत्यद्भुते॥ २६॥

अनतीति। पुम्भावेन पुंस्त्वेन हेतुना प्रगल्भबलाः स्त्रीभ्योऽपि प्रबलाः अलयः भृङ्गाः अनतिशिथिले ईषद्विक-सिते पाथोजं पद्मम् एव आस्यं तस्मिन् प्रसभं बलात् निविश्य निरित्वराः निर्गच्छन्तः, इण्नशजिसर्त्तिभ्यः क्वरप्। सुखतः

किमपि मुखतः कृत्वा नीतं वितीर्य्य सरोजिनी-
मधुरसमुषो योगे जायां नवान्नमचीकरन् ॥२७॥
मिहिरकिरणाभोगं भोक्तुं प्रवृत्ततया पुरः-
कलितचुलुकापोशानस्य ग्रहार्थमियं किमु ?
इति विकसितेनैकेन प्रागदलेन सरोजिनी
जनयति मतिं साक्षात्कर्त्तुर्जनस्य दिनोदये ॥ २८ ॥
तटतरुखगश्रेणीसांराविणैरिव साम्प्रतं
सरसि विगलन्निद्रामुद्राऽजनिष्ट सरोजिनी ।

---

मुखे कृत्वा सरोजिनीमधुरसं नलिनीरसस्वरूपम् आस्वाद्य उषोयोगे प्रातः वितीर्य्य दत्त्वा जायां स्वकान्ताम् अलिनो किम् अपि अवाच्यं नवान्नम् अचीकरन् कारयामासुः भोजयामासुः इत्यर्थः। करोतेर्णौ चङ्युपधाया ह्रस्वः, हृक्रोरन्यतरस्यामिति अणिकर्त्तुः कर्मत्वम्। बली पुमान् स्वान्तरमुखान्तर्गतमपि सृष्टमन्नं बलात् आच्छिद्य स्वस्त्रियै प्रयच्छतीति भावः ॥ २७॥

मिहिरेति। सरोजिनी दिनोदये प्रातःकाले प्राक् विकसितेन एकेन हेतुना मिहिरकिरणा भुज्यते इति आभोगः तं भोज्यं भोक्तुं प्रवृत्ततया इयं सरोजिनी अपोशानम्, अपोशानं नाम कर्म, पृषोदरादित्वात्साधुः। तस्य ग्रहार्थम् आचरणार्थं पुरः पूर्वं कलितः कृतः चुलुकः पाणिबन्धनविशेषः यस्याः सा किमु ? इति मतिम् उत्प्रेक्षया साक्षात्कर्त्तुः द्रष्टुः जनस्य जनयति ॥ २८ ॥

तटेति। साम्प्रतं सम्प्रति सरसि सरोजिनी तटतरुषु खगश्रेणीनां सांराविणैः समन्ताद्रावैरिव इत्युत्प्रेक्षा। अभि-

अधरसुधया मध्ये मध्ये वधूमुखलब्धया
धयति मधुपः स्वादुङ्कारं मधूनि सरोरुहाम् ॥२९॥
गतचरदिनस्यायुर्भङ्गे दयोदयसङ्कुच-
त्कमलमुकुलक्रोडे नीडे प्रवेशमुपेयुषाम्।
इह मधुलिहां भिन्नेष्वम्भोरुहेषु समायतां
सह सहचरैरालोक्यन्तेऽधुना मधुपारणाः ॥३०॥
तिमिरविरहात् पाण्डूयन्ते दिशः क्षशतारकाः

---

विधौ भावे इनुन् इति स्वार्थे इनुन्प्रत्ययः। विगलन्निद्रामुद्रा विवर्त्तमाननिद्रा अजनिष्ट जाता, जनेः कर्त्तरि लुङ्। मधुपः सरोरुहां मधूनि मकरन्दान् मध्ये मध्ये वधूमुखे स्वकान्तामुखे लब्धया अधरसुधया स्वादुङ्कारं स्वादूकृत्य स्वादुनि णमुलिति णमुल् प्रत्ययः। मान्तनिर्देशादेव मकारान्तदीर्घभावः। धयतीति धेटो लट् ॥ २९ ॥

गतेति। गतचरं गतपूर्वं, भूतपूर्वे चरट्। अस्य दिनस्य आयुर्भङ्गे जीवितावसाने सति दयोदयात् कृपाविर्भावात् इव सङ्कुवतां म्लानानां कमलमुकुलानां क्रोडे अभ्यन्तरे एव नीडे कुलाये, कुलायो नीडमस्त्रियां, न नाक्रोडं भुजान्तरमिति चामरः। प्रवेशम् उपेयुषाम् अन्तः प्रविशताम् इत्यर्थः इह अम्भोरुहेषु भिन्नेषु सत्सु सहचरैः सह सम्यत्यागतैरिति भावः। समायतां निपततां, इणो लटः शत्रादेशः। मधुलिहां मधुपानाम् इदानीं मधूनां पारणाः पानानि आलोक्यन्ते सखियो दृश्यन्ते इत्यर्थः ॥ ३० ॥

तिमिरेति। दिशः तिमिरेण विरहात् क्षशाः क्षीणाः तारकाः नक्षत्राणि कनीनिकाः यासां ताः सत्यः, कनीनि-

कमलहसितैः श्रोणीवोन्नीयते सरसी न का ?।
शरणमिलितध्वान्तध्वंसिप्रभादरधारणात्
गगनशिखरं नीलत्येकं निजैरयशोभरैः॥ ३१ ॥
सरसिजवनान्युद्यत्पत्यार्य्यमाणि हसन्तु न ?
श्लथरुचिमुद्दच्चन्द्रं तन्द्रामुपैतु न कैरवम्।
हिमगिरिदृषच्छायादश्रीप्रतीतमुदः श्रितं

---

कायां नक्षत्रं तारके चेति विश्वः। पाण्डूयन्ते पाण्डुवर्णाः भवन्ति विरहिधर्मत्वादिति भावः। वर्णादनुदात्ताचोदात्तो न इति ङीप्प्रत्ययः। तकारस्य न चकारः। का सरसी कमलानि पद्मानि एव हसितानि यस्या तैः श्येनी इव शोणवर्णा इव न उन्नीयते ? दृश्यते ? सर्वापि उन्नीयते एव इत्यर्थः। एकं गगनशिखरं नभोमण्डलं शरणमिलितानि शरणागतानि ध्वान्तानि ध्वंसयन्तीति तद्ध्वंसिन्यः स्त्रियाः पुंवदित्यादिना पुंवद्भावः। तासां प्रभाणाम् आदरेण धारणात् भरणात् हेतोः निजैः अयशोभरैः नीलति नीलं भवति, नीलवर्ण इति धातो भौवादिकाल्लट्। शरणागतानादरात् हेतोर्निजैरयशोभरैः नीलति शरणागतापालनात्कीर्त्तिलोपादिव खमेकं नीलमदृश्यत इत्यर्थः ॥३१॥

सरसिजेति। उद्यत्पत्युः सहायभूतः अर्य्यमा येषां तानि सरसिजवनानि न हसन्तु ? इति काकुः हसन्त्वेव इत्यर्थः। श्लथरुचिः शीर्णद्युतिः मुद्दच्चन्द्रः यस्य तत् कैरवं कर्तृ तन्द्रां प्रमीलां न उपैतु ? अत्रापि काकुः, उपैत्वेव इत्यर्थः। किंवा अथो अनन्तरं पाथोरुहैः पद्मैः कर्तृभिः हिमगिरिदृषच्छायादया सदृशया श्रिया वैशद्यसम्पदा प्रतीतमुदः प्रकटहर्षस्य राज्ञो तथा हृष्टस्य इत्यर्थः कुमुदविपिनस्य सम्बन्धिन्या निज-

कुमुदविपिनस्थायी पाथोरुहैर्निजनिद्रया ॥३२॥

धयतु नलिने माध्वीकं वा न वाऽभिनवागतः

कुमुदमकरन्दौघैः कुक्षिम्भरिभ्रमरोत्करः।

इह तु लिहते रात्रीतर्षं रथाङ्गविहङ्गमाः

मधु निजवधूवक्त्राम्भोजेऽधुनाऽधरनामकम् ॥३३॥

जगति मिथुने चक्रावेव स्मरागमपारगौ

नवमिव मिथः सम्भुञ्जाते वियुज्य वियुज्य यौ।

---

निद्रया सम्प्रति कुमुदवनगामिन्याः स्वनिद्राया निमित्तेन स्मितं विकसितं, भावे निष्ठा। तदा तया हृष्टत्वमिदानीमस्मिन्निद्रा हृष्टानि पद्मानि हसन्ती वेत्युत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या ॥ ३२ ॥

धयत्विति। कुमुदमकरन्दानाम् ओघैः कुक्षिम्भरिः कुक्षिपूरकः, फलेग्रहिरात्मम्भरिश्चेति चकारात् कुक्षिम्भरिः सिद्धः। भ्रमरोत्करः भृङ्गसङ्घः सः एव अभिनवागतः अतिथिः नलिने माध्वीकं मकरन्दं धयतु वा रात्रावप्युदरपूरं पीतत्वादिति भावः। रथाङ्गविहङ्गमाः चक्रवाकास्तु रात्रिं तृषित्वा रात्रितर्षं तर्षयैः रात्रिं नीत्वा इत्यर्थः। अस्यतितृषोः क्रियान्तरेकात्तृषिति णमुल्प्रत्ययः। इह अधुना निजवधूवक्त्राम्भोजे अधरनामकं मधु मकरन्दं लिहते आस्वादयन्ति ॥३३॥

जगतीति। जगति लोके मिथुने मिथुनेषु, निर्धारणे सप्तमी। जातावेकवचनम्। चक्रवाकौ एव स्मरागमपारगौ कामशास्त्रतत्त्वज्ञौ कामोपभोगे चतुरौ इत्यर्थः। अत्यन्ताङ्गे डप्रत्ययः। कुतः? यौ चक्रौ मिथो वियुज्य वियुज्य पुनः पुनः विश्लिष्य विश्लिष्य नवम् इव इदं प्रथमम् इव सम्भुञ्जाते अन्यथा अरोचकभयात् इति भावः। अत्र दृष्टान्त-

सततमम्रतादेवाहाराद् यदापदरोचकं
तदम्रतभुजां भर्त्ता शम्भुर्विषं बुभुजे विभुः ॥३४॥
विशति युवतित्यागी रात्रीमुचं मिहिकारुचं
दिनमणिमणिं तापे चित्तान्निजाच्च यियासति ।
विरहतरलज्जिह्वा बह्वाह्वयन्त्यतिविह्वलाम्
इह सहचरीं नामग्राहं रथाङ्गविहङ्गमाः ॥३५॥
स्वमुकुलमयैर्नेत्रैरन्धम्भविष्णुतया जनः

---

माह—यत् यस्मात् विभुः प्रतीकारसमर्थः अम्रतभुजाम् अम्रतहारिणां भर्त्ता अग्रेसरः शम्भुः सततम् अम्रतस्य आहारात् अशनात् न रोचते इति अरोचकं कर्म तदाख्यं रोगम् आपत् तत् तस्मात् एव विषं बुभुजे, विजातीयभोगेन अरुचिनिवृत्तिः इति भावः ॥ ३४ ॥

विशतीति । इह समये रथाङ्गविहङ्गमाः पुंश्चक्रवाकाः युवतित्यागी कान्तावियोगी रात्रीमुचं रात्रीत्यागिनं, मुचेः क्विप्, कृदिकारादीकारः । मिहिकारुचं चन्द्रं विशति सति तापे सन्तापे च निजात् चित्तात् अपादानात् दिनमणिमणिं यियासति यातुम् इच्छति सति, यातेः सनन्ताल्लट् शत्रादेशः । विरहेण तरलन्त्यः तरलायमानाः, आचारार्थे क्विवन्ताल्लट्, शत्रादेशः । ताः जिह्वाः येषां ते तथा सन्तः अतिविह्वलाम् अतिविवशां सहचरीं प्रियां नामग्राहं नाम गृहीत्वा सञ्ज्ञानिर्देशे गृह्णातेि णमुल्प्रत्ययः । बहु वारंवारम् । आह्वयन्ति ॥ ३५ ॥

स्वेति । जनः लोकः स्वमुकुलमयैः निजमुकुलरूपैः निमीलितैः इत्यर्थः, नेत्रैः अन्धम्भविष्णुतया अन्धीभूततया, कर्त्तरि भुवः खिष्णुच् इति अभूततद्भावे कर्त्तरि खिष्णुच्प्रत्ययः,

किमु कुमुदिनीं दुर्व्याचष्टे रवेरनवेक्षिकाम्।
लिखितपठिता राज्ञो दारा: कविप्रतिभासु ये
शृणुत शृणुतासूर्य्यम्पश्यां न सा किल भाविनी ? ॥३६॥

---

खित्यनव्ययस्येति ह्रस्व:, अरुर्द्विषदित्यादिना मुमागम:। रवे: अनवेक्षिकाम् अनवेक्षणीं, ण्वुल्। प्रत्ययस्थात् कात् पूर्वस्येकार:। कुमुदिनीं किमु किम् ? इति दुर्व्याचष्टे दुर्वदति "एका भार्य्या प्रकृतिकठिना चञ्चला च द्वितीया पुत्रोऽनङ्गस्त्रिभुवनजयी मन्मथ: पञ्चबाण:। शेष: शय्याव-सतिरुदधिर्वाहनं पन्नगारि: स्मृत्वा स्मृत्वा स्वगृहचरितं काष्ठ-भूतो मुरारि:॥" अपवदतीत्यर्थ:। ननु सूर्य्यावेक्षणस्य विहितत्वादिति भाव:। कविप्रतिभासु विद्याव्यवहारेषु ये राज्ञ: चन्द्रस्य नृपस्य दारा:, राजा प्रभौ नृपे चन्द्र इति विश्व:। लिखितास्च ते पठितास्च इति, विशेषणसमास:। राजदारा प्रसिद्धा इत्यर्थ:। सा राजदारा कुमुदिनी सूर्य्यं न पश्यतीति असूर्य्यम्पश्या न भाविनी भविष्यति किल भवि-ष्यति, गम्यादय इति साधु:। शृणुत शृणुत आकर्णयत आकर्णयत, आक्रोशे सम्भ्रमे वा द्विरुक्ति:। असूर्य्यम्पश्या राजदारायति राजनीत्यनुसारेण दृष्टप्रागल्भ्यात् कुमुदिन्या अपि राजदारत्वात् सूर्य्यानवेक्षणं युक्तमिति भाव:। पर-मार्थतस्तु कैमुत्यन्यायेन पुरुषान्तरदर्शननिषेधपरमेतत् न सूर्य्यदर्शननिषेधपरम् इति द्रष्टव्यम्, अतएव काशिकागुप्ति-परश्चैतदित्यादित्यसूर्य्यललाटयोर्द्दृशितपोरिति खश्प्रत्यय:। पाघ्रेत्यादिना दृशे: पश्यादेश: असूर्य्यंभ्य: समर्थ: समास:। सदृशीनां सम्बन्धत्वात् सूर्य्यनिषेधे त्वनभिधानप्रत्ययोऽभि-

चुलुकिततमःसिन्धोर्भृङ्गैः करादिव शुभ्यते
नभसि विसिनीबन्धोरम्भ्रश्च्युतैरुदविन्दुभिः ।
शतदलमधुस्रोतःकच्छद्वयीपरिरम्भणात्
अनुपदमदःपङ्काशङ्काममी मम तन्वते ॥३७॥
घुसृणसुमनःश्रेणिश्रीणामनादरिभिः सरः-
परिसरचरैर्भासां पत्युः कुमारतरैः करैः ।
अजनि जलजामोदानन्दोत्पतिष्णुमधुव्रता-

---

धानप्रत्ययोऽभिधानलुप्तत्वस्यनुसामर्थ्ये विवसत्वात्समासोऽस्मा-देव वचनादिति सकारः ॥ ३६ ॥

चुलिकितेति । नभसि भृङ्गैः चुलुकितः चुलुकीकृतः तमःसिन्धुः येन तथोक्तस्य विसिनीबन्धोः सूर्य्यस्य कराः अंशवः हस्ताश्च रम्भ्रच्युतैः अवयवान्तरालगलितैः उदविन्दुभिः इव शुभ्यते इत्युत्प्रेक्षा । शुभेर्भावे लट् । धर्मित्वात् गुणभावः । किञ्च अमी भृङ्गाः शतदलमधुस्रोतसः कुशेशयमकरन्दप्रवाहस्य कच्छद्वयीपरिरम्भणात् अभिव्याप्तेः अनुपदम् अनुक्षणम् अमुष्याः पङ्काशङ्कां मम तन्वते ॥ ३७ ॥

घुसृणेति । घुसृणसुमनःश्रेणिश्रीणां कुङ्कुमकुसुममालाशोभानां, वामोति नदीत्वपक्षानुडागमः । कुङ्कुमं घुसृणं वर्णमिति हलायुधः । अनादरिभिः अनादरकारिभिः तत्सदृशैः इत्यर्थः, सरःपरिसरचरैः सरःप्रान्तवर्त्तिभिः कुमारतरैः बालकैः भासां पत्युः अर्कस्य करैः कर्त्तृभिः । जलजामोदेन कमलपरिमलेन यः आनन्दः तस्मात् उत्पतिष्णवः उत्पातुकाः अलङ्कृञोत्यादिना इष्णुच् । तेषां मधुव्रतानाम् आवल्या शवलनात् चित्रवर्णात् हेतोः गुञ्जापुञ्जस्य, गुञ्जा तु कृष्णलेत्यमरः । श्रियम् इव श्रियं शोभाम् इति निदर्शनाभेदः ।

वलितयवलनादगुञ्जापुञ्जश्रियं ग्रहयालुभिः ॥३८॥
रचयति रुचिः श्रोणीमेतां कुमारितरा रवे-
र्यदलिपटली नीलीकर्त्तुं व्यवस्यति पातुका ।
अजनि सरसी कल्माषी तद्ध्रुवं धवलस्फुट-
त्कमलकलिकाषण्डैः पाण्डूकृतोदरमण्डला ॥३९॥

---

नलोकेत्यादिना षष्ठीप्रतिषेधः । ग्रहयालुभिः ग्राहकैः अजनि, भावे लुङ । स्पृहिगृहीत्यादिना आलुच ग्रहणं, इत्यदन्ता-चौरादिकाणिच । गुञ्जावीजानां नीलमुखत्वात् अलि-कुलयोगेनांशुकिशोरकास्तद्वत् बभ्रुः इत्यर्थः ॥ ३८ ॥

रचयतीति । यत् यस्मात् अतिकुमारी कुमारितरा बालतरा, घरूपेत्यादिना ङीप्रस्वः । रवेः रुचिः एतां सरसीं श्रोणीं रचयति श्रोणवर्णां करोति, श्रोणात् प्राचामिति विकल्पादिकारः । पातुका पतयालुः, लषपतेत्यादिना उकञ् । अलीनां पटली मण्डली नीलीकर्त्तुं, अभूततद्भावे च्विः । व्यवस्यति व्याप्रियते, तस्मात् सरसी धवलैः स्फुटद्भिः विक-सद्भिश्च कमलकलिकानां षण्डैः कदम्बैः, कदम्बे षण्डमस्त्रि-यामित्यमरः । पाण्डूकृतं धवलीकृतम्, अभूततद्भावे च्विः । तदुदरमण्डलं मध्यभागः यस्याः सा सती कल्माषी चित्रवर्णा, गौरी गौरादित्वादीङ् ङीषिति भोजराजः । अजनि जाता, दीपजनेत्यादिना कर्त्तरि लुङ् चिण् । ध्रुवम् इत्यु-त्प्रेक्षायाम् । अत्र सरस्याः स्वगुणत्यागेन काषाद्यनुगुण-स्वीकारात्तद्गुणालङ्कारस्तावत् । तद्गुणः स्वगुणत्यागादन्यो-त्कृष्टगुणग्रहः इति लक्षणात् । तत्रैकगुणसंक्रान्तिपरिच-यात् षण्डपुण्डरीकपाण्डु संक्रमद्वारा कल्माषस्वीकारोत्प्रेक्ष-णात्तद्रूपणोत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः ॥ ३९ ॥

कमलकुशलाधाने भानरहो पुरुषव्रतं
यदुपकुरुते नेत्राणि श्रीगृहत्वविवक्षुभिः।
कविभिरुपमादानादम्भोजतां गमितान्यसौ
अपि यदतथाभावाम्मुञ्चत्युलूकविलोचने ॥ ४० ॥
यदतिमहती भक्तिर्भानौ तदेनमुदित्वरं
त्वरितमुपतिष्ठस्वाध्वन्य! त्वमध्वरपद्धतेः।

कमलेति। कमलानां कुशलाधाने क्षेमविधाने भानोः पुरुषाभिमानिनः व्रतं पुरुषव्रतं दृढनियमः इत्यर्थः। अहो चित्रम् अथवा अहो पुरुषाभिमानवान् पुरुष इति मयूरव्यंसकादिषु कैयटः। तस्य व्रतं दृढमित्यर्थः। कुतः? यत् यस्मात् असौ श्रीगृहत्वं नेत्राणां शोभाश्रयत्वं विवक्षुभिः वक्तुम् इच्छुभिः योगविभागात् द्वितीयासमासः। कविभिः उपमानात् सादृश्यमात्रात् अम्भोजतां गमितानि अम्भोजत्वेन रूपितानि नेत्राणि अपि उपकुरुते विकासयति इत्यर्थः। यत् अपि यत् यस्माच्च अतथाभावात् औपमानिकाम्भोजस्यापि अभावात् इत्यर्थः। नञर्थस्य नशब्दस्य सुप्सुपेति समासः। उलूकस्य पेचकस्येति विलोचने मुञ्चति। अन्नदो जलदश्चैव विप्रो व्याधिचिकित्सकः। त्रयः स्वर्गाय गच्छन्ति विना यत्नेन पार्थिव! भेत्तत्वेन मीलितात्वादिति भावः। अन्वयव्यतिरेकाभ्याम् अम्भोजसदृशस्यैव सहस्रकरस्य देवस्य अम्भोजक्षेमङ्करत्वं किमु वाच्यम् इत्यर्थः। तथा चाम्भोजवल्लोकलोचनाम्भोजान्यपि विकासयामास इत्यर्थः ॥ ४० ॥

यदिति। हे महाराज! यत् यस्मात् भानौ अतिमहती भक्तिः अनुरागविशेषः, यस्य सः भक्तिः महाभक्तिः भक्तिशब्दस्य शेषे षष्ठी। तस्मात् अध्वरस्य यज्ञस्य पद्धतेः पथः हे

इह हि समये मन्देहेषु व्रजन्त्युदवज्रताम्
अभिरविमुपस्थानोत्क्षिप्ता जलाञ्जलयः किल ॥४१॥
उदयशिखरिप्रस्थावस्थायिनी खनिरक्षया
शिशुतरमहामाणिक्यानामहर्मणिमण्डली।
रजनिहृषदं ध्वान्तश्यामां विधूय पिधायिकां

---

अध्वन्य! पान्थ! अध्वन्यलङ्गामी अध्वनो यन्भवतीति यत्प्रत्ययः। यञ्च भावकर्मणोरिति प्रकृतिभावः। त्वम् उदित्वरम् उद्यन्तं, इण्नशोत्यादिना क्वरप्। एनं भानुं त्वरितम् उपतिष्ठस्व उपास्स्व, पूजेत्यादिना देवपूजायामात्मनेपदम्। कुतः? हि यस्मात् कारणात् इह समये उदयकाले रविम् अभि अभिरविं लक्षयित्वा उद्दिश्य इत्यर्थः। अभिरभागे इति लक्षणार्थे कर्मप्रवचनीयत्वात्तद्योगे द्वितीया। उपस्थाने उपासनायां उत्क्षिप्ताः ऊर्ध्वं क्षिप्ताः आपः ऊर्द्धं विक्षिपन्तीति श्रुतेः। जलाञ्जलयः मन्देहेषु मन्देहाख्येषु राक्षसेषु उदवज्रतां वज्रायुधत्वं, मन्थोदनेत्यादिनोदादेशः। व्रजन्ति किल, गमेत्यागमे गणव्याख्याने गमरुचिव्याकरणसम्भावनाहेत्वलङ्कारेषु केवलेति व्याख्या वा। अत्र श्रुतिः, तदुह वा एते ब्रह्मवादिनः पूर्वाभिमुखाः सन्ध्यायां गायत्र्याभिमन्त्रिता आप ऊर्ध्वं विक्षिपन्ति तानिता आपो वज्रीभूत्वा तानि रक्षांसि मन्देहारुणे द्वीपे प्रक्षिपन्तीति ॥ ४१ ॥

उदयेति। अहर्मणिमण्डली उदयशिखरिणः उदयाद्रेः प्रस्थावस्थायिनी सानुनिष्ठा अक्षया, शिशुतराणि बालतराणि महांसि एव माणिक्यानि पद्मरागाः तेषां खनिः आकरम्। ध्वान्तेन श्यामां पिधायिकाम् आच्छादिकां रजनिम् एव

न खलु कतमेनेयं जाने जनेन विमुद्रिता ॥४२॥
सुरपरिवृढः कर्णात् प्रत्यग्रहीत् किल कुण्डल-
द्वयमथ खलु प्राच्यै प्रादान्मुदा स हि तत्पतिः ।
विधुरुदयभागेकं तत्र व्यलोकि विलोक्यते
नवतरकरस्वर्णस्रावि द्वितीयमहर्मणिः ॥ ४३ ॥
दहनमविग्रहीतिर्याऽस्तंगते गतवासर-
प्रथमसमयप्राप्ते पत्यौ विवस्वति रागिणी ।

---

दृषदं शिलां विधूय कतमेन जनेन विमुद्रिता न जाने खलु । अत्र सूर्य्यमण्डलादिषु खनित्राद्यारोपात् रूपकालङ्कारः ॥ ४२ ॥

सुरेति । सुराणां परिवृढः इन्द्रः, प्रभौ परिवृढ इति निपातनात् साधुः । कर्णात् राधेयात् कुण्डलद्वयं ताटङ्कयुगं प्रत्यग्रहीत् किल "ततो निकृत्य गात्राणि शस्त्रेण निशितेन सः । प्रायच्छद्देवराजाय दिव्यं वर्म सकुण्डलम् ॥" इति भारतवचनात् । ततोऽर्थं वर्त्तते—अथ प्रतिग्रहानन्तरं प्राच्यै दिशि मुदा प्रादात्, हि यस्मात्सः इन्द्रः तस्याः प्राच्याः पतिः, ततो दानं युक्तम् इत्यर्थः । तत्र तयोः मध्ये उदयं भजतीति उदयभाक्, उदयन्भजो णिवः । विधुः एकं कुण्डलं व्यलोकि विलोक्यते स्म, नवतरान् प्रत्यग्रतरान् करान् एव ... स्वर्णान् स्रावयति विदारयतीति तत्स्रावि अहर्मणिः दिनमणिः, रोरितिरेफादेशः । द्वितीयं कुण्डलम् ॥ ४३ ॥

दहनमिति । रागिणी रक्तवर्णा अनुरागिणी च या दीप्तिः गतवासरप्रथमसमयं दिनावसानं, अत्यन्तसंयोगे द्वितीया । पत्यौ स्वामिनि भर्त्तरि च विवस्वति सूर्य्ये अस्तम् अस्ताद्रिम् अदर्शनं गते सति, अस्तस्तु चरमः क्ष्माभृदस्तमद-

अधरभुवनात् सोद्धृत्यैषा हठात्तरणेः कृताम्
अमरपतिपुरप्राप्तिर्धत्ते सतीव्रतमूर्त्तिताम् ॥४४॥
बुधजनकथा तथ्यैवेयं तनौ तनुजन्मनः
पितृशितिहरित्पर्णाद्याहारजः किल कालिमा।
शमनयमुनाक्रोडैः कालैरितस्तमसां पिबात्

---

शंनमिति चामरः। दहनम् अग्निम् अविशत्, अग्निं वादित्यः सायं प्रविशतीति श्रुतेरिति भावः। अतः अनन्तरं हठात् बलात् अधरभुवनात् अधोलोकात् पातालात् नरकाच्च उद्धृत्य तरणेः पत्युः अर्कस्य कृता अमरपतिपुरप्राप्तिः इन्द्रनगरप्राप्तिः स्वर्गप्राप्तिश्च यथा सा तीव्रतया सह वर्त्तते इति सतीव्रता पतिव्रताधर्मश्च मूर्त्तिः यस्याः तस्याः भावः तत्ता तां सतीव्रतमूर्त्तितां धत्ते। "सूलग्राहितया सर्वं बलादुद्धरते यथा। तदुद्धृत्य च सा नारी तेनैव सह मोदते॥" इति स्मरणादिति भावः। अत्र प्रस्तुतदीप्तिविशेषणसाम्यादप्रस्तुतप्रतीतेः समासोक्तिरलङ्कारः॥ ४४॥

बुधेति। तनोः जन्म यस्य तनुजन्मनः अपत्यस्य, अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपद इति वामनः। तनौ शरीरे कालिमा श्यामता पितुः जनकस्य शितिहरितौ पीतहरितौ पर्णौ यस्य आहारस्य सः आदिः यस्य तस्मात् आहारात् जातः तज्ज इति इयं बुधजनकथा विद्वज्जनगोष्ठी तथ्या एव सत्या एव। कुतः? यत् यस्मात् अमलच्छायात् अतिस्वच्छकान्तेः तमसां, कृद्योगात् कर्मणि षष्ठी। पिबतीति पिबात् पातुः, प्राघ्रेत्यादिना शप्रत्ययः, पिबादेशश्च। इतः अस्मात् भास्वतः सूर्य्यस्य कायात् शमनयमुनाक्रोडैः यमका-

अपि यदमलच्छायात् कायादभूयत भास्वतः ॥४५॥
अभजत चिराभ्यासं देवः प्रतिक्षणदात्ययं
दिनमयमयं कालं भूयः प्रसूय तथा रविः ।
न खलु शकिता शीलं कालप्रसूतिरसौ पुरा
यमयमुनयोर्जन्माधानेऽप्यनेन यथोज्झितुम् ॥४६॥
रुचिरचरणः सूतोरुश्रीसनाथरथः शनिं

---

लक्ष्मीशनैश्चरैः कृष्णवर्णैः अभूयत भूतं, भावे लङ् । अत्र शमनादिकालिमस्तत्पिहितिमि ‌भारपरिणतिपूर्वकत्वोत्प्रेक्षा ॥ ॥ ४५ ॥

अभजतेति । अयं देवः रविः प्रतिक्षणदात्ययं प्रतिरात्रम् अव्ययीभावसमासस्तृतीयासप्तम्योर्बहुलमिति विकल्पात्सप्तम्यामभावः । दिनमयं दिनरूपं कालं समयं कृष्णरूपञ्च, कालो मृत्यौ महाकाले समये यमकृष्णयोरिति विश्वः । भूयः पुनः पुनः प्रसूय जनयित्वा तथा चिराभ्यासम् अभजत तथा आदौ कालस्य अनेहसः कृष्णस्य च प्रसूतिः जननं पुरा पूर्वकाले यमयमुनयोः जन्माधाने जननेऽपि अनेन रविणा उज्झितुं त्यक्तुं न शकिता न शक्ता, कर्मणि क्तः । कर्मणि निष्ठायामिडागमः । तत्र कालशब्दे वाच्यप्रती‌ानयोरभेदाध्यवसायेन भगवतो भानोः प्रत्यहं कालप्रसूत्याभ्यासादपत्येष्वपि शमनयमुनादिषु कालप्रसवित्वमुत्प्रेक्ष्यते । तच्च कालयोः कृष्णानेहसोरभेदाध्यवसाय इति तयोरेकत्वेनाच सङ्करः ॥ ४६ ॥

रुचिरेति । रथपदेषु रथाङ्गनामपक्षिषु यः कृपासिन्धुः चक्रवाकानां त्राता इत्यर्थः, तथा दृशां लोकचक्षुषां बन्धुः

शमनमपि स त्रातुं लोकानसूत सुताविति।
रथपदकृपासिन्धुर्बन्धुर्दृशामपि दुर्जनैः
यदुपहसितो भास्वान् नास्मात् हसिष्यति कः खलः ? ॥४७॥
शिशिरजरुजां घर्मं शर्मोदयाय तनूभृताम्
अथ खरकराश्यानाख्यानां प्रयच्छति यः पयः।
जलभयजुषां तापं तापस्पृशां हिममित्ययं
परहितमिलत्कृत्यावृत्तिः स भानुरुदञ्चति ॥ ४८ ॥
इह न कतरश्चित्रं यत्ते तमिस्रततोर्दिशाम्

---

प्रकाशकः ईदृशः भास्वान् अपि रुचिरचरणः सन् वस्तुतस्तु विपरीतवृत्तिः सन्तापकत्वादिति भावः। सदयं सूतया प्रसूनया ऊर्व्या श्रिया सूतस्य सारथेः ऊरुश्रिया शोभया च सनाथः सहितः रथः यस्य सः, सक्थि क्लीबे पुमानूरु सूतः पत्तं च सारथिरिति चामरः। सः देवः शनिं शनैश्चरं क्रूरग्रहमिति भावः, शमनं च सुतौ पुत्रौ लोकान् त्रातुं असूत इति दुर्जनैः यस्मात् उपहसितः अस्मात् खलः को न हसिष्यति ? कैमुत्येनार्थान्तरापादानादर्थापत्तिरलङ्कारः ॥ ४७ ॥

शिशिरेति। शिशिरजा हिमजा रुक् पीड़ा येषां तेषां तनूभृतां शरीरिणां शर्मोदयाय सुखाविर्भावाय, एवमुत्तरवाक्येऽप्यनुषञ्जनीयं, घर्मं निदाघं प्रयच्छति आतपेन जलं शोषयति इत्यर्थः। तापस्पृशां सन्तापभाजां हिमं प्रयच्छतीति इत्यं परहितेन मिलन्ती युज्यमाना कृत्यावृत्तिः व्यापाराभ्यासः यस्य सः भगवान् भानुः उदञ्चति उदेति क्रियासमुच्चयोऽलङ्कारः ॥ ४८ ॥

इहेति। चतसृणाम् दिशाम् अपि, न 'तिसृचतसृ इति

अपि चतरुणामुत्सङ्गेषु श्रिता धयतां क्षणात्।
तरुशरणतामेत्य छायामयं निवसत्तमः
शमयितुमभूदनैश्वर्यं यदर्य्यमरोचिषाम्॥ ४८॥
जगति तिमिरं मूर्च्छामब्जेऽपि चिकित्सतः
पितुरिव निजादस्मादस्यावधीत्य भिषज्यतः।

---

निषेधाभावामि दीर्घो न। उत्सङ्गेषु उपरिभागेषु अनातपप्रदेशेष्वित्यर्थः। श्रिताः स्थिताः तमिस्रस्य ततीः तिमिरसम्बाधानि क्षणात् धयतां पिबतां, धेटो लटः शत्रादेशः। अर्य्यमरोचिषां घर्मांशुतेजसां तरवः एव शरणानि त्रातारः यस्य तद्भावं तत्ताम् एत्य प्राप्य निवसत् छायामयम् अनातपरूपं तमः शमयितुं संहर्त्तुम् अनीश्वरस्य भावम् अनैश्वर्य्यम् असामर्थ्यं, नञः शुचिवीत्यादिनोभयपदवृद्धिः। अभूत् इति यत् इह अस्मिन् एवं कतरः चित्रम् आश्चर्य्यं न धत्ते तदस्मिन् तमोविघातिनो देवस्यात्मविषये सामर्थ्यविघातः सूर्य्यमभितस्तस्य तरुशरणत्वं तरूणां शरणदातृत्वमिति विरोधात्को वा न विस्मयः इत्यर्थः। विरोधाभासोऽलङ्कारः॥ ४८॥

जगतीति। दस्रौ अश्विनौ जगति लोके तिमिरं तमो नेत्ररोगं च, तिमिरं ध्वान्तं नेत्रामयेऽपि चेति विश्वः। अब्जे पद्मषण्डे मूर्च्छां निमिलनं रोगविशेषं च चिकित्सतः प्रतिकुर्वाणात्, कितः सनन्तात्लटः शत्रादेशः, गुप्तिच्किद्भ्यः सन् निन्दाक्षमा प्रतीकारे सन्निष्यते। निजात् पितुः अस्मात् सूर्य्यात् अधीत्य चिकित्सामस्य भिषज्यते इव चिकित्सतः किम्? इत्युत्प्रेक्षा। कण्ड्वादौ भिषजेति पाठात् यप्रत्या-

अपिच शमनस्वासौ तातस्तत: किमनौचिती
यदयमुदयः कह्लाराणामुदेत्यपमृत्यवे ॥ ५० ॥
उडुपरिवृढः पत्यामुक्तां सतीं यदपीडयत्
यदपि विसिनीं भानोर्जायां जहास कुमुद्वती ।
तदुभयमत: शङ्के सङ्कोचितं निजशङ्कया
प्रसरति नवार्के कर्कन्धूकणारुणरोचिषि ॥५१॥
श्रुतिमयतनोर्भानोर्जातेऽवनेरधराध्वना

---

क्षटि तङ् उल्लाघयति भैषज्ये चिकित्सति भिषज्यतीति भट्टमल्लः। अपिच असौ सूर्य्यः शमनस्य यमस्य तात: जनक: तत: इत्युत्प्रेक्षा। अयं भानुः उदयः सन् कह्लाराणां, सौगन्धिकन्तु कह्लारमित्यमरः। अपमृत्यवे अकालमरणाय उदेति सा अनौचिती किम्? अनौचित्यम् किम्? द्वयोः पितृवत्सर्वोपकारित्वमुचितम्। यमपितुस्तु रवेः रक्तकमलहारित्वं न अनुचितं इत्यर्थः॥ ५० ॥

उडुविति। उडुपरिवृढः चन्द्रः पत्या भर्त्रा भानुना मुक्तां सतीं साध्वीं विसिनीं यत् अपीड़यत् कुमुद्वती कुमुदिनी, कुमुदनड़्वेतसेभ्यः ड्मतुप्। भानोः जायां विसिनीम् अपि जहास। अत: अस्मात् कारणात् कर्कन्ध्वाः, कर्कन्धूः पक्वबदरीफलमित्यर्थः। कुण्प्रत्ययः। तत्कणावत् अरुणरोचिषि नवार्के बालार्के प्रसरति सति तयोः कुमुद्वतीचन्द्रयोः उभयं द्वन्द्वं निजशङ्कया स्वाभिभवहेतुना सङ्कोचितं निस्तेजितं शङ्के इत्युत्प्रेक्षा। सर्वोहि सन्दुष्टव्यवहारेणात्मानं कलुषयतीति भावः॥ ५१ ॥

श्रुतीति। अवनेः अधराध्वना अधोमार्गेण च एतच्च

विहरणकृतः शाखाः साक्षाच्छतानि दश त्विषाम् ।
निशि निशि सहस्राभ्यां दृग्भिः शृणोति सहस्वराः
पृथगहिपतिः पश्यत्यस्य क्रमेण च भास्वराः ॥ ५२ ॥

---

वर्णस्थानमात्रोपलक्षणम् । अधरो ध्वर्द्धहीन इति यादवः विहरणकृतः विहारकृतः सञ्चरतः आविर्भवतश्च श्रुतिमयतरोः वेदात्मकवृक्षस्य अस्य भानोः त्विषां रश्मीनां दशशतानि सहस्राणि सहस्रमेव सहस्ररश्मिरूपेण परिणत इत्यर्थः । स्वरैः उदात्तादिभिः अनुवर्त्तन्ते इति सहस्वरा सस्वराः, वोपसर्जनस्येति सहशब्दस्य विकल्पात्सहभावः पृथक् साङ्कर्य्येण भास्वराः भासनशीलाः, भ्राजभासेत्यादिना रः । शाखाः वेदभागान् शीर्षांश्च, शाखा वेदप्रभेदेषु बाह्वोः पार्श्वद्रुमाङ्गयोरिति यादवः । अहिपतिः शेषः निशि निशि प्रतिनिशं, वीप्सायां द्विर्भावः । एतल्लोकापेक्षया निशीत्युक्तम् । तत्र तदा सूर्य्यसञ्चारेण निशाभावात् सहस्राभ्यां सहस्रसङ्ख्याभिः दृग्भिः अक्रमेण यौगपद्येन साक्षात् अपरोक्षं शृणोति पश्यति शेषस्य चक्षुःश्रवस्त्वात् शाखानां बाह्यात्मकत्वं न श्रावणत्वोपदेशात् रश्मिपरिणामेन चाक्षुषत्वाच्चेति भावः । जाने इत्युत्प्रेक्षा, रूपकसङ्कीर्णा चेयमुत्प्रेक्षेति व्यक्तमेव एकेन दृक्सहस्रेण शृणोति अपरेण दृक्सहस्रेण पश्यतीति विश्वेश्वरभट्टारकव्याख्यानं चिन्त्यम् । दृशां प्रत्येकमुभयशक्तियुक्तानां शक्तिप्रविभागयोगात् तस्मात् ग्राहकस्योभयशक्तिमत्त्वात् ग्राह्यस्य च तेजःशब्दोभयात्मकत्वात्सर्वाभिरेव दृग्भिः सर्वाश्च शाखा युगपत् पश्यति शृणोति चेति रमणीयम् ॥ ५२ ॥

बहु न खरता येषामग्रे खलु प्रतिभासते
कमलसुहृदस्तेऽमी भानोः प्रवालरुचः कराः ।
उचितमुचितं जालेष्वन्तः प्रवेशिभिरायतैः
कियदवयवैरेषामालिङ्गिताङ्गुलिवल्गुता ॥ ५२ ॥
नय नयनयोर्द्राक् पेयत्वं प्रविष्टवतीरमूः
भवनवलभीजालान्नाला इवार्ककराङ्गुलीः ।

---

बह्वीति । येषां कराणाम् अमूनां हस्तानाम् अग्रे प्रत्यग्रावस्थायां बहु इति न खरता अतीक्ष्णता प्रतिभासते एतस्य अग्रे अग्रभागे बहुनखरता बहुनखरत्वं प्रतिभासते, नखोऽस्त्री नखरोऽस्त्रियामित्यमरः । कमलानां सुहृदः बन्धवः अन्यत्र तत्सदृशाः प्रवालरुचः उभयत्र विद्रुमभासः अमी भानोः कराः अंशवः हस्ताश्च खलु जालेषु गवाक्षविवरेषु कियत् स्तोकं अन्तःप्रवेशिभिः प्रविष्टैः आयतैः दीर्घैः अवयवैः एकदेशैः एषां कराणां अङ्गुलीनां करशाखानां, अङ्गुल्यः करशाखा इत्यमरः । वल्गुता चारुता आलिङ्गिता प्राप्ता इति विशेषणसङ्कीर्णो निदर्शनाभेदः । अङ्गुलीशब्दो देशीत्याहुः । उचितम् उचितं कराणाम् अङ्गुलित्वम् अत्यन्तोचितम् इत्यर्थः । आभीक्ष्ण्ये द्विरुक्तिः ॥ ५२ ॥

नयेति । भवनवलभीनां गृहविशेषाणां जालात् प्रविष्टवतीः अन्तः प्रविष्टाः नाला इव स्थिताः कमलकाण्डायिताः इत्यर्थः । अमूः पुरोवर्त्तिनीः अर्कस्य कराः इव कराः हस्ताः श्लिष्टरूपकं, बलिहस्तांशवः कराः इत्यमरः । तेषाम् अङ्गुलीः करशाखाः द्राक् नयनयोः पेयत्वं नय पश्य इत्यर्थः । अथ आसां दर्शनीयतामुत्प्रेक्षया दर्शयति—याः कराङ्गुलयः भ्रमद्भिः

भ्रमदणुगणक्रान्ता भान्ति भ्रमन्त्य इवाशु याः
पुनरपि धृताः कुन्दे किं वा न वर्द्धकिना दिवः ॥५४॥
दिनमिव दिवाकीर्त्ति स्तीक्ष्णात् क्षुरात् सवितुः करात्
तिमिरकवरीलूनां कृत्वा निशां निरदीधरत्।
स्फुरति परितः केशस्तोमैस्ततः पतयालुभिः
भुवमधवलं तत्तच्छायच्छलादवनीतलम् ॥ ५५ ॥

---

अणुगणैः त्रसरेणुजालैः क्रान्ताः वेष्टिताः सत्यः आशु भ्रमन्त्यः इव भान्तीत्युत्प्रेक्षा। भ्रमणे कारणमुत्प्रेक्षते पुनरपि दिवः स्वर्गस्य वर्द्धकिना विश्वकर्मणा, तक्षा तु वर्द्धकिस्त्वष्टेत्यमरः। कुन्दे चक्रभ्रमे, भ्रमं कुन्दश्च यन्त्रकमिति यादवः। धृता वा न किं? पुरा किल स्वर्गे सन्ध्यादेव्या सूर्य्यभार्य्यया दुष्प्रापं सवितारमालोक्य विश्वकर्मा यन्त्रोल्लेखनेन सुप्रापञ्चकारेति पौराणिकी कथा चानुसन्धेया ॥ ५४ ॥

दिनमिति। दिनं कर्त्तृ रात्रौ निषेधात् दिवा कीर्त्त्यते इति दिवाकीर्त्ति र्नापितः, इव क्षुरी मुण्डी दिवाकीर्त्तिर्नापितास्तापसा नरा इत्यमरः। सवितुः सूर्य्यस्य करात् किरणात् इव क्षुरात् वापनशस्त्रात्, क्षुरोऽस्य वापनं शस्त्रमिति यादवः। निशां रात्रिं तिमिरम् एव कवरी केशपाशः तल्लूनां मुक्तकेशां, जानपदेत्यादिना कवरात् ङीप्, पूजाकारा [illegible]दिभ्यः परवचनमिति लूनेति निष्ठायाः परनिपातः, ल्वादिभ्यश्चेति निष्ठानत्वं, बहुव्रीहिस्वान्तोदात्तादिति ङीप्। निरदीधरत् निष्कासयामास किम्? इत्युत्प्रेक्षा। दधातेर्णौचङ्युपधाया ह्रस्वः। ततः वपनात् एव तेषां तेषां गृहादीनां छाया तत्तत्छाया विभाषा सेनेत्यादिना नपुंसकत्वम्। तेषां छलादित्यपह्नवः। परितः पतयालुभिः पतनशीलैः,

ब्रूम: शङ्खं तव नल ! यश: श्रेयसे स्पष्टशब्दं
यस्योदर्य्य: स दिवि लिखित: स्पष्टमस्ति द्विजेन्द्र:।
श्रद्धा श्रद्धाकरमिह करच्छेदमप्यस्य पश्य

---

स्पृहिगृहीत्यादिना आलुच्। केशस्तोमै: केशव्यतिकरै: अवनी-तलम् अधवलम् असितं स्फुरति, ध्रुवमित्युत्प्रेक्षायाम् ॥५५॥

ब्रूम इति। हे नल ! महाराज ! तव यश: श्रेयसे मङ्गलाय स्पष्टशब्दं शङ्खं ब्रूम:, मङ्गलव्यवहारत्वात्। अन्यत्र श्रेयसे स्वर्गाय स्पष्टशब्दं शङ्खं कम्बुं यश: ब्रूम: यशस्तुल्यं ब्रूम: इत्यर्थ:। समानम् उदरं यस्य स: समानोदरे शयित: सोदर्य्य: भ्राता उभयोरपि समुद्रजन्यत्वादिति भाव:। विभाषोदर इत्यादिना समानशब्दस्य प्रागेव समानोदराद्यतीति यत्प्र-त्यय:। यस्य यशसस्तु सोदर्य्य: सदृशत्वाभिमानी दिवि लिखित: स द्विजेन्द्र: चन्द्र: स्पष्टम् अस्ति। इह काले अश्र-द्धाकरम् अनादरावहं अस्य चन्द्रस्य करच्छेदम् अंशुनाशम् अपि पश्य, किञ्च हारिणो हरिणकेतो: य: कलङ्क: तदपि नितरां म्लाने: दैन्यस्य स्थानम् आस्पदं तस्मात् न समान: इत्यर्थ:। अन्यच्च श्रेयसे धर्मोपदेशाय स्पष्टशब्दम् रचित-स्मृतिग्रन्थं शङ्खं शङ्खाख्यं मुनिं तव यशस्तुल्यं ब्रूम:, यस्य शङ्खस्य सोदर्य्य: भ्राता स: प्रसिद्ध: लिखित: लिखिताख्य: द्विजेन्द्र: ब्राह्मणोत्तम: दिवि स्वर्गेऽस्ति श्रद्धा सत्यम्। किञ्च, इह लोके श्रद्धाकरं विश्वासजनकम् अस्य लिखितस्य करच्छे-दम् अपि पश्य इह हारिण: लिखितस्य ( शङ्खमुने: आश्रमे फलापहारकस्य ) इति शेष:। य: कलङ्क: तदपि नितरां म्लानेर्दण्डस्य स्थानं कारणम्। अत्र शान्तिपर्वणि सुद्युम्नोपा-ख्यानं—"तत: स पृथिवीपालो लिखितस्य महात्मन:। करौ

स्थानिस्थानं तदपि नितरां शारिषो यः कलङ्कः ॥५६॥
ताराशङ्खविलोपकस्य जलजं तीक्ष्णत्विषो भिन्दतः
सारम्भं चलता करेण निविडां निष्पीडनां लम्भितः।
छेदार्थोपहृताम्बुकम्बुजरजोजम्बालपाण्डूभव-
च्छङ्खच्छित्करपत्रतामिह वहत्यस्तंगतार्द्धो विधुः ॥५७॥
यत्पाथोजविमुद्रणप्रकरणे निर्निद्रयत्यंशुमान्
दृष्टीः पूरयति स्म यज्जलरुहामक्ष्णा सहस्रं हरिः।

---

प्रच्छेदयामास धृतदण्डो जगाम सः ॥" इति। अत्र विशेषण-विशेष्ययोरपि श्लिष्टत्वादभिधायाः प्रकृतार्थक्रियार्थत्वात् प्रकृतार्थध्वनिरेवेति सङ्क्षेपः। मन्दाक्रान्तावृत्तम् ॥ ५६ ॥

तारेति। ताराः तारकाः एव शङ्खाः तेषां विलोपकस्य विनाशकस्य छेदकस्य जलजं पद्मं शङ्खञ्च, जलजं शङ्खपद्मयोरिति विश्वः। छिन्दतः भेदं नयतः छेदकस्य तीक्ष्णत्विषः तीग्मांशोः सारम्भं सप्रयत्नं चलता व्याप्रियमाणेन करेण असिना हस्तेन च निविडां गाढां निष्पीडनां स्तम्भनां रोधनञ्च लम्भितः प्रापितः अस्तम् अदर्शनगतम् अर्द्धं यस्य सः विधुः अस्मात् स्तम्भितचन्द्रच्छेदार्थं शीघ्रमुच्छेदसिद्ध्यर्थम् उपहृतम् अर्पितपदम् अम्बुकम्बुजं छिद्यमानं शङ्खजं रजः तत् एव जम्बालः कर्दमः तेन पाण्डुभवत् शुभ्रीभवत् शङ्खं छिनत्तीति शङ्खच्छित् तत्करपत्रं, क्रकचः क्रकचोऽस्त्री करपत्रमित्यमरः। तस्य भावः तत्तां वहति चेत्युत्प्रेक्षा ॥५७॥

यदिति। यत् यस्मात् अंशुमान् अर्कः पाथोजविमुद्रणप्रकरणे पद्मविकासप्रस्तावे दृष्टीः दृशः निर्निद्रयति विकासयति, यत् यस्माच्च हरिः विष्णुः जलरुहां शिवपूजाकमलानां सहस्रसङ्ख्याम् अक्ष्णा स्वनेत्रेण पूरयति स्म पूर्णं चकार युत

साजात्यं सरसीरुहामपि दृशामप्यस्ति तद्वास्तवं
यन्मूलाऽऽद्रियतेतरां कविदृभिः पद्मोपमा चक्षुषः ॥५८॥
अवैमि कमलाकरे निखिलयामिनीयामिक-
श्रियं श्रयति यत् पुरा विततपत्ननेत्रोदरम् ।
तदेव कुमुदं पुनर्दिनमवाप्य गर्भभ्रम-
द्द्विरेफरवघोरणाघनमुपैति निद्रामुदम् ॥ ५९ ॥

---

हरिस्तेसाहस्रं कमलबलिमादाय विधिना यदेकान्तं तस्मिन् निजमुदहरन्नेत्रकमलमिति । तस्मात् सरसीरुहामपि वास्तवं पारमार्थिकं, सवस्तुजमन्यथा पद्मोल्लासप्रकरणबाधाद्विजातीयत्वेन वपुषा कनकमयपूरणवदर्च्चिकमलसङ्ख्यापूरणायोगाच्चेति भावः । कविदृभिः कविभिश्च यत्साजात्यमलङ्करणं यस्याः मूला चक्षुषः पद्मैरुपमा औपम्यमाद्रियतेतरां सत्क्रियतेतरां तिङ् व्ययादामुप्रत्ययः । वैभाव्येन सद्वस्तुनोरपि सुवर्णरजतपरोपमायोगादिति भावः ॥ ५८ ॥

अवैमीति । यत् कुमुदं कर्त्तृ कमलाकरे सरसि विततानि विस्तृतानि पत्राणि एव नेत्राणि उदराणि यस्य तत् तादृशं सन्निखिलायां यामिन्यां यामिकः जागरिता तत्श्रियम् इव श्रियम् इति सादृश्याक्षेपान्निदर्शनाभेदः । पुरा श्रयति श्रयति स्म, पुरा लुङ् चेति चकाराद्भूते लट् । तत् एव कुमुदं पुनः दिनम् अवाप्य गर्भे अन्तः भ्रमतां द्विरेफाणां भ्रमराणां रवघोरणा शब्दाधिक्यं यस्यां तां घोरशब्द इति तौदादिकाद्भावे ल्युट् । निद्रामुदं निद्रासुखं पुनः उपैति रात्रौ जागरितो हि दिवा निद्रातीति भावः । अवैमीत्युत्प्रेक्षायाम् एकस्मिन् कुमुदे अनेकयोर्निद्राजागरयोः क्रमेण प्रत्यभिधानात् एकस्मिन् अथवा अनेकमित्युक्तलक्षणपर्याया-

इह किमुषसि पृच्छाशंसिकिंशब्दरूप-
प्रतिनियमितवाचा वायसेनैष पृष्टः।
भव फणिभवशास्त्रे तातङः स्थानिनौ का-
विति विहिततुहीवागुत्तरः कोकिलोऽभूत्॥ ६०॥
दाक्षीपुत्रस्य तन्त्रे ध्रुवमयमभवत् कोऽप्यधीती कपोतः
कण्ठे शब्दौघसिद्धिक्षतबहुकठिनीशेषभूषानुयातः।

---

लङ्कारेण पूर्वोक्तनिदर्शनसङ्कीर्णा। पृथ्वीवृत्तं,—जसौ जसय-लावसुग्रहयतिश्च पृथ्वी गुरुरिति लक्षणात्॥ ५८॥

इहेति। इह उषसि पृच्छां शंसतीति पृच्छाशंसी प्रश्न-वाचकः, प्रश्नोऽनुयोगः पृच्छा चेत्यमरः। तस्य किंशब्दस्य रूपे रूपविशेषे कौ इति विप्रलम्भप्रथमाद्विवचनान्ते प्रति-नियमितमिति व्यक्तवाचा व्यक्तवाक्येन तेन काविति व्यक्त-वाक्येनेत्यर्थः। वायसेन काकेन फणिनः भवे तस्य शास्त्रे पाणिनीये, तातङस्तातङादेशस्य स्थानिनौ देशिनौ कौ भणति पृष्टः कोकिलः विहिता प्रयुक्ता च तुहि इति वाक् सैवोत्तरं प्रतिवचनं यस्य सकाविति तुहीति कोकिलकूजितेन पूर्वोक्तप्रश्नोत्तरत्वमुत्प्रेक्ष्यते॥ ६०॥

दाक्षीति। दाक्षीपुत्रस्य पाणिनेः तन्त्रे शास्त्रे अधीतम् अनेन अधीती दाक्षीपुत्रतन्त्रज्ञ इत्यर्थः। इष्टादिभ्यश्चेतीनि-प्रत्ययः, सप्तमीविभागेनोक्तस्य विषयस्य कर्मण्युपसङ्ख्यानात् सप्तमी। कः अपि विद्वान् अयं कपोतः मूढः यः कपोतः कण्ठे शब्दौघेषु सिद्धैः अभिव्यक्त्यर्थं क्षता धर्षणेन चूर्णिता बह्वी या कठिनी खटी रोपणविशेषः, कठिना कठिनायान्तु कठिने तु प्रयुज्यते इत्यमरः। तस्याः शेषः अक्षरचिह्नचूर्णशेषः

सर्वं विस्मृत्य दैवात् स्मृतिमुषसि गतां घोषयन्तो घुसंज्ञां
प्राक्संस्कारेण सम्प्रत्यपि धुवति शिर: पट्टिकापाठनेन ॥६१॥
पौरस्त्यायां घुसृणसुमन:श्रीजुषो वैजयन्त्या:
स्तोकैश्चित्तं हरति हरिति चीरकण्ठैर्मयूखै:।
भानुर्जाम्बूनदरुचिरसौ शक्रसौधस्य कुम्भ:
स्थाने पानं तिमिरजलधेर्भाभिरेतद्भवाभि: ॥ ६२ ॥

---

स: एव भूषा तयाऽनुयात: रूषित: सन् सर्वं विस्मृत्य तिर्य्यग्योनित्व सम्बन्धात् इति भाव:। पट्टिकापाठनेन पट्टिकापाठजनकफलपाठजन्येन प्राक्संस्कारेण प्राक्भवीयवासनया दैवात् कथञ्चित् स्मृतिं गतां घुसंज्ञां दाधाघ्वदाविति सूत्रोक्तां घोषयन् घुशब्दम् उच्चै: उच्चारयन् सम्प्रति उषसि शिर: धुवति धूनयति इत्युत्प्रेक्षा ॥ ६१ ॥

पौरस्त्यायामिति। भानु: पुरोभवा: पौरस्त्या: दक्षिणापश्चात् पुरसस्त्यत् तस्यां हरितप्राच्यां दिशि घुसृणस्य कुङ्कुमस्य सुमनसां या श्री: शोभा तज्जुष: तद्भवाया: वैजयन्त्या: पताकाया: स्तोकै: अपत्यै: तद्भवै: इत्यर्थ:। अपत्यं स्तोकं तयो: समेत्यमर:। चीरकण्ठै: बालै: मयूखै: चित्तं हरति मनोहर: भवतीत्यर्थ:। किञ्च, जाम्बूनदरुचि: उदयरागात् कनककान्ति: असौ भानु: शक्रस्य सौधस्य वैजयन्तस्य कुम्भ: सौधाग्रवर्त्तिकलश: इति रूपकम्। एतद्भवतीति एतद्भवाभि: कुम्भभवाभि: भाभि: प्रभाभि: तिमिरजलधे: पानं, उभयप्राप्तौ कर्मणीति कर्मणि षष्ठी। स्थाने युक्तं, युक्तं द्वे साम्प्रतं स्थाने इत्यमर:। कुम्भसम्भवस्य जलधिपानमुचितमिति भावकालङ्कार: ॥ ६२ ॥

द्वित्रैरेव तमस्तमालगहनग्रासे दवीभावुकै-
रुस्रैरस्य सहस्रपत्रसरसि व्यश्राणि घस्रोत्सवः।
घर्मांशूनां रयचुम्बितं वितनुते तत् पिष्टपिष्टीकृत-
च्छायादिग्व्योमतमोऽघमोघमधुना मोघं निदाघद्युतिः॥६३॥
दूरारूढस्तिमिरजलधेर्वाडवश्चित्रभानु-
र्भानुस्ताम्यद्वनरुहवनीकेलिवैहासिकोऽयम्।
न स्वात्मीयं किमिति दधते भास्वरत्वेतिमानं
द्यामद्यापि द्युमणिकिरणश्रेणयः शोणयन्ति॥६४॥

---

द्वित्रैरिति। द्वौ वा त्रयः वा द्वित्राः, सङ्ख्याव्ययेत्यादिना बहुव्रीहिः, बहुव्रीहौ डच्समासान्तः। तैः तन्मात्रैः एव तमः एव तमालगहनं तस्य ग्रासे गिलने दवीभावुकैः वह्नीभवद्भिः, दवदावौ वनानलावित्यमरः। अभूततद्भावे च्विः, अस्य च्वावितीकारः, लषपतेत्यादिना उकञ्प्रत्ययः। अस्य निदाघद्युतेः उस्रैः करैः सहस्रपत्रसरसि पद्माकरेषु घस्रोत्सवः व्यश्राणि विश्राणितः, श्रणुदाने कर्मणि क्त इति क्तः। तस्मात् निदाघद्युतिः सूर्य्यः पिष्टपिष्टीकृतं कृतकरणात् तत्प्रायीकृतं च्छायादिग्व्योमतमोऽघम् अतएव अघम् एनः अंहः दुःखव्यसनेष्वघमित्यमरः। रयचुम्बितं रयव्याप्तं घर्मांशूनाम् आतपानाम् ओघम् अधुना मोघं व्यर्थम् एव वितनुते॥ ६३॥

दूरेति। तिमिरजलधेः वाडवः चित्रभानुः वडवाग्निः तिमिरसंहर्त्ता इत्यर्थः, ताम्यन्त्याः क्लाम्यन्त्याः वनरुहवन्याः पद्मवनस्य केलिषु क्रीडासु विहासः प्रयोजनं यस्य वैहासिकः दीनः प्रयोजनमिति ठञ्। अयं भानुः दूरम् आरूढः दूरारूढः द्युमणेः किरणश्रेणयः अद्यापि द्याम् आकाशं शोणयन्ति शोणां कुर्वन्ति। किमिति? स्वात्मीयं निजं भास्वरं

प्रातर्वर्णनयाऽनया निजवपुर्भूषाप्रसादानदात्
देवी वः परितोषितेति निहितामान्तःपुरीभिः पुरः ।
सूता मण्डनमण्डलीं परिदधुर्माणिक्यरोचिर्मय-
क्रोधावेगसरागलोचनरुचा दारिद्र्यविद्राविणीम् ॥६५॥
आगच्छन् भणतामुषः क्षणमथातिथ्यं द्वयोरानये ।
स्वर्गङ्गाम्बुनि वन्दिनां कृतदिनारम्भाप्लुतिर्भूपतिः ।

---

श्वेतिमानं श्वैत्यं सितभास्वरत्वं न दधते न धारयन्ति तस्मात् उत्थातुमयमुचितः कालः इत्यर्थः ॥ ६४ ॥

प्रातरिति । हे वन्दिनः ! अनया प्रातर्वर्णनया प्रभातवर्णनया परितोषिता देवी वः युष्मभ्यं निजवपुषः भूषणानि एव प्रसादान् पारितोषिकाणि अदात् इत्यमुक्तेति शेषः, गम्यमानार्थत्वात् अप्रयोगः । आन्तःपुरीभिः अन्तःपुरिकाभिः अन्तःपुरे नियुक्ताभिः, तत्र नियुक्तया ठञ् । पुरः अग्रे निहितां माणिक्यरोचिर्मय्याः पद्मरागप्रभायाः क्रोधावेगेन क्रोधरसेन सरागया लोचनरुचा दारिद्र्यस्य विद्राविणीम् उच्चाटनीं इव स्थिताम् इत्युत्प्रेक्षा मण्डनमण्डलीम् आभरणराशिं सूताः वन्दिनः सूतः पारदवन्दिनोरिति विश्वः । परिदधुः धारयामासुः ॥ ६५ ॥

आगच्छन्निति । अथ भूपतिः नलः स्वर्गङ्गाम्बुनि मन्दाकिनीप्रवाहे कृतदिनारम्भाप्लुतिः कृतप्रातःस्नानः सन् प्रियायाः यौतुके उपाहरणे प्राप्तं भीमदत्तम् अतिक्रान्तपुष्पकम् अतिपुष्पकमिति अत्यादयः क्रान्ताद्यर्थे द्वितीययेति समासः, द्विगुप्राप्तापन्नेत्यादिना परवल्लिङ्गताप्रतिषेधः । तं रथम् अधिष्ठाय आस्थाय आनन्दात् आगच्छन् प्रत्यागच्छन् उषःक्षणं भणत तथैव

आनन्दादतिपुष्यकं रथमधिष्ठाय प्रियार्यौतुक-
प्राप्तं तैरवरागतैरविदितप्रासादतो निर्गमः ॥६६॥
श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मा मल्लदेवी च यम् ।
एकां न त्यजतो नवार्थघटनामेकान्नविंशो महा-
काव्ये तस्य कृतौ नलीयचरिते सर्गो निसर्गोज्ज्वलः ॥६७॥

---

प्रातःकालं वर्णयत एवम् अर्थिनां वन्दिनां दृशोः दृशाम् इत्यर्थ आतिथ्यम् आनशे प्राप्तस्तैः दृष्टः इत्यर्थः । अजादेरित्यभ्यासदीर्घ अश्नोतेश्चेति नुडागमः । अवरागतैः पश्चादागतैः तत्रैव स्थितै रपि इत्यर्थः । तैः वन्दिभिः अविदितः प्रासादतः निर्गमः यस्य सः । अतएव पूर्वश्लोके देव्यैव पारितोषिकं दत्तमित्युक्तम् ॥६६

श्रीहर्षमिति । एकां मुख्यां नवार्थघटनाम् अपूर्वार्थ सृष्टिं त्यजतः अस्य विंशतेः पूरणो डट् तस्य पूरणे डटिति विंशतेर्डतोति शब्दलोपः एकोनः विंशः ऊनविंशः विंश इत्यर्थः । ऊनार्थे चात्र नञ् तत इति काशिका विंशश ब्देन समासः, एकादिश्चैकस्य चादुगिति नञ्प्रकृतिभावः एकशब्दस्य ऽगागमश्च । गतमन्यत् ॥ ६७ ॥

---

## विंशः सर्गः।

—•◌•—

सौधाद्रिकुट्टिमानेकधातुकाधित्यकातटम्।
स प्राप रथपाथोभृद्वातजातजवो दिवः॥ १॥
ततः प्रत्युदगाद् भैमी कान्तमायान्तमन्तिकम्।
प्रतीची सिन्धुवीचीव दिनोङ्कारे सुधाकरम्॥२॥
स दूरमादरं तस्या वदने मदनैकदृक्।
दृष्टमन्दाकिनी हेमारविन्दश्रीरविन्दत॥ ३॥

---

सौधेति। वातवत् वातात् जातजवः वातवेगः सः पूर्वोक्तः रथः एव पाथोभृत् जलधरः दिवः स्वर्गात् आकाशात् द्यौश्च स्वर्वर्त्ममार्गयोरिति विश्वः। सौधस्य अट्टेषु उपरिगृहेषु यत् कुट्टिमं बद्धभूमिः, कुट्टिमोऽस्त्री निबद्धा भूरित्यमरः। तत् एव अनेकधातुद्रव्यं, शेषिकः कप्। अधित्यका ऊर्द्ध्वभूमिप्रदेशः तस्याः तटं प्राप॥ १॥

तत इति। ततः नलप्रवेशानन्तरम् अन्तिकम् आयान्तं कान्तं दिनस्य ओङ्कारे प्रारम्भे दिनोङ्कारे, ओमाङोश्चेति पररूपत्वम्। अन्तिकम् आयान्तं सुधाकरं चन्द्रं प्रतीची पश्चिमा सिन्धोः वीचिः ऊर्मिः इव प्रत्युदगात्, इणो गा लुङि इति गादेशः। गातिस्था इत्यादिना सिचो लुक्॥ २॥

स इति। दृष्टा मन्दाकिनीहेमारविन्दस्य श्रीः येन सः। सदृशदर्शनजातप्रियामुखारविन्दस्मृतिः इत्यर्थः, मदनैकदृक् कामैकशरणः सः नलः तस्याः प्रियायाः वदने दूरम् अत्यन्तम् आदरम् अविन्दत तृष्णां प्राप इत्यर्थः॥ ३॥

तेन स्वर्देशसन्देशमर्पितं सा करोदरे।
बभ्राज बिभ्रती पद्मं पद्मेवोन्निद्रपद्मदृक् ॥४॥
प्रियेणाल्पमपि प्रत्तं बहु मेनेतरामसौ।
ह्येकलक्षतया दध्यौ दत्तमेकवराटकम् ॥५॥
प्रेयसाऽवादि सा तन्वी त्वदालिङ्गनविघ्नकृत्।
समाप्यतां विधिः शेषः क्लेशश्चेतसि चेन्न ते ॥६॥

---

तेनेति। तेन प्रियेण अर्पितं दत्तं स्वर्देशस्य सन्देशं सूचकं स्वर्गभूमिः स्वयम् आगतः इति ज्ञापयन्तम् इत्यर्थः, पद्मं हेमारविन्दं करोदरे करतले बिभ्रती तथा उन्निद्रपद्मदृक् विकचारविन्दलोचना पद्मा इव पद्मोपमा साक्षादेव लक्ष्मीः इव बभ्राज रेजे ॥ ४ ॥

प्रियेणेति। असौ भैमी प्रियेण कान्तेन इष्टजनेन च प्रत्तं दत्तम्, अच उपसर्गात्तः इति दस्तादेशः। अल्पम् अपि वस्तु बहु मेनेतरां आतिशयिकं पूज्यं च मेनेतरां, तिङव्ययादामुप्रत्ययः। कुतः? हि यस्मात् कारणात् दत्तं एकः मुख्यः वराटकः। एकवराटकं कपर्दश्च, कपर्दो वराटक इति हलायुधः। एकलक्षतया एकलक्षत्वेन लक्ष-गुणितधनत्वेन दध्यौ मेने, लक्षश्च सङ्ख्यायामिति विश्वः। प्रियदत्तं वराटकमपि रत्नात् अतिरिच्यते इति भाव ॥ ५ ॥

प्रेयसेति। सा तन्वी कृशाङ्गी प्रेयसा प्रियतमेन अवादि कथिता। तदेवाह—हे प्रिये! ते तव चेतसि क्लेश न चेत् त्वदालिङ्गनस्य विघ्नकृत् शेषः विधिः अनुष्ठानं समाप्यतां समाप्तिं अनुज्ञायताम् इत्यर्थः ॥ ६ ॥

क्वैतावाव्नर्ममर्माविद्विधिरद्य ते।
इति तं मनसा रोषादवोचद्वचसा न सा ॥७॥
क्षणविच्छेदकादेव विधेर्मुग्धे ! विरज्यसि।
विच्छेत्स्याऽहं चिरं नु त्वा स्मदाऽऽह स्म तदा कलिः ॥८॥
सावज्ञेवाथ सा राज्ञः सखीं पद्ममुखीमगात्।
लक्ष्मीः कुमुदकेदारादारादम्भोजिनीमिव ॥९॥

---

क्वेति। नर्मणः क्रीडासुखस्य मर्मावित् मर्म विध्यतीति मर्माभिघातकः न हि वृतीत्यादिना पूर्वस्य दीर्घः। क्व एतावान् विधिः अद्य ते विद्यते कुत्रास्तीति सा रोषात् कोपात् तं नलं मनसा अवोचत् वचसा न अवोचत् लज्जादाक्षिण्यादिति भावः ॥ ७ ॥

क्षणेति। हे मुग्धे ! हे मूढे ! भैमि ! क्षणविच्छेदकात् क्षणमात्रविघ्नकारिणः विधेः अनुष्ठानात् एव विरज्यसि, किन्तु, त्वा नु द्वितीयाया इति त्वादेशः। चिरं चिरकालं विच्छेत्ता अहं विच्छेत्स्यामि, छिदः स्वरितेत्वात्तुटि तङि तानिष्ठरे एतेति सकारस्य हकारः। इति कलिः कलिपुरुषः स्मदा आह स्म, किन्तु रन्ध्रान्वेषी तिष्ठामि इति भावः ॥८॥

सावज्ञेति। अथ सा भैमी सावज्ञा इव सतिरस्कारा इव राज्ञः राजानं विहाय, कर्मणि ल्यप्लोपे पञ्चमी। पद्मम् इव च मुखं यस्याः तां आत्मसमीपे सखीं लक्ष्मीः कुमुदकेदारात् आरात् कुमुदाकरात् आरात् तां विहाय अम्भोजिनीम् इव अगात् अवज्ञाता हि अवज्ञापात विहाय गच्छन्तीति प्रसिद्धिः ॥ ९ ॥

मत्प्रसादावपि मा सम्भूत् कलिद्वापरवत्परः।
इतीव नित्यसत्त्रे तां स त्रेतां पर्य्यतूतुषत् ॥१०॥
क्रियां प्राह्णेतनीं कृत्वा निषेधन् पाणिना सखीम्।
कराभ्यां पृष्ठगस्तस्या न्यमीमिलदसौ दृशौ ॥११॥
दमयन्त्या वयस्याभिः सहास्याभिः समीक्षितः।
प्रसृतिभ्यामिवायामं मापयन् प्रेयसीदृशोः ॥१२॥

---

मत्प्रेति। कलिद्वापरवत् कलिद्वापरौ इव असौ त्रेता अपि परः अन्यः अत्र मा सम्भूत् मा जनिष्ट, माङ्योगादडभावः। इतीव इति मत्वेव नित्यसत्त्रे नित्ययज्ञे अग्निहोत्रे तस्य तया अग्निहोत्रश्रुत्या नित्यत्वावगमाद्ययादिभ्यः। सत्त्रमाच्छादने यज्ञमित्यमरः। सः नलः तां त्रेतामग्नित्रयं तृतीययुगं त्रेता त्वग्नौ त्रयोयुग इत्यमरः। पर्य्यतूतुषत् हविषा परितोषयामास। सत्कर्मणि णतय इत्यादिना विकल्पेनोपधाया ह्रस्वः॥ १०॥

क्रियामिति। असौ नलः प्राह्णेतनीं प्राह्णभवां, सायं चिरमित्यादिना ट्युट् प्रत्ययः। तस्मात् एव निपातनात् प्राह्णेतनीं इत्येवं क्रियाम् अनुष्ठानं कृत्वा सखीं पाणिना हस्तसंज्ञया निषेधन् तस्याः भैम्याः पृष्ठगस्य स्थितः कराभ्यां पाणिभ्यां दृशौ लोचने न्यमीमिलत् मीलयति स्म। भ्राजभासेत्यादिना एकत्वेनोपधाया ह्रस्वः॥ ११॥

दमयन्त्या इति। प्रसृतिभ्यां निकुञ्जपाणिभ्यां प्रयोज्याभ्यां, पाणिर्निकुञ्जः प्रसृतिरित्यमरः। प्रेयसीदृशोः भाया-म्बर्ध्व लोचने न्यमीलयत् मापयन् इव स्थितः, माते माङो वा अस्मात् लटः शत्रादेशः। सः नलः सहास्याभिः दम

तर्किताऽऽलि! त्वमित्यर्धवाणीका पाणिमोक्षणात्।
ज्ञातस्पर्शान्तरा मौनमानशे मानसेविनी॥१३॥
साऽवादि सुतनुस्तेन कोपस्ते नायमौचिती।
त्वां प्रापं यत्प्रसादेन प्रिये! तन्नाद्रिये तपः?॥१४॥
निशि दास्यं गतोऽपि त्वां ज्ञात्वा यन्नाभ्यवीवदम्।
तं प्रहत्ताऽसि मन्तुं चेन्मन्तुं तद्वद वन्द्यसे॥१५॥

---

यस्याः वयस्याभिः सखीभिः समीक्षितः सहासम् ऐक्षत इत्यर्थः॥ १२॥

तर्कितेति। हे आलि! त्वं तर्किता अवधारिता इति अर्धा मां जहीहीत्येवंरूपा वाणी यस्याः सा, शेषिकः कप्। मानसेविनी पाण्योः मोचनात् अपादानात् ज्ञातं स्पर्शान्तरं यया सा निश्चितप्रियपाणिस्पर्शा सती इत्यर्थः, मौनम् आनशे न किञ्चिदूचे कोपादिति भावः॥ १३॥

सेति। सुतनूः भैमी तेन नलेन अवाचि उक्ता, वचेः कर्मणि लुङ्। तदेवाह—हे प्रिये! अयं कोपः तव नौचिती अनौचित्यम् इति भावः। तथाहि, यस्य तपसः प्रसादेन त्वां प्रापं प्राप्तवान् अस्मि, आप्नोतेर्लुङ्, पुषादित्वात् अङ्, तत् तपः न आद्रिये? अत्र काकुः॥१४॥

निशीति। हे प्रिये! निशि दास्यं दासत्वं गतः अपि ज्ञात्वा ज्ञानात् आगत्य त्वां न अभ्यवीवदम् न अभिवादितवान् अस्मीति यत्, वदेरभिवादनार्थाच्चौरादिकात् ण्यन्ताल्लुङि णौ चङ्युपधाया ह्रस्वः। तं प्रणामं मन्तुम् अपराधं, आगोऽपराधो मन्तुश्चेत्यमरः। मनेरौणादिकस्तुन्प्रत्ययः। मन्तुं ज्ञातुं, मन्यतेस्तुमुन्प्रत्ययः। प्रहत्ता असि दासत्वामपनीय-

इत्येतस्याः पदासत्त्यै पत्यैषा प्रेरितौ करौ ।
रुद्धा सकोपं सातङ्कं तं कटाक्षैरमूमुहत् ॥१६॥
अवोचत ततस्तन्वीं निषधानामधीश्वरः ।
तदपाङ्गचलत्ताराज्झलत्कारवशीकृतः ॥१७॥
कटाक्षकपटारब्धदूरलङ्घनरंहसा ।
दृशा भीत्या निवृत्तं ते कर्णकूपं निरूप्य किम् ? ॥१८॥
सरोषाऽसि सरोजाक्षि ! त्वमुदेषि मुदे मम ।
तमाऽपि शतपत्रस्य सौरभायैव सौरभा ॥ १९ ॥

---

पराधत्वादिति भावः । तत् वन्द्यसे प्रणिपातप्रतीकारत्वात् तस्येति भावः ॥ १५ ॥

इतीति । इति इत्थम् एतस्याः पदासत्त्यै पादग्रहणाय पत्या प्रियेण प्रेरितौ प्रसारितौ करौ एव रुद्धा निरुध्य सरोषम् अनङ्गीकरणात् सातङ्कं सभयं तं प्रियं कटाक्षैः अमूमुहत् मोहयति स्म किल । किञ्चित् कटाक्षदर्शनाद्रागपरवशः अभूत् इति भावः ॥ १६ ॥

अवोचतेति । ततः कटाक्षवीक्षणानन्तरं तस्याः प्रियायाः अपाङ्गे नेत्रान्ते चलता प्रसरता ताराज्झलत्कारेण कनीनिकास्फुरितेन वशीकृतः निषधानाम् अधीश्वरः नलः तन्वीं प्रियाम् अवोचत, ब्रुवो लङि रूपम् ॥ १७ ॥

कटाक्षेति । कटाक्षकपटेन अपाङ्गदर्शनव्याजेन आरब्धम् उपक्रान्तं दूरलङ्घनरंहः यया तया ते दृशा कर्णः एव कूपः तं निरूप्य निरीक्ष्य भीत्या कूपदर्शनभिया निवृत्तं किं ? निरस्तं किम् ? ॥ १८ ॥

सरोषेति । हे सरोजाक्षि ! सरोषा रुष्टा असि रुष्टा चेति वाच्यम् इति भावः । मम मुदे हर्षाय उदेषि भवसि । तथाहि

छेत्तुमिन्दौ भवद्वक्त्रबिम्बविभ्रमविभ्रमम्।
शशाङ्कमानशे भिन्नभिन्नविधिर्विधिः॥ २०॥
ताम्रपर्णीतटोत्पन्नैर्मौक्तिकैरिन्दुकुक्षिजैः।
बहुसाम्यंतरा वर्णाः प्रसन्नाः स्वादवस्तव॥ २१॥
त्वद्गिरः क्षीरपाथोधेः सुधयैव सहोत्थिताः।

---

तथा उष्णा अपि सूर्य्यस्य इयं सौरी सूर्य्यसम्बन्धिनी भगस्त्य-मत्स्यानाम् उपधा इत्यत्र सूर्य्यतिष्ययोर्यकारलोपः। सौरी च सा भा च सौरभा सूर्य्यप्रभा, स्त्रियाः पुंवदित्यादिना पुंवद्भावः। अतएतस्य सौरभाय एव सुरभित्वाय एव न तु शोषणाय भवति इति शेषः। दृष्टान्तालङ्कारः॥ १८॥

छेत्तुमिति। भिन्नभिन्नः अत्यन्तविलक्षणः विधिः निर्माणव्यापारः यस्य सः एव विधिः विधाता इन्दौ भवत्याः वक्त्रबिम्बं मुखमण्डलं सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः। तस्य यः विभ्रमः विलासः, विभ्रमः संशये भ्रान्तौ शोभायाञ्चेति यादवः। तत्र विभ्रमं भ्रान्तिं छेत्तुं, तुमुनादेशः। शशाङ्कं शशचिह्नम् आनशे अङ्कितवान्, अकिलक्षण इति धातोर्भावादिकाल्लिटि तुन्, तस्मान्नुट्, द्विहल इतोडागमः॥ २०॥

ताम्रेति। प्रसन्नाः स्वच्छाः स्वादवः मधुराश्च तव वर्णाः अक्षराणि ताम्रपर्ण्याः नद्याः तटे तटविशेषे उत्पन्नैः इन्दुकुक्षिजैः इन्दुगर्भोत्पन्नैश्च मौक्तिकैः बहुसाम्यंतराः अतिशयेन बहुसाम्याः ततोऽपि तव एव अधिका स्वच्छता मधुरता च इति द्रष्टव्यम्॥ २१॥

त्वद्गिरिति। हे प्रिये! त्वद्गिरः सुधया सहैव क्षीरपा-

अथ यावदहो धावद्दुग्धलेपलवस्मिताः ॥ २२ ॥
पूर्वपर्वतमाश्लिष्टचन्द्रिकश्चन्द्रमा इव।
अलञ्चक्रे स पर्य्यङ्कमङ्कसंक्रमितप्रियः ॥ २३ ॥
प्रावृडारम्भणाम्भोदः स्निग्धो द्यामिव स प्रियः।
परीरभ्य चिरायास विश्लेषायासमुक्तये ॥ २४ ॥
चुचुम्बास्यमसौ तस्या रसमग्नः श्रितस्मितम्।

---

ब्धेः क्षीरसागरात् उत्थिताः अथ यावत् अद्यपर्य्यन्तम् अपीत्यर्थः। धावन्ति वहिर्निर्गच्छन्ति दुग्धलेपिनां क्षीरसेकानां लवाः स्मितानि यासां ताः अहो स्मितव्याजेन क्षीरलेपदर्शनात् त्वद्गिरां सुधया क्षीरेण सार्द्धं क्षीरसागरोत्पन्नत्वम् उन्नीयते, अन्यथा वैयर्थ्यादिति भावः ॥ २२ ॥

पूर्वेति। आश्लिष्टा चन्द्रिका येन सः एव चन्द्रमाः पूर्वपर्वतम् उदयाद्रिम् इव अङ्कसंक्रमिता अङ्कारोपिता प्रिया येन सः अङ्कसंक्रमितप्रियः, अप्रियादिष्विति वचनात प्रियापरस्य पूर्वपदस्य स्त्रियाः पुंवदित्यादिना पुंवद्भावः। नलः पर्य्यङ्कं शयनम् अलञ्चक्रे ॥ २३ ॥

प्रावृडिति। स्निग्धः अनुरक्तः मसृणश्च सः नलः प्रावृडारम्भणे वर्षाप्रारम्भे अम्भोदः मेघः द्यां नभःस्थलीम् इव प्रियां परीरभ्य विश्लेषायासमुक्तये वियोगक्लेशपरिहाराय चिराय आस चिरम् आस विश्लेषभिया चिरमास्थितः आश्लिष्य अवस्थितः इत्यर्थः। आसेति निरुपकमिति शकटायनः वामनश्च। असगतिदीप्त्यादानेष्विति धातोरित्याह आसेत्याह आसेत्यासेरिति ॥ २४ ॥

चुचुम्बेति। रसमग्नः रागमग्नः नलः श्रितस्मितं प्राप्त-

नभोमणिरिवाम्भोजं मधुमध्यानुबिम्बितः ॥ २५ ॥
अथाहूय कलां नाम पाणिना स प्रियासखीम्।
पुरस्तादेशितामूचे कर्तुं नर्मणि साक्षिणीम् ॥ २६ ॥
कस्मादस्माकमज्ञास्या वयस्या दयते न ते।
आसक्ता भवतीष्वन्यं मन्ये न बहु मन्यते ॥ २७ ॥
अन्वग्राहि मया प्रेयान्निशि स्वोपनयादिति।
न विप्रलभते तावदालीरियमलीकवाक् ॥ २८ ॥
आह स्मैषा नलादन्यं न जुषे मनसेति यत्।
यौवनानुमितेनास्यास्तन्मृषाऽभून्मनोभुवा ॥ २९ ॥

---

मन्दहासं प्राप्तविकासञ्च आस्यं मधुमध्ये अनुबिम्बितः नभोमणिः रक्ताम्भोजम् इव चुचुम्ब ॥ २५ ॥

अथेति। नथ नलः कलां नाम प्रियासखीं पाणिना संज्ञया आहूय नर्मणि विनोदे साक्षिणीं कर्तुं पुरस्तात् अग्रे वेशिताम् उपवेशिताम् ऊचे ॥ २६ ॥

कस्मादिति। हे कले! अज्ञास्या वः वयस्या सखी कस्मात् अस्माकं न दयते अस्मान् न अनुकम्पते, अधीगर्थेत्यादिना कर्मणि षष्ठी। अथवा भवतीषु आसक्ता सती अन्यम् अन्यजनञ्च न बहु मन्यते न गणयति इति मन्ये ॥२७॥

अन्वग्राहीति। अलीकवाक् अनृतवाक् इयं वः सखी मया निशि स्वोपनयात् आत्मसमर्पणात् प्रेयान् प्रियतमः अन्वग्राहि अनुगृहीतः इत्येवं तावत् आलीः न विप्रलभते ? न मिथ्या वाचयति किमिति शेषः। काकुः। तस्मात् तदेव वचः न श्रद्धेयम् इत्यर्थः ॥२८॥

आहेति। एषा वः सखी नलात् अन्यं मनसा अपि न जुषे न सेवे इति यत् आह स्म ऊचे तत् वचनं यौवनानुमि-

आस्यसौन्दर्य्यमेतस्याः शृणुमो यदि भाषसे।
तद्धि लज्जानमन्मौलेः परोक्षमधुनाऽपि नः ॥ ३० ॥

पूर्णयैव द्विलोचन्या सैषालीरवलोकते।
द्रागदृगन्ताणुना मान्तु मन्तुमन्तमिवेक्षते ॥ ३१ ॥

नालोकते यथेदानीं मामियं तेन कल्पये।
योऽहं दूत्येऽनया दृष्टः सोऽपि व्यस्मारिषीदृशा ॥३२॥

रागं दर्शयते सैषा वयस्याः सूनृतामृतैः।
मम त्वमिति वक्तुं मां मानिनी मौनिनी पुनः ॥३३॥

---

तेन यौवननिश्चितेन मनोभुवा मृषा अभूत्। अत्र मुख्या-कारेणान्यसेवाया दुर्वचनत्वात् अन्यथा सिद्धकामः सेवां क्लेश-मोक्षा परिहरतीति तात्पर्य्यार्थः ॥ २९ ॥

आस्येति। हे कले! एतस्याः आस्यसौन्दर्य्यं यदि भाषसे शृणुमः हि यस्मात् लज्जया नमन्मौलेः नम्रशिरसः अस्याः तदास्यसौन्दर्य्यम् अधुना अपि न अस्माकं परोक्षं न प्रत्यक्षम् अस्माकं यथैतल्लाभः भवति तथा क्रियताम् इत्यर्थः ॥३०

पूर्णयेति। सा एषा पूर्णया द्वयोः लोचनयोः समाहारेण द्विलोचन्या, त्रिलोकीवत् प्रक्रिया। आलीः सखीः अवलोकते मान्तु मन्तुम् अपराधिनम् इव द्राक् क्षणिकं दृगन्ताणुना कटाक्षलेशेन अन्तं रम्यं यथा तथा ईक्षते न तु स्थिरया पूर्ण-येत्यर्थः ॥ ३१ ॥

नेति। यस्मात् इदानीम् इयं न अवलोकते तेन अना-लोकनेन कल्पये ऊहे। तदेवाह—यः अहं दूत्ये दूत्यकाले अनया दृष्टः सः अहम् ईदृशा माम् अपश्यता नयनेन व्यस्मारिषि विस्मृतः अस्मि, स्मरतेः कर्मणि लङ्। चिरवति हृदि अविस्मरणे पूर्ववत्सादरं पश्येत् इति भावः ॥ ३२ ॥

रागमित्ति। सा एषा प्रिया सूनृतामृतैः सत्यवाक्यामृतैः,

कां नामन्त्रयते नाम नामग्राहमियं सखी ।
कले ! नलेति नास्माकीं स्पृशत्याख्यां तु जिह्वया ॥३४॥
अस्या: पीनस्तनव्याप्ते हृदयेऽस्मासु निर्दये ।
अवकाशलवोऽप्यस्ति नात्र कुत्र बिभर्त्तु न: ॥ ३५ ॥
अधिगत्य दृढीतस्या हृदयं मृदुतामुचो: ।
प्रतीम एव वैमुख्यं कुचयोर्युक्तवृत्तयो: ॥ ३६ ॥

---

सूनृतं प्रियं सत्यमित्यमर: । वयस्या: सखी: रागं दर्शयते ताभ्य: विस्रब्धं कथयतीत्यर्थ: । अभिवदिदृशोरात्मनेपद-मुपसङ्ख्यानाद्विकल्पादणिकर्त्तु: कर्मत्वं, णिचश्चेत्यात्मनेपदम् । मम त्वम् इति मां पुन: वक्तुं मदीय: त्वम् इत्येतावन्मात्रं वक्तुं मानिनी मौनिनी वाचंयमा ॥ ३३ ॥

कामिति । हे कले ! इयं ते सखी कां नाम गृहीत्वा नामग्राहं नाम्ना, दृशिग्रहोरिति णमुल् । न आमन्त्रयते नाम न सम्बोधयति नाम, सर्वथा मन्त्रयते एव इत्यर्थ: । अस्माकम् इयम् आस्माकी, युष्मदस्मदोरित्यादिना ईप्रत्यय: । तस्मिन् खञ् चेत्यादिना अस्मकादेश:, टिड्ढाणञित्यादिना ङीप् । तां नलेति आख्यां नाम आख्यातुम्, आख्याह्वे अभि-धानं चेत्यमर: । जिह्वया न तु स्पृशति ॥ ३४ ॥

अस्या इति । अस्या: सम्बन्धिन्या: पीनाभ्यां स्तनाभ्यां व्याप्ते आक्रान्ते अतएव अस्मासु विषये निर्दये हृदये अवकाश-लव: अपि नास्ति यत्र हृदये कुत्र न: अस्मान् बिभर्त्तु न कुत्रापीत्यर्थ: ॥ ३५ ॥

अधिगत्येति । एतस्या: हृदयम् ईदृक्कठिनम् अधिगम्य ज्ञात्वा मृदुतामुचो: तावत्काठिन्यभाजो: इत्यर्थ: । अन्यथा

इति मुद्रितकण्ठेऽस्मिन् सोल्लुण्ठमभिधाय ताम् ।
दमयन्तीमुखाधीतस्मितयाऽसौ तया जगे ॥ १७ ॥
भावितेयं त्वया साधु नवरागा खलु त्वयि ।
चिरन्तनानुरागार्हं वर्त्तते नः सखीः प्रति ॥ १८ ॥
अरशास्त्रविदा सेयं नवोढा नस्त्वया सखी ।
कथं सम्भुज्यते बाला कथमस्मासु भाषताम् ? ॥ १९ ॥

---

दुर्नीतिरिति भावः । युक्तौ मिथःश्लिष्टौ वृत्तौ वर्त्तुलौ तयोः युक्तवृत्तयोः, विशेषणसमासः । तथा साधुचरित्रयोश्च कुचयोः वैमुख्यम् अनभिमुखत्वम् औदासीन्यं प्रतीमः जानीमः एव वयन्तु निश्चेतुम् अत्र अशक्नुमः तथा कौटिल्यात् इति भावः ॥ १६ ॥

इतीति । अस्मिन् नले कान्ते सोल्लुण्ठं सोपहासम् इति तां कलाम् अभिधाय, सोल्लुण्ठनन्तु सोत्प्रासः सोपहासाश्रयः समा इति यादवः । मुद्रितकण्ठे निवृत्तवाचि तूष्णीभूते सति दमयन्तीमुखाधीतस्मितया तां दृष्ट्वा विस्मयमानया इत्यर्थः, तया असौ नलः जगे जगदे नलः गदितः इत्यर्थः । क्रियाग्रहणमिति क्रियया अभिप्रायात् सम्प्रदानत्वं, तथाच विवक्षितकर्मत्वाद्भावे लिट् ॥ १७ ॥

यदुक्तं पूर्णयापीत्यादि तत्र तावदुत्तरमाह भावितेति । इयं भैमी त्वया साधु भाविता किन्तु त्वयि नवरागा नूतनपरिचया खलु अतः तदनुरूपं वर्त्तते सखीः प्रति चिरन्तनस्य चिरन्तनानुरागस्य अर्हम् अनुरूपं वर्त्तते, अतोऽवसुपालम्भः अचितः इति भावः ॥ १८ ॥

यदुक्तमन्वयाहीत्यनेन तत्रोत्तरं श्लोकद्वयेनाह अरेत्या-

नासत्यवदनं देव ! त्वा गायन्ति जगन्ति यम् ।
प्रिया तस्य सरूपा स्यादन्यथालपना न ते ॥ ४० ॥
मनोभूरस्ति चित्तेऽस्याः किं नु देव ! त्वमेव सः ।
त्वदवस्थितिभूर्यस्मात् सख्या दिवानिशम् ॥ ४१ ॥

---

दिना । बाला अविदग्धा नः अस्माकं नवं अचिरम् एव ऊढ़ा परिणीता सा इयम् प्रथमसङ्गमा बाला नः सखी स्मरशास्त्रविदा कामतत्त्ववेदिना चिरात् चिरं वा सम्भोगविघ्नेनेत्यर्थः, त्वया कथं सम्भुज्यते विसम्भं सम्भोक्तुं शक्यते, कथं चास्मासु अस्मान् अधिकृत्य भाषतां कथमस्मभ्यं स्वचेष्टितं कथयिष्यतीत्यर्थः । तस्मादसौ भाविन्यर्थे कामशास्त्रवेदिनस्तवोपालम्भः उचितः इति भावः ॥ ३९ ॥

अत्रैव यद्विशेषितवानलोकवागिति तत्रोत्तरमाह नासत्येति । हे देव ! महाराज ! जगन्ति लोकाः यं त्वां नासत्ययोः अश्विनीकुमारयोः इव वदनम् आस्यं यस्य गायन्ति, तस्य महानुभावस्य ते तव सरूपा सुन्दरी प्रिया कान्ता अन्यथा प्रतिकूलम् आलपनं भाषणं यस्याः तादृशी स्यात् न भवितेति तात्पर्य्यम्, स्वामिदृग्दोषसम्भावनयापीति भावः ॥ ४० ॥

यदुक्तमाह स्वेत्यादिश्लोके तस्योत्तरं श्लोकत्रयेणाह मनोभूरित्यादि । हे देव ! राजन् ! देवः परिधने राज्ञीति विश्वः । अस्याः चित्ते मनोभूः अस्ति, किन्तु सः मनोभूः त्वम् एव । कुतः ? यत् यस्मात् सख्या दिवानिशं सदा त्वदवस्थितिभूः त्वदवस्थानस्य आश्रयः मनोभूः आश्रयः यस्येति व्युत्पत्त्या त्वमेव मनोभूः मनसि भवतीति व्युत्पत्तौ त्वदभिन्ना-

सतस्तेऽथ सखीचित्ते प्रतिच्छाया स मन्मथः।
त्वयास्य समरूपत्वमतनोरन्यथा कथम्?॥ ४२ ॥
कः स्मरः कस्त्वमत्रेति सन्देहे शोभयोभयोः।
त्वय्येवार्थितया सेयं धत्ते चित्तेऽथवा युवाम् ॥४३॥
त्वयि न्यस्तस्य चित्तस्य दुराकर्षत्वदर्शनात्।
शङ्कया पङ्कजाक्षी त्वां दृगग्रेण स्पृशत्यसौ ॥४४॥
विलोकनात् प्रभृत्यस्या लग्न एवासि चक्षुषोः।
स्वेनालोकय शङ्का चेत् प्रत्ययः परवाचि कः?॥४५॥

---

षित्वाः परत्वादुभयथापि न पुरुषान्तरसेवाशङ्कालव इति भावः ॥ ४१ ॥

सत इति। अथ इति पक्षान्तरे अथवा सः मन्मथः सखीचित्ते सतः वर्त्तमानस्य ते तव प्रतिच्छाया प्रतिबिम्बं अन्यथा इत्थं न चेत् अतनोः अशरीरस्य अस्य त्वया समरूपत्वं कथं धर्म्यभावे धर्मानवकाशात् पूर्ववदेवाभिप्रायः ॥ ४२ ॥

क इति। अथवा हे देव! उभयोः युवयोः शोभया समानधर्मेण हेतुना अत्र अनयोः मध्ये स्मरः कः त्वमपि कः इति सन्देहे सति सेयं भैमी त्वय्येव अर्थितया चित्ते युवां त्वां कामञ्च, त्यदाद्येकशेषः। धत्ते त्वयि मन्मथयोः कतरः त्वम् इति सन्देहे तदुच्छेदस्य उभयोः सन्निधानात् अनुपेक्ष्यत्वं उभावपि चित्ते धत्ते न त्वं स्याः इत्यर्थः ॥ ४३ ॥

यदुक्तं नालोकत इत्यादि श्लोकत्रये तत्रोत्तरमाह। त्वयीति। पङ्कजाक्षी असौ दमयन्ती भैमी त्वयि न्यस्तस्य चित्तस्य दुराकर्षत्वदर्शनात् त्वां दृगग्रेण आपाङ्गेन शङ्कया स्पृशति अतो नोपालम्भावकाशः इति भावः ॥ ४४ ॥

विलोकनादिति। विलोकनात् प्रभृति दूत्यकालदर्शनात्

परीरम्भेऽनयारभ्य कुचकुङ्कुमसङ्क्रमम्।
त्वयि मे हृदयस्यैवं राग इत्युदितैव वाक्॥ ४६॥
मनसाऽयं भवन्नामकामसूक्तजपव्रती।
अक्षसूत्रं सखीकण्ठमुम्बत्येकावलिच्छलात्॥ ४७॥

---

आरभ्य काम्पिल्यात् प्रभृत्यात् इति भाष्यकारप्रयोगात् एव, प्रभृतितत्प्रयोगात् पञ्चमीति कैयटः। अक्ष्णाः चक्षुषोः लग्नः एव असि शङ्का चेत् मदुक्तौ अविश्वासः चेत् सत्यं परवाचि परोक्षौ कः प्रत्ययः का श्रद्धा? किन्तु स्वेन आलोकय स्वयमेव पश्य पुरस्थसदृशवस्तुनः कनीनिकायाः साचित्वामालोकत इत्यादि वाचो मुक्तिरमुक्तिः इत्यर्थः॥ ४५॥

अथ यदुक्तं रागं दर्शयता इत्यादि श्लोके तत्रोत्तरमाह परीरम्भ इति। अथ अनया प्रेषितया परीरम्भे आलिङ्गनकर्मणि कुचकुङ्कुमस्य संक्रमं संक्रान्तिम् आरभ्य तम् आदिं कृत्वा त्वयि विषये मे हृदयस्य रागः एव मे मम वाक् वचः उदिता एव उक्ता एव, अतः सखीषु अनुरक्ता न मयीति नोपालभ्ये इत्यर्थः॥ ४६॥

कान्तामन्वयत इति श्लोके यदुक्तं तस्योत्तरमाह मनसेति। अयम् इति हस्तेन पुरोवर्त्ति निर्देशः, सखीकण्ठः भैमीकण्ठनालः मनसा भवन्नामैव कामसूक्तं कामदेवप्रकाशकमन्त्रः तस्य जपः एव व्रतम् अस्य अस्तीति तद्व्रती सर्ववाचिकजपानां मानसिकजपस्य सहस्रगुणत्वान्मनोग्रहणम् एकावलिच्छलात् एकयष्टिकहारव्याजात् अक्षसूत्रं जपसङ्ख्यानार्थमक्षरम् अक्षमालां चुम्बति स्पृशति धारयतीत्यर्थः। अथ सखीनामग्रहस्य कैवल्यात् त्वन्नामग्रहस्य नैरन्तर्य्यादयं उपालम्भात् सम्भवतीति भावः॥ ४७॥

अध्यासिते वयस्याया भवता महता हृदि।
स्तनावन्तरसम्भान्तौ निष्क्रान्तौ ब्रूमहे वहिः॥ ४८॥
कुचौ दोषोज्झितावस्याः पीडितौ व्रणितौ त्वया।
कथं दर्शयतामास्यं वृहन्तावावृतौ ह्रिया॥ ४९॥
इत्यसौ कलया सूक्तैः सिक्तः पीयूषवर्षिभिः।
ईदृगेवेति पप्रच्छ प्रियामुन्नमिताननाम्॥ ५०॥
वभौ च प्रेयसीवक्त्रं पत्युरुन्नमयन् करः।

---

अस्याः पीनस्तनेत्यादिश्लोकोक्तमुक्तवैपरीत्यापादनेन परिहरति अध्यासित इति। वयस्यायाः सख्याः हृदि महता भवता अध्यासिते अधिष्ठिते सति स्तनौ अन्तरसम्भान्तौ असम्भवन्तौ अनवकाशौ वहिर्निष्क्रान्तौ इति ब्रूमहे अतोऽत्र यानेकशरणः महाराजः इति भावः॥ ४८॥

अधिगत्येत्यादि श्लोकोक्तकुवचनैर्मुख्योपालम्भस्योत्तरमाह कुचाविति। वृहन्तौ महान्तौ दोषौ तौ दोषोज्झितौ दोषवर्जितौ अस्याः कुचौ त्वया पीडितौ बाधितौ व्रणितौ क्षतौ दूषितौ च, व्रणशब्दात् तत्करोतीति ण्यन्तात् कर्मणि क्तः, णाविष्टवद्भावात् चिणवतो लुक्। अतः ह्रिया हेतुना आवृतौ आस्यं कथं दर्शयतां दोषोदये लज्जया न परस्मै मुखं प्रदर्शयतीति भावः। अयमपि स्वयं कृतापराध एवेत्यर्थः, दर्शेर्ण्यन्तात्कर्मणि लोटि तामादेशः॥ ४९॥

इतीति। इति इत्थम् असौ राजा कलया प्रियायाः सख्याः पीयूषवर्षिभिः अमृतस्यन्दिभिः सूक्तैः सिक्तः सन् उन्नमितं स्वपाणिना उन्नतम् आननं मुखं यस्याः तां प्रियाम् ईदृक् एव इति मिथ्यम् एव इति कृत्वा पप्रच्छ॥ ५०॥

वभाविति। प्रेयसीवक्त्रं मुखं उन्नमयन् पत्युः करः

चिरेण लब्धसन्धानमरविन्दमिवेन्दुना ॥ ५१ ॥
क्षीणा च स्मयमाना च नमयन्ती पुनर्मुखम्।
दमयन्ती मुदे पत्युरत्युच्चैरभवत्तदा ॥ ५२ ॥
भूयोऽपि भूपतिस्तस्याः सखीमाह स्म सस्मितम्।
परिहासविलासाय स्पृहयालुः सहप्रियः ॥ ५३ ॥
चन्तुं मन्तुं दिनस्यास्य वयस्येयं व्यवस्यतात्।
निशीव निशिधात्वर्थं यदाचरति नात्र नः ॥ ५४ ॥

---

चिरेण महता कालेन इन्दुना लब्धं सन्धानं योगः येन तत् अरविन्दम् इव बभौ, अभूतोपमेति च अत्यन्तमसम्भवसम्बन्धो-क्तेरतिशयोक्तिभेदः इत्यपरे ॥ ५१ ॥

क्षीणेति। तदा तत्काले क्षीणा क्षीता, विकल्पात् निष्ठा-नत्वम्। स्मयमाना मन्दं हसन्ती च पुनः मुखं नमयन्ती दमयन्ती पत्युः अत्युच्चैः उच्चतरायै मुदे आनन्दाय अभवत् ॥ ५२ ॥

भूय इति। प्रियया सह वर्त्तते इति सहप्रियः, तेन सहेत्यादिना बहुव्रीहिः। भूपतिः परिहासविलासाय स्पृह-यालुः केलिहरणम् अपृच्छत्, स्पृहेरीप्सित इति सम्प्रदानत्वा-च्चतुर्थी, स्पृहि गृहीत्यादिना आलुच्। भूयः अपि तस्याः प्रियायाः सखीं कलां सस्मितम् आह स्म ॥ ५३ ॥

चन्तुमिति। इयं वः वयस्या सखी अस्य दिनस्य मन्तुम् अपराधं चन्तुं व्यवस्यतात् प्रवर्त्ततां, तातङादेशः। यत् यस्मात् निशि इव रात्री इव अत्र दिने नः अस्माकं निशि-धात्वर्थः निशिधातोर्निंशिः चुम्बन इति धातोरर्थं चुम्बनं न आचरति तत्र न किञ्चित् निमित्तं पश्यामः इति भावः ॥ ५४ ॥

दिनेनास्या मुखस्येन्दुः सखा यदि तिरस्कृतः ।
तत्कृताः शतपत्राणां तन्मित्राणामपि श्रियः ॥ ५५ ॥
लज्जितानि जितान्येव मयि क्रीडितयाऽनया ।
प्रत्यावृत्तानि तत्तानि पृच्छ सम्प्रति कं प्रति ॥ ५६ ॥
निशि दष्टाधरायापि सैषा मह्यं न कुप्यतु ।
क्व फलं दश्यते बिम्बीलता कीराय कुप्यति ॥ ५७ ॥
शोणोपदसुचिह्ना श्रीश्रोरिता कुम्भिकुम्भयोः ।
पश्यैतस्याः कुचाभ्यां तन्नृपस्तौ पीडयामि न ॥ ५८ ॥

---

दिनेनेति। अथ दिनेन अस्याः वः सख्याः मुखस्य इन्दुः सखा सदृङ्मात्रः चेत् यदि तिरस्कृतः यदि अधमः सः हि तस्य मुखस्य मित्राणां शतपत्राणाम् अपि श्रियश्च तत्कृताः ईदृशः एव, शुक्लः सहस्रपत्रमित्राण्येवोपकृतानि रात्रौ तु विपत्रमित्यहो महान् विवेकः इति भावः ॥ ५५ ॥

लज्जितानीति। अथ दिनेन अस्याः वः सख्याम् अपि लज्जितानि इति, किञ्च क्रीडतया रात्रौ क्रीड़ितवत्या, कर्त्तरि क्तः। अनया वः सख्याः लज्जितानि व्रीड़ितानि। भावे क्तः। तानि निरस्तानि एव सम्प्रति कं प्रति कम् उद्दिश्य तानि लज्जितानि प्रत्यावृत्यानि प्रत्यागतानि, तत्प्रत्यावृत्तेः निमित्तं पृच्छ ॥ ५६ ॥

निशीति। सा एषा प्रिया निशि दष्टः अधरः येन तस्मै अपि मह्यं न कुप्यति, क्रुधद्रुहेत्यादिना सम्प्रदानत्वाच्चतुर्थी। विम्बीलता रक्तविम्बीफलं विम्बीलता चिम्बिका पीलुफलेत्यमरः। फलं स्वफलं, दश्यते दन्तैः चीयते कीराय शुकाय कुप्यति न क्वापीति दृष्टान्तालङ्कारः ॥ ५७ ॥

यदुक्तं कलया कुचौ दोषोज्झितावस्याः पीड़ितौ प्रक्षितौ

अधरामृतपानेन ममास्यमपराध्यतु।
मूर्धा किमपराद्धं यः पादौ नाप्नोति चुम्बितुम्॥ ५९॥
अपराद्धं भवद्वाणीश्राविणा पृच्छ किं मया।
वीणाऽऽह परुषं यन्मां कलकण्ठी च निष्ठुरम्॥ ६०॥
सेयमालिजने स्वस्य त्वयि विश्वस्य भाषताम्।
ममताऽनुमतास्मासु पुनः प्रस्मर्य्यते कुतः?॥ ६१॥

---

त्वयेति तत्रोत्तरमाह शृणोति। एतस्याः कुम्भिकुम्भयोः गजकुम्भयोः सम्बन्धि शृणीपदानि अङ्कुशक्षतानि एव सुचिह्नानि यस्याः सा श्रीः शोभा सम्पत्तिश्च चोरिता अपहृता, तत् तस्मात् चौर्य्योत्थितः नृपः अहं तौ कुचौ पीड़यामि दुष्टनिग्रहाधिकारत्वात् राज्ञामिति भावः॥ ५८॥

अधरेति। मम अस्यम् अधरामृतपानेन हेतुना अपराध्यतु अनिष्टाचरणात् अपराधि अस्तु। मूर्धा किम् अपराद्धं कः अपराधः, यः मूर्द्धा पादौ चुम्बितुं स्प्रष्टुं न प्राप्नोति पदाहतिं न लभते इत्यर्थः। प्रकृतभावान्नाद्यापि विस्रम्भसम्भोगसुखलाभः इति भावः॥ ५९॥

अपराद्धमिति। हे कले! पृच्छ सखीम् इति शेषः। भवद्वाक्यं शृणोतीति तत् श्राविणा मया किम् अपराद्धं न किञ्चिदपराद्धम् इत्यर्थः। कुतः? यत् यस्मात् वीणा मां परुषम् आह स्म, कलकण्ठी अपि कोकिला च निष्ठुरम् आह, अतः तयोः पारुष्यदोषादरुच्या त्वद्वाणी शुश्रूषयिषुः अहं सम्भाषणेन अनुकम्पनीयः इति भावः॥ ६०॥

सेति। हे कले! सा इयं प्रिया स्वस्य आलिजने त्वयि विश्वस्य विस्रभ्य भाषतां तत् किं न अनुमन्यते, किन्तु अस्मासु विषये ममता अनुमता ममता मम अयम् इत्यभिमानः कुतः

अथोपवदने भैम्याः स्वकर्णोपनयच्छलात्।
सन्निधाप्य श्रुतौ तस्या निजास्यं सा जगाद ताम् ॥६२॥
अहो मयि रहोवृत्तं धूर्त्ते किमपि नाभ्यधाः।
आस्व सत्यमिमं तत्ते भूपमेवाभिधापये ॥ ६३ ॥
स्मरशास्त्रमधीयाना शिक्षिताऽसि मयैव यम्।
अमोपि सोऽपि कृत्वा किं दाम्पत्यव्यत्ययस्त्वया ॥६४॥

---

हेतोः पुनः प्रस्मर्य्यते, सन्तोषः तुष्टिः मनाक् अस्यः अपि वरम्, अन्यथा तु कथं जीवेयम् इति भावः ॥ ६१ ॥

अथेति। अथ राजवाक्यानन्तरं सा कला भैम्याः उपवदने वदनसमीपे, सामीप्येऽव्ययीभावः, तृतीयासप्तम्योर्बहुलमिति विकल्पात् सप्तम्यां नाभावः। स्वकर्णस्य उपनयच्छलात् उपकर्णव्याजात् तस्याः भैम्याः श्रुतौ कर्णौ निजास्यं स्वमुखं सन्निधाप्य सन्निहितं कृत्वा तां भैमीं जगाद ॥ ६२ ॥

अहो इति। हे धूर्त्ते! वञ्चने! मयि विषये रहोवृत्तं रहस्यचेष्टितं किम् अपि न अभ्यधाः आस्व तिष्ठ सत्यम् इमं प्रति भूपम् एव तत्ते चेष्टितम् अभिधापये भूपम् एव ख्यापयिष्यामि इत्यर्थः। गतिबुद्धीत्यादिना शब्दकर्मत्वादणि कर्त्तुः कर्मत्वम् ॥ ६३ ॥

स्मरेति। स्मरशास्त्रं वात्स्यायनादिकामतन्त्रम् अधीयाना मत्तः अभ्यस्ता त्वं यं मया एव शिक्षिता उपदिष्टा असि, ब्रुविशासीति शासिधर्मग्रहणाद् द्विकर्मकत्वम्, अप्रधानो दुहादीनामप्रधाने कर्मणि क्तः। सः कोपः दाम्पत्यव्यत्ययः पुज्यभावः त्वया किं कृत्वा किं मत्वा किमर्थम् इत्यर्थः। शास्त्रशब्देन विशेषलक्षणैः अपि आगः अपि अपराधः अपि किम् इति न कृतः कृतः न उच्यते तत् ब्रूहि इत्यर्थः ॥ ६४ ॥

मौनिन्यामेव सा तस्यां तदुक्तीरिव शृखती।
वादं वादं मुहुश्चक्रे हुं हुमित्यान्तरान्तरा ॥ ६५ ॥
अथासावभिसृत्यास्या रतिप्रागल्भ्यशंसिनी।
सख्या लीलाम्बुजाघातमनुभूयालपन्नृपम् ॥ ६६ ॥
दृष्टं दृष्टं महाराज ! तदर्थाभ्यर्थना क्रुधा।
यत्ताड़यति मामेवं यद्वा तर्जयति भ्रुवा ॥ ६७ ॥

---

यदुक्तं भूपमेवाभिभाषय इति तदर्थमुपोद्घातत्वेन किञ्चित् चपलामित्याह मौनिन्यामिति। सा कला तस्यां भैम्यां मौनिन्यां तूष्णीम्भूतायाम् इव तदुक्तीः तद्वाक्यानि शृखती चान्तरान्तरा मध्ये मध्ये वादं वादं प्रत्युत्तरम् इव चोदित्वा, आभीक्ष्ण्ये णमुल्। मुहुः पुनः पुनः हुं हुम् इति चक्रे हुङ्कारैश्च तद्वाक्याङ्गीकारं चकार इत्यर्थः। ६५ ॥

अथेति। अथ एवंकल्पनानन्तरम् अस्याः भैम्याः रतिप्रागल्भ्यं शङ्कते इति तत् शङ्किनी असौ कला सख्याः भैम्याः सकाशात् लीलाम्बुजानाम् आघातं ताड़नम् अनुभूय प्राप्य अभिसृत्य उपसृत्य नृपम् आलपत् ॥ ६६ ॥

तदेवाह षड्भिः दृष्टमित्यादि। हे महाराज ! दृष्टं दृष्टं, सम्भ्रमे द्विरुक्तिः। किं दृष्टं तत्राह—त्वदर्थस्य त्वदपेक्षितार्थस्य अभ्यर्थना क्रियताम् इति प्रार्थिते सति क्रुधा यत् एव मां ताड़यति यत् वा मां तर्जयति तत् उभयं दृष्टं खलु इत्यर्थः, एतस्य स्ववाक्यश्रवणार्थमिति भावः। तर्जतेरनुदात्तत्वेऽपि च स्यादुदात्तेष्वपि टित्करणे नानित्यताज्ञापनात् तच्च परस्मैपदमपि अतएव तर्जयते भर्त्सयते तर्जयतीत्यपि च दृश्यते इति भट्टमल्लः ॥ ६७ ॥

वदत्यचिह्नि चिह्नेन त्वया केनैष नैषधः ।
शङ्के शक्रः स्वयं कृत्वा मायामायातवानयम्॥ ६८ ॥
स्वर्णदीस्वर्णपद्मिन्याः पद्मदानं निदानताम् ।
नयतीयं त्वदिन्द्रत्वे दिवश्चागमनस्य ते ॥ ६९ ॥
भाषते नैषधच्छाया मायाऽमायि मया हरेः ।
आह चाहमहल्यायां तस्याकर्णितदुर्णया ॥ ७० ॥
सम्भावयति वैदर्भी दर्भाग्राभामतिस्तव ।
जम्भारित्वं कराम्भोजाद्दम्भोलिपरिरम्भिणः ॥ ७१ ॥

---

किं तद्वाक्यं तदाह त्रिभिर्वदतीत्यादि । हे राजन् ! भैमी वदति आत्मानम् इति शेषः । तदेवाह—हे कले ! त्वया एषः पुरुषः केन चिह्नेन सः नैषधः इति अचिह्नि चिह्नितः प्रत्यभिज्ञातः, किन्तु अयं स्वयं शक्रः एव मायां नलवेषं कृत्वा आयातवान् इति शङ्के ॥ ६८ ॥

स्वरिति । किञ्च, हे महाराज ! इयं भैमी ते तव स्वर्णद्याम् आकाशगङ्गायां स्वर्णपद्मिन्याः पद्मस्य दानं दिवः अन्तरीक्षात् आगमनस्य त्वदिन्द्रत्वे निदानतां मूलकारणतां नयति अनिर्दिश्य एतदुभयं न सम्भवति इति भावः ॥ ६९ ॥

भाषते इति । हे महाराज ! भैमी भाषते । किमिति ? हे नल ! नैषधच्छाया नलाकारः हरेः इन्द्रस्य माया मया अमायि अनुमिता, माङः कर्मणि लुङ् णिणि युगागमः आह च अन्यच्चाह इत्यर्थः । अहल्यायां तस्य इन्द्रस्य आकर्णितः दुर्णयः दुश्चेष्टितं यया सा, सापेक्षत्वेऽपि गमकत्वात् समासः । पारदार्य्यपरा भीतिरप्यस्य नास्ति उपसर्गादसमासवीणोपदेशस्येति भावः ॥ ७० ॥

सम्भावयतीति । किञ्च, दर्भाग्राभा कुशाग्रसदृशी मतिः

अनन्यसाक्षिकाः साक्षात् तद् व्याख्याय रहःक्रियाः।
शक्रातङ्कं नुदैतस्या यदि त्वं तत्त्वनैषधः॥ ७२॥
इति तत्सुप्रयुक्तार्थं निह्नुतीकृतकैतवाम्।
वाचमाकर्ण्य तद्भावे संशयालुः शशंस सः॥ ७३॥
स्मरसि छद्मनिद्रालुर्मया नाभौ शयार्पणात्।
यदानन्दोल्लसल्लोमा पद्मनाभीभविष्यसि॥ ७४॥

---

यस्याः सा सूक्ष्मबुद्धिः वैदर्भी दम्भोलिः वज्रायुधं वज्ररेखाङ्क परिरभ्यते यत् तस्मात् परिरम्भिणः कराम्भोजात् आलिङ्गनात् तव जम्भारित्वम् इन्द्रत्वं सम्भावयति अनुमीयते वज्रहस्तः पुरन्दरः इति श्रुतेरिति भावः॥ ७१॥

अनन्येति। हे राजन्! तत्त्वनैषधः परमार्थनलः यदि तत् तर्हि अनन्यसाक्षिकाः स्वमात्रसंवेद्याः रहःक्रियाः रहस्यव्यापारान् साक्षात् स्वयमेव व्याख्याय उक्त्वा एतस्याः शक्रायाः इन्द्रत्वोत्प्रेक्षायाः आतङ्कं भयं नुद निवर्त्तय॥ ७२॥

इतीति। इति इत्थं तया कलया सुप्रयुक्तार्थं युक्तमुक्तत्वेन निह्नुतीकृतकैतवां निह्नुतकपटशङ्कां वाचम् आकर्ण्य तस्याः भैम्याः भावे अभिप्राये संशयालुः किं मयि इन्द्रत्वं शङ्कितं स्यात् इति संशयानः सन् सः नलः शशंस संशयोच्छेदकवाक्यम् उवाच इत्यर्थः॥ ७३॥

अथैतदेव विद्वान् विंशत्याः श्लोकैः प्रपञ्चेनाह स्मरसीत्यादि। हे प्रिये! छद्मना कपटेन निद्रालुः सुप्ता, स्पृहिगृहीत्यादिना निपूर्वाद्द्रातेरालुच्। तदा मया नाभौ शयस्य पाणेः अर्पणात् आनन्देन स्पर्शसुखेन उल्लसल्लोमा प्रहृष्टलोमा सती पद्मं नाभौ यस्याः पद्मनाभिः पाणेः एव पद्मत्वादिति

जानासि ह्रीभयव्यग्रा यन्नवे मन्मथोत्सवे।
सामिभुक्तेव मुक्ताऽसि म्रदि! खेदभयान्मया॥ ७५॥
स्मर जित्वाऽऽजिमितस्त्वां करे मत्पदधाविनि।
अङ्गुलीयुगयोगेन यदाश्लिष्यं घने जने॥ ७६॥
वेत्थ मानेऽपि मत्त्यागदूना त्वं माच्च तन्मिथः।
मद्दृष्टाऽऽलेख्ये पश्यन्ती व्यवधा रेखयाऽन्तरा॥ ७७॥

---

भावः। पद्मनाभः विष्णुश्च सः अपि छद्मनिद्रालुः इति भावः। योगविभागात् समासान्तोऽप्रत्ययः, उभयत्राप्यभूततद्भावे च्विः। पद्मनाभोभविष्यसि यत् पद्मनाभोभूतासीति यदित्यर्थः तत् स्मरसि तत् प्रत्यभिजानासि किमित्यर्थः। अभिज्ञाने च न लडिति अभिज्ञानवचनयोगाद्भूतार्थे लट्॥ ७४॥

जानासीति। हे म्रदि! कोमलाङ्गि! अतिपीड़ां न सहते इत्यर्थः। न चेत् मन्मथोत्सवे प्रथमसमागमे ह्रीभयाभ्यां व्यग्रा भ्रान्ता खेदः सत्त्वक्षयः तद्भयात् सामिभुक्ता अर्द्धभुक्तेव मया मुक्तासि अन्यथा वैरस्यात् इति भावः। तदुक्तं रतिरहस्ये—"सहसा वाप्युपक्रान्ता कन्याचित्तमविन्दत। भयाभित्रसमुद्वेगसद्यो द्वेषञ्च गच्छति। सा प्रीतियोगमप्राप्य तेनोद्वेगेन दूषिता। पुरुषद्वेषिणी वास्तु विद्विष्टा वा ततोऽन्यथा॥" इति। तत् जानासि स्मरसि किमित्यर्थः॥ ७५॥

स्मरेति। हे प्रिये! आजिं युद्धं कृत्वा इतः समागतः अहं जने घने बहुले सति गात्रालिङ्गनप्रतिबन्धोक्तेः मत्पादं प्रतिधाविनि करे अङ्गुलियुगयोगेन अङ्गुलिद्वययोजनया यत् आश्लिष्यं आश्लिष्टवान् अस्मि तत् स्मर॥ ७६॥

वेत्थेति। हे प्रिये! माने प्रणयकोपे मत्त्यागदूना मद्विर-

प्रस्मृतं तत्त्वया तावद्यन्मोहनविमोहितः।
अलसोऽधरपानेषु रसनामपिबं तव॥ ७८॥
त्वत्कुचार्द्रनखाङ्कस्य मुद्रामालिङ्गनोत्थिताम्।
स्मरेः स्वहृदि यत् स्मेरः सखीं शिल्पं तवाब्रुवम्॥७९॥
त्वयाऽन्याः क्रीडयन्मध्ये मधुगोष्ठि रुषेक्षितः।
वेत्सि तासां पुरो मूर्ध्ना त्वत्पादे यत्किलास्खलम्॥८०॥

---

इतप्ता मिथः रहसि, मिथोऽन्योन्यं वा रहस्यपीत्यमरः। स्वम् आत्मानं मां च आलेख्ये चित्रे लिखित्वा पश्यन्ती मद्दृष्टा मया वीक्षिता सती अन्तरा लिखितयोर्मध्ये रेखया व्यवधा अवाप्य विहितावकाशः तत्रापि कोपः प्रकटितः इत्यर्थः। व्यवपूर्वाद्दधातेर्लुङ् सिपि गास्थेत्यादिना सिचो लुक् वेत्थ इति काकुः॥ ७७॥

प्रस्मृतमिति। हे प्रिये! मोहने सुरते विमोहितः सन्नहं अधरपानेषु अलसः तावन्मात्रेण अलसः, सम्बन्धसामान्ये षष्ठी, पूरणेत्यादिना षष्ठीसमासनिषेधख्यापनात् षष्ठीति केचित्। तव रसनां यत् अपिबम् तु तावत्त्वया प्रस्मृतं काकुः॥ ७८॥

त्वदिति। हे प्रिये! स्वस्य आत्मनः मे हृदि वक्षसि आलिङ्गनेन उत्थितां उत्पन्नां सङ्क्रान्ताम् इत्यर्थः, त्वत्कुचयोः आर्द्रनखाङ्कस्य मुद्रां सन्निवेशं स्मेरः सस्मितः सन् सखीं प्रति तव शिल्पं शिल्पनिर्माणं संक्रमणरूपशब्दम् अब्रुवं तत् स्मरेः॥७९॥

त्वयेति। हे प्रिये! मध्ये मधुगोष्ठ्यां मध्ये, मधुगोष्ठि पानगोष्ठिमध्ये इत्यर्थः। पारे मध्ये षष्ठ्या वेत्यव्ययीभावः, गोस्त्रियोरुपसर्जनस्येति ह्रस्वत्वम्। अन्याः स्त्रियः क्रीडयन् विनोदयन् अहं त्वया रुषा रोषेण ईक्षितः सन् तासां पुरः अग्रे त्वत्पादे यत् आस्खलम् किल खलु तत् वेत्सि स्मरसि किमित्यर्थः॥८०॥

वेत्थ मय्यागते प्रोष्य यत्त्वां पश्यति हार्दिनि।
अचुम्बीरालिमालिङ्ग्य तस्यां केलिमुदा किल॥ ८१॥
जागर्त्ति तत्र संस्कारः स्वमुखान्मद्वदानने।
निक्षिप्याथाचिषं यत्त्वां न्यायात्ताम्बूलफालिकाः॥८२॥
चित्ते तदस्ति कच्चित्ते नखजं मयि यत् क्रुधा।
प्राग्भवाधिगमागःस्थे त्वया शम्बाकृतं क्षतम्?॥ ८३॥

---

वेत्थेति। हे प्रिये! हृदयस्य कर्म हार्दं प्रेम, प्रेमा ना प्रियता हार्दमित्यमरः। हार्दिनि मयि प्रोष्य प्रत्यागते त्वां पश्यति सति आलिं सखीम् आलिङ्ग्य तस्यां केलिमुदा क्रीडाहर्षेण अचुम्बीः त्वमिति भावः॥ ८१॥

जागर्त्तीति। हे प्रिये! ताम्बूलफालिका नागवल्लीदलवल्लिका, ताम्बूलवल्ली ताम्बूली नागवल्ली त्यपीत्यमरः। स्वमुखात् भवदानने निक्षिप्य न्यस्य ताः ताम्बूलवल्लिकाः न्यायात् निक्षिप्य द्रव्यप्रत्यर्पणधर्मात् यत् अयाचिषं तत्र याचनं संस्कारोपासना जागर्त्ति उत्पद्यते स्मरसि किमित्यर्थः॥ ८२॥

चित्ते इति। हे प्रिये! मयि प्राग्भवेन प्रथमभावाभिगमनातिसुखलाभेन आगसि तिष्ठतीति आगःस्थे अपराधे सति त्वया क्रुधा क्रोधेन नखजं क्षतं शम्बाकृतं द्विगुणीकृतं आनुलोम्यातिलोमाभ्यां द्विकृष्टं चेत् शम्बाकृतमुच्यते द्विगुणीकृते तु सर्वं पूर्वं शम्बाकृतमपीत्यमरः। कृञो द्वितीयतृतीयशम्बबीजात् कृषाविति डाच्प्रत्ययः। स्वमुखन्तु शमकरणं ते तव चित्ते अस्ति कच्चित्?। ८३॥

स्वदिग्विनिमयेनैव निशि पार्श्वविवर्त्तिनोः ।
स्वप्नेष्वप्यस्तवैमुख्ये सख्ये सौख्यं स्मरावयोः ॥ ८४ ॥
क्षणं प्राप्य सदस्येव नृणां विमनितेक्षणम् ।
दर्शिताधरमद्दंशा स्मर यन्मामतर्जयः ॥ ८५ ॥
तथाऽवलोक्य लीलाब्जनालभ्रमणविभ्रमात् ।
करौ योजयताऽध्येहि यन्मयाऽसि प्रसादिता ॥ ८६ ॥
ताम्बूलदानं सन्न्यस्तकरजं करपङ्कजे ।
न मम स्मरसि प्रायस्तव नैव स्मरामि तत् ? ॥ ८७ ॥

---

स्वेति । हे प्रिये ! स्वदिशोः स्वस्वशयनदेशयोः विनिमयेन एव विपरीतवर्त्तनायैवेति पार्श्ववर्त्तिनोः पूर्वावस्थायोव पार्श्वे विवर्त्तते न अन्यथा वैमुख्यप्रसङ्गादिति भावः । तयोः आवयोः स्वप्नेषु स्वापकालेषु अपि अस्ते उक्तरीत्या निरस्ते वैमुख्ये पराङ्मुख्ये सख्ये मेलने सौख्यं सुखं स्मर ॥ ८४ ॥

क्षणमिति । हे प्रिये ! सदसि तिष्ठतीति सदसी एव सखीसमागमता एव नृणां सखीजनानां विमनितानि विमानितानि, विमनशब्दात्तत् करोति इत्यन्तादिष्टवद्भावे टिलोपः, कर्मणि क्तः । तानि ईक्षणानि यस्मिन् तम् आसक्तजनदृष्टिकाङ्क्षिणम् क्षणम् अवसरं प्राप्य दर्शिता अधरे मद्दंशा मत्कृतदंशनं यया सा सती यत् माम् अतर्जयः तत् स्मर ॥ ८५ ॥

तथेति । हे प्रिये ! तथा तर्जनम् अवलोक्य लीलाब्जनालस्य भ्रमणम् एव विभ्रमः विलासः तस्मात् तद्व्याजादित्यर्थः, करौ पाणी योजयता अञ्जलिं बध्नता मया यत् प्रसादिता प्रसन्नीकृता तत् अध्येहि स्मर ॥ ८६ ॥

ताम्बूलेति । हे प्रिये ! तव करपङ्कजे त्वत्पाणिपद्मे सन्न्यस्तकरजं विरचितनखाङ्कं मम कर्त्तुः ताम्बूलदानं विटि-

तदध्येहि मृषोद्यं मां हित्वा यत्र गता सखीः।
तत्रापि मे गतस्याग्रे लीलयैवाच्छिनस्तृणम्॥ ८८॥
स्मरसि प्रेयसि! प्रायो यद्द्वितीयरतासहा।
शुचिरात्रौत्युपालब्धा त्वं मया पिकनादिनी?॥ ८९॥
भुञ्जानस्य नवं निम्बं परिवेविषती मधौ।
सपत्नीष्वपि मे रागं सम्भाव्य स्मरथः स्मरेः॥ ९०॥

---

कार्पण्यं प्रायः प्रायेण न स्मरसि? तव च तत् ताम्बूलदानं नैव स्मरामि? स्मराम्येव, उभयत्र काकुः। उभय सुभावपि स्मरावः एवेत्यर्थः॥ ८७॥

तदिति। हे प्रिये! यत् च मृषोद्यं मां हित्वा सखीः गता तत्रापि गतस्य मे मम अग्रे लीलया विनोदेन एव तृणम् आच्छिनः तच्छेष्टितम् अध्येहि स्मर, इकि स्मरण इतिधातो-रदादित्वाल्लोटि हिरादेशः॥ ८८॥

स्मरसीति। प्रेयसि! प्रियतमे! द्वितीयस्य रतस्य असहा दुर्बलत्वात् अक्षमा अन्यत्र अपर्याप्ता पिकवत् नदतीति पिकनादिनी अन्यत्र पिकनादोऽस्ति अस्यामिति च पिकना-दिनी त्वं मया शुचिरात्रौ ग्रीष्मरात्रौ, कृदिकारादीकार इति। यत् उपालब्धा तत्कल्यासि इत्याक्षिप्ता तत् प्रायः प्रायेण स्मरसि किम्?॥ ८९॥

भुञ्जानस्येति। हे प्रिये! भुञ्जानस्य अभ्यवहरतः मम, मधौ चैत्रे सति पुंसि चेति पुंल्लिङ्गतो नवं निम्बं पिचुमर्दं पिचुमर्दश्च निम्ब इत्यमरः। परिवेविषतीति ददती इङ्ग्यापारवती त्वं सपत्नीषु अपि मे रागम् अनुरागं सम्भाव्य कल्पयित्वा कृता इति शेषः। कस्य कथः रोषान् स्मरेः

स्मर शार्करमास्वाद्य त्वया राद्धमिति स्तुवन् ।
स्वनिन्दारोषरक्षात्तु यदभैषं तवाधरात् ॥ ८१ ॥
मुखादारभ्य नाभ्यन्तं चुम्बं चुम्बं न तृप्तवान् ।
न प्रापं चुम्बितुं यत्ते धन्या तच्चुम्बतु स्मृतिः ॥ ८२ ॥
किमपि स्मरकेलिं तं स्मर यत्र भवन्निति ।
मया विहितसम्बुद्धिर्व्रीड़िता स्मितवत्यसि ॥ ८३ ॥
नीवदाचिवुकं यत्र मदास्येन श्रमाम्बुना ।

---

मधुरागिणो मे मधौ सपत्नीति कल्पयन्त्यास्तव पिचुमर्दपरि-वेषवत्कृपः कोपः न युक्तः इति भावः ॥ ८० ॥

स्मरेति । हे प्रिये ! त्वया राद्धं निष्पादितं शर्करायाः विकारं शार्करं पायसादिकम् आस्वाद्य इति स्तुवन् स्वनिन्दा-रोषेणैव रक्षात् रक्षणात् तव अधरात् यत् अभैषं भीतोऽहम् इति शार्करस्तुत्यभिप्रायेण अधरस्य निन्दार्हत्वादिति भावः । बिभेतेर्लुङ् मचो मादेशश्च । तु तच्च स्मर ॥ ८१ ॥

मुखादिति । मुखात् आरभ्य नाभ्यन्तं नाभिपर्य्यन्तं कुचादिकम् अङ्गं चुम्बं चुम्बं चुम्बित्वा चुम्बित्वा, आभीक्ष्ण्ये णमुल् । न तृप्तवान् न तृप्तः सन् अपि ते तव यत् अङ्गं चुम्बितुं न प्रापं यत् चुम्बनं न प्रापमित्यर्थः, पापिष्ठाभि-षेधादिति भावः । तत् ते धन्या भाग्यवती स्मृतिः चुम्बतु ॥८२॥

कमिति । हे प्रिये ! किम् अपि अवाच्यं तं स्मरकेलिं कामक्रीड़ां, स्मरकेलिः परीहास इति यादवः । यत्र यस्मिन् पुरुषायिते त्वयि मया भवन्निति पुंलिङ्गनिर्देशेऽपि विहितस-म्बुद्धिः कृतामन्त्रणा सती व्रीड़िता लज्जिता स्मितवती च असि पुरुषायितत्वात् व्रीड़ा हर्षात् स्मितम् ॥ ८३ ॥

नीवदिति । हे प्रिये ! यत्र क्षणे मदास्येन कस्तूरीकलु-

स्मर हारमणौ दृष्टं स्वमास्यं तत्क्षणोचितम् ॥८४॥
वनकेलौ स्मराश्वत्थदलं भूपतितं प्रति ।
देहि मह्यमुदस्येति मत्त्रिरा व्रीड़िताऽपि यत् ॥ ८५ ॥
इति तस्या रहस्यानि प्रिये शंसति सान्तरा ।
पाणिभ्यां पिदधे तस्याः श्रवसी व्रीडशीलता ॥ ८६ ॥
कर्णौ पीड़यतो सख्या वीक्ष्य नेत्रासितोत्पले ।
अभ्यसोदयतां भैमीकरकोकनदे नु तौ ॥ ८७ ॥

---

षितेन, मदो रेतसि कस्तूर्य्यामिति विश्वः। अमास्यु ना स्वेदेन चिवुकम् ओष्ठाधःप्रदेशपर्य्यन्तम्, ओष्ठपर्य्यन्तम् अधरम् अधस्तात् चिवुकमित्यमरः। नीलत् नीलीभवत् नीलवर्ण इति धातोर्लट् शत्रादेशः। स्वम् आस्यं हारमणौ स्वस्मेति भावः। दृष्टं तत्क्षणम् आस्यदर्शनक्षणः तस्य उचितम् उचितकाल्यं तादृङ्मुखदर्शनरूपम् एव स्मर ॥ ८४ ॥

वनेति। किञ्च, वनकेलौ प्रमदवनविहारकाले भूपतितम् अश्वत्थदलं प्रत्युदस्य उद्धृत्य मह्यं देहीति मत्त्रिरा मदुक्त्या व्रीड़ितासीति सरहस्याङ्गदानेन याचनाभिप्रायज्ञानादिति भावः। तत् स्मर। अत्र सामुद्रिकाः—"अश्वत्थदलसङ्काशं गुह्यं गूढ़मनिश्चितम्। यस्याः सा सुभगा कन्या पूर्वपुण्यैरवाप्यते ॥" इति ॥ ८५ ॥

इतीति। इति इत्थं तस्याः भैम्याः रहस्यानि रहस्यचेष्टितानि प्रिये नले शंसति कथयति सति सा भैमी अन्तरा कथामध्ये व्रीडशीलता लज्जापरवशा सती तस्याः कलायाः श्रवसी कर्णौ पाणिभ्यां पिदधे छादयामास ॥ ८६ ॥

कर्णाविति। भैम्याः करावेव कोकनदे रक्तोत्पले कर्त्तृणि, अथ रक्तसरोरुहे रक्तोत्पलं कोकनदमित्यमरः। विशिष्टप-

तत्प्रविष्टं सखीकर्णौ पत्युरालपितं ह्रिया।
पिदधाविव वैदर्भी स्वरहस्याभिसन्धिना ॥ ९८ ॥
तमालोक्य प्रियाकेलिं नले सोलुण्ठहासिनि।
आरात्तत्त्वमबुद्धाऽपि सख्यः सिस्मियिरेऽपराः ॥ ९९ ॥
दम्पत्योरुपरि प्रीत्या ता धराप्सरसस्तयोः।
ववृषुः स्मितपुष्पाणि सुरभीणि मुखानिलैः ॥ १०० ॥
तदास्यहसिताज्जातं स्मितमासामभासत।
आलोकादिव शीतांशोः कुमुदश्रेणिजृम्भणम् ॥ १०१ ॥

---

ऽत्रोत्पलसाधारणत्वेऽप्यसितोत्पलप्रतियोगित्वेन प्रयोगादुत्पलपर्व एव ग्राह्यः। कर्णौ पीडयती कर्णान्तविश्रान्ते इत्यर्थः, सख्याः कलायाः नेत्रे एव असितोत्पले वीक्ष्य स्वयमपि समत्सराविव तौ कर्णौ एव असीदयताम् इत्युत्प्रेक्षा ॥ ९७ ॥

तदिति। वैदर्भी भैमी सखीकर्णौ एव प्रविष्टं तत्पत्युः आलपितं रहस्यभाषितं ह्रिया स्वरहस्याभिसन्धिना निगूढाभिप्रायेणेव पिदधौ स्वरहस्यगोपनाय कर्णपिधानमित्युत्प्रेक्षा ॥ ९८ ॥

तमिति। तं पूर्वोक्तं प्रियायाः केलिं सखीकर्णपिधानविनोदम् आलोक्य नले सोलुण्ठं सपरिहासं हसतीति आरात् दूरात् अपराः सख्यः तत्त्वम् अबुद्ध्वा सिस्मियिरे चपलिचपलचेष्टामात्रदर्शनात् जहसुः इत्यर्थः ॥ ९९ ॥

दम्पत्योरिति। धराप्सरसः भूलोकाप्सरसः सख्यः तयोः दम्पत्योः उपरि मुखानिलैः निःश्वासमारुतैः सुरभीणि सुगन्धीनि स्मितानि एव पुष्पाणि ववृषुः सिषिचुः ॥१००॥

तदिति। तस्य नलस्य आस्ये हसितात् जातम् आसां

प्रत्यभिज्ञाय विज्ञाऽथ स्वरं हासविकस्वरम्।
सख्यास्तासु सपक्षायाः कला जातबलाऽजनि ॥ १०२ ॥

साऽऽह्वयोच्चैरथोचे तामेहि स्वर्गेण वञ्चिते!।
पिब वाणीः सुधावेणीर्नृपचन्द्रस्य सुन्दरि! ॥ १०३ ॥

साऽशृणोत्तस्य वाग्भागमनत्यासत्तिमत्यपि।
कल्पग्रामाल्पनिर्घोषं वदरीव कृशोदरी ॥ १०४ ॥

---

सखीनां स्मितं शीतांशोः आलोकात् प्रकाशात् जातं कुमुद-श्रेणीनां जृम्भणम् इव अभासत ॥१०१॥

प्रत्यभिज्ञायेति। अथ सखीहासानन्तरं विज्ञा अभिज्ञा कला तासु सखीषु मध्ये सपक्षायाः समानायाः एकस्याः सुहृद्भूतायाः इत्यर्थः। पक्षः पार्श्वे गरुत्सहायभयेष्विति यादवः। छन्दसि स्यादसूत्रे समासस्येति योगविभागात् सपक्षादिषु समानशब्दस्य सभावः। सख्याः सम्बन्धिनं हासेन विकस्वरं तं स्वरं ध्वनिं प्रत्यभिज्ञाय स्वसखीस्वरोऽयमिति निश्चित्य जात-बला जातसामर्थ्या अजनि जाता, जनेः कर्तरि लुङ्। दीप-जनेत्यादिना चिणि लुकि रूपम् ॥ १०२ ॥

सेति। अथ स्वरप्रत्यभिज्ञानानन्तरं सा कला तां सखीम् उच्चैः आह्वय हे स्वर्गेण स्वर्गसुखेन वञ्चिते। प्रतारिते! सुन्दरि! एहि आगच्छ नृपचन्द्रस्य राजेन्दोः सम्बन्धिनीः सुधावेणीः अमृतरससारिणीः वाणीः पिब यथेच्छम् आकर्णय इति ऊचे उवाच ॥ १०३ ॥

सेति। कृशोदरी कृशाङ्गी सा आहूता सखी अनत्या-सत्तिमती अपि ईषद् दूरस्था अपि तस्य नलस्य वाग्भागं वाक्य-खण्डं कल्पग्रामस्य वदरिसमीपवर्त्तिनः कल्पाख्यस्य ग्रामस्य

अथ स्वपृष्ठनिष्ठायाः शृण्वत्या नैषधाभिधाः ।
नलमौलिमणौ तस्या भावमाकलयत् कला ॥ १०५ ॥
प्रतिबिम्बेक्षितैः सख्या मुखाकूतकृतानुमा ।
तद्व्रीडाद्यनुकुर्वाणा शृण्वती चान्वमायि सा ॥ १०६
कारङ्कारं तथाकारमूचे साऽशृणवन्तमाम् ।
मिथ्या वेत्थ गिरश्चेत्तद् व्यर्थाः स्युर्मम देवताः ॥ १०७ ॥

---

अल्पनिर्घोषं मन्दध्वनिं वदरी इव वदरिकाश्रमस्था वदरी इव अशृणोत् । सन्निकृष्टेषु ग्रामेषु परस्परमालापाः श्रूयन्ते तद्वदश्रौषीदित्यर्थः ॥ १०४ ॥

अथेति । अथ सखीनियोगानन्तरं कला स्वपृष्ठनिष्ठायाः स्वपश्चाद्भागस्थितायाः सत्याः नैषधस्य नलस्य अभिधीयन्ते इत्यभिधाः वचनानि, आतश्चोपसर्गे इति अण्प्रत्ययः । शृण्वत्याः तस्याः भावं चेष्टां नलस्य मौलिमणौ आकलयत् अपश्यत् पुरोवर्त्तितया तत्र तस्याः प्रतिफलनत्वादिति भावः ॥ १०५ ॥

प्रतीति । प्रतिबिम्बेन मौलिमणिगतसखीप्रतिबिम्बेन ईक्षितैः दृष्टैः मुखाकूतैः सखीमुखचेष्टितैः लिङ्गैः कृतानुमा इदमिदमयं वक्तीति कृतानुमाना तथा तस्याः सख्याः व्रीडा प्रेमचेष्टितम् अनुकुर्वाणा अनुकरणशीला सती, ताच्छील्ये चानश् इत्यन्यथानुपराभ्यां कृञ इति परस्मैपदप्रसङ्गात् । सा कला शृण्वती इव साक्षादाकर्णयन्ती इव अन्वमायि अनुमिता तटस्थैः इति शेषः ॥ १०६ ॥

कारङ्कारमिति । सा कला तथाकारं कारं कारं तादृगनुमितार्थानुकरणं कृत्वा कृत्वा, आभीक्ष्ण्ये णमुल् । "अशृणवन्तमां सम्य-

मत्कर्णभूषणानान्तु राजन्! निविडपीडनात्।
व्यथिष्यमाणपाणिस्ते निषेद्धुमुचिता प्रिया॥ १०८॥
इति सा मोचयाञ्चक्रे कर्णौं सख्याः करग्रहात्।
पत्युराश्रवतां याम्या मुधायासनिषेधिनः॥ १०९॥
श्रुतिसंरोधजध्वानसन्ततिच्छेदतालताम्।
जगाम झटिति त्यागस्वनस्तत्कर्णयोस्ततः॥ ११०॥
साऽपसृत्य कियद् दूरं मुमुदे सिस्मिये ततः।

---

गाकर्णयत्, शृणोतेर्लङि मिपो मादेशः, तिङव्ययादामुप्रत्ययः। इति ऊचे गिरः अशृणवमिति वाचः मिथ्या वेत्थ चेत् मम देवताः मदुपास्यदेवताः व्यर्थाः विफलाः स्युः॥ १०७॥

मदिति। किन्तु हे राजन्! महाराज! मत्कण्ठभूषणानां निविडपीडनात् व्यथिष्यमाणपाणिः तोत्स्यमानपाणिः ते प्रिया भैमी निषेद्धुं कर्णपिधानात् निवारयितुम् उचिता मया स्वरहस्यस्य सर्वस्यापि श्रुतत्वात् कर्णपिधानस्य स्वपाणिपीडनादतिरिक्तफलं नास्तीत्यर्थः॥ १०८॥

इतीति। इति इत्थं सा कला मुधायासं वृथाप्रयासं निषेधति मा कुर्विति वारयतीति तन्निषेधिनः पत्युः नलस्य आश्रवतां वाक्यकारित्वं याम्याः, वचने स्थित आश्रव इत्यमरः। सख्याः भैम्याः करग्रहात् करसंरोधात् कर्णौ मोचयाञ्चक्रे मोचयामास॥ १०९॥

श्रुतीति। ततः कर्णमोचनानन्तरं तस्याः कलायाः कर्णयोः झटिति त्यागेन स्वनः त्यागजन्यः ध्वनिः श्रुतिसंरोधेन जातायाः ध्वानसन्ततेः ध्वनिसन्तानस्य छेदे तालतां समापनतालतां जगाम त्यागध्वनिर्निवृत्तः इत्यर्थः॥ ११०॥

सेति। सा कला ततः कियत् किञ्चित् दूरम् अपसृत्य

इदञ्च तां सखीमेत्य ययाचे काकुभिः कला ॥ १११ ॥
अभिधास्ये रहस्यं तद् यदश्रावि मयाऽनयोः ।
वर्णयाकर्णितं मह्यमेत्यालि ! विनिमीयताम् ॥ ११२ ॥
वयस्याभ्यर्थनेनास्याः प्राक्कूटश्रुतिनाटने ।
विस्मितौ कुरुतः स्मैतौ दम्पती कम्पितं शिरः ॥११३॥
तथाऽऽलिमालपन्तीं तामभ्यधान्निषधाधिपः ।
आस्व तद्दम्पितौ स्वस्थे मिथ्याग्रपथसाहसात् ॥११४॥

---

छद्मना प्रार्थनाव्याजेन सिस्मिये मन्दं जहास, ताम् आहूतां सखीम् एत्य काकुभिः दीनवाक्यैः इदं वक्ष्यमाणं ययाचे प्रार्थयामास ॥ १११ ॥

अभीति । हे आलि ! सखि ! एहि अनयोः भैमीनलयोः सम्बन्धि यत् यत् रहस्यं मया अश्रावि श्रुतं अभिधास्ये कथयिष्यामि आकर्णितं त्वया श्रुतञ्च मह्यं वर्णय कथय विनिमीयतां उक्तिविनिमयः क्रियतां बुद्धिव्यावर्त्तकं वस्तुविपरीत-वर्त्तनं विनिमयः क्रियताम् ॥ ११२ ॥

वयस्येति । अस्याः वयस्यायाः एतौ दम्पती भैमीनलौ हे देव ! त्वाम् आमन्त्र्य तासां गिरां वैयर्थ्यं समर्थये सत्य-सिद्धान्तत्वेन प्रतिपादयामि कलायाः सम्बन्धिना प्रार्थनेन उक्तिविनिमयप्रार्थनया प्राक् कर्णपिधानावस्थायां कूटे मिथ्यैव कृते श्रुतिनाटने विस्मितौ शिरः कम्पितं कुरुतः स्म शिरःकम्पं चक्रतुः इति विस्मयभावोक्तिः ॥ ११३ ॥

तथेति । तथा तेन प्रकारेण आलिम् आहूतसखीम् आलपन्तीं सम्भाषमाणां तां कलां निषधाधिपः नलः अभ्य-धात् अवोचत् । किम् इति ? हे धर्त्ते ! मिथ्याग्रपथसाहसात्

प्रत्यलापीत् कलाऽपीमं कलङ्कः शङ्कितः कुतः।
प्रियापरिजनोक्तस्य त्वयैषाऽस्य मृषोद्यता॥ ११५॥
सत्यं खलु तदाश्रौषं परं धुमुधुमारवम्।
शृणोमीत्येव चावोचं न तु त्वद्वाचमित्यपि॥ ११६॥
आमन्त्र्य देव! तेन त्वां तद्वैयर्थ्यं समर्थये।
शपथः कर्कशोदर्कः सत्यं सत्योऽपि दैवतः॥११७॥

---

व्यर्थाः स्युः मम देवताः इति कृत्वा तत्कपटशपथसाहसात् वञ्चितौ स्यावेत् तर्हि आस्व तिष्ठ क्व गमिष्यसि इत्यर्थः॥११४॥

प्रत्यलापीदिति। कला अपि इमं नलं प्रत्यलापीत् प्रत्यवोचत्, लपेर्लुङि अतो हलादेर्लघोरिति निषेधविकल्पात् सिचि वृद्धिः। हे राजन्! त्वया प्रियापरिजनेन उक्तस्य एतस्य वचनस्य मृषोद्यता मृषावादित्वं राजसूय सूर्य्यमृषा पूर्वोद्यदेः क्यबन्तो निपातः। स्वकलङ्कदोषः कुतः शङ्कितः परिजनोक्तेषु नैष दोषः इत्यर्थः॥ ११५॥

सत्यमिति। अथवा तदा कर्णरोधसमये परं केवलं धुमुधुमारवं अश्रौषं तत् सत्यं खलु, तथाहि शृणोमीत्येव च अवोचं त्वद्वाचमित्यपि तु न अवोचं यावत् शृणोमीत्युक्तं तस्मान्नात्र मृषोद्यतादोषः इत्यर्थः॥ ११६॥

आमन्त्र्येति। हे देव! तेन त्वाम् आमन्त्र्य सम्भाष्य तस्य वैयर्थ्यम् अन्यथाभावं समर्थये पश्यामि, कर्कशोदर्कः शपथः तत् सत्यं दैवतोऽपि सत्यः सत्यफलः, किञ्च मिथ्या वेत्थ गिरश्चेत्तद्व्यर्थाः स्युर्मम देवताः इत्यत्र देव! राजफलो दुरन्तः सत्यं "सत्येनापि शपेद् यस्तु देवाग्निगुरुसन्निधौ। तस्य वैवस्वतो राजा धर्मस्यार्द्धं निकृन्तति॥" इति स्मरणात्। उदर्कः फलमुत्तरमित्यमरः॥ ११७॥

असम्भोगकथारम्भैर्वञ्चयेथे कथं नु माम्।
हन्त सेयमनर्हन्ती यत्तु विप्रलभे युवाम्॥ ११८॥
कर्णे कर्णे तत: सख्या श्रुतमाचख्यतुर्मिथ:।
मुहुर्विस्मयमाने च स्मयमाने च ते बहु॥ ११९॥
अथाख्यायि कला सख्या कुप्य मे दमयन्ति! मा।
कथाद्वितीयतोऽप्यस्या: सङ्गोप्यैव यदब्रुवम्॥ १२०॥

---

असम्भोगेति। असम्भोगकथानां सम्भोगाभावोक्तीनाम् आरम्भै: प्रसञ्जनै: मां कथं नु वञ्चयेथे अहं युवां यद्विप्रलभे वञ्चयामि सा इयं वञ्चना अनीतिक्रम: मद्वचनं युवयो: युक्त-मेव मम तु भवद्वचनमयुक्तम् अहो आश्चर्यं धूर्त्तयोरिति भाव:। अनर्हन्ती ब्राह्मणादित्वात् षङ्प्रत्यये अर्हतो षेति नुगागम:, पित्वाद्वाहुलकत्वं कार इति वामन:। यस्येति लोपे यस्य हलेति यकारलोपे चार्हन्ती सिद्धान्ते सञ्ज्ञसमास: ॥ ११८॥

कर्णे कर्णे इति। तत: अनन्तरं मुहुर्मुहु: यथा तथा विस्मयमाने विस्मयम् आविशन्त्यौ स्मयमाने मन्दं हसन्त्यौ च सख्यौ ते मिथो रहसि श्रुतं कर्णे कर्णे अन्योन्यं कर्णे आच-ख्यतु: कथयामासतु:॥ ११९॥

अथेति। अथ अन्योन्यकथनानन्तरं कला सख्या आख्यायि। किमिति? हे दमयन्ति! मे मह्यं त्वं मा कुप्य, क्रुध द्रुहेत्यादिना सम्प्रधारणत्वाच्चतुर्थी। यत् यस्मात् एवं द्वितीयत: द्वितीयात् कथात् अपि संगोप्य अस्या: कलाया: रहस्यम् अब्रुवमेव॥ १२०॥

प्रियः प्रियामथाचष्ट दृष्टं कपटपाटवम् ।
वयस्ययोरिदं तस्मान्मा सखीष्वेव विश्वसीः ॥ १२१ ॥
आलापि कलयाऽपीयं प्रतिर्नालपति क्वचित् ।
वयस्येऽसौ रहस्यं तत्सभ्ये विस्रभ्यमीदृशि ॥ १२२ ॥
इति व्युत्तिष्ठमानायां तस्यामूचे नलः प्रियाम् ।
भण भैमि ! वहिः कुर्वे दुर्विनीते गृहादमू ॥ १२३ ॥
शिरःकम्पानुमत्याऽथ सुदत्या प्रीणितः प्रियः ।
चुलुकं तुच्छमुत्सर्य्य तस्याः सलिलमक्षिपत् ॥१२४॥

---

प्रिय इति । प्रियः नलः प्रियां भैमीं आचष्ट । किमिति? हे प्रिये ! वयस्ययोः सख्योः इदं कपटपाटवं वञ्चनाचातुर्य्यं दृष्टं खलु इदं काकुः । तस्मात् सखीषु मा विश्वसीः विश्वासं मा कुरु, श्वसेर्माङि लुङि स्योत्तरत्वाभावादुपधास्येति नात्र लम्नाख्यसंमतेत्यादिना वृद्धिं प्रतिषेधति सिद्धावः ॥ १२१ ॥

आलपीति । कलया इयं भैमी आलापि आलपिता—हे दमयन्ति ! त्वत्प्रियः क्वचित् न आलपति ईदृशि सभ्ये वयस्ये सख्यौ तत् रहस्यं विस्रभ्यं नैवेति तात्पर्य्यार्थः । ततो बहुलमिति भावेकृत्य प्रत्ययः तस्याकित्वात्ककारलोपः ॥ १२२ ॥

इतीति । इति इत्थं तस्यां कलायां व्युत्तिष्ठमानायां विरोधम् आचरन्त्यां, उदोऽनूर्ध्वकर्मणोरित्यात्मनपदम् । नल प्रियाम् ऊचे । किमिति ? हे भैमि ! दुर्विनीते उद्धते अमू सख्यौ गृहात् वहिः कुर्वे ,निर्वासयामि इति काकुः भण ॥ १२३ ॥

शिर इति । अथ प्रियः नलः सुदत्याः भैम्याः शिरःकम्पेनेव अनुमत्या प्रीणितः तोषितः सन् तुच्छं रिक्तं चुलुक

तच्चित्रदत्तचित्ताभ्यामुच्चैः सिचयसेचनम्।
ताभ्यामलम्भि दूरेऽपि नलेच्छापूरिभिर्जलैः ॥१२५॥
वरेण वरुणस्यायं सुलभैरम्भसां भरैः।
एतयोः स्तिमितीचक्रे हृदयं विस्मयैरपि ॥ १२६ ॥
तेनापि नापसर्पन्त्यौ दमयन्तीमयं ततः।
हर्षेणादर्शयत् पश्य नन्विमे तन्वि! मे पुरः॥ १२७ ॥

---

प्रसृतं पाणिम् उत्क्षिप्य उत्क्षिप्य सख्युरुपरीत्यर्थः, तस्याः कलायाः सलिलम् अक्षिपत् अकिरत् ॥ १२४ ॥

तदिति। तस्मिन् चित्रे आश्चर्य्ये दत्तचित्ताभ्यां ताभ्यां सखीभ्यां नलस्य इच्छां पूरयन्तीति तत्पूरिभिः जलैः दूरेऽपि उच्चैः अतिमात्रं सिचयसेचनं वस्त्रसेचनं, पटोऽस्त्री सिचयो वस्त्रमिति यादवः। अलम्भि, विभाषाचिण्णमुलोरिति नुमागमः॥१२५॥

वरेणेति। अयं नलः वरुणस्य वरेण वरदानेन सुलभैः अम्भसां भरैः ओघैः विस्मयैः आश्चर्य्यरसैः अपि एतयोः सख्योः हृदयम्, उरःस्थलम् अन्तरञ्च। हृदयं वक्षसि स्वान्त इति विश्वः। स्तिमितीचक्रे निश्चलीचक्रे, अभूततद्भावे च्विः। अत्र स्तिमितः हृदयमितिविशेषणविशेष्ययोः द्वयोरपि हृदययोः प्रकृतत्वात् श्लेषः ॥ १२६ ॥

तेनेति। ततः जलसेचनानन्तरम् अयं नलः तेन सेचनेनापि न अपसर्पन्त्यौ न अपगच्छन्त्यौ तेन अनपसरकर्मणा वा ननु तन्वि! प्रिये! इमे मे मम पुरः पुरःस्थिते पश्येति हर्षेण दमयन्तीम् अदर्शयत् दमयन्त्यै दर्शयामास इत्यर्थः। अत्राभिवदिदृशोरात्मनेपद उपसङ्ख्यानं इति परस्मैपदं, दमयन्तीमित्यणिकर्त्तुः कर्मत्वं चिन्त्यम् ॥ १२७ ॥

क्लिन्नीकृत्याम्भसा वस्त्रं जैनप्रव्रजितीकृते ।
सख्यौ सक्षौमभावेऽपि निर्विघ्नस्तनदर्शने ॥ १२८ ॥
अम्बुनः शम्बरत्वेन मायैवाविरभूदियम् ।
यत्पटावृतमप्यङ्गमनयोः कथयत्यदः ॥ १२९ ॥
वाससो वाऽम्बरत्वेन दृश्यतायामुपानमत् ।
चारुहारमणिश्रेणितारवीक्षणलक्षणा ॥ १३० ॥
ते निरीक्ष्य निजावस्थां क्षोणिं निर्ययतुस्ततः ।
तयोर्वीचारसात् सख्यः सर्वा निश्चक्रमुः क्रमात् ॥ १३१ ॥

---

क्लिन्नीकृत्येति । असौ वस्त्रं अम्भसा क्लिन्नीकृत्य आर्द्रीकृत्य जैनप्रव्रजितीकृते दिगम्बरीकृते इत्यर्थः । अभूततद्भावे च्विः । सख्यौ सक्षौमभावे अपि सक्षौमत्वे अपि निर्विघ्नम् अप्रतिबाधनं स्तनदर्शनं ययोः ते सूक्ष्मवस्त्रत्वेन सर्वाङ्गदर्शनमिति भावः ॥ १२८ ॥

अम्बुन इति । अम्बुनः जलस्य शम्बरत्वेन शम्बरासुरत्वेन च, दैत्यो ना शम्बरेऽम्बुनि इति वैजयन्ती । इयं माया एव शाम्बरी एव, स्यान्माया शाम्बरी मायेत्यमरः । अदः इदं जलं कर्त्तृ पटावृतम् अनयोः अङ्गं यत् कथयति आविष्करोति अन्यथा कथं अनग्नस्य स्तनादि दृश्यतेति भावः ॥ १२९ ॥

वासस इति । अथवा चार्व्यः हारमणिश्रेण्यः एव ताराः नक्षत्राणि तासां वीक्षणं दर्शनमेव लक्षणं लक्ष्म यस्याः सा इयं वाससः अम्बरत्वेन वस्त्रत्वेन आकाशत्वेन च दृश्यतायाम् उपानमत् समागता जाता । अम्बरं व्योम्नि वाससीत्यमरः ॥ १३० ॥

ते इति । ते सख्यौ निजावस्थां दशां निरीक्ष्य क्षोणिं

ता वहिर्भूय वैदर्भीमूचुर्नीतावधीतिनि ! ।
उपेक्ष्ये ते पुन: सख्यौ मर्मज्ञे नाधुनाप्यमू ॥ १३२ ॥
उच्चैरूचेऽथ ता राजा सखीयमिदमाह व: ।
श्रुतं मर्म ममैताभ्यां दृष्टं मर्म मया तयो: ॥ १३३ ॥
मद्विरोधितयोर्वाचि न श्रद्धातव्यमेतयो: ।
अभ्यषिञ्चदिमे मायामिथ्यासिंहासने विधि: ॥ १३४ ॥

---

लज्जिते सख्यौ तत: देशात् निर्ययतु: तयो: वीक्षारसात् वीक्षणेच्छात: सर्वा: सख्य: क्रमात् निर्ययु: निष्क्रान्ता: ॥१३१॥

ता इति। ता: सख्य: वहिर्भूय वहिर्निर्गत्य वैदर्भीम् ऊचु:। किमिति ? हे नीतावधीतिनि ! अधीतनीतिशास्त्रे ! इष्टादित्वादीनिप्रत्यय:, तस्येन्विषयस्य कर्मणि सप्तमी। अमू मर्मज्ञे सख्यौ अधुना अपि ते तव पुन: न उपेक्ष्ये। मर्मज्ञं न प्रकोपयेदिति न्यायादिति भाव:। कृत्यानां कर्त्तरि वेति कर्त्तरि षष्ठी ॥ १३२॥

उच्चैरिति। अथ राजा ता: सखी: ऊचे उवाच। उच्चैरुवाचिरे राज्ञीति पाठान्तरम्। किमिति ? इयं सखी दमयन्ती व: युष्माकम् इदमाह। किमिति ? यत् एताभ्यां मम श्रुतं मया तु एतयो: तत् मर्म रहस्यं दृष्टं मर्मश्रवणाद्दर्शनं दु:सहमिति भाव: ॥ १३३ ॥

मदिति। किञ्च, हे सख्य: ! मया विरोधितयो: विप्रकृतयो: एतयो: वाचि वचने न श्रद्धातव्यम्। तथाहि, विधि: ब्रह्मा इमे सख्यौ माया मिथ्या कपट: अनृतं तयो: सिंहासने अभ्यषिञ्चत् अभिषिक्तवान् तस्मात् मिथ्याप्रलापो न श्रद्धेय: इत्यर्थ: ॥ १३४ ॥

धौतेऽपि कीर्त्तिधाराभिश्चरिते चारुणि द्विषः ।
मृषामषीलवैर्लक्ष्म लेखितुं के न शिल्पिनः ? ॥ १३५ ॥
ते सख्यावाचचक्षाते न किञ्चिद् ब्रूमहे बहु ।
वक्ष्यावस्तत्परं यस्मै सर्वा निर्वासिता वयम् ॥ १३६ ॥
स्थापत्यैर्न स्म वित्तस्ते वर्षीयस्त्वचलत्करैः ।
कृतामपि तथा वाचि करकम्पेन वारणाम् ॥ १३७ ॥
अपयातमितो धृष्टे ! धिग् वामश्लीलशीलताम् ।
इत्युक्ते चोक्तवन्तश्च व्यतिद्राते स्म ते भिया ॥ १३८ ॥

---

धौतेऽपीति । कीर्त्तिधाराभिः धौते अपि चारुणि द्विषः द्वेषिणः चरिते मृषामषीलवैः लक्ष्म कलङ्कं लेखितुम् उत्पादयितुं के न शिल्पिनः कुशलाः न ? सर्वेऽपि कुशलाः इत्यर्थः ॥ १३५ ॥

ते इति । ते सख्यौ आचचक्षाते ऊचतुः । किमिति ? न किमपि बहु भूरि ब्रूमहे, किन्तु तत्परं तत् एव केवलं वक्ष्यावः यस्मै प्रयोजनाय वयं सर्वा निर्वासिताः निष्कासिताः । सुरतार्थम् एव युवाभ्यां वयं सर्वा एव निष्कासिता इत्येवं वदिष्यावः अन्यत् किञ्चन न इति तात्पर्य्यम् ॥१३६॥

स्थापत्यैरिति । ते सख्यौ वर्षीयस्त्वेन वृद्धत्वेन. प्रियस्थिरेत्यादिना वृद्धशब्दस्य वर्षादेशः । चलत्करैः कम्प्रहस्तैः स्थपतेः इमे भावाः स्थापत्याः कञ्चुकिनः, स्थापत्याः सौविदल्लाः कञ्चुकिन इत्यमरः । तैः कृतामपि तथा वाचि तादृक् कृतवाक्ये करकम्पेन वारणां निवारणं न वित्तः स्म न जानीतः स्म जराकम्पभ्रमादिति भावः ॥ १३७ ॥

अपयातमिति । हे धृष्टे ! वराक्यौ ! इतः अस्मात् देशात् अपयातं गच्छतं वां युवयोः अश्लीलशीलतां ग्राम्यभावभशी-

आह स्म तद्गिरा क्रीणां प्रियां नतमुखीं नलः।
ईदृग्भण्डसखी काऽपि निस्त्रपा न मनागपि ॥ १३९ ॥
अहो नापत्रपाकं ते जातरूपमिदं मुखम्।
नातितापार्जनेऽपि स्यादितो दुर्वर्णनिर्गमः ॥ १४० ॥

---

त्वं धिक्। इत्युक्ते भर्त्सिते ते उभे व्यतिद्राते स्म परस्परव्यतिहारेण पलायेते इति इत्थम् उक्तावन्तः भर्त्सितवन्तः ते व्यतिद्रातं स्म परस्परव्यतिहारेण पलायिताः, द्रा कुत्सायां गताविति धातोर्लटि कर्त्तरि कर्मव्यतिहार इत्यात्मनेपदम्, अदादित्वाल्लुक् मत्वेव द्वित्वे प्रथमपुरुषस्य द्विवचनेषु समानं रूपम् एवन्ते इत्यत्रापि स्त्रीत्वात् द्वित्वे पुंसि बहुत्वेऽपि समानरूपम् ॥ १३८ ॥

आहेति। अथ नलः तयोः सख्योः गिरा वक्ष्यमाणया वक्ष्यावः तत्परम् इत्यादिकया क्रीणां लज्जिताम् अतएव नतमुखीं प्रियाम् आह स्म उवाच। किमित्याकाङ्क्षायां सार्द्धश्लोकेनाह—ईदृक् इत्यादिकया क्रीणाम् ईदृश्यौ भण्डे निर्लज्जे सख्यौ यस्याः तादृशी सखी का? नद्यृतश्चेति कप्, समासान्तः। सा अपि त्वं मनाक् अपि निस्त्रपा निर्लज्जा नासि दोषलेशोऽपि नास्तीति चित्रमित्यर्थः ॥ १३९ ॥

अहो इति। अहो जातरूपं सम्पन्नसौन्दर्य्यम् इति, सुवर्णञ्चामीकरं जातरूपमित्यमरः। इदं ते मुखम् अपगता त्रपा लज्जा यस्य तत् अपत्रपं, शैषिकः कप्प्रत्ययः। तत् न भवतीति नापत्रपाकं सलज्जमिति यावत्। नसमासः। अन्यत्र पत्रस्य पचीकृतस्य दलीकारितस्य पाकः पत्रपाकः तद्रहितम् अपत्रपाकं न भवति नापत्रपाकं पत्रपाकसम्भृतमेवेत्यर्थः। अतितापार्जने अपि अत्यन्तदाहकरणे

तामथैष हृदि न्यस्य ददौ तल्पतले तनुम्।
निमील्य च तदीयाङ्गसौकुमार्य्यमसिस्वदत् ॥ १४१ ॥
न्यस्य तस्याः कुचद्वन्द्वे मध्येनीवि निवेश्य च।
स पाणेः सफलं चक्रे तत्करग्रहणश्रमम् ॥ १४२ ॥
स्थापितामुपरि स्वस्य तां मुदा मुमुदे वहन्।
तदुद्वहनकर्त्तृत्वमाचष्ट स्पष्टमात्मनः ॥ १४३ ॥

---

अपि इतः अस्मात् सुवर्णात् दुर्वर्णनिर्गमः श्यामिकानिर्गमः न स्यादिति विरोधः। अतएव अहो आश्चर्य्यं सखी प्रबला इति दुःखोत्पाते अपि मुखात् दुरक्षरनिर्गमनं न स्यादिति विरोधात् विरोधाभासोऽलङ्कारः इति चित्रम् ॥ १४० ॥

तामिति। अथ एषः नलः तां प्रियां हृदि वक्षसि न्यस्य निधाय तल्पतले शय्योपरि तनुं स्वदेहं ददौ शयितवान् इत्यर्थः तदीयाङ्गस्य प्रियाशरीरस्य सौकुमार्य्यं मार्दवं निमील्य चक्षुषी निमील्य इत्यानन्दानुभवोक्तिः। असिस्वदत्, अनुबभूव। स्वदेर्णौ चङ्युपधाह्रस्वः ॥ १४१ ॥

न्यस्येति। नलः तस्याः कुचद्वन्द्वे पाणिं न्यस्य निधाय मध्येनीवि नीवीमध्ये, पारेमध्ये षष्ठ्या वेत्यव्ययीभावः। निवेश्य प्रवेश्य च पाणेः स्वकरस्य तत्करग्रहणश्रमं तत्पाणिग्रहणप्रयासं सफलं चक्रे तादृग्विधः प्रियास्पर्शस्तस्य महदानन्दफलमित्यर्थः ॥ १४२ ॥

स्थापितामिति। सः मुदा हर्षेण स्वस्य उरसि स्थापितां प्रियां वहन् धारयन् मुमुदे आननन्द। आत्मनः तस्याः भैम्याः उद्वहने विवाहे कर्तृत्वं स्पष्टम् आचष्ट अनुद्वहतः एवमुरसि वहनायोगादिति भावः ॥ १४३ ॥

स्विद्यत्कराङ्गुलीलुप्तकस्तूरीलेपमुद्रया ।
फूत्कार्य्यपीडितौ चक्रे स सखीषु प्रियास्तनौ ॥ १४४ ॥
तत्कुचे नखमारोप्य चमत्कुर्वंस्तयेक्षितः ।
सोऽवादीत्तां हृदिस्थं ते किं मामभिनदेष न ॥१४५॥
अहो अनौचितीयन्ते हृदि शुद्धेऽप्यशुद्धवत् ।
अङ्कः खलैरिवाकल्पि नखैस्तीक्ष्णमुखैर्मम ॥ १४६ ॥

---

स्विद्यदिति । सः नलः प्रियायाः स्तनौ स्विद्यन्तीभिः कराङ्गुलीभिः लुप्तः प्रमृष्टः यः कस्तूरीलेपः स एव मुद्रा चिह्नं तया सखीषु विषये फूत्कारेण उच्चैस्तरमुखानिलेन तादृक् पीड़ितं पीड़नं ययोः तौ फूत्कार्य्यपीड़ितौ चक्रे । कस्तूरीलेपमुद्रया कुचयोः करपीड़नं रचयामास ॥१४४॥

तदिति । नलः तत्कुचे नखम् आरोप्य निखाय चमत्कुर्वन् तया ईक्षितः सन् ते तव हृदिस्थं, सुपिस्थ इति कप्रत्ययः । हृद्द्युभ्यादेरुपसङ्ख्यानमिति समासस्यालुक् । अन्तर्गतम् माम् एष नखः न अभिनत् न व्यदारयत् किम् इति तां प्रियां अवादीत् । अत्र स्वकृत्ये नखकृत्यारोपात् नखदर्शनचमत्कारः इत्यसङ्गत्यलङ्कारः, कार्य्यकारणाभिन्नदेशतायामसङ्गतिरिति लक्षणात् ॥ १४५ ॥

अहो इति । हे प्रिये ! मम तीक्ष्णमुखैः निशिताग्रैः निष्ठुरवाग्भिश्च नखैः खलैः धूर्त्तैः इव शुद्धे अदुष्टेऽपि ते हृदि हृदये अशुद्धवत् दुष्टः इव, तत्र तस्येवेति वतिप्रत्ययः । अङ्कः चिह्नं कलङ्कश्च अकल्पि कल्पितः इति इयं निर्दोषे दोषकल्पना अनौचिती । अहो इति प्रगृह्यत्वात् प्रकृतिसन्धिः ॥ १४६ ॥

यच्चुम्बति नितम्बोरु यदालिङ्गति च स्तनौ।
भुङ्क्ते गुणमयं तत्ते वासः शुभदशोचितम् ॥१४७॥
लीनचीनांशुकं खेदि दरालोक्यं विलोकयन्।
तन्नितम्बं स निःश्वस्य निनिन्द दिनदीर्घताम् ॥ १४८॥
देशमेव ददंशासौ प्रियदन्तच्छदान्तिकम्।
चकाराधरपानस्य तत्रैवालीकचापलम् ॥ १४९ ॥
न क्षमे चपलापाङ्गि! सोढुं स्मरशरव्यथाम्।

---

यदिति। हे प्रिये! गुणमयं तन्तुमयं सौशील्यादिम यच्च ते तव वासः नितम्बौ ऊरू च, नितम्बोरु प्राण्यङ्गत्वाद् द्वन्द्वैकवद्भावः। यत् चुम्बति स्पृशति ते तव स्तनौ यत् आलिङ्गति आश्लिष्यति तत् शुभदशानां शोभनानां दशानां ज्योतिःशास्त्रप्रसिद्धशुक्रादिशुभावस्थानां उचितम् अर्हं भुङ्क्ते, दशावस्थायां वस्त्रान्ते स्यादृशा अपीति विश्वः। "शुभग्रहदशायां हि भुङ्क्ते जन्म शुभं फलम्" ॥१४७॥

लीनेति। सः नलः खेदि सात्त्विकोदयात् खेदवत् अत एव लीनचीनांशुकं संलग्न सुष्ठु वस्त्रम् अतएव दरालोक्यम् ईषल्लक्ष्यं तस्याः नितम्बं विलोकयन् पश्यन् निःश्वस्येति विषादानुभवोक्तिः दिनस्य दीर्घताम् आधिक्यं निनिन्द दिवासुरतनिषेधात् दिवावसानमभिललाष इति भावः ॥ १४८ ॥

देशमिति। असौ नलः प्रियादन्तच्छदस्य अधरस्य अन्तिकं देशम् उपान्तभागमेव ददंश दष्टवान्। तत्रैव देशे अधरपानस्य अलीकचापलं चकार ततैव "रतिकाले मुखं स्त्रीणां शुद्धमाखेटके शुनाम्" इति स्मृत्या तस्य कालान्तरे अशुद्धत्वादिति भावः ॥ १४९ ॥

अथास्य कालक्षेपत्वलक्षणमौत्सुक्यमेव श्लोकद्वयेनाह

तत्प्रसीद प्रसीदेति स तां प्रीतामकोपयत् ॥ १५० ॥
नेत्रे निषधनाथस्य प्रियाया वदनाम्बुजम् ।
ततस्तनतटौ ताभ्यां जघनं घनमीयतुः ॥ १५१ ॥
इत्यधीरतया तस्य हठवृत्तिविशङ्किनी ।
झटित्युत्थाय सोत्कण्ठमसावन्वसरत्सखीः ॥ १५२ ॥
न्यवारीव यथाशक्ति स्पन्दं मन्दं वितन्वता ।
भैमी कुचनितम्बेन नलसम्भोगलोभिना ॥१५३॥

---

नेत्यादि। हे चपलापाङ्गि ! हे चञ्चलाचि ! स्मरशरैः कृतां व्यथां तत्कृतां पीडां सोढुं न क्षमे न शक्नोमि, तत् तस्मात् प्रसीद प्रसीद अजस्रं भज इत्येवं सः नलः प्रीतां मुदिताम् अपि तां प्रियाम् अकोपयत् अनवसरचापलेन कोपयामास ॥१५०॥

नेत्रे इति। निषधनाथस्य नेत्रे दृशौ प्रियायाः वदनाम्बुजम् ईयतुः प्रापतुः, ततः वदनाम्बुजात् स्तनतटौ कुचोत्सङ्गभागौ ईयतुः, ताभ्यां स्तनतटाभ्यां घनं जघनम् ईयतुः। अत्र नेत्रयोः क्रमेणैकमनेकस्मिन्नित्युक्तलक्षणात् पर्य्यायालङ्कारः ॥ १५१ ॥

इतीति। तस्य स्वप्रियस्य अधीरतया कातरतया हठवृत्तिं बलात्कारप्रवृत्तिं विशङ्कते इति तत् शङ्किनी असौ भैमी झटिति सहसा उत्थाय सोत्कण्ठं सानुरागं सखीः अन्वसरत् अनुससार ॥ १५२ ॥

न्यवारीवेति। भैमी नलसम्भोगलोभिना तद्गुनेन अतएव स्पन्दं गमनं मन्दं वितन्वता मन्थरं कुर्वता गतिं प्रतिबध्नता इत्यर्थः, कुचौ नितम्बश्च तेन कुचनितम्बेन, प्राण्यङ्गत्वादेकवद्भावः। यथाशक्ति न्यवारीव निवारिता इति इत्युत्प्रेक्षा ॥ १५३ ॥

अपि श्रोणिभरस्वैरां धर्त्तुं तामशकन्न सः ।
तदङ्गसङ्गजस्तम्भो गजस्तम्भोरुदोरपि ॥ १५४ ॥

आलिङ्गालिङ्ग तन्वङ्गि ! मामित्यर्द्धगिरं प्रियम् ।
स्मित्वा निवृत्य पश्यन्ती द्वारपारमगादसौ ॥ १५५ ॥

प्रियस्याप्रियमारभ्य तदन्तर्दूनयाऽनया ।
शेके शालीनयाऽऽलिभ्यो न गन्तुं न निवर्त्तितुम् ॥१५६॥

---

अपीति। सः नलः गजस्तम्भौ आलाने इव ऊरू महान्तौ दोषौ भुजौ यस्य सः महाभुजः सन् अपि, भुजबाहू प्रवेष्टो दो-रित्यमरः। श्रोणिभरेण स्वैरां मन्दां मन्दगमनामपि, मन्द-स्वच्छन्दयोः स्वैरमित्यमरः। तां प्रियां तदङ्गसङ्गेन जातः तज्जः स्तम्भः निष्क्रियाङ्गलक्षणसात्त्विकविकारः यस्य सः सन् धर्त्तुं न अशकत्। स्तम्भं निर्व्यापारस्य किं सहकारी सम्पद्येतेति भावः ॥ १५४ ॥

आलिङ्गेति। हे तन्वङ्गि ! कृशाङ्गि ! माम् आलिङ्ग आलिङ्ग इति अर्द्धोक्तिः गीः यस्य तं प्रियं सा भैमि स्मित्वा मन्द हसित्वा निवृत्य पश्यन्ती द्वारस्य पारं चरमभागम् अगात द्वारम् अतिचक्राम इत्यर्थः ॥ १५५ ॥

प्रियस्येति। प्रियस्य पत्युः अतिक्रमरूपम् अप्रियम् आरभ्य आरचय्य अन्तः अन्तःकरणे दूनया परितप्तया, श्वीदितश्चेति निष्ठानत्वम्। शालीनतया अधृष्टतया अनया भैम्या आलिभ्य गन्तुम् अपि, गत्यर्थकर्मणि द्वितीया, चतुर्थीति वीप्साया मनध्वननीति चतुर्थी। न शेके न शक्तं, भावे लिट्। निव र्त्तितुं प्रियं प्रतिगन्तुञ्च न शेके लज्जाविषादाभ्याम् उभयत आकृष्यमाणत्वादिति भावः ॥ १५६ ॥

अकथयदथ वन्दिसुन्दरीद्वाः-
सविधमुपेत्य नलाय मध्यमह्नः ।
जय नृप ! दिनयौवनोष्मतप्ता
प्लवनजलानि पिपासति क्षितिस्ते ॥ १५७ ॥
उपहृतमधिगङ्गमम्बु कम्बु-
च्छवि तव वाञ्छति केशभाङ्गिसङ्गात् ।
अनुभवितुमनन्तरं तरङ्गा-
समशमनस्वसृमिश्रभावशोभाम् ॥ १५८ ॥
तपति जगत एव मूर्ध्नि भूत्वा
रविरधुना त्वमिवाद्भुतप्रतापः ।

अकथयदिति । अथ अस्मिन् अवसरे वन्दिसुन्दरी वैतालिकस्त्री द्वाःसविधं द्वारसमीपम् उपेत्य नलाय अह्नः मध्यम् अकथयत् अवदत् इत्यर्थः । हे नृप ! जय दिनस्य यौवनं मध्याह्नः तस्य ऊष्मणा तप्ता क्षितिः ते प्लवनजलानि स्नानोदकानि पिपासति पातुमिच्छति तापस्यापि पिपासाहेतुत्वादिति भावः । माध्याह्निकस्नानकालोऽयमवधार्य्यतामिति तात्पर्य्यार्थः ॥१५७॥

उपेति । किञ्च, कम्बुच्छवि शङ्खच्छायं शुभ्रप्रभमित्यर्थः, अधिगङ्गं गङ्गायां, विभक्त्यर्थेऽव्ययीभावः । उपहृतं कलशेनानीतं अम्बु गाङ्गम् इत्यर्थः केशभङ्ग्याः केशसंस्थापनायाः सङ्गात् सङ्गमात् हेतोः अनन्तरं यथा तथा तरङ्गैः असमायाः अतिकृष्णायाः शमनस्वसुः यमुनायाः मिश्रभावस्य मेलनस्य शोभाम् अनुभवितुं वाञ्छति इच्छति निदर्शनालङ्कारः । शुभ्रतरस्य गाङ्गजलस्य कृष्णतरकेशपाशसङ्गे सति प्रयागजलशोभा भविष्यतीति भावः । १५८ ॥

पुरमथनमुपास्य पश्य पुण्यै-
रधरितमेनमनन्तरं त्वदीयैः ॥ १५८ ॥

आनन्दं हठमाहरन्निव हरध्यानार्चनादिक्षण-
स्यासत्तावपि भूपतिः प्रियतमाविच्छेदखेदालसः।
पश्चद्वारदिशं प्रति प्रतिमुहुर्द्राङ्निर्गतप्रेयसी-
प्रत्यावृत्तिधिया दिशन् दृशमसौ निर्गन्तुमुत्तस्थिवान् ॥१६

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मा मल्लदेवी च यम्।
अन्याक्षुण्णरसप्रमेयभणितौ विंशस्तदीये महा-
काव्येऽयं व्यगलन्नलस्य चरिते सर्गो निसर्गोज्ज्वलः ॥१६॥

---

तपतीति। एषः रविः अधुना त्वम् इव अद्भुतप्रतापः सन् जगतः मूर्ध्नि भूत्वा स्थित्वा तपति प्रकाशते, अनन्तरं पुरमथनं शिवम् उपास्य त्वदीयैः पुण्यैः तव सेवासुकृतैः अधरितं मस्तकोपरिभागात् च्यावितम् एनं सूर्यं पश्य पुरहरप्रसादात् सूर्याभ्यधिकप्रतापोष्णो भविष्यसि इत्यर्थः ॥ १५८ ॥

आनन्दमिति। असौ भूपतिः नलः हरध्यानस्य अर्चनादिक्षणस्य तत्कालस्य आसत्तौ सन्निकर्षे प्रियतमाविच्छेदखेदेन प्रेयसीवियोगदुःखेन अलसः जडः सन् अतएव द्राङ् निर्गतायाः प्रेयस्याः प्रत्यावृत्तिधिया आनन्दं सुखं हठं यथा तथा आहरन् इव परावर्त्तयन् इव पश्चद्वारदिशं प्रति दृशं दिशन् निर्गन्तुं निर्यातुम् उत्तस्थिवान् स्वयम् उत्थितः ॥ १६० ॥

श्रीहर्षमिति। अन्यैः अक्षुण्णाः अपूर्वाः रसाः शृङ्गारादयः प्रमेयाः वाक्यार्थाश्रयाः यासु भणितिषु तस्मिन् इह काव्ये, तृतीयादिषु, भाषितपुंवदित्यादिना पुंवद्भावः, विंशतीति शब्दस्य लोपः। गतमन्यत् ॥ १६१ ॥

# एकविंशः सर्गः ।

तं विदर्भरमणीमणिसौधादुज्जिहानमनुदर्शितसेवैः ।
अर्पणान्निजकरस्य नरेन्द्रैरात्मनः करदता पुनरूचे ॥ १ ॥

तस्य चीनसिचयैरपि बद्धा पद्धतिः पदयुगात् कठिनेति ।
तां व्यधत्त शिरसा खलु माल्यैराजराजिरभितः प्रणमन्ती ॥२॥

द्रागुपाक्रियत तस्य नृपैस्तद्दृष्टिदानबहुमानकृतार्थैः ।
स्वस्वदिश्यमथ रत्नमपूर्वं यत्नकल्पितगुणाधिकचित्रम् ॥ ३ ॥

---

तमिति। विदर्भरमण्या वैदर्भ्या मणिसौधात् मणिमयप्रासादात् उज्जिहानं निर्गच्छन्तं तं नलम् अनु प्रति तस्मै दर्शितसेवैः इत्यर्थः। अतो लक्षणार्थकर्मप्रवचनीयत्वात्तद्योगे द्वितीया। नरेन्द्रैः निजकरस्य अर्पणात् नलस्य हस्तावलम्बनात् आत्मनः स्वस्य करं हस्तं बलिं च ददातीति करदाः, बलिहस्तांशवः करा इत्यमरः। तेषां भावः तत्ता सा। बलिदानादेव करदत्वे सिद्धे पुनर्हस्तदानेन करदता इति पुनरुक्तिरित्यर्थः एतेन अस्य नलस्य चक्रवर्त्तित्वं द्योत्यते ॥ १ ॥

तस्येति। राजराजिः नृपपङ्क्तिः अभितः समन्तात् प्रणमन्ती चीनसिचयैः पट्टवस्त्रैः बद्धा आच्छादिता अपि पद्धतिः मार्गः, तस्य नलस्य पदयुगात् कठिना इति हेतोः, पञ्चमी विभक्त इति पञ्चमी। तां पद्धतिं मार्गं शिरसा माल्यैः मालाभिः साधनैः व्यधत्त पिहितवती खलु ॥ २ ॥

द्रागिति। अथ प्रणामानन्तरं तस्य नलस्य दृष्टिदानबहुमानेन कृतार्थैः नृपैः स्वस्यां स्वस्यां दिशि साधु स्वस्वदिश्यं, तत्र साधुरिति यत्प्रत्ययः। यत्नेन कल्पितैः सम्पादितैः गुणै

अङ्गुलीचलनलोचनभङ्गिभ्रूतरङ्गविनिवेदितदानम् ।
रत्नमन्यनृपढौकितमन्ये तत्प्रसादमलभन्त नृपास्तत् ॥४॥
तानसौ कुशलसूनृतसेकैस्तर्पितानथ पितेव विसृज्य ।
अस्त्रशस्त्रखुरलीषु विनिन्ये शैष्यकोपनमितानमितौजाः ॥५॥
मर्त्त्यदुष्प्रचरमस्त्रविचारञ्चारु शिष्यजनतामनुशिष्य ।
स्वेदबिन्दुकितगोधिरधीरं स श्वसन्नभवदाप्लवनेच्छुः ॥ ६ ॥

---

अधिकं चित्रम् आश्चर्य्यम् अपूर्वं रत्नं तस्य नलस्य द्राक् शीघ्रम् उपाक्रियत उपहृतम् ॥ ३ ॥

अङ्गुलीति। अङ्गुलीचलनेन लोचनभङ्ग्या च भ्रूतरङ्गेण विनिवेदितं ज्ञापितं दानं यस्य तत् तथोक्तं अन्यैः नृपैः ढौकितम् उपहृतं तस्य नलस्य प्रसादम् अनुग्रहं अन्ये नृपाः रत्नं अलभन्त ॥ ४ ॥

तानिति। अमितम् ओजः यस्य असौ नलः कुशलस्य कुशलप्रश्नस्य सूनृतस्य सत्यप्रियवचनस्य सेकैः तर्पितान् तान् पितेव विसृज्य शैष्यकेण शिष्यत्वेन, योपधाद्गुरूपोत्तमाद्वुञ्। उपनमितान् समेतान् अस्त्रेषु आग्नेयादिषु शस्त्रेषु धनुरादिषु खुरलीषु श्रमशालाविशेषेषु विनिन्ये शिक्षितवान् ॥५॥

मर्त्त्येति। सः नलः मर्त्त्यदुष्प्रचरं मर्त्त्येषु अविद्यमानप्रसरं अस्त्रविचारम् अस्त्रशिक्षां शिष्यजनतां शिष्यसमूहं चारु यथा भवति तथा अनुशिष्य शिक्षयित्वा स्वेदेन बिन्दुकिता सञ्जातबिन्दुका गोधिः ललाटं यस्य, ललाटमलिकं गोधिः स्त्री तत्प्रान्ते तु गोधिकेति यादवः। सः तादृशः सन् अधीरम् अधिकं यथा भवति तथा श्वसन् आप्लवनं स्नानम् इच्छुः अभवत् ॥६॥

यक्षकर्दममृदून्मृदिताङ्गं प्राक्कुरङ्गमदमीलितमौलिम्।
गन्धवार्भिरनुबन्धितभृङ्गैरङ्गना सिषिचुरुच्चकुचास्तम्॥ ७॥
भूभृतं पृथुतपोघनमाप्तस्तं शुचिः स्नपयति स्म पुरोधाः।
सन्दधज्जलधरस्खलदोघस्तीर्थवारिलहरीरुपरिष्टात्॥ ८॥
प्रेयसीकुचवियोगहविर्भुग्जन्मधूमविततीरिव बिभ्रत्।
स्नायिनः करसरोरुहयुग्मं तस्य गर्भधृतदर्भमराजत्॥ ९॥

---

यक्षेति। प्राक् प्रथमं यक्षकर्दमेन कर्पूरादियोगजेन, कर्पूरागुरुकस्तूरी कङ्कोलैर्यक्षकर्दममित्यमरः। मृदु यथा तथा उन्मृदितं शोधितम् अङ्गं यस्य तं कुरङ्गमदेन कस्तूर्य्यादिना मीलितः सम्बन्धं प्रापितः मौलिः यस्य तं नलम् उच्चाः कुचाः यासां ताः अङ्गनाः अनुबन्धिताः आहृताः भृङ्गाः येषु तैः गन्धवार्भिः गन्धोदकैः साधनैः सिषिचुः सिक्तवत्यः॥ ७॥

भूभृतमिति। तदनन्तरं शुचिः शुद्धः आप्तः हितः पुरोधाः पुरोहितः जलधरात् घटात् स्खलन् ओघः प्रवाहः यासां ताः तीर्थवारीणां लहरीः तरङ्गान् उपरिष्टात् उपरि, उपर्य्युपरिष्टादिति निपातनात् साधुः। सन्दधत् सन्दधानः सन् पृथुना महता तपसा घनं सान्द्रं भूभृतं नलं स्नपयति स्म स्नापितवान्। अन्यत्र आप्तः प्राप्तः शुचिः आषाढः, शुचिः शुद्धेऽनुपहते शृङ्गाराषाढयोरपीति विश्वः। जलधरेभ्यः मेघेभ्यः स्खलन् ओघः यासां ताः तीर्थवारिलहरीः जलवारिलहरीः उपरिष्टात् सन्दधत् सन्दधानः पृथोः वैणस्य, पृथुर्नृपे कृष्णे रज्ज्वां पृथुमहत्यपीति विश्वः। तपसा प्रभावेण घनं शिथिलं प्रसिद्धं भूभृतं पर्वतं स्नपयतीति, भूभृद्भूमिधरे नृप इति विश्वः॥ ८॥

प्रेयसीति। गर्भे धृतानि दर्भाणि येन तत् स्नायिनः स्नातस्य नलस्य करयोः एव सरोरुहयोः युग्मं प्रेयस्याः दम-

कल्प्यमानममुनाचमनार्थं गाङ्गमम्बु चुलुकोदरचुम्बि ।
निर्मलत्वमिलितप्रतिबिम्बां द्यामयच्छदुपनीय करे नु ॥ १० ॥
मुक्तमाप्य दमनस्य भगिन्या भूमिरात्मदयितं धृतरागा ।
अङ्गमङ्गमनु किं परिरेभे तं मृदो जलमृदु ग्रहयालुम् ॥ ११ ॥
मूलमध्यशिखरश्रितवेधःशौरिशम्भुकरकाङ्कशिरःस्थैः ।
तस्य मूर्ध्नि चकरे शुचिदर्भैर्वारि वात्तमिव गाङ्गतरङ्गैः ॥१२॥

---

यस्याः कुचाभ्यां वियोगहविर्भुजः विरहवह्नेः सकाशात् जन्म यस्य तस्य धूमस्य विततीः सन्ततीः बिभ्रदिव अराजत् नूतन-दर्भाणां श्यामवर्णत्वात् धूमसाम्यम् ॥ ८ ॥

कल्प्यमानमिति । अमुना नलेन आचमनार्थं कल्प्यमानं चुलकस्य उदरं मध्यं चुम्बति स्पृशति यत् तत् गाङ्गं गङ्गासम्बन्धि अम्बु कर्तृ निर्मलत्वेन मिलितः प्रतिबिम्बः यस्याः तथोक्तां द्याम् आकाशं स्वर्गञ्च करे अयच्छत्, द्यौः स्वर्गसुरवर्त्म नोरित्यमरः । द्यौःशब्दस्य स्वर्गाकाशवाचित्वाच्छलेनोक्तिः ॥ १० ॥

मुक्तमिति । भूमिः दमनस्य भगिन्या भैम्या मुक्तं परित्यक्तं मृदः मृत्तिकाः ग्रहयालुं गृहीतारं आत्मनः दयितं नलं प्राप्य धृतः रागः रक्तवर्णश्च यया सा तथोक्ता, रागोऽनुरक्ते मात्सर्ये क्लेशे च लोहितादिष्विति विश्वः । सती । अत्र स्मृतिः—"विप्रे गौरमृदः प्रोक्ताः क्षत्रे रक्ताः प्रकीर्त्तिताः" इति । जलेन मृदु अङ्गम् अङ्गं प्रत्यवयवं परिरेभे आलिलिङ्ग किम् । अन्यापि सपत्नीरहितं वल्लभं प्राप्य सानुरागा सती प्रत्यङ्गमालिङ्गति इति ध्वनिः ॥ ११ ॥

मूलमिति । मूलमध्यशिखराणि दर्भाणाम् आदिमध्याग्राणि श्रितानां प्राप्तानां यथाक्रमं वेधःशौरिशम्भूनां ब्रह्म-

प्राणमायतवतो जलमध्ये मञ्जिमानमभजन्मुखमस्य।
आपगापरिवृढोदरपूरे पूर्वकालमुषितस्य सुधांशोः॥ १३॥
मर्त्यलोकमदनः सदृशत्वं बिभ्रदभ्रविशदद्युतितारम्।
अम्बरं परिदधे विधुमौलेः स्पर्द्धयेव दशदिग्वसनस्य॥ १४॥
भीमजामनुचलत् प्रतिवेलं संयियंसुरिव राजऋषीन्द्रः।
प्राववार हृदयं स समन्तादुत्तरीयपरिवेषमिषेण॥ १५॥

---

विष्णुरुद्राणां करकाङ्घ्रिशिरःसु कमण्डलुपादजटाजूटेषु तिष्ठन्तीति तथोक्तैः। अत्र स्मृतिः—"कुशमूले स्थितो ब्रह्मा कुशमध्ये तु केशवः। कुशाग्रे शङ्करं विद्यात्" इति। तैः गाङ्गैः गङ्गासम्बन्धिभिः तरङ्गैः वान्तं निष्ठ्यूतम् इव शुचि निर्मलं वारि दर्भैः कर्त्तृभिः तस्य नलस्य मूर्ध्नि चकरे कीर्णम्। कृविक्षेप इति धातोः कर्मणि लिट्॥ १२॥

प्राणमिति। जलस्य मध्ये प्राणमायतवतः प्राणायामं कृतवतः तस्य नलस्य मुखं कर्त्तृ आपगापरिवृढस्य समुद्रस्य उदरपूरे जलगर्भप्रवाहमध्ये समुद्रमन्थनात् पूर्वकालम् प्राक् उषितस्य कृतवासस्य सुधांशोः चन्द्रस्य मञ्जिमानम् सौन्दर्य्यम् अभजत् समुद्रोदरमध्यस्थचन्द्रसदृशमभूदित्यर्थः॥ १३॥

मर्त्यलोकमिति। मर्त्यलोकमदनः नलः सदृशत्वं बिभ्रत् अभ्रस्येव विशदा द्युतिः यस्य तत्तारं महत्, अन्यत्र अभ्रेषु मेघेषु विशन्त्यः अत एव अद्युतयः दीप्तिरहिताः ताराः नक्षत्राणि यस्य तच्च अम्बरं वस्त्रम् आकाशञ्च, अम्बरं व्योम्नि वाससीत्यमरः। दशदिशः वसनं वस्त्रं यस्य तस्य दिगम्बरस्य विधुमौलेः शम्भोः स्पर्धयेव परिदधे परिहितवान्॥ १४॥

भीमजामिति। राजऋषीणां सदाचारनृपतीनां मध्ये राजा ऋषि ऋत्यक इति प्रकृतिभावः। इन्द्रः श्रेष्ठः सः

स्नानवारिघटराजदुरोजा गौरमृत्तिलकबिन्दुमुखेन्दुः।
केशशेषजलमौक्तिकदन्ता तं बभाज सुभगाप्लवनश्रीः ॥१६॥
श्वैत्यशैत्यजलदैवतमन्त्रस्वादुताप्रमुदितां चतुरक्षीम्।
वीक्ष्य मोघधृतसौरभलोभं घ्राणमस्य सलिलघ्रमिवाभूत् ॥१७॥
सम्यगस्य जपतः श्रुतिमन्त्राः सन्निधानमभजन्त कराब्जे।
शुद्धवीजविशदस्फुटवर्णाः स्फाटिकाक्षवलयच्छलभाजः ॥१८॥

---

नलः भीमजाम् आत्मप्रियां दमयन्तीम् अनु लक्षीकृत्य प्रतिवेलम् अनुचलत् हृदयं संयियंसुः इव संयन्तुमिच्छुरिव उत्तरीयस्य यः परिवेषः तस्य मिषेण व्याजेन समन्तात् प्राववार प्रावृतवान् ॥ १५ ॥

स्नानेति। स्नानवारिघटौ इव राजन्तौ उरोजौ कुचौ यस्याः सा, गौरः पीतवर्णः मृत्तिलकबिन्दुः इव मुखेन्दुः यस्याः सा, केशशेषाणि जलानि एव मौक्तिकानि दन्ताः यस्याः, नासिकोदरेत्यादिना पक्षे ङीपोऽविधानादन्यत्र षङ्। सा सुभगा रम्या आप्लवनस्य श्रीः शोभा तं नलं बभाज भेजे ॥ १६ ॥

श्वैत्येति। श्वैत्येन श्वेततया शैत्येन शीतत्वेन जलं दैवतं यस्य तेन मन्त्रेण स्वादुतया माधुर्य्येण च प्रमुदितां चतुरक्षीं चतुर्णाम् अक्षाणां यथाक्रमं नयनत्वक्श्रोत्ररसनाख्यानाम् इन्द्रियाणां समाहारं वीक्ष्य मोघं व्यर्थं यथा भवति तथा धृतः सौरभे लोभः येन तत् अस्य घ्राणं घ्राणेन्द्रियं सलिलं जिघ्रति यत् तत् सलिलघ्रं, सतोरुपसर्गे कः। तादृशम् अभूत् इव ॥ १७ ॥

सम्यगिति। श्रुतिमन्त्राः शुद्धैः वीजैः विशदानि निर्मलानि स्फुटवर्णानि अक्षराणि येषां ते शुद्धवीजाश्च ते विश-

पाणिपर्वणि यवः पुनरास्थद्दैवतर्पणयवार्पणमस्य।
न्युप्यमानजलयोगितिलौघैः स द्विरुक्तकरतालुतिलोऽभूत् ॥१९॥
पूतपाणिचरणः शुचिनोच्चैरध्वनानितरपादहतेन।
ब्रह्मचारिपरिचारिसुरार्चावेश्म राजऋषिरेष विवेश ॥२०॥
क्वापि यन्नभसि धूपजधूमैर्मेचकागुरुभवैर्भ्रमराणाम्।

---

दस्फुटवर्णाश्चेति विशेषणसमासः। श्रुतिमन्त्राः स्फाटिकस्य अक्षवलयस्य अक्षमालायाः छलं व्याजं भजन्ति ये ते। स्फटिकाक्षवलयमपि शुद्धवीजं विशदवर्णं च भवति। तादृशाः सन्तः सम्यग् यथा तथा जपतः अस्य नलस्य करः एव अब्जं तस्मिन् सन्निधानम् सान्निध्यम् अभजन्त प्राप्ताः ॥ १८॥

पाणिरिति। अस्य नलपाणेः पर्वणि यवः यवाकारा स्पष्टरेखा दैवे दैवसम्बन्धितर्पणे यवानाम् अर्पणं कर्म पुनरास्थत् पुनरुक्तम् अकरोत्। न्युप्यमानेन पितृभ्यः दीयमानेन, पितृदानं निवापः स्यादित्यमरः। जलेन युज्यन्ते ये तैः तिलानाम् ओघैः समूहैः द्विरुक्तः करतालुतिलः तिलाकाररेखा यस्य सः अभूत्, भाग्यवतां हस्ते यवाकाराः तिलाकाराश्च रेखाः दृश्यन्ते इति भावः ॥ १९॥

पूतपाणिरिति। एषः राजऋषिः नलः, ऋत्यक इति प्रकृतिभावः। पूतौ पाणिचरणौ यस्य सः तादृशः सन् इतराणां ब्रह्मचारिव्यतिरिक्तानां पादैः हतः क्षुण्णः इतरपादहतः तादृशः न भवतीति अनितरपादहतः तेन शुचिना शुद्धेन उच्चैः उन्नतेन अध्वना साधनेन ब्रह्मचारिणः परिचारिणः परिचारकाः यत्र तत् सुरार्चावेश्म देवपूजागृहं विवेश प्रविष्टवान् ॥२०॥

क्वेति। यस्य सुरार्चावेश्मनः नभसि क्वापि कस्मिंश्चित्

भूयते स्म सुमनःसुमनःस्रग्दामधामपटले पटलेन ॥ २१ ॥
साङ्कुरेव रुचिपीततमा यैर्यैः पुरास्ति रजनी रजनीव ।
ते धृता वितरितुं त्रिदशेभ्यो यत्र हेमलतिका इव दीपाः ॥२२
अङ्कचुम्बिघनचन्दनपङ्कं यत्र गारुडशिलाजममत्रम् ।
प्राप केलिकवलीभवदिन्दोः सिंहिकासुतमुखस्य सुखानि ॥२३॥

---

प्रदेशे सुमनःसुमनसां जातिकुसुमानाम् । सुमनाः मालत्यां पण्डिते पुष्पे देवे चेति विश्वः । स्रग्दामभिः निर्मितस्य धाम्नः गृहस्य पटले प्रान्ते मेचकागुरुभवैः धूपजधूमैः भ्रमराणां पटलेन समूहेन भूयते स्म भूतम् पुष्पाणामुपरि भ्रमरैः भाव्यम् अत्र च धूपजधूमा एव तत् स्थाने जाता इत्यर्थः ॥ २१ ॥

साङ्कुरेति । रजनी रात्रिः यैः दीपैः रुचिभिः दीप्तिभिः साधनैः पीतं ग्रस्तं तमः अन्धकारं यस्यां सा रुचिपीततमा सती साङ्कुरा तेजोऽङ्कुरसहिता इव पुरास्ति आसीत्, पुरा-लुङ् स्त इति भूते लट् । रजनी रात्रिः यैः दीपैः रुचिभिः दीप्तिभिः पीततमा अत्यर्थं पीतवर्णा सती साङ्कुरा सप्ररोहा रजनी इव हरिद्रेव पुरास्ति, रजनी पीतिकायां रात्रौ हरि-द्रायामिति विश्वः । हेमलतिकाः इव स्थिताः ते दीपाः यत्र वेश्मनि त्रिदशेभ्यः वितरितुं धृताः अर्पिताः ॥ २२ ॥

अङ्केति । यत्र वेश्मनि अङ्के अन्तिके चुम्बति स्पृशति अङ्कचुम्बी घनः सान्द्रः चन्दनपङ्कः यस्य तत्तादृशं सत् गारु-डशिलाजं मरकतशिलाजं अमत्रं पात्रं केलिना क्रीडया कव-लीभवदिन्दोः, ग्रासीकृतचन्द्रस्य तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्येति पुंवद्भावः । सिंहिकासुतमुखस्य राहुमुखस्य सिंहिकानन्दनो राहुरिति साधुः, सुखानि प्राप प्राप्तवान् ।

गर्भमेणमदकर्दमसान्द्रं भाजनानि रजतस्य भजन्ति ।
यत्र साम्यमगमन्नमृतांशोरङ्करङ्कुकलुषीकृतकुक्षेः ॥ २४ ॥
उज्जिहानसुकृताङ्कुरशङ्का यत्र धर्मगहने खलु तेने ।
भूरिशर्करकरम्भवलीनामालिभिः सुगतसौधसखानाम् ॥२५॥
खर्वमाख्यदमरौघनिवासं पर्वतं क्वचन चम्पकसम्पत् ।
मल्लिकाकुसुमराशिरकार्षीद् यत्र च स्फटिकसानुमनुच्चम् ॥२६॥

---

यत्र गृहे गारुड़मणिपात्राणि चन्दनभरितानि सन्तीति भावः ॥ २३ ॥

गर्भमिति। यत्र वेश्मनि रजतस्य भाजनानि एणमदकर्दमेन कस्तूरीपङ्केन सान्द्रं गर्भं मध्यप्रदेशं भजन्ति प्राप्नुवन्ति, अङ्केन चिह्नेन रङ्कुणा मृगेण कलुषीकृतः कुक्षिः यस्य तथोक्तस्य अमृतांशोः चन्द्रस्य साम्यं समताम् अगमन् गतानि यत्र देवपूजार्थं रजतपात्राणि कस्तूरीपूर्णानि सन्तीति भावः ॥ २४ ॥

उज्जिहानेति। धर्मेण गहने निविड़े धर्मगहने अन्यत्र धर्मारण्ये यत्र वेश्मनि सुगतस्य बुद्धस्य सौधानां चैत्यानां सखायः सदृशाः सुगतसौधसखाः, राजाहःसखिभ्यष्टच्। तेषां भूरयः शर्कराः सिताः येषु तथोक्तानां करम्भाणां दधिसक्तूनामिव, करम्भा दधिसक्तव इत्यमरः। वलीनाञ्च आलिभिः पङ्क्तिभिः कर्त्रीभिः उज्जिहानेषु उद्गच्छत्सु सुकृताङ्कुरेषु पुण्यप्ररोहेषु शङ्का तेने कृता खलु ॥२५॥

खर्वमिति। यत्र वेश्मनि क्वचन प्रदेशे चम्पकानां सम्पत् समृद्धिः अमरौघस्य देवसमूहस्य निवासं वासस्थलभूतं पर्वतं सुमेरुं खर्वं ह्रस्वं आख्यत् उक्तवती, मल्लिकाकुसुमानां राशिः स्फटिकसानुं कैलासम् अनुच्चं ह्रस्वम् अकार्षीत् ॥ २६ ॥

स्वात्मनः प्रियमपि प्रति गुप्तिं कुर्वती कुलवधूमवजह्ने ।
हृद्यदैवतनिवेद्यनिवेशाद् यत्र भूमिरवकाशदरिद्रा ॥२७॥
यत्र कान्तकरपीडितनीलग्रावरश्मिचिकुरासु विरेजुः ।
गातृमूर्द्धविधुतेरनुबन्धात् कुट्टिमक्षितिषु कुट्टमितानि ॥२८॥
नैकवर्णमणिभूषणपूर्णे स क्षितीन्दुरनवद्यनिवेद्ये ।
अध्यतिष्ठदमलं मणिपीठं तत्र चित्रसिचयोच्चयचारौ ॥२९॥

---

स्वात्मन इति । यत्र वेश्मनि भूमिः पृथिवी हृद्यानां मनोज्ञानां दैवतानां देवतासम्बन्धिनां निवेद्यानां देवोपहाराणां निवेशात् स्थापनात् हेतोः अवकाशदरिद्रा निरवकाशा सती स्वात्मनः प्रियं भर्त्तारम् अपि प्रति उद्दिश्य गुप्तिं गोपनं कुर्वती कुलवधूम् अवजह्ने ज्ञातवती तत्सदृशी जाता इत्यर्थः । कुलवधूरपि स्वभर्त्तारं प्रति लज्जाधिक्यात् स्वशरीरं गोपयति। बहूनि निवेद्यानि यत्र गृहे स्थापितानि आसन् इति भावः ॥२७॥

यत्रेति । कान्तस्य चन्द्रकान्तस्य वल्लभस्य च, कान्तोऽश्मनि प्रिये चापीति विश्वः। करेण हस्तेन किरणेन च, बलिहस्तांशवः करा इत्यमरः। पीड़ितानां नीलग्राव्णाम् इन्द्रनीलानां रश्मयः दीप्तयः एव चिकुराः केशाः यासां तासु यत्र वेश्मनि कुट्टिमक्षितिषु निबद्धभूमिषु गातुः गायकस्य मूर्द्धविधुतेः शिरःकम्पस्य अनुबन्धात् हेतोः कुट्टमितानि शृङ्गारचेष्टाविशेषा विरेजुः। अत्र भरतमुनिः—"केशस्तनोदरादिग्रहणेऽपि हर्षसम्भ्रमोत्पन्नं कुट्टमितमिति विज्ञेयं सुखं विदुः" मणिबद्धा भूमयो गायकस्य यत्र सन्तीति भावः॥ २८ ॥

नैकेति। नैकवर्णैः अनेकच्छायैः, मणिभूषणैश्च पूर्णे अनवद्यानि निर्दोषाणि निवेद्यानि यत्र तस्मिन् चित्राणि

सम्यगर्चति नलेऽर्कमतूर्णं भक्तिगन्धिरमुनाऽकलि कर्णः।
श्रद्धधानहृदयं प्रति चान्तः साम्बमम्बरमणिर्निरचैषीत् ॥३०॥
तदर्घ्यमरहस्यजपेषु स्रङ्मयः श्रयमसुष्य बभाज।
क्तिमानमिव शिक्षितुमुच्चैरक्तचन्दनजवीजसमाजः ॥३१॥
र्चयन् हरकरं स्मितभाजा नागकेसरतरोः प्रसवेन।

---

सचयानाम् उच्चयेन समूहेन चारौ चारुणि तत्र सुरार्चनवे-
श्मनि चितीन्दुः सः नलः अमल मणिपीठम् अध्यतिष्ठत्
अधिष्ठितवान्, अधिशीङ्स्थासामपि करणस्य कर्मसंज्ञा
२९॥

सम्यगिति। अतूर्णम् अव्यग्रं यथा भवति तथा नले
र्कं सूर्यं सम्यक् अर्चति, अमुना अर्केण कर्णः राधेयः भक्तः
न्धः लेशः अस्ति यस्मिन्, गन्धो गन्धक आमोदे लेशे सम्ब-
न्धगन्धयोरिति विश्वः। सः भक्तिगन्धिः अल्पभक्तिः अकलि,
ल्पाख्यायामिति समासान्तः। अम्बरमणिः सूर्यः साम्बं
पासुतञ्च प्रति श्रद्दधानहृदयं चान्तः अन्तःकरणे ईषत् च
श्रद्धायुक्तहृदयं, सुपि नामार्थे इत्यव्ययीभावः। निरचैषीत्
र्णापेक्षया तथा शाम्बापेक्षया नल एव मे परमभक्त इति
निश्चिकाय इति भावः॥ ३०॥

तदिति। तेषां तेषाम् अर्घ्यमन्त्रः सूर्यस्य रहस्यानां
पेषु स्रङ्मयः मालामयः रक्तचन्दनजानां कुचन्दनोद्भवानां
जानां, नीलपर्णी तु रक्ताङ्गं चन्दनन्तु कुचन्दनमित्यमरः।
माजः समूहः उच्चैः अधिकं रक्तिमानं रक्तत्वं शिक्षितुमिव
सुष्य नलस्य श्रयं हस्तं बभाज प्राप्तवान्। शिक्षार्थं यथा
शष्याः उपाध्यायं सेवन्ते तथा इति भावः॥ ३१॥

अर्चयन्निति। सः अयं नलः स्मितभाजा नागकेसरतरोः हेम-

सोऽयमापयदतिर्य्यगवाग्दिक्पालपाण्डुरकपालविभूषाम् ॥३२॥
नीलनीररुहमाल्यमयीं स न्यस्य तस्य गलनालविभूषाम् ।
स्फाटिकीमपि तनुं निरमासीन्नीलकण्ठपदसान्वयतायै ॥३३॥
प्रीतिमेष्यति कृतेन ममेष्टकर्मणा पुररिपुर्मदनारिः ।
तत्पुरः पुरमतोऽयमधाक्षीद्धूपरूपमथ कामशरञ्च ॥ ३४ ॥

---

विशेषस्य प्रसवेन कुसुमेन साधनेन हरस्य शम्भोः करं हस्तं अर्चयन् तिरश्चा दिशः तिर्य्यग्वर्त्तमानप्राच्यादिदिगष्टकस्य तथा अवाच्या दिशः सकाशाच्च अन्या अतिर्य्यगवागदिक् ऊर्द्ध्वा इत्यर्थः तस्या पालः रक्षकः ब्रह्मा इत्यर्थः तस्य ब्रह्मणः पाण्डुरं कपालं तस्य विभूषाम् आपयत् प्रापितवान् हरेण ब्रह्मणः पञ्चमं शिरः छिन्नं ततः प्रायश्चित्तं कुर्वतो हरस्य भिक्षार्थं तत् करे तिष्ठति। नलेन पूजायां दत्तं नागकेशरपुष्पं ब्रह्मकपालसदृशं बभौ इति भावः ॥३२॥

नीलेति। सः नलः तस्य हरस्य नीलनीररुहमाल्यमयीं इन्दीवरमालां गलनालस्य विभूषां न्यस्य समर्प्य स्फाटिकीं स्फटिकमयीम् अपि तनुं शरीरं नीलकण्ठः इति पदस्य सान्वयतायै अन्वर्थत्वाय निरमासीत् कल्पितवान्, मा‌ मान इति धातोर्भौवादिकाल्लुङ् ॥ ३३ ॥

प्रीतिमिति। पुररिपुः मदनारिः शम्भुः कृतेन मम इष्टकर्मणा यतः प्रीतिम् एष्यति अतः कारणात् अयं नलः तस्य पुररिपोः मदनारेश्च पुरः अग्रतः यथाक्रमं धूपरूपं पुरं गुग्गुलरूपं असुरपुरञ्च पुरं, पुरो शरीरे च गुग्गुलौ कथितः पुर इति विश्वः। अथ अनन्तरं कामशरं कर्पूरं मदनबाणञ्च अधाक्षीत दग्धवान् ॥ ३४ ॥

तन्मुहूर्त्तमपि भीमतनूजाविप्रयोगमसहिष्णुरिवायम्।
शूलिमौलिशशिभीततयाऽभूद्ध्यानमूर्च्छननिमीलितनेत्रः॥३५॥
दण्डवद्भुवि लुठन् स ननाम त्र्यम्बकं शरणभागिव कामः।
आत्मशस्त्रविशिखासनबाणान् न्यस्य तत्पदयुगे कुसुमानि॥३६॥
त्र्यम्बकस्य पदयोः कुसुमानि न्यस्य सैष निजशस्त्रनिभानि।
दण्डवद्भुवि लुठन् किमु कामस्तं शरण्यमुपगम्य ननाम॥३७॥
व्यापृतस्य शतरुद्रियजप्ये पाणिमस्य नवपल्लवलीलम्।
भृङ्गभङ्गिरिव रुद्रपराक्षश्रेणिराश्रयत रुद्रपरस्य॥ ३८॥

---

तदिति। अयं नलः तन्मुहूर्त्तं तस्मिन् मुहूर्त्ते, कालाध्वनोरत्यन्तसंयोगे द्वितीया। शूलिनः शम्भोः मौलिशशिनः सकाशात् भीततया भीतत्वेन हेतुना भीमतनूजया दमयन्त्या विप्रयोगं विरहम् असहिष्णुरिव ध्यानेनैव मूर्च्छनेन विनिमीलिते नेत्रे यस्य सः अभूत्॥ ३५॥

दण्डवदिति। आत्मनः स्वस्य शस्त्रम् आयुधं विशिखासनं धनुश्च बाणान् विशिखान् च कुसुमानि त्र्यम्बकस्य पदयोः युगे न्यस्य शरणभाक् कामः इव सः नलः दण्डवत् भुवि लुठन् त्र्यम्बकं ननाम प्रणतवान्॥ ३६॥

उक्तमेवार्थं भङ्ग्यन्तरेणाह त्र्यम्बकस्येति। सः एषः कामः सः एषः मदनः, सोऽचि लोपे चेत् पादपूरणमित्यत्र श्लोकपादस्यापि ग्रहणमिष्यत इति सोऽलोपप्रवृत्तिः। निजशस्त्रनिभानि स्वायुधसदृशानि त्र्यम्बकस्य पदयोः न्यस्य समर्प्य भुवि दण्डवत् लुठन् मनसिजेन शरण्यं त्र्यम्बकम् उपगम्य प्राप्य ननाम किमु?॥ ३७॥

व्यापृतस्येति। रुद्रपरस्य रुद्रपरायणस्य शतरुद्रियस्य मन्त्रस्य नाम्नदे पदे त्वथो शतरुद्राः सन्त्वायत्वेति यत् जप्ये

उत्तमं स महति स्म महीभृत् पूरुषं पुरुषसूक्तविधानैः।
द्वादशापि च स केशवमूर्त्तीर्द्वादशाक्षरमुदीर्य्य ववन्दे ॥३९॥
मल्लिकाकुसुमडुण्डुभकेन स भ्रमीवलयितेन कृते तम्।
आसने निहितमैक्षत साक्षात् कुण्डलीन्द्रतनुकुण्डलभाजम्॥४०
मेचकोत्पलमयी वलिबन्धुस्तद्दलिस्तगुरसि स्फुरति स्म।
कौस्तुभाख्यमणिकुट्टिमवास्तुश्रीकटाक्षविकटायितकोटिः ॥४१॥

---

जपे, नपुंसके भावे क्तः, सांविश्चेति चकारा दिवस्वदासे जय-दासेत्यत्र जप्तं त्यादितश्चेति चकारस्यानुक्तसमुच्चयार्थत्वादश्व-स्तवदित्याहुरिति भट्टक्षीरस्वामी। तथा च जपिवमिभ्यां वेति महोपाध्यायवर्द्धमानसूत्रम्। व्यापृतस्य व्यापारवतः अस्य नलस्य नवपल्लवस्येव लीला विलासः यस्य तं पाणिं रुद्र-परासु परेषाम् उपरितनानाम् अक्षराणां श्रेणिः रुद्राक्षमाला भृङ्गाणां भाङ्गः प्रकारः मालेव आश्रयत श्रितवती ॥३८॥

उत्तममिति। सः महीभृत् नलः उत्तमं पूरुषं पुरुष-सूक्तस्य विधानैः विधिभिः महति स्म पूजितवान्। सः नलः द्वादशाक्षरं मन्त्रम् उदीर्य्य द्वादशापि च केशवस्य मूर्त्तीः ववन्दे ॥ ३८ ॥

मल्लिकेति। सः नलः भ्रमीवलयितेन वलयीकृतेन मल्लिकाकुसुमानां डुण्डुभकेन डुण्डुभाकारया माल..., समौ राजिलडुण्डुभावित्यमरः। इवेति कृतार्थिति कन्। मल्लिका-कुसुमडुण्डुभकेन भ्रमीवलयितेन कृते तमित्यत्र पादान्तगुरुत्वं छन्दःशास्त्रेऽभ्युपगम्यते। कृते आसने निहितं उत्तमं पुरुषं कुण्डलीन्द्रस्य शेषस्य सर्व्वाभिन्याः तनोः शरीरस्य कुण्डलं वलयं भजति प्राप्नोति यः तं साक्षात् ऐक्षत ॥ ४० ॥

मेचकेति। बलेः असुरविशेषस्य बन्धुः सखा तस्य वलिनः

स्वर्णकेतकशतानि स हेम्नः पुण्डरीकघटनां रजतस्य ।
मालयाऽरुणमणेः करवीरं तस्य मूर्ध्नि पुनरुक्तमकार्षीत् ॥४२॥
नाल्पभक्तबलिरन्ननिवेद्यैस्तस्य हारिणमदेन स कृष्णः ।
शङ्खचक्रजलजातवदर्चः शङ्खचक्रजलपूजनयाऽभूत् ॥४३॥

---

वन्धोः स्रक् विष्णोः उरसि मेचकोत्पलमयो तस्य नलस्य बलिस्रक् पूजामाल्यं, बलिः पूजोपहारः स्यात् बलिर्दैत्यो बलिः कर इति विश्वः। कौस्तुभाख्यं कौस्तुभरत्नमेव मणिकुट्टिमं मणिनिबद्धं वास्तु वेश्म भूः यस्याः तस्याः श्रियोः लक्ष्म्याः कटाक्षेण अपाङ्गदर्शनेन विकटायिताः विशालीभूताः कोटयः यस्याः सा तादृशी सती स्फुरति स्म शुशुभे ॥ ४१ ॥

स्वर्णेति। तस्य विष्णोः मूर्ध्नि स्वर्णकेतकानां शतानि हेम्नः सुवर्णस्य मालया पुण्डरीकानाम् अमिताम्भोजानां घटनां रचनां रजतस्य मालया करवीरं कुसुमं अरुणमणेः पद्मरागस्य मालया साधनेन पुनरुक्तम् अकार्षीत् कृतवान्, पुनरुक्तं पुनरुक्तञ्चेति नपुंसकमनपुंसकेत्यादिना एकवद्भावः ॥ ४२ ॥

नेति। नाल्पभक्तः अधिकभक्तः बलिः असुरविशेषः यस्य सः विष्णुः अन्ननिवेद्यैः उपहारैः नाल्पः महान् भक्तः बलिः अन्नोपहारः यस्य, भक्तमन्धोऽन्नमित्यमरः। सः अभूत् नाम्ना कृष्णः सः विष्णुः हारिणमदेन कस्तूर्या कृष्णः कृष्णवर्णः अभूत्, कृष्णो वर्णे हरौ ध्वांक्षे पिके व्यासे शुकेऽर्जुने इत्यजयपालः। शङ्खं चक्रं सुदर्शनं जलजातं पद्मञ्च तद्वत् अर्चा प्रतिमा यस्य सः विष्णुः शङ्खानां चक्रे समूहे, चक्रं सैन्ये रथाङ्गे च राष्ट्रे दम्भेतरे चये। आयुधाः सलिलावर्त्ते इत्युभयथाप्य-

राज्ञि कृष्णलघुधूपजधूमाः पूजयत्यहिरिपुध्वजमास्मिन्।
निर्ययुर्भवधृता भुजगा भीदुर्यशोमलिनिता इव जालैः ॥४४॥
अर्घ्यनिःस्वमणिमाल्यविमिश्रैः स्मेरजातिमयदामसहस्रैः।
तं पिधाय विदधे बहुरत्नक्षीरनीरनिधिमग्नमिवैषः ॥४५॥
अक्षसूत्रगतपुष्करबीजश्रेणिरस्य करसङ्गमेत्य।
श्रीरिसूक्तजपितुः पुनरापत् पद्मसद्मचिरवासविलासम् ॥४६॥
कैटभारिपदयोर्नतमूर्द्धा सञ्चिता विचकिलस्रगनेन।

---

जयपालः। जलेन या पूजना तया शङ्खचक्रजलेन जातश्चेति अर्हा पूजा अर्चा यस्य, अर्चा पूजाप्रतिमयोरिति विश्वः। सः अभूत् ॥ ४३ ॥

राज्ञीति। अस्मिन् राज्ञि नले अहिरिपुः गरुडः ध्वजः लाञ्छनं यस्य तं विष्णुं पूजयति सति भिया अहिरिपुभिया यत् दुर्यशः तेन मलिनिताः मलिनीकृताः भवेन शम्भुना धृताः भुजगाः इव कृष्णाः लघवः धूपजाः धूमाः जालैः गवाक्षैः निर्ययुः निर्गताः। ४४ ।

अर्घ्येति। एषः नलः निःस्वानां मूल्यदरिद्राणां मणिमाल्यानां माल्यैः विमिश्रैः मिश्राणितैः, स्मेराणां विकसितानां जातिमयदाम्नां मालतीकुसुमस्रजां सहस्रैः तं विष्णुं पिधाय आच्छाद्य बहुरत्नक्षीरनीरनिधौ दुग्धाब्धौ मग्नम् इव विदधे । ४५ ।

अक्षसूत्रेति। श्रीरिसूक्तस्य जपितुः नलस्य करसङ्गं हस्तसम्बन्धम् एत्य अक्षसूत्रगतानां पुष्करबीजानां श्रेणिः माला पद्मम् एव सद्म तत्र चिरनिवासस्य बहुकालावस्थितेः विलासं पुनः आपत् प्राप्तवती ॥ ४६ ॥

कैटभारीति। सञ्चिता समर्पिता कैटभारेः विष्णोः

जङ्गजेव भुवनप्रभुणाऽभात् सेविताऽनुनयताऽऽयतमाना ॥४७॥
स्वानुरागमनघः कमलायां सूचयन्नपि हृदि न्यसनेन।
गौरवं व्यधित वागधिदेव्याः श्रीगृहोर्ध्वनिजकण्ठनिवेशात् ॥४८॥
इत्यवेत्य वसुना बहुनाऽपि प्राप्नुवन्न मुदमर्चनया सः।
सूक्तिमौक्तिकमयैरथ हारैर्भक्तिमैहत हरेरुपहारैः ॥ ४९ ॥
दूरतः स्तुतिरवाग्विषयस्ते रूपमस्मदभिधास्तव निन्दा।
तत् क्षमस्व यदहं प्रलपामीत्युक्तिपूर्वमयमेतदवोचत् ॥ ५० ॥

---

पदयोः चरणयोः आयतं दीर्घं मानं प्रमाणं आयतः दीर्घः मानः ईर्ष्याकोपश्च यस्याः, मान प्रमाणे प्रायादौ मानश्चित्तोन्नतौ ग्रह इति विश्वः। सा विचकिलस्रक् मल्लिकामाला, नतः मूर्द्धा यस्य तेन अनुनयता प्रसादयता अनेन भुवनप्रभुणा लोकनाथेन नलेन जलेश्वरेण समुद्रेण च, भुवन विपिने तोये इति विश्वः। सेविता सती जङ्गजा इव अभात् बभौ ॥ ४७ ॥

स्वेति। अनघः निर्दोषः विष्णुः हृदि वक्षसि न्यसनेन अर्पणेन कमलायां लक्ष्म्यां स्वानुरागं सूचयन् अपि श्रीगृहात् लक्ष्मीनिवासात् वक्षसः ऊर्द्ध्वं निजे कण्ठे निवेशात् हेतोः वागधिदेव्याः वाग्देवतायाः गौरवं पूजां व्यधित कृतवान् ॥ ४८ ॥

इतीति। अथ सः नलः इति पूर्वोक्तप्रकारेण अवेत्य ज्ञात्वा बहुना अपि वसुना धनेन च मुदं प्रीतिं न प्राप्नुवन् सूक्तिमौक्तिकमयैः हारैः उपहारैश्च हरेः भक्तिम् ऐहत हरिभक्तिम् ऐच्छत् ॥ ४९ ॥

दूरत इति। इति स्तुतिः दूरतः दूरे तव रूपम् अवाग्वि-

स्वप्रकाश ! जड एष जनस्ते वर्णनं यदभिलष्यति कर्त्तुम् ।
नन्वहर्पतिमहः प्रति स स्यान्न प्रकाशनरसस्तमसः किम् ?॥५१॥
नैव वाङ्मनसयोर्विषयो भूस्त्वां पुनर्न कथमुद्दिशतां ते ।
उत्कचातकयुगस्य घनः स्यात् तृप्तये घनमनाप्नुवतोऽपि ॥५२॥
छद्ममत्स्यवपुषस्तव पुच्छास्फालनाज्जलमिवोद्धृतमब्धेः ।
श्वैत्यमेत्य गगनाङ्गणसङ्गादाविरस्ति विबुधालयगङ्गा ॥५३॥

---

वयः अस्मदभिधाः अस्मदीया स्तुतिः निन्दा तत्तस्मात्कारणात् अहं प्रलपामि अनर्थकं वच्मि ततः क्षमस्व इत्युक्तिः पूर्वं यस्मिन् तत् यथा भवति तथा अयं नलः एतत् वक्ष्यमाणम् अवोचत् उक्तवान् ॥ ५० ॥

स्वेति। हे स्वप्रकाश ! स्वयंप्रकाश ! विष्णो ! जडः मूढः एषः जनः ते तव वर्णनं कर्त्तुं अभिलष्यति वाञ्छति, ननु विष्णो ! अहर्पतेः सूर्य्यस्य महः तेजः प्रति लक्षीकृत्य तमसः अन्धकारस्य प्रकाशने रसः वाञ्छा न स्यात् किम् ? अपितु स्यादेव इत्यर्थः ॥ ५१ ॥

नेति। हे विष्णो ! मम वाङ्मनसयोः, अचतुरेत्यादिना साधुः। विषयः गोचरः नैव भूः, तथापि ते वाङ्मनसे त्वां कथं न उद्दिशतां न लक्षयतां ? दिश अतिसर्जने इत्यस्माल्लोटि रूपम्। तथाहि, घनं मेघं अनाप्नुवतः अलभमानस्य अपि उत्कयोः उत्सुकयोः चातकयोः युगस्य द्वन्द्वस्य तृप्तये घनः मेघः स्यात् ॥ ५२ ॥

छद्मेति। हे विष्णो ! छद्मना कपटेन मत्स्यः मीनः वपुः शरीरं यस्य तथोक्तस्य तव पुच्छस्य आस्फालनात् ताड़नात् हेताः उद्धृतम् उच्चैः ऊर्ध्वम् उत्क्षिप्तं जलं कर्त्तृ गगनस्य अङ्गणेन सङ्गात् श्वैत्यं श्वेतत्वम् एत्य विबुधालयगङ्गा स्वर्णदी भूत्वा

भूरिसृष्टिधृतभूवलयानां पृष्ठसीमनि किणैरिव चक्रैः।
चुम्बिताऽवतु जगत् चितिरक्षा कर्मठस्य कमठस्तव मूर्त्तिः ॥५४
दिक्षु यत्खुरचतुष्टयमुद्रामभ्युपैमि चतुरोऽपि समुद्रान्।
तस्य पोत्रिवपुषस्तव दंष्ट्रातुष्टयेऽस्तु मम वास्तु जगत्याः ॥५५॥
उद्धृतिस्खलदिलापरिरम्भाल्लोमभिर्वहिरितैर्बहुहृष्टैः।
ब्राह्ममण्डमभवत् बलिनीपं केलिकोल! तव तत्र न मातुः ॥५६
दानवौघगहनप्रभवस्त्वं सिंह! मामव रवैर्घनघोरैः।

---

आविरस्ति प्रादुर्भवति उद्धृता छायापो धवला दृश्यन्ते इति इति भावः ॥ ५३ ॥

भूरीति। पृष्ठसीमनि पृष्ठप्रदेशे भूरिषु बह्वीषु सृष्टिषु धृतानां भूवलयानां किणैः मांसग्रन्थिभिः इव चक्रैः चक्राकारराजिभिः चुम्बिता स्पृष्टा चितेः रक्षायां कर्मठस्य कुशलस्य, कर्मणि घटोरच्। तव कमठः मूर्त्तिः जगत् अवतु रक्षतु ॥ ५४ ॥

दिक्ष्विति। हे विष्णो! दिक्षु चतुर्षु चतुरः चतुःसङ्ख्यकान् अपि समुद्रान् यस्य वराहस्य खुराणां चतुष्टयस्य पदम् अभ्युपैमि जानामि तस्य पोत्रिणः वराहस्य वपुषः तव जगत्याः वास्तु वेश्मस्थानं दंष्ट्रा तुष्टये मम अस्तु ॥ ५५ ॥

उद्धृतीति। केलिकोल! क्रीड़ावराह! तत्र ब्रह्माण्डे न मातुः अवकाशम् अलभमानस्य, मनः षष्ठ्येकवचनरूपम्। तव उद्धृतौ उद्धरणे स्खलन्त्याः इलाभूमेः उर्व्याः परिरम्भात् हेतोः बहु यथा भवति तथा हृष्टैः विकसितैः बहिर्ब्रह्माण्डस्य बहिर्गतैः लोमभिः साधनैः ब्राह्मम् अण्डं ब्रह्माण्डं बलिनीपं पूजाकदम्बकुसुमम् अभवत् ॥ ५६ ॥

दानवेति। हे सिंह! विष्णो! वैरिणः शत्रून् दान-

वैरिदारिदिविषत्सुकृतास्त्रग्रामसम्भवभवन्मनुजार्द्धः ॥ ५७ ॥
दैत्यभर्त्तृदराम्बुनिविष्टां शक्रसम्पदमिवोद्धरतस्ते ।
पातु पाणिसृणिपञ्चकमस्मांश्छिन्नरज्जुनिभलग्नतदन्त्रम् ॥५८॥
स्वेन पूर्य्यत इयं सकलाशा भो ! बलेन मम किं भवतेति ।
त्वं वटुः कपटवाचि पटीयान् देहि वामन ! मनःप्रमदं नः ॥५९

---

वान् दारयन्ति यानि तेषां दिविषत्सुकृतानां देवपुण्यानामेव अस्त्राणां आयुधानां ग्रामे समूहे संसदि च सम्भवः उत्पत्तिः यस्य सः भवतः तव मनुजस्य नरस्य अर्द्धः भागः यस्य तत्तादृशः सन् दानवानां ओघः समूहः एव गहने प्रभवः उत्पत्तिः यस्य सः त्वं घनैः सान्द्रैः घोरैः भयङ्करैः रवैः ध्वनिभिः माम् अव रक्ष ॥ ५७ ॥

दैत्येति। हे नरसिंह! दैत्यभर्त्तुः हिरण्यकशिपोः उदरमेव अम्बु कूपः तस्मिन्, पुंस्येवान्धुः प्रहिः कूप इत्यमरः। निविष्टां शक्रसम्पदम् उद्धरतः इव ते तव छिन्नरज्जुनिभानि खण्डितदामसदृशानि तस्य लग्नानि तस्य दैत्यभर्त्तुः अन्त्राणि यस्य, श्रोणादिकः कुप्रत्ययः। अन्त्रम्पुरीतदित्यमरः। तत्पाणीनामेव सृणीनाम् अङ्कुशानां पञ्चकं अस्मान् पातु, कूपे हि पतितानां न्युद्धरणादौ न्यङ्कुशाकारेणोद्भ्रियन्ते इति भावः ॥ ५८ ॥

स्वेनेति। भो! बलेन सकला इयम् आशा मनोरथः भवता त्वया स्वेन धनेन पूर्य्यते अवश्यं पूरणीया इत्यर्थः। अन्यच्च, भो राजन्! इयं सकला आशा सर्वाशा, दिशा तृष्णा दिशोः प्रोक्तेति विश्वः। स्वेन आत्मीयेन बलेन सामर्थ्येन कर्त्रा पूर्य्यते मम भवता किं प्रयोजनम् इत्येवंरूपायां कपटवाचि छद्मवचने पटीयान् पटुः त्वं हे वामन! विष्णो! नः अस्माकं मनसः प्रमदं हर्षं देहि कुरु ॥ ५९ ॥

दानवारिरसिकाय विभूतेरस्मि तेऽस्मि सुतरां प्रतिपत्तिम्।
इत्युदग्रपुलकं बलिनोक्तं त्वां नमामि कृतवामनमायम् ॥६०॥
भोगिभिः चितितले दिवि वासं बन्धमेष्यसि चिरं भ्रियमाणः।
पाणिरेव भुवनं वितरेति छद्मवाग्भिरव वामन! विघ्नम् ॥६१॥
आश्रयस्य विहृतिः क्रियते किं दिक्षुरस्मि हि भवच्चरणेभ्यः।

---

दानवारीति। हे वामन! दानस्य वारिणः रसिकाय वाञ्छकाय ते तुभ्यं विभूतेः सम्पत्तेः प्रतिपत्तिं दानं सुतराम् अत्यर्थम् अस्मि अहम्, अस्मीत्येतदव्ययं, अस्मि त्वमहमर्थेऽस्मि कामये वशवापीत्यस्य लडुत्तमपुरुषैकवचनम्। अन्यच्च, हे वामन! त्वं दानवानाम् असुराणां अरिः शत्रुः विष्णुः असि सुतराम् अत्यर्थं ते कार्य्यं विभूतेः सम्पत्तेः प्रतिपत्तिं ज्ञानञ्च अस्मि अहम् अस्मि कामये इत्यनेन प्रकारेण उदग्राः पुलकाः यस्मिन् तत् यथा भवति तथा बलिना दानवेन्द्रेण उक्तं कृता वामनरूपा माया येन तं त्वां नमामि॥ ६०॥

भोगिभिरिति। हे बले! चितितले भूलोके दिवि स्वर्गे चिरं बहुकालं वासं भ्रियमाणः तिष्ठन्, धृङ् अवस्थान इत्यस्य रूपम्। येन चिरं भोगिभिः भोगः सुखं तद्वद्भिः सह सम्बन्धं सख्यम् एष्यसि एषः पाणिः हस्तः भुवनं जलं वितर देहि। अन्यच्च, हे बले! चितितले रसातले पाताले एव दिवि स्वर्गे भोगिभिः सर्पैः वासं, अधःस्वरूपयोरस्त्री तलमित्यमरः। चिरं स्थितिम् एष्यसि एषः पाणिः भुवनं लोकं, भुवनं पिष्टपे तोय इत्यजयपालः। वितर इत्यनेन प्रकारेण छद्मवाग्भिः कपटवचनैः हे वामन! विघ्नम् अव रक्ष ॥६१॥

आश्रयस्येति। हे वामन! आश्रयस्य हस्तस्य विहृतिः विस्तृ-

विश्वमित्यभिहितो बलिनाऽस्मान् वामन! प्रणतपावन! पायाः ॥ ६२ ॥

क्षत्रजातिरुदियाय भुजाभ्यां या तवैव भुवनं सृजतः प्राक्।
जामदग्न्यवपुषस्तव तस्यास्तौ लयार्थमुचितौ विजयेताम् ॥ ६३॥

पांशुला बहुपतिर्नियतं या वेधसाऽरचि कृषा नवखण्डा।
तां भुवं कृतवतो द्विजभुक्तां युक्तकारितरता तव जीयात् ॥ ६४॥

---

तिः श्राः क्रियते, किं श्रा इति वाक्योपक्रमे। श्रा प्रगृह्य स्मृतौ वाक्येऽपीत्यमरः। भवतः चरणेभ्यः त्रिभ्यः चरणेभ्यः विश्वं जगत् दित्सुः दातुमिच्छुः अस्मि हि। अन्यच्च, हे वामन! आशयस्य अभिप्रायस्य, अभिप्रायश्छन्द आशय इत्यमरः। विवृतिः विवरणं किमर्थं क्रियते भवच्चरणेभ्यः पूजिताय भवते विश्वं दित्सुः अस्मि हि इत्यनेन प्रकारेण बलिना दानवेन्द्रेण अभिहितः उक्तः त्वं हे प्रणतानां पावन! हे वामन! अस्मान् पायाः, पा रक्षण इत्यस्य अपि लिङो मध्यमपुरुषैकवचनम् ॥ ६२ ॥

क्षत्रेति। हे विष्णो! प्राक् भुवनं सृजतः तव भुजाभ्यां दोर्भ्यां द्विभुजाभ्यां सकाशात् या क्षत्रजातिः उदियाय उद्भूता, "बाहुभ्यां राजन्यः कृतः" इति श्रुतेः। जामदग्न्यः परशुरामः वपुः यस्य तस्य तव तस्याः क्षत्रजातेः लयार्थं [illegible]चितौ कार्य्ये हि कारणे लीनं भवतीत्यौचित्यन्तौ भुजौ विजयेतां, विपराभ्यां जेस्तङादेशः ॥ ६३ ॥

पांशुलेति। हे जामदग्न्य! विष्णो! या भूः पांशुला रजोयुक्ता स्वैरिणी च, नगपांशुपाण्डुभ्यश्चेति मत्वर्थीयो लच्। स्वैरिणी पांशुला च स्यादित्यमरः। नियतं द्रुतं बहवः

ार्त्तवीर्य्यभिदुरेण दशास्ये रैणुकेय ! भवता सुखनाश्ये ।
ालभेदविरहादसमाधिं नौमि राम ! पुनरुक्तिमहं ताम् ॥ ६५ ॥
स्तलेखमसृजत् खलु जन्मस्थानरेणुकमसौ भवदर्थम् ।
ाम ! राममधरीकृततत्तल्लेखकः प्रथममेव विधाता ॥ ६६ ॥

---

तयः यस्याः सा बहुपतिः सती वेधसा ब्रह्मणा रुषा कोपेन
ातुना नवसङ्ख्यकानि खण्डानि भारतादीनि वर्षाणि
ाकलानि यस्याः सा अरचि रचिता, तां भुवं द्विजैः
ाह्मणैः पर्चाभिश्च, दन्तविप्राण्डजा द्विजा इत्यमरः ।
भुक्ताम् अनुभूतां कृतवतः ते तव युक्तकारितरता जीयात्
जयतु, बहुजारभुक्ता हि स्त्री भर्त्रा खण्डशः कृत्वा
च्छिन्ना पाचभिः खिद्यते । अत्र स्मृतिः—"गुरून् दारयति
गुर्वनिजापत्यप्रमापिणी । विकला करनासौष्ठी कृत्वा गोभिः
प्रमापयेत् ॥" इति ॥ ६४ ॥

कार्त्तवीर्य्येति । हे रैणुकेय ! रेणुकापत्य ! विष्णो !
स्त्रीभ्यो ढक् । कार्त्तवीर्य्यस्य भिदुरेण नाशकेन, भिदः
कर्त्तरि कुरच् । भवता दशास्ये रावणे सुखम् अनायासं यथा
भवति तथा नाश्ये सति रावणं जितवतः कार्त्तवीर्य्यस्य यः
जेता तस्य रावणः सुखनाश्यः एव भवति कालभेदस्य विरहात्
असमाधिं परिहारहीनं ते तव रामेण दाशरथिना पुनरुक्तिम्
अहं नौमि ॥ ६५ ॥

हस्तेति । हे राम ! दाशरथे ! अधरीकृताः तिरस्कृताः
ते ते लेखकाः लिपिकाराः लेखाः देवाश्च येन सः अधरीकृत-
तत्तल्लेखकः, देवपक्षे शेषाद्विभाषेति कप् समासान्तः । तादृशः
असौ विधाता जन्मस्थानं रेणुः यस्य तं रामं परशुरामं भवदर्थं

उद्भवाजतनुजादज ! कामं विश्वभूषण ! न दूषणमत्र।
दूषणप्रशमनाय समर्थं येन देव ! तव वैभवमेव ॥ ६७ ॥
नो ददासि यदि तत्त्वधियं मे यच्छ मोहमपि तं रघुवत्स !।
येन रावणचमूर्युधि मूढा तन्मयं जगदपश्यदशेषम् ॥ ६८ ॥
आज्ञया च पितुरज्ञभिया च श्रीरहीयत महीप्रभवा द्विः।
लङ्घितस्य भवता किमु न द्विर्वारिराशिरुदकाङ्कगलङ्कः ॥६९॥

---

हस्तलेखम् असृजत् सृष्टवान् खलु, लेखको हि कौशलसिद्ध्यर्थमादौ लेखान्तराणि लिखित्वा क्षिपतीति भावः ॥ ६६ ॥

उद्भवेति। न जायते इति अजः, तत्सम्बोधने हे अज ! विष्णो ! अजस्य पुत्रस्य तनूजात् दशरथात् कामं यथेच्छम् उद्भव जायस्व, भवतेर्लोटि सिपि रूपम्। हे विश्वभूषण ! अत्र अस्मिन् अजस्य तत्र तनुजोद्भवनेन दूषणं नास्ति। कुत इत्याशयेन हेतुना देव ! तव वैभवमेव दूषणस्य कलङ्कस्य राक्षसविशेषस्य च प्रशमनाय तापनाय समर्थम् ॥ ६७ ॥

नो ददासीति। हे रघुवत्स ! रघुनन्दन ! विष्णो ! मे मह्यं यदि तत्त्वे ब्रह्मणि धियं बुद्धिं नो ददासि तर्हि येन मोहेन युधि युद्धे रावणस्य चमूः सेना मूढा भ्रान्ता अशेषं जगत् तन्मयं रामात्मकम् अपश्यत् तं मोहमपि मे मह्यं यच्छ देहि ॥६८॥

आज्ञयेति। हे विष्णो ! राम ! पितुः दशरथस्य आज्ञया वनं गच्छेत्येवंरूपया च अज्ञभिया मिथ्यापवादक[illegible]भ्यः मूढेभ्यः सकाशात् भिया च मही प्रभवः उत्पत्तिस्थानं यस्याः सा श्रीः राज्यलक्ष्मीः सीता च द्विः द्विवारं अहीयत परित्यक्ता एव, उदकस्य अङ्कं समीपं गच्छन्ती या सा लङ्का यस्य सः वारिराशिः अत्र समूहस्य भवता द्विः न लङ्घितः किमु ? अपि तु लङ्घितः एव ॥ ६९ ॥

कामदेवविशिखैः खलु नेशं माऽर्पयञ्जनकजामिति रक्षः ।
दैवतादमरणे वरवाक्यं तथ्ययत् स्वमपुनात्तवदस्त्रैः ॥७०॥
तद्यशो हसति कम्बुकदम्बं शम्बुकस्य न किमम्बुधिचुम्बि ।
नामशेषितससैन्यदशास्यादस्तमाप यदसौ तव हस्तात् ॥७१॥
इष्टदारविरहौर्वपयोधिस्त्वं शरण्य ! शरणं स ममैधि ।
लक्ष्मणक्षणवियोगकृशानौ यः स्वजीवितदृणाहुतियज्वा ॥७२॥

---

कामेति । हे राम ! विष्णो ! जनकजां सीताम् अर्पयत् ददत् यदहं कामदेवस्य मन्मथस्य विशिखैः बाणैः मा नेशं मा ग्लानिं प्राप, नशेः पुषादित्वान्नशिमन्योरपि एत्वं वक्तव्यात् नमाङ्योग इत्यड़भावः । दैवतात् अमरणे मरणाभावे विषये वरवाक्यं दैवस्य सर्गस्य वध्यत्वं न गमिष्यसीत्येवंरूपं तथ्ययत् तथ्यं कुर्वत् रक्षः रावणः भवतः तव अस्त्रैः स्वम् आत्मानम् अपुनात् पूतवान् ॥ ७० ॥

तदिति । हे राम ! विष्णो ! नामशेषितः कथामात्रशेषितः ससैन्यः सैन्यसहितः दशास्यः रावणः येन तस्मात् तव हस्तात् असौ शम्बुकः यत् अस्तम् अदर्शनं नाशम् अपि शम्बुकस्य शूद्रमुनिविशेषस्य अम्बुधिचुम्बि यशः कम्बूनां कदम्बं कर्म न हसति किम् ? अपितु हसत्येव इत्यर्थः ॥ ७१ ॥

इष्टेति । हे शरण्य ! राम ! यः त्वं लक्ष्मणस्य सौमित्रेः क्षणवियोगः एव कृशानुः अग्निः तस्मिन् स्वजीवितस्यैव दृणस्य आहुत्या यज्वा इष्टवान्, सुयुजोः क्वनिप् । सः त्वम् इष्टदाराणां सीतायाः सम्बन्धि विरहस्य और्वस्येव पयोधिः सन् मम शरणं रक्षिता एधि भव, प्रेयसीभ्यो भ्रातृस्नेहो गरीयानिति तात्पर्य्यम् ॥ ७२ ॥

क्रौञ्चदुःखमपि वीक्ष्य शुचा यः श्लोकमेकमसृजत् कविराद्यः।
स त्वदुत्थकरुणः खलु काव्यं श्लोकसिन्धुमुचितं प्रबबन्ध ॥७३॥
विश्रवःपितृकयाप्तमनर्हं सश्रवस्त्वमनयेत्युचितघ्नः।
त्वं चकर्त्तिथ न शूर्पणखायाः लक्ष्मणेन वपुषा श्रवसी वा ॥७४॥
ते हरन्तु निरृतिव्रततिं मे यैः स कल्पविटपी तव दोर्भिः।
छद्मयादवतनोरुदपाटि स्पर्द्धमान इव दानमदेन ॥ ७५ ॥

---

क्रौञ्चेति। हे राम! विष्णो! आद्यः कविः वाल्मीकिः क्रौञ्चयोः दुःखम् अपि वीक्ष्य शुचा एकं श्लोकं—"मा निषाद! प्रतिष्ठां त्वमगमः शाश्वतीः समाः। यत् क्रौञ्चमिथुनादेक-मवधीः काममोहितम् ॥" इति अमुं श्लोकम् असृजत् सृष्टवान्, सः आद्यः कविः त्वदुत्था भवदुद्भवा करुणा यस्य तादृशः सन् काव्यं श्लोकसिन्धुम् उचितं यथा भवति तथा प्रबबन्ध ॥७३॥

विश्रव इति। हे राम! विष्णो! विश्रवाः पिता यस्याः सा, विश्रवःपितृकानद्यृतश्चेति कप् समासान्तः। तया अनया सूर्पणखया सश्रवस्त्वं श्रोत्रसहितत्वं आप्तम् अनर्हम् इत्युचितघ्नः सन् लक्ष्मणेन वपुषा सूर्पणखायाः श्रवसी श्रोत्रे किं वा न चकर्त्तिथ किं न कृत्तवान् असि? ॥ ७४ ॥

ते इति। हे विष्णो! कृष्ण! छद्मयादवतनोः लीला-स्वीकृतयादवशरीरस्य तव यैः दोर्भिः दानमदेन त्यागदर्पेण हेतुना स्पर्द्धमानः इव स्थितः सन् कल्पविटपी पारिजातः उदपाटि उत्पाटितः, ते दोषौ भुजौ मे मम सम्बन्धिनीं निरृतिम् अलक्ष्मीमेव व्रततिं लतां, स्यादलक्ष्मीस्तु निरृति-र्ग्यमरः। वल्ली तु व्रततिर्लतेत्यमरः। हरन्तु। कृष्णेनो-त्पाटितः पारिजातः इति पौराणिकी कथात्रानुसन्धेया ॥७५॥

बालकेलिषु तदा यदलावीः कर्परीभिरभिहत्य तरङ्गान्।
भाविबाणभुजभेदनलीलासूत्रपात इव पातु तदस्मान् ॥७६॥
कर्णशक्तिविफलां खलु कर्त्तुं सज्जितार्जुनरथाय नमस्ते।
केतनेन कपिनोरसिशक्तिं लक्ष्मणं क्षतवता हृतशल्यम् ॥७७॥
नापगेयमनयः शरशोरं यां वरेण नितरामपिभक्तम्।
मा स्म भूत् सुरवधूसुरतघ्नो दिव्यपि व्रतविलोपभियेति ॥७८॥

---

बालेति। हे विष्णो! कृष्ण! तदा तस्मिन् समये बालकेलिषु शिशुक्रीड़ासु कर्परीभिः कलशलवैः, अपचयविवक्षायां स्त्रीत्वम्। स्त्री स्यात्काचिन्मृणाल्यादि विवक्षापचये यदिति कोषः। अभिहत्य तरङ्गान् ऊर्मीन् यत् अलावीः लूनवान् असि, शिशवो हि खर्परखण्डैस्तरङ्गान् छिन्दन्ति इति भावः। तत् तरङ्गलवनकर्म्म भाविन्याः भविष्यन्त्याः बाणस्य असुरविशेषस्य भुजानां भेदनस्येव लीलायाः सूत्रपातः इव स्थितम् तत् अस्मान् पातु अवतु ॥ ७६ ॥

कर्णेति। हे विष्णो! कृष्ण! उरसि लग्ना शक्तिः आयुधविशेषः यस्य तं, अमूर्धमस्तकात् स्वाङ्गादकाम इति सप्तम्यलुक्। लक्ष्मणं सौमित्रिं हृतं शल्यं यस्मात् तं क्षतवता केतनेन लाञ्छनेन कपिना हनूमता कर्णस्य राधेयस्य शक्तिं, कासूसामर्थ्ययोः शक्तिरित्यमरः। विफलां वन्ध्यां कर्तुं सज्जितः अर्जुनरथः येन तस्मै ते तुभ्यं अर्जुनसारथये नमः अस्तु ॥ ७७ ॥

नेति। हे विष्णो! कृष्ण! व्रतस्य ब्रह्मचर्य्यस्य, भीष्मो हि यावच्छरीरे ब्रह्मचर्य्यं सङ्कल्पितवान्, विलोपात् तन्नाशात् भिया हेतुना दिवि स्वर्गे अपि सुरवधूनां रम्भादीनां सुरतस्य सम्भोगस्य घ्नः अभिघ्नः मा स्म भूत् इति विचार्य्य नितरां भक्तं

घातितार्कसुतकर्णदयालुर्जैवितेन्दुकुलपार्थकृतार्थः।
अर्द्धदुःखसुखमभ्यनयस्त्वं सास्रुभानुविहसद्विधुनेत्रः ॥७९॥
प्राणवत्प्रणयिराध! न राधापुत्रशत्रुसखता सदृशी ते।
श्रीप्रियस्य सदृगेव तव श्रीवत्समात्महृदि धर्त्तुमजस्रम् ॥८०॥
हृद्यगन्धवह! भोगवतीशः शेषरूपमपि बिभ्रदशेषः।

---

आपगेयं गाङ्गेयं भीष्मं सशरीरं वरेण द्यां स्वर्गं त्वम् न अनयः न नीतवान् ॥ ७८ ॥

घातितेति। घातितः यः अर्कसुतः कर्णः तस्मिन् दयालुः, जैवितेन जैवृकेन इन्दुकुलेन चन्द्रान्वयजातेन पार्थेन अर्जुनेन कृतार्थः सन् सास्रुः सवाष्पः भानुः सूर्य्यश्च, विहसन् विधुः चन्द्रश्च नेत्रे दक्षिणादक्षिणे यस्य सः त्वं दुःखं सुखञ्च दुःखसुखं, अर्द्धं नपुंसकमित्येकशेषः। अभ्यनयः अभिनीतवान् ॥ ७९ ॥

प्राणेति। प्राणवत्प्रणयिनी प्रेयसी कृता राधा स्त्रीविशेषः यस्य तत्सम्बुद्धिः, प्राणवत्प्रणयिराध! कृष्ण! ते तव राधापुत्रस्य कर्णस्य शत्रुः अर्जुनः तस्य सखा राधापुत्रशत्रुसखः तस्य भावः तत्ता सा सदृशी योग्या न। श्रीः लक्ष्मीः प्रिया यस्य तस्य तव श्रीवत्सं लाञ्छनविशेषं श्रियः लक्ष्म्याः वत्सं शिशुञ्च अजस्रं सर्वदा आत्मनः हृदि धर्त्तुं सदृक् सदृशमेव राधाप्रियस्य राधासुतद्वेषिणि सख्यम् अनुचितं श्रीप्रियस्य हृदि श्रीवत्सधारणं युक्तमिति राधाश्रीवत्सशब्दाभ्यां छलनोक्तिः ॥ ८० ॥

हृद्येति। हृद्यस्य मनोहरस्य गन्धस्य सौरभस्य वहः हृद्यगन्धवहः तस्य सम्बोधनं, हे हृद्यगन्धवह! त्वं भोगवत्याः ककुद्मिकन्यायाः ईशः भर्त्ता भोगस्य सम्भोगस्य भूतिः समृद्धिः

भोगभूतिमदिरारुचिरश्रीरुल्लसत्कुमुदबन्धुरुचिस्त्वम् ॥८१॥
रेवतीश ! सुषमा किल नीलस्याम्बरस्य रुचिरा तनुभासा ।
हामपाल ! भवतः कुमुदाविर्भावभावितरुचेरुचितैव ॥८२॥

---

भूतिकारिणीत्यर्थः भोगभूत्याः मदिरायाः सुरायाः रुचिं दीप्तिं राति ददाति या सा श्रीः शरीरशोभा यस्य मदिरापाने हि नेत्रं लोहितं भवतीति भावः। अतः परभागलोभात् रुचिरश्री-कान्तं उल्लसन्ती प्रकाशमाना कुमुदानां कैरवाणां बन्धोः चन्द्रस्य रुचिः शरीरकान्तिः यस्य सः तादृशः सन् शेषस्य अन-न्तस्य रूपं शरीरं बिभ्रदपि अशेषः सर्वात्मकः असि, बलभद्रः एव हि शेषः इति प्रसिद्धिः। यः हि शेषः सः कथम् अशेषः इति शब्दतो विरोधः। अन्यच्च, हे विष्णो ! हृद्यः हृदिस्थः गन्धवहः वायुः आहारः यस्य, सर्पा हि वाताशना भवन्ति इति भावः। भोगवत्याः नागानां फणानां, भोगः सुखेऽस्त्र्या-दिभृतावहेश्च फणकाययोरित्यमरः। ईशः स्वामी हृद्य-गन्धवहश्च असौ भोगवतीशश्चेति, विशेषणसमासः। भोगानां फणानां भोगः भूतिः बाहुल्यम् अस्यास्तीति भोगभूतिमान् इलायाः भूमेः, इरा भूवाक्सुराप्सु स्यादित्यमरः। रुचिम् इच्छां राति ददातीति यः विशेषः भूमेः भर्त्ता तस्य श्रीः शोभा यस्य सः इरारुचिश्रीः भोगभूतिमान् चासौ इरारुचिरश्रीश्चेति कर्मधारयः। उल्लसन्ती कुमुदे कुमुदाख्ये सर्पे, कुमुदं कैरवे रक्तपङ्कजे कुमुदः कपौ। दैत्यान्तरे च दिङ्नागनामयोः परिकीर्त्तित इत्युभयत्रापि विश्वः। बन्धौ स्वजने रुचिः प्रीतिः यस्य तादृशस्य शेषस्य अनन्तस्य रूपं बिभ्रत् अपि त्वम् अशेषः असि सर्वात्मकत्वाद्विष्णोरिति भावः॥ ८१ ॥

रेवतीति। रेवत्याः ककुद्मिकन्यायाः ईशः भर्त्ता

केयमर्द्धभवता भवतो हे मायिना ननु भवः सकलस्त्वम् ।
शेषतामपि भजन्तमशेषं वेद वेदनयनो हि जनस्त्वाम् ॥८८॥
प्राग्भवैरुदगुदग्भवगुम्फान्मुक्तियुक्तिविहताविह तावत् ।
नापरः स्फुरति कस्यचनापि त्वत्समाधिमवधूय समाधिः ॥८९॥

---

सुग्रोवस्य च अर्जुनस्य हरेः कृष्णस्य च नरस्य च, नरोऽर्जुने मनुष्ये चेति यादवः। यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु। शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिष्विव्यमरः। ये योगाः सम्बन्धविशेषाः अभवन्, ते जयन्ति। हन्तेति हर्षे ॥ ८७ ॥

केति। हे विष्णो! मायिना मायाविना, व्रोह्यादित्वादिनिः। भवता त्वया का इयं भवस्य शम्भोः संहारस्य च अर्द्धम् अर्द्धभवः तस्य भावः तत्ता ना ऊहे ऊढा किं शब्द आक्षेपे सकलः कृत्स्नः भवः संसारः त्वं ननु इति प्रसिद्धौ शेषताम् अनन्तताम् उपयुक्तात् अन्यत्वं च, शेषः सङ्कर्षणे नन्ते उपयुक्तोऽन्तरेऽवधावपीति विश्वः। भजन्तं प्राप्नुवन्तम् अपि त्वां वेदं पुरुषः एवेदं सर्वम् इत्यादि ज्ञानं यस्य सः जनः वेदज्ञः अशेषं सकलम् अनन्तात् अन्यच्च वेद जानाति हि ॥ ८८ ॥

प्रागिति। हे विष्णो! प्राग्भवैः पूर्वजन्मभिः उदगुदग्भवानाम् उत्तरोत्तरजन्मनां गुम्फात् गुम्फनात् हेतोः मुक्तेः मोक्षस्य युक्तेश्च ताभ्यां विहतौ विघ्ने सत्याम् इह संसारे तावत् त्वत्समाधिं ध्यानम् अवधूय परित्यज्य कस्यचन कस्यचित् अपि अपरः समाधिः समर्थनं न स्फुरति, समाधिर्नियमे ध्याने नीवारे च समर्थन इति विश्वः ॥ ८९ ॥

ऊर्द्धदिक्कदलनाद् द्विरकार्षीः किं तनुं हरिहरीभवनाय।
किञ्च तिर्य्यगभिनो नृहरित्वे कः स्वतन्त्रमनु नन्वनुयोगः ? ८०
आप्तकाम ! सृजसि त्रिजगत् किं किं भिनत्सि यदि निर्मितमेव
पासि चेदमवतीर्य्य मुहुः किं स्वात्मनाऽपि यदवश्यविनाश्यम् ८१
जाह्नवीजलजकौस्तुभचन्द्रान्
पादपाणिहृदयेक्षणवृत्तीन्।
उत्थिताऽब्धिसलिलात् त्वयि लोला
श्रीः स्थिता परिचितान् परिचिन्त्य॥ ८२ ॥

---

ऊर्द्धेति। हे विष्णो ! हरिहरीभवनाय विष्णुशङ्करीभावाय, परमेश्वरस्य हि हरिहरात्मकं शरीरम् अस्ति। ऊर्ध्वा दिक् यस्मिन् तस्मात् कदलनात् विभागात् हेतोः किं किमर्थं तनुं शरीरं द्विः द्विधा अकार्षीः कृतवान् असि। किञ्च, नृहरित्वे नरसिंहभावे तिर्य्यक् यथा भवति तथा तनुम् अभिनः भिन्नवान् असि, ननु विष्णो ! स्वतन्त्रं पुरुषम् अनु कः अनुयोगः प्रश्नः ? प्रश्नोऽनुयोगः पृच्छा चेत्यमरः॥ ८० ॥

स्वतन्त्रमेव स्फुटयति आप्तेति। आप्तकाम ! कृतकृत्य ! विष्णो ! त्रिजगत् त्रयाणां जगतां समाहारः, किं किमर्थं सृजसि ? आप्तकामस्य तदनुचितमिति भावः। यदि त्रिजगत् निर्मितमेव तर्हि किं भिनत्सि ? यत् जगत् स्वात्मना अपि आत्मना एव अवश्यविनाश्यं अवश्यं विनाशनीयं, लुम्पेदवश्यनियमः कृत्ये इति लोपः। तत् इदं त्रिजगत् मुहुर्मुहुः अवतीर्य्य किं किमर्थं पासि रक्षसि ? अवश्यविनाश्यस्य रक्षणमनुपयुक्तमिति भावः॥ ८१ ॥

जाह्नवीति। हे विष्णो ! अब्धिसलिलात् उत्थिता श्रीः लक्ष्मीः पादपाणिहृदयेक्षणे वृत्तिः वर्त्तनं येषां तान् परि-

वस्तु वास्तु घटते न भिदानां यौक्तिकैर्नैकविधैर्बाधविरोधैः ।
तत्त्वदीहितविजृम्भिततत्तद्भेदमेतदिति तत्त्वनिरुक्तिः ॥८३॥
वस्तु विश्वमुदरे तव दृष्ट्वा बाह्यवत् किल मृकण्डतनूजः ।
स्वं विमिश्रमुभयं न विविञ्चन् निर्ययौ स कतरस्त्वमवैषि ॥८४॥
ब्रह्मणोऽस्तु तव शक्तिलतायां मूर्ध्नि विश्वमथ पत्युरहीनाम् ।
बालतां कलयतो जठरे वा सर्वथाऽसि जगतामवलम्बः ॥८५॥

---

चितान् अभ्यस्तान् यथाक्रमं जाह्नवीजलजकौस्तुभचन्द्रान् परिचिन्त्य पर्य्यालोच्य त्वयि आसक्ता सती स्थिता किं ? लोके लोको हि बन्धुसमीपे सस्पृहमास्ते इति तात्पर्य्यम् ॥ ८२ ॥

वस्त्विति। हे विष्णो! यौक्तैः युक्तिपरैः नैकविधैः अनेकप्रकारैः विरोधैः विरोधहेतुभिः भिदानां वास्त्वाश्रयः वस्तुपदार्थः न घटते, तत् तस्मात् कारणात् एतत् वस्तु घटपटादिरूपं त्वदीहितेन भवदिच्छया विजृम्भितः विलसितः सः सः भेदः विशेषः यस्य तत् इति तत्त्वस्य वस्तुतत्त्वस्य निरुक्तिः निर्वचनम् ॥ ८३ ॥

वस्त्विति। हे विष्णो! मृकण्डतनूजः मार्कण्डेयः तव उदरे बाह्यवत् बाह्यमिव, बहिः षष्ठीलोपो ष्यत्। विश्वं वस्तु दृष्ट्वा विमिश्रम् उभयं स्वम् आत्मानं न विविञ्चन् विवेक्तुम् अशक्नुवन् निर्ययौ निर्गतवान् किल उदरात् निर्गतवान् सः मृकण्डतनूजः कतरः इति त्वम् अवैषि जानासि नान्यः इत्यर्थः ॥ ८४ ॥

ब्रह्मण इति। हे विष्णो! ब्रह्मणः विधातुः तव शक्तौ मायायाम् एव लतायां विश्वम् अस्तु अथवा अहीनां पत्युः शेषस्य तव मूर्ध्नि विश्वम् अस्तु, अथवा बालतां कलयतः

धर्मबीजसलिला सरिदङ्घ्रावर्थमूलमुरसि स्फुरति श्रीः ।
कामदैवतमपि प्रसवस्ते ब्रह्म मुक्तिदमसि स्वयमेव ॥ ८६ ॥
लीलयाऽपि तव नाम जना ये गृह्णते नरकनाशकरस्य ।
तेभ्य एव नरकैरुचिता भीस्ते तु बिभ्यतु कथं नरकेभ्यः ? ॥८७॥
मृत्युहेतुषु न वज्रनिपाताद् भीतिमर्हति जनस्त्वयि भक्तः ।
यत् तदोच्चरति वैष्णवकण्ठान्निष्प्रयत्नमपि नाम तव द्राक् ॥८८॥

---

दधानस्य तव जठरे विश्वम् अस्तु, सर्वथा सर्वप्रकारेण अपि त्वं जगताम् अवलम्बः आश्रयः असि ॥ ८५ ॥

धर्मेति । हे विष्णो ! धर्मस्य बीजं सलिलं यस्याः सा सरित् जाह्नवी तव अङ्घ्रौ स्फुरति, अर्थस्य मूलं श्रीः लक्ष्मीः तव उरसि स्फुरति, कामदैवतं कामदेवः अपि ते तव प्रसवः पुत्रः स्वयमेव मुक्तिदं ब्रह्म असि पुरुषार्थचतुष्टयाकाङ्क्षी इति त्वमेव सेवनीयोऽसीति भावः ॥ ८६ ॥

लीलयेति । हे विष्णो ! नरकस्य रौरवादेः असुरविशेषस्य च, नरको निरये दैत्ये इति विश्वः । नाशं करोति यः तस्य तव नाम नामधेयं लीलया विनोदेन अपि ये जनाः गृह्णते कीर्त्तयन्ति तेभ्यः जनेभ्यः एव नरकैः भीः भयम् उचिता अभ्यस्ता, उचितं प्रोक्तमभ्यस्तमिते ज्ञाते समं जन इति विश्वः । ते जनास्तु नरकेभ्यः सकाशात् कथं बिभ्यतु त्रस्यन्तु ? न कथञ्चिदित्यर्थः ॥ ८७ ॥

मृत्य्विति । हे विष्णो ! त्वयि भक्तः जनः मृत्युषु हेतुषु मरणकारणेषु मध्ये वज्रनिपातात् मृत्युहेतोः सकाशात् भीतिम् अर्हति । नार्हति कुत इत्याह—यत् यस्मात् कारणात् तदा वज्रपातसमये वैष्णवस्य विष्णुभक्तस्य कण्ठात् तव नाम नामधेयं द्राक् शीघ्रं निष्प्रयत्नम् अबुद्धिपूर्वम् उच्चरति

सर्वथाऽपि शुचिनि क्रियमाणे मन्दिरोदर इवावकिरा ये ।
उद्भवन्ति भविचेतसि तेषां शोधनी भवदनुस्मृतिधारा ॥९९॥
अस्मदाद्यविषयेऽपि विशेषे राम ! नाम तव धाम गुणानाम् ।
अन्वबन्धि भवतैव तु कस्मादन्यथा ननु जनुस्त्रितयेऽपि ॥१००॥
भक्तिभाजमनुगृह्य दृशा मां भास्करेण कुरु वीततमस्कम् ।
अर्पितेन मम नाथ ! न तापं लोचनेन विधुना विधुनासि १०१

---

निष्क्रामति । अनभिसन्धिना विष्णुनामोच्चारणे न मृतस्य नरकपातो नास्तीति भावः ॥ ९८ ॥

सर्वथेति । हे विष्णो ! सर्वथा सर्वप्रकारेणापि शुचिनि निर्मले क्रियमाणे अपि भविनां संसारिणां चेतसि मन्दिरोदरे गृहाभ्यन्तरे इव ये अवकिराः, रजांसि सम्मार्जनी शोधनी स्यात्सङ्करोऽवकिरस्तथेत्यमरः । उद्भवन्ति जायन्ते तेषाम् एव कारणं भवत् तव कर्मभूतस्य अनुस्मृतिधारा ज्ञानपरम्परा शोधनी सम्मार्जनी ॥ ९९ ॥

अस्मदिति । हे राम ! विष्णो ! विशेषे अस्मदादीनाम् अविषये सति अपि गुणानां धाम आश्रयः । कुत इत्याह— अन्यथा अथैवं नोचेत् जनुषां जनानां त्रितये अपि भवता एव तु कस्मात् कुतः हेतोः अन्वबन्धि अनुबन्धं नीतम् ॥१००॥

भक्तीति । हे नाथ ! विष्णोः भक्तिभाजं माम् अनुगृह्य भास्करेण दृशा अपि वीतं गतं तमः तमोगुणः तिमिरञ्च, तमो ध्वान्तं गुणे तम इत्यमरः । यस्मात् त्वं वीततमस्कं कुरु, अर्पितेन विधुना चन्द्रेण लोचनेन मम तापं न विधुनासि न अपनयसि ? अत्र काकुः । धूञ् कम्पन एतस्मात् क्रियादिकान्नादित्विप्रिय्वादीनां ह्रस्वः ॥ १०१ ॥

लङ्घयन्नहरहर्भवदाज्ञामस्मि हा विधिनिषेधमयीं यः ।
दुर्लभं स तपसाऽपि गिरैव त्वत्प्रसादमहमिच्छुरलज्जः ॥१०२॥
विश्वरूप ! कृतविश्व ! कियत् ते वैभवाद्भुतमणौ हृदि कुर्वे ।
हेम नह्यति कियन्निजचीरे काञ्चनाद्रिमधिगत्य दरिद्रः ॥१०३॥
इत्युदीर्य स हरिं प्रति सम्प्रज्ञातवासिततमः समपादि ।
भावनावशविलोकितविष्णोः प्रीतिभक्तिसदृशानि चरिष्णुः॥१०४

---

लङ्घयन्निति। हे विष्णो ! अहरहः नित्यं विधिनिषेध-मयीं, विधिः—वसन्ते वसन्ते ज्योतिष्टोमेन यजेतेत्यादिः, निषेधः—न सुरां पिबेन्न कलञ्जं भक्षयेदित्यादिकः, तन्मयीं भवदाज्ञां श्रुतिस्मृतिरूपां लङ्घयन् अतिक्रामन् हा खेदे सः अहम् अलज्जः सन् तपसा अपि दुर्लभं त्वत्प्रसादं भवदनु-ग्रहं गिरा वचनेन एव इच्छुः अभिलाषुकः अस्मि ॥ १०२ ॥

विश्वेति। हे विश्वरूप ! कृतविश्व ! सर्वात्मक ! विश्व-सम्पादक ! ते तव वैभवस्य अद्भुतम् अणौ परमाणुरूपे हृदि कियत् कुर्वे अल्पम् एव कलयामि। तथाहि, दरिद्रः काञ्चनाद्रिम् अधिगत्य निजे स्वीये चीरे वस्त्रे कियत् किं परिमाणं हेम नह्यति बध्नाति, णह बन्धन इति धातुः ॥१०३॥

इतीति। इति पूर्वोक्तप्रकारेण हरिं विष्णुं उदीर्य सः नलः सम्प्रज्ञातेन साकारध्यानेन हेतुना वासिततमः अति-शयेन सञ्जातवासनः सन् भावनावशेन संस्कारपाटवेन विलो-किते साक्षात् कृते विष्णौ विषये प्रीतिभक्त्योः सदृशानि आनन्दबाष्पादीनि चरिष्णुः समपादि सम्पन्नः, चिण् ते पद इति कर्त्तरि चिण् ॥ १०४ ॥

विप्रपाणिषु भृशं वसुवर्षी पात्रसात्कृतपितृक्रतुकव्यः ।
श्रेयसा हरिहरौ प्रतिपूज्य प्रह्व एष शरणं प्रविवेश ॥ १०५ ॥

माध्यन्दिनादनुविधेर्वसुधाविवस्वान्
आस्वादितामृतमयौदनमोदमानः ।
प्राचं सचित्रमविदूरितवैजयन्तं
वेश्माचलं निजरुचीभिरलञ्चकार ॥ १०६ ॥

भीमात्मजाऽपि कृतदैवतभक्तिपूजा
पत्यौ च भुक्तवति भुक्तवती ततोऽनु ।
तस्याङ्गमङ्कुरिततत्परिरिप्सु मध्यम्
अध्यास्त भूषणभरातितरालसाङ्गी ॥ १०७ ॥

---

विप्रेति । एषः नलः विप्राणां पाणिषु भृशं वसु वर्षति यः सः तादृशः सन् पात्रसात्कृतं पितृक्रतौ पितृयज्ञे कव्यं पित्र्यं वस्तु येन, हव्यकव्ये दैवपित्र्ये इत्यमरः । सः तादृशः सन् श्रेयसा समीचीनवस्तुना हरिहरौ परिपूज्य प्रह्वः सन् शरणं गृहं प्रविवेश, शरणं गृहरक्षित्रोरित्यमरः ॥ १०५ ॥

माध्यन्दिनादिति । वसुधाविवस्वान् भूलोकसूर्यः नलः माध्यन्दिनात् विधेः अनुष्ठानात् अनु पश्चात् आस्वादितेन अमृतमयेन ओदनेन मोदमानः सन् प्राचं प्राचीनं सचित्रम् आश्चर्यम् अविदूरितः निकटीकृतः वैजयन्तः इन्द्रप्रासादः येन तं वेश्माचलं निजाभिः रुचीभिः अलञ्चकार ॥ १०६ ॥

भीमेति । भीमात्मजा दमयन्ती अपि कृता दैवतस्य भक्तियुक्ता पूजा यया सा तादृशी सती पत्यौ नले च भुक्तवति सति ततः पतिभोजनम् अनु पश्चात् भुक्तवती सती तथा भूषणभरेण अतितराम् अलसाङ्गी विवशा अङ्कुरिता उद्भूता

तामन्वगादशितबिम्बविपाकचञ्चोः
स्पष्टं शलाटुपरिणत्युचितच्छदस्य।
कीरस्य काऽपि करवारिरुहे वहन्ती।
सौन्दर्य्यपुञ्जमिव पञ्जरमेकमाली॥ १०८॥

कूजायुजा बहुलपक्षशितिम्नि सीम्ना
स्पष्टं कुहूपदपदार्थमिथोऽन्वयेन।
तिर्य्यग्धृतस्फटिकदण्डकवर्त्ति नैका
तामन्ववर्त्तत पिकेन मदाधिकेन॥ १०९॥

---

तस्याः कर्मभूतायाः लिप्सा आलिङ्गनेच्छा यस्य, सनि मीमित्यादिना सनन्तादुः, अत्र लोपोऽभ्यासस्येति अभ्यासलोपः। तत्तादृशः मध्यः मध्यभागः यस्य तं तस्य नलस्य अङ्कम् उत्सङ्गम् अध्यास्त॥ १०७॥

तामिति। अशितस्य भक्षितस्य बिम्बस्य फलस्य विपाकः परिपाकः इव चञ्चुः त्रोटिः यस्य तस्य स्पष्टं यथा भवति तथा शलाटुनः आमफलस्य, आमे फले शलाटुः स्यादित्यमरः। सम्बन्धिन्याः परिणतेः परिणामस्य उचितौ छदौ पक्षौ यस्य तस्य कीरस्य शुकस्य सौन्दर्य्यपुञ्जम् इव एकं पञ्जरं करे एव वारिरुहे वहन्ती का अपि आली तां दमयन्तीम् अन्वगात् अनुजगाम॥ १०८॥

कूजेति। कूजायुजा कूजनसहितेन, गुरो हल इत्यकारप्रत्ययः। बहुलपक्षस्य कृष्णपक्षस्य शितिम्नि कालिम्नि सीम्ना मर्य्यादया स्पष्टं यथा भवति तथा कुहूपदस्य पदार्थस्य कुहूशब्दवाच्यस्य अमावास्यायाः कोकिलालापस्य च, कुहूः स्यात्कोकिलालापनष्टेन्दुकलयोरपीत्यमरः। मिथः परस्परं अन्वयः

शिष्याः कलाविधिषु भीमभुवो वयस्या
वीणामृदुक्कणनकर्मणि याः प्रवीणाः।
आसीनमेनमुपवीणयितुं ययुस्ताः
गन्धर्वराजतनुजा मनुजाधिराजम् ॥ ११० ॥

तासामभासत कुरङ्गदृशां विपञ्ची
किञ्चित् पुरःकलितनिष्कलकाकलीका।
भैमी तथा मधुरकण्ठलतोपकण्ठे
शब्दायितुं प्रथममप्रतिभावतीव ॥ १११ ॥

---

यत्र तेन तिर्य्यक् धृतेन स्फटिकमयेन दण्डेन वर्त्तते यः तेन मदाधिकेन अत्यन्तमत्तेन पिकेन उपलक्षिता सती एका तां दमयन्तीम् अन्ववर्त्तत ॥ १०८ ॥

शिष्या इति। वीणायाः मृदुक्कणनकर्मणि प्रवीणाः निपुणाः याः गन्धर्वराजतनुजाः कलाविधिषु शिल्पविद्याभ्यासेषु भीमभुवः दमयन्त्याः शिष्याः सत्यः वयस्याः अभवन्, ताः आसीनम् एनं मनुजाधिनाथं नलम् उपवीणयितुं वीणया उपगातुं ययुः प्राप्तवत्यः ॥ ११० ॥

तासामिति। कुरङ्गदृशां तासां गन्धर्वराजतनूजानां विपञ्ची वीणा किञ्चित् अल्पं पुरः प्रथमं कलिता स्वीकृता निष्कला निर्विशेषा सती काकली मधुरास्फुटः सूक्ष्मस्वरः यस्याः, काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे इत्यमरः। सा किञ्चित्पुरःकलितनिष्कलकाकलीका सती, नद्यृतश्चेति कप्समासान्तः। भैम्याः तथाविधायाः मधुरायाः कण्ठलतायाः उपकण्ठे समीपे शब्दायितुं शब्दं कर्तुं, शब्दवैरेत्यादिना क्यङ् तुमुन्। प्रथमम् आदौ अप्रतिभावती सती प्रतिभार-

सा यद्वृताखिलकलागुणभूमभूमी-
भैमीतुलाधिगतये स्वरसङ्गताऽऽसीत् ।
तं प्रागसावविनयं परिवादमेत्य
लोकेऽधुनाऽपि विहिता परिवादिनीति ॥११२ ॥

नादं निषादमधुरं ततमुज्जगार
साऽभ्यासभागवनिभृत्कुलकुञ्जरस्य ।
स्तम्बेरमीव कृतसंश्रुतिमूर्द्धकम्पा
वीणा विचित्रकरचापलमाभजन्ती ॥११३ ॥

---

हिता इव अभासत विद्याधिकानां पुरतोऽल्पविद्यस्य कण्ठो न भासते इत्यर्थः ॥ १११ ॥

सेति । अखिलानां कलानां यः गुणभूमा तस्य भूमिः तस्याः भैम्याः तुलाधिगतये प्राक् वीणा स्वरसङ्गता आसीत्, असौ वीणा तं अविनयं अविनयरूपं परिवादं एत्य अधुना स्फुटं परिवादिनी इति विहिता, विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनीत्यमरः ॥ ११२ ॥

नादमिति । सा वीणा अवनिभृत्कुलकुञ्जरस्य राजवंशश्रेष्ठस्य तस्य नलस्य अभ्यासं समीपं भजति या सा तादृशी सती स्तम्बेरमी हस्तिनी इव, स्तम्बकर्णयोरमिजपोरित्यच्, हलन्तात् सप्तम्याः सञ्ज्ञायामलुक्, जातेरस्त्रीविषयादित्यादिना ङीप । कृतसंश्रुतीनाम् अभिज्ञानां संश्रुतिः श्रोत्रसहितस्य च मूर्ध्नः शिरसः कम्पः यया सा तादृशी विचित्रं नानाविधं करस्य पाणेः शुण्डायाश्च चापलं चापल्यं आभजन्ती या सा निषादेन स्वरविशेषेण मधुरं ततं विस्तृतं नादम् उज्जगार, स्तम्बेरमो हि निषादं बृंहते इति भावः ॥११३॥

आकृष्य सारमखिलं किमु वल्लकीनां
तस्या मृदुस्वरमसर्जि न कण्ठनालम् ।
तेनान्तरं तरलभावमवाप्य वीणा
क्षीणा न कोणममुचत् किमु वा लयेषु ॥११४॥
तद्दम्पतिश्रुतिमधून्यथ चाटुगाथाः
वीणास्तथा जगुरतिस्फुटवर्णबन्धम् ।
इत्थं यथा वसुमतीरतिगृह्यकस्ताः
कीरः किरन् मुदमुदीरयति स्म विश्वाः ॥११५॥

---

आकृष्येति । ब्रह्मणा तस्याः दमयन्त्याः कण्ठनालं वल्लकीनां वीणानाम् अखिलं सारम् आकृष्य मृदुः स्वरः यस्य तम् न असर्जि । न संसृष्टं किमु ? तेन कारणेन आन्तरम् अन्तरे भवं तरलभावं चाञ्चल्यम् अवाप्य वीणा विपञ्ची क्षीणा लज्जिता सती लयेषु साम्येषु, लयस्तु वाद्यानां साम्यमित्यमरः । आलयेषु गृहेषु च कोणं वादनं दण्डगृहं, वीणा वाद्यप्रभेदे स्यात् कोणोऽणी लगुडेऽर्कजे । वीणादिवादने वा स्यादेकदेशे गृहस्य च ॥ इति विश्वः । न अमुचत् किमु ? अपहृतसारः हि क्षीणः सन् गृहस्य कोणमाश्रित्य तिष्ठति इति भावः ॥ ११४ ॥

तदेति । अथ अनन्तरं वीणाः कर्त्र्यः तयोः दम्पत्योः दमयन्तीनलयोः श्रुतिमधूनि श्रोत्रचौद्राणि चाटुगाथाः अतिस्फुटवर्णबन्धं तथा जगुः गीतवत्यः यथा वसुमतीरतेः दमयन्त्याः गृह्यकः पञ्जरादौ स्थापितः, पदास्वरित्यादिना कप् स्वार्थे कप् । गृह्यासक्ताः पक्षिमृगाश्छेकाः स्युर्गृह्यकाश्च ते इत्यमरः । कीरः शुकः मुदं किरन् उत्पादयन् इत्यर्थः, इत्थं वक्ष्यमाणेन प्रकारेण ताश्च विश्वाः समस्ताः चाटुगाथाः वर्णनश्लोकान्, उदीरयति स्म ॥ ११५ ॥

अस्माकमुक्तिभिरवेष्यथ एव बुद्धेः
गाधं युवामतिमती ! स्तुमहे तथापि ।
ज्ञानं हि वागवसरावचनाद्भवद्भ्याम्
एतावदप्यनवधारितमेव न स्यात् ॥ ११६ ॥

भूभृद्भवाङ्कभुवि राजशिखामणेः सा
त्वञ्चास्य भोगसुभगस्य समः क्रमोऽयम् ।
यन्नाकपालकलनाकलितस्य भर्त्तुः
अत्रापि जन्मनि सती भवती स भेदः ॥११७॥

---

अस्माकमिति। अत्यधिका मतिः ययोः तयोः सम्बोधनं हे अतिमती ! दमयन्तीनलौ ! युवाम् अस्माकं एतावत् अल्पं ज्ञानं वागसरे अवचनात् भवद्भ्यां युवाभ्यां यद्यपि उक्तिभिः एव बुद्धेः गाधं प्रकटार्थत्वं अवेष्यथ अनवधारितम् अनिश्चितम् एव स्यात् तथापि स्तुमहे ॥ ११६ ॥

भूभृदिति। हे दमयन्ति ! राज्ञां शिखामणेः श्रेष्ठस्य नलस्य तथा राजा चन्द्रः शिखामणिः शिरोरत्नञ्च यस्य, तस्य इन्दुमौलेः शिवस्य इत्यर्थः राजा मृगाङ्के क्षत्रिये नृप इत्यमरः। तथा भोगैः स्रक्चन्दनादिभिः सर्पशरीरैश्च, भोगः सुखेऽस्त्र्यादिभृतावहेश्च फणकाययोरित्यमरः। सुभगस्य अस्य नलस्य भूभृतः राज्ञः पर्वतात् च, भूभृद्भूमिधरे नृपे इत्यमरः। भवति या सा भूभृद्भवा त्वं पार्वती च अयं क्रमः समः तुल्यः। भवती त्वमत्रापि जन्मनि नाकपालकलनया इन्द्रसाम्येन विदितस्य। जातस्य कपालस्य ब्रह्मकर्परस्य कलनया विदितः न भवतीति अकपालकलनाविदितः तादृक् न भवतीति नाकपालकलनाविदितः तस्य च भर्त्तुः नलस्य सती

नैषा रतिः स्फुरति चेतसि कस्य यस्याः
सूते रतिं द्युतिरथ त्वयि चातनोति।
त्रैयक्षवीक्षणखिलीकृतनिर्जरत्व-
सिद्धायुरध्वमकरध्वजसंशयं कः ? ॥ ११८ ॥
एतां धरामिव सरिच्छविहारिहाराम्
उल्लासितस्त्वमिदमाननचन्द्रभासा।
बिभ्रद्विभासि पयसामिव राशिरन्त-
र्वेदिश्रियं जनमनःप्रियमध्यदेशाम् ॥ ११९ ॥

---

पतिव्रता दक्षसुता च, सती दक्षसुतेत्यजयपालः। सः भेदः अन्तरम् ॥ ११७ ॥

एषेति। हे नल! एषा दमयन्ती कस्य चेतसि रतिः मदनवधूः सती न स्फुरति? सर्वस्य स्फुरत्येवेत्यर्थः। कुत इत्याह। तस्याः दमयन्त्याः द्युतिः एव रतिं प्रीतिं मदनवधूं स्मरप्रियायाञ्च, रागे च सुरते रतिरिति विश्वः। सूते जनयति। अथ अनन्तरं कः जनः त्वयि वा त्रैयक्षेण शिवसम्बन्धिना, नैवाभ्यामित्यजागमः। वीक्षणेन चक्षुषा खिलीकृतः, द्वे खिलाप्रहते समे इत्यमरः। निर्जरत्वेन देवत्वेन सिद्धम् आयुः एव अध्वा मार्गः यस्य तस्मिन् मकरध्वजे संशयं मकरध्वज इति भ्रान्तिं तथा आतनोति, तस्य मृतत्वादिति भावः ॥ ११८ ॥

एतामिति। सरितः नद्याः छविः शोभा इव हारी मनोहारी च हारः मुक्ताहारः यस्याः तां पक्षे सरितः नद्याः एव छव्या कान्त्या हारिणो हारा यस्यास्तां वेद्याम् अन्तः अन्तर्वेदि वेदिकामध्यं तद्वदतिकृशा श्रीः शोभा यस्या ताम्। तथा अन्तर्वेद्याख्या गङ्गायमुनामध्यभवा श्रीर्यस्याः

दत्ते जयं जनितपत्रनिवेशनेयं
साचीकृतेन्दुवदना मदनाय तन्वी ।
मध्यस्थदुर्बलतमत्वफलं किमेतत्
भुक्तिर्यदत्र तव भर्त्सितमत्स्यकेतोः ॥ १२० ॥
चेतोभवस्य भवती कुचपत्रराज-
धानीयकेतुमकरा ननु राजधानी ।

---

ताम् । जनमनसां प्रियोमध्यदेशो नितम्बभागो यस्याः ताम् ।
पक्षे मध्यदेशः विन्ध्यहिमाचलान्तरभूभागरूपः "हिमवद्विन्ध्य-
योरन्तरं यः प्राक्कनखलादपि । प्रत्यगेवप्रयागाच्च मध्यदेशः प्रकी-
र्त्तितः ॥" इति । ताम् एतां दमयन्तीं बिभ्रत् दधानः त्वं
धरां पृथिवीं बिभ्रत् पयसां राशिः समुद्रः इव अस्याः
दमयन्त्याः आननस्येव चन्द्रभासा उल्लासितः हर्षं प्रापितः,
सागरः हि चन्द्रभासा उल्लासितः भवति इति भावः
। ११९ ॥

दत्ते इति । हे नल ! जनितं कृतं पत्रस्य तिलकस्य
नयपत्रस्य निवेशनम् अर्पणं यया सा, साचीकृतं लोचनोत्क-
मम् इन्दुरिव वदनं यया सा साचात्दृष्टव्यकृता इन्दुवदना
चन्द्रमुखी इयं तन्वी दमयन्ती मदनाय जयं दत्ते । भर्त्सितः
धिक्कृतः मत्स्यकेतुः मदनः येन तस्य तव अस्यां तन्व्यां दम-
यन्त्यां यत्र भुक्तिर्भोगः तदेतन्मध्यस्थितस्य अवलग्नस्थितस्य मध्य-
स्थानां सखीनाञ्च दुर्बलतमत्वस्य अत्यन्तकार्श्यस्य अत्यन्तदौर्ब-
ल्यस्य च फलं किं पक्षे साक्षिषु च सत्सु बलात्कारेण या भुक्तिः
सा सभ्यानामेव दौर्बल्यं ज्ञायते इत्येतदप्यनुसन्धेयम् ॥१२०॥

चेत इति । ननु दमयन्ति ! कुच कुचपत्रेषु राजानः
श्रेष्ठाः पत्रावल्य इत्यर्थः तेषु धानीयो निवेशनीयः केतुः

अस्यां महोदयमहस्यपि मीनकेतोः
के तोरणं तरुणि! न ब्रुवते भ्रुवौ ते॥ १२१॥
अस्या भवन्तमनिशं भवतस्तथैनां
कामः श्रमं न कथमृच्छतु तामगच्छन्।
छायेव वामथ गतागतमाचरिष्णोः
तस्याध्वजश्रमहरा मकरध्वजस्य॥ १२२॥
स्वेदप्लवप्रणयिनी तव रोमराजी
रत्यै यदाचरति जागरितव्रतानि।

---

ध्वजः मकरः यस्याः सा भवती त्वं चेतोभवस्य कामस्य राजधानी नगरी। मीनकेतोः कामस्य महोदयमहस्यपि आधिपत्योत्सवस्यपि च कान्यकुब्जशोभास्यपि च, महोदयः कान्यकुब्जेऽप्याधिपत्यापवर्गयोरिति विश्वः। महश्चो-त्सवतेजसोरित्यमरः। अस्यां राजधान्यां भवत्यां हे तरुणि! ते भ्रुवौ के जनाः तोरणं वन्दनमालिकां न ब्रुवते? सर्वं एव ब्रुवते एव इत्यर्थः॥ १२१॥

अस्या इति। हे नल! कामः अस्याः दमयन्त्याः सकाशात् भवन्तं त्वां अनिशं गच्छन् तथा भवतः सकाशात् एनां दमयन्तीम् अगच्छन् श्रमम् आयासं कथं न ऋच्छति न प्राप्नोति? ऋच्छत्येव इत्यर्थः। अथ गतागतम् आचरिष्णोः तस्य मकरध्वजस्य वां युवयोः छाया दीप्तिः अनातपश्च, एव छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपमित्यमरः। अध्वजश्रमं हरति या सा भवति, सच्छाये हि पथि पान्थो न श्राम्यति इति भावः॥ १२२॥

स्वेदेति। हे नरनाथ! नल! तव रोमराजिः रोमसमूहः स्वेदप्लवे घर्मजलस्नाने प्रणयः अस्यास्तीति स्वेदप्लवप्रण-

आभासि तेन नरनाथ! मधूत्थसान्द्र-
मन्मासमेषुशरकेशरदन्तुराङ्गः ॥१२३॥
प्राप्ता तवापि नृप! जीवितदेवतेयं
घर्माम्बुशीकरकरम्बनमम्बुजाक्षी।
ते ते यथा रतिपतेः कुसुमानि बाणाः
स्वेदस्तथैव किमु तस्य शरक्षतास्रम्? ॥ १२४ ॥
रागं प्रतीत्य युवयोस्तमिमं प्रतीची
भानुश्च किं द्वयमजायत रक्तमेतत्।
तद्वीक्ष्य वां किमिव केलिसरित्सरोजैः
कामेषुतोचितमुखत्वमधीयमानम् ॥ १२५ ॥

---

रणी रत्यै सुरताय जागरितानि जागरणान्येव व्रतानि यत् ाचरति तेन आचरणेन हेतुना मधूत्थेन, सुपि स्थ इत्यत्र योग-ाभागात् समासः। सान्द्रैः बहुलैः मन्मानाम् असमेषोः ामस्य शराणां केशरैः दन्तुराणि निम्नोन्नतानि अङ्गानि ावयवाः यस्य सः तादृशः सन् आभासि ॥ १२३ ॥

प्राप्तेति। हे नृप! नल! तव जीवितस्य देवता इयम् म्बुजाक्षी दमयन्ती अपि घर्माम्बुनः स्वेदजलस्य शीकरैः णैः करम्बनं मिश्रणं कुसुमानि रतिपतेः कामस्य ते तव प्रसिद्धाः ते बाणाः यथा आसन्, तथैव स्वेदः घर्मः तस्य कामस्य शराणां क्षतेषु अस्रं किमु? ॥ १२४ ॥

रागमिति। हे दमयन्तिनलौ! युवयोः तम् इमं रागं प्रतीत्य ज्ञात्वा प्रतीची पश्चिमा दिग्भागः सूर्य्यश्च तत् इयं रक्तं रक्तवर्णेन युक्तम् अनुरक्तं, रक्तं स्यात् कुङ्कुमे ताम्रे प्राचीनामलकस्रजि। अनुरागाणि नील्यादिरञ्जिते लोहितेऽप्य-वदिति विश्वः। इह समये वां युवां वीक्ष्य केलिसरिति सरो-

अन्योऽन्यरागवशयोर्युवयोर्विलास-
स्वच्छन्दताच्छिदपयातु तदालिवर्गः।
अत्याजयत् सिचयमाजिमकारयन् वा
दन्तैर्नखैश्च मदनो मदनः कथं स्यात्? ॥१२६॥
इति पठति शुके मृषा ययुस्ताः
बहुनृपकृत्यमवेत्य साम्यवेलम्।
कुपितनिजसखीदृशार्धदृष्टाः
कमलतयेव तदा निकोचवत्यः॥ १२७॥

---

अः तं प्रसिद्धं कामेषुतायाः कामबाणत्वस्य उचितं मुखं येषां तेषां भावः तत्त्वं कामेषुतोचितमुखत्वम् अधीयमानम् अभ्यस्यमानं किमु? ॥ २२५॥

अन्योन्येति। हे दमयन्ति! अन्योऽन्यस्मिन् रागस्य अनुरागस्य वशयोः युवयोः विलासस्य स्वच्छन्दतां स्वाच्छन्द्यं छिनत्ति यः सः आलिवर्गः सखीसमूहः तस्मात् कारणात् अपयातु निर्गच्छतु। तथाहि, मदनः कामः सिचयं वस्त्रम् अत्याजयत् अमोचयत्, दन्तैः नखैश्च आजिं युद्धम् अकारयन् वा कथं मदनः मदनः मर्दयिता स्यात्? न कथञ्चिदित्यर्थः ॥ १२६॥

इतीति। इति पूर्वोक्तप्रकारेण शुके पठति सति ताः आल्यः साम्यवेलं सन्धिवेलायां सन्ध्यासमये भवं, सन्धिवेलाहेमनक्षत्रेभ्योऽन्। बहु अनेकं नृपकृत्यं राजकार्य्यम् अनुष्ठेयम् अवेत्य ज्ञात्वा कमलतया पद्मत्वेनैव तदा तस्मिन् समये निकोचः सङ्कोचः यस्याः ताः तया निकोचवत्यः। सखीनिर्गमणेन कुपितायाः निजसख्याः दमयन्त्याः सम्बन्धिन्या दृशा चक्षुषा अर्धदृष्टाः सत्यः निर्ययुः॥ १२७॥

अकृत परभृतः स्तुहि स्तुहीति
श्रुतवचनस्रगनूक्तिचुञ्चुचञ्चुः।
पठितनलनुतिं प्रतीव कीरं
तमिव नृपं प्रति जातनेत्ररागः॥१२८॥

तुङ्गप्रासादवासादथ भृशकृशतामायतीं केलिकुल्याम्
अद्राक्षीदर्कविम्बप्रतिकृतमणिना भीमजा राजमानाम्।
वक्रं वक्रं व्रजन्ती फणियुवतिरिति त्रस्नुभिर्व्यक्तमुक्ता-
ऽन्योन्यं विद्रुत्य तीरे रथपदमिथुनैः सूचितामार्त्तिं कृत्वा॥१२९॥

---

अकृतेति। परभृतः कोकिलः तं नृपं नलं प्रति जातः नेत्रयोः रागः रक्तवर्णः अनुरागश्च, रागोऽनुरक्तौ मात्सर्य्ये क्लेशादौ लोहितादिष्विति विश्वः। सः तादृशः सन् श्रुतानां वचनस्रजाम् अनूक्त्या अनुवचनेन वित्तः अनूक्तिचुञ्चुः तेन, वित्तचुञ्चुप्चणपौ। तादृशी चञ्चुः चोटिः यस्य तं पठिता नलस्य नुतिः स्तुतिः येन तं कीरं शुकं प्रति लक्षीकृत्य स्तुहि स्तुहीति अकृत॥ १२८॥

तुङ्गेति। अथ भीमजा दमयन्ती तुङ्गे प्रासादे वासात् अवस्थितेः हेतोः भृशं कृशता यस्याः ताम् आयतां दीर्घाम् अर्कविम्बस्य प्रतिकृतमणिना प्रतिविम्बेनेव मणिना राजमानां वक्रं वक्रं यथा तथा व्रजन्ती गच्छन्ती फणियुवतिः सर्पस्त्रीति हेतोः त्रस्नुभिः व्यक्तं यथा तथा मुक्तं अन्योन्यं यस्मिन् तत् यथा भवति तथा तीरे विद्रुत्य पलाय्य रथपदानां चक्रनाम्नां मिथुनैः कर्त्तृभिः आर्त्तिं कृत्वा दुःखस्वनेन साधनेन सूचितां केलिकुल्यां क्रीडाकृत्रिमसरितं, कुल्याल्पा कृत्रिमा सरिदित्यमरः। अद्राक्षीत्॥ १२९॥

अथ रथचरणौ विलोक्य रक्तौ
पतिविरहासहताहताविवास्रैः।
अपि तमकृत पद्मसुप्तिकालं
श्वसनविकीर्णसरोजसौरभं सा ॥१३०॥
अभिलपति पतिं प्रति स्म भैमी
सदय! विलोकय कोकयोरवस्थाम्।
मम हृदयमिमौ च भिन्दतीं हा
क इव विलोक्य नरो न रोदितीमाम्॥१३१॥
कुमुदमुदमुदेष्यतीमसोढा
रविरविलम्बितुकामतामतानीत्।

अथेति। अथ सा दमयन्ती पतिविरहस्य असहतया आहतौ द्विधा भूतौ अतएव अस्रैः रुधिरैः रक्तौ इव रक्तवर्णौ इव रथचरणौ चक्रवाकौ विलोक्य तम् पद्मानां सुप्तिकालं सायंसमयमपि श्वसनेन दुःखनिःश्वासेन विकीर्णं विक्षिप्तं सरोजसौरभं पद्मसौगन्ध्यं यस्मिन् तम् अकृत कृतवती। सन्ध्यासमये पद्मसङ्कोचात् सौरभासम्भवेऽपि निःश्वासमोचनेन पद्मिनीत्वात् पद्मसौगन्ध्यं तदानीमपि विस्तारयतिस्म इत्यर्थः। चक्रवाकौ विरहितौ दृष्टा निःशश्वास इत्यर्थः॥१३०॥

अभिलपतीति। भैमी नलं प्रति उद्दिश्य अभिलपति स्म। किमित्याह—हे सदय! दयालो! कोकयोः चक्रवाकयोः अवस्थां दुर्दशां विलोकय, मम हृदयम् इमौ कोकौ च भिन्दतीं अवस्थां विलोक्य कः वा नरः न रोदिति? रोदनं न करोति? सर्वोऽपि रोदनं करोत्येवेत्यर्थः। हा खेदे ॥१३१॥

कुमुदेति। रविः भानुः उदेष्यतीं जनिष्यमाणां कुमुदानां

प्रतितरु विरुवन्ति किं शकुन्ताः
स्वहृदि निवेशितकोककाकुकुन्ताः ॥ १३२ ॥

अपि विरहमनिष्टमाचरन्तौ
अधिगमपूर्वकपूर्वसर्वचेष्टौ ।
इदमहह निदर्शनं विहङ्गौ
विधिवशचेतनचेष्टितानुमाने ॥ १३३ ॥

अङ्घ्रिस्थारुणिमेष्टकाविसरणैः शोणे कृपाणः स्फुटं
कालोऽयं विधिना रथाङ्गमिथुनं विच्छेत्तुमन्विच्छता ।
रश्मिप्राड्गिरतमदप्रजसमारब्धाविरामभ्रमौ
दण्डभ्राजिनि भानुशाणवलये संसज्य किं निज्यते ॥ १३४ ॥

---

मुदम् असोढा असहिष्णुः सन्, सहेः सोढव्यमिति ढत्वढत्वढ्लोपेषु सहिवहोरोदवर्णस्य । अविलम्बितुं कामः यस्य तस्य भावः वत्ताम् अतानीत् कृतवान्, प्रतितरु तरुं प्रति, यथार्थेऽव्ययीभावः । शकुन्ताः पक्षिणः स्वहृदि निवेशितः अर्पितः कोकानां चक्रवाकानां काकुः आर्त्तस्वरः एव कुन्तः प्रासः येषां, प्रासस्तु कुन्त इत्यमरः । तादृशाः सन्तः विरुवन्ति शब्दायन्ते किं, वितर्के किंशब्दः ॥ १३२ ॥

अपीति । अनिष्टम् अनीप्सितम् अपि विरहम् आचरन्तौ कुर्वन्तौ अधिगमः ज्ञानं पूर्वं यस्याः सा अधिगमपूर्विकाः पूर्वसर्वचेष्टाः ययोः तौ अधिगमपूर्वकसर्वचेष्टौ इह समये विधिवशं दैवाधीनं चेतनानां प्राणिनां चेष्टितं पूर्वकर्माधीनं प्राणिनामाचरणम् इत्येवं रूपे अनुमाने कार्य्यकारणविशेषज्ञाने विषये इदं निदर्शनं दृष्टान्तः हि अहह खेदे ॥ १३३ ॥

अङ्घ्रीति । रथाङ्गयोः चक्रवाकयोः मिथुनं विच्छेत्तुम् अन्विच्छता विधिना ब्रह्मणा अङ्घ्रिः किरणः पादश्च तत्र

इति स विधुमुखीमुखेन मुग्धा
लपितसुधासवमर्पितं निपीय ।
स्मितशबलवलन्मुखोऽवदत् तां
स्फुटमिदमीदृशमीदृशं यथात्थ ॥ १३५ ॥
स्त्रीपुंसौ प्रविभज्य जेतुमखिलावापादितौचित्ययोः
नस्त्वां वेद्मि रतिप्रसूनशरयोश्चापद्वयीं त्वद्भ्रुवौ ।

तिष्ठन्तीति अङ्घ्रिस्थः यः अरुणिमा आरुण्यं तैरेव इष्टका-विसरणैः इष्टकाचूर्णप्रसारणैः शोणे रक्तवर्णे रश्मिग्राहिणा तेन गरुत्मतोऽग्रजेन अरुणेन समारब्धा प्रक्रान्ता अविरामा अविच्छिन्ना भ्रमिः भ्रमणं यस्य तस्मिन् दण्डेन चण्डांशु-पार्श्ववर्त्तिना भ्राजिनि शाणस्थेन वर्त्तुलेन काष्ठेन, दण्डो-पमोमानभेदे च मङ्कुरे दमसैन्ययोः। अभिमाने ग्रहे चेति विश्वः। भानौ सूर्य्ये एव शाणवलये शस्त्रोत्तेजन-यन्त्रमण्डले संसज्य आरोप्य कालः सायंसमयः कृष्णवर्णश्च, कालो मृत्यौ महाकाले समये यमकृष्णयोरिति विश्वः। कृपाणः स्फुटं यथा भवति तथा निश्यते, तीक्ष्णीक्रियते। तेज-निशातने चमायाश्चेत्यस्मात् भौवादिकात्कर्मणि यकि रूपम्। असिधारिणो हि अङ्घ्रिस्थेष्टकया सज्जीकृतेन शाणवलयेन कृपाणादिकमुत्तेजयन्ति इति भावः ॥ १३४ ॥

इतीति। इति अनेन प्रकारेण सः नलः विधुमुख्याः चन्द्राननायाः दमयन्त्याः मुखेन अर्पितं मुग्धं सुन्दरम् आल-पितसुधासवं निपीय स्मितेन शबलं चित्रं वलत् चलत् मुखं यस्य सः तादृशः सन् तां दमयन्तीम् अवदत्। कथमित्याह— हे दमयन्ति! यथा येन प्रकारेण त्वम् आत्थ ब्रूषे इदं ईदृशम् ईदृशं स्फुटम् ॥ १३५ ॥

त्वन्नासाच्छलनिह्नुतां द्विनलिकीं नालीकमुक्त्येषिणोः
त्वन्निःश्वासलते मधुश्वसनजं वायव्यमस्त्रं तयोः ॥ १३६ ॥
पीतो वर्णगुणस्तवातिमधुरः कायेऽपि सोऽयं यथा
यं बिभ्रत् कनकं सुवर्णमिति कैराढ्यत्य नोत्कीर्य्यते।
का वर्णान्तरवर्णना धवलिमा राजैव रूपेषु यः
तद्योगादपि यावदेति रजतं दुर्वर्णतादुर्यशः ॥ १३७ ॥
खण्डक्षौदस्त्हदि स्थले मधुपयःकादम्बिनीतर्पणात्
छष्टे रोहति दोहदेन पयसा पिण्डेन चेत् पुण्ड्रकः।

---

स्त्रीपुंसाविति। हे दमयन्ति! त्वद्भ्रुवौ अखिलौ स्त्रीपुंसौ प्रविभज्य जेतुं आपादितौचित्ययोः रतिप्रसूनशरयोः नम्रां चापद्वयीं वेद्मि। नालीकमुक्त्येषिणोः नालीकानां "पिस्तल्" इत्याख्यया प्रसिद्धानाम् अस्त्रविशेषाणां मुक्तिं मोक्षणम् इच्छतोः तयोः रतिमदनयोः द्वयोः नालोकयोः समाहारः द्विनलिकीं द्विनलीकृतां (दोनलीपिस्तल) त्वन्नासाच्छलेन निह्नुतां गोपितां वेद्मि। तव निःश्वासौ एव लते तयोः रतिस्मरयोः मधुश्वसनजं वायव्यम् अस्त्रम् अहं वेद्मि ॥ १३६ ॥

पीतो वर्णेति। अतिमधुरः अतिरमणीयः सः अयं पीतः वर्णगुणः तव काये त्वदीये शरीरे अपि अस्ति, यं पीतवर्णं बिभ्रत् कनकं हिरण्यं कैः सुवर्णं शोभनः वर्णः यस्य तत् इति आढ्यत्य न उत्कीर्य्यते? सर्वैरपि स्तूयते इत्यर्थः। वर्णान्तराणां नीलपीतादीनां पीतव्यतिरिक्तानां वर्णानां स्तुतिः का वा? कुत इत्याह—यः धवलिमा धवलत्वं रूपेषु राजा एव उत्कृष्ट एव तस्य धवलिम्नो योगात् सम्बन्धात् अपि रजतं कर्तृ यावत् साकल्येन दुर्वर्णतादुर्यशः कर्मभूतम् एति प्राप्नोति ॥ १३७ ॥

खण्डेति। हे दमयन्ति! मधु क्षौद्रम् एव पयांसि

स द्राक्षाद्रवसेचनैर्यदि फलं धत्ते तदा त्वद्गिराम्
उद्देशाय ततोऽप्युदेति मधुराधारस्तमप्प्रत्ययः॥ १३८॥
उन्मीलद्गुडपाकतन्तुलतया रज्ज्वा भ्रमीरर्जयन्
दानान्तश्रुतशर्करावलमथः स्वेनामृतान्धः स्मरः।
नव्यामिक्षुरसोदधेर्यदि सुधामुत्थापयेत् सा भव-
ज्जिह्वायाः कृतिमाह्वयेत परमां मत्कर्णयोः पारणाम्॥ १३९॥

---

यस्याः तस्याः कादम्बिन्याः मेघमालिकायाः कवर्गः, कादम्बिनी मेघमालेत्यमरः। तत्पयात् हेतोः खण्डस्य शर्कराविशेषस्य चोदमृदि खण्डचूर्णमृत्तिकारूपे स्थले पिण्डेन पाकविशेषेण पिण्डीभूतेन पयसा चीरेण एव दोहदेन वृक्षादिहविकरेण वस्तुना साधनेन पुण्ड्रकः इक्षुविशेषः, रसाल इक्षुस्तद्भेदाः पुण्ड्रकान्तारकादय इत्यमरः। रोहति प्रभवति चेत् सः पुण्ड्रकः द्राक्षारससेचनैः सेकैः यदि फलं धत्ते, तदा मधुरस्य रसस्य आधारः आश्रयः तमप्प्रत्ययः मधुरतम इत्यर्थः। त्वद्गिरां भवद्वचनानां उद्देशाय कथनाय उदेति उत्पद्यते। मधुरतमा तव वाणी इति भावः॥ १३८॥

उन्मीलदिति। हे दमयन्ति! अमृतम् एव अन्धः अन्नं यस्य सः अमृतान्धः देवः स्मरः कन्दर्पः एव धाता दानान्ते तुलापुरुषदानान्ते श्रुतस्य कथितस्य शर्करा...स्य एव मथः मन्थनदण्डस्य, पथिमथ्यृभुक्षां टिलोपः। उन्मीलन्ती विकसन्ती गुडस्य पाकात् उद्भूता या तन्तुलता तयैव रज्ज्वा प्रग्रहेण साधनेन भ्रमीः भ्रमणानि स्वेन आत्मनैव अर्जयन् सम्पादयन् इक्षुरसस्य उदधेः सकाशात् नव्यां सुधां यदि उत्थापयेत् तदा सा सुधा कर्त्री मत्कर्णयोः परमां पारणां अद्वितीयतृप्तिहेतुं भवज्जिह्वायाः, त्वद्रसनायाः, सर्वनाम्नो

आस्ये या तव भारती वसति तल्लीलारविन्दोल्लस-
द्वासे सत् क्वणवैणनिक्वणमिलद्वाणीविलासामृते।
तत्केलिभ्रमणार्हगैरिकसुधानिर्माणहर्म्याधरे
तन्मुक्तामणिहार एव किमयं दन्तस्रजौ राजतः॥ १४०॥
वाणी मन्मथतीर्थमुज्ज्वलरसस्रोतस्वती काऽपि ते
खण्डा खण्ड इतीदमीयपुलिनस्यानुमीयते वालुका।

---

इतिमात्वे पूर्वपदस्य पुंवद्भावः। कृतिं काव्यं गिरम् इत्यर्थः आक्रुयेत प्रतिभटीकुर्यात्, स्पर्द्धया ह्वेञ् तङ्॥ १३८॥

आस्य इति। हे प्रिये! तव आस्ये या भारती सरस्वती वसति। किम्भूते आस्ये? तस्याः भारत्याः एव हस्ते स्थितस्य लीलारविन्दस्येव उल्लसन् प्रसरन् वासः गन्धः यस्मिन् पद्मिनीत्वात् पद्मतुल्यपरिमले। तथा तस्याः एव क्वणः वैणः निक्वणः मधुरः स्फुटः वीणासम्बन्धी नादः तद्रूपं मिलत् सम्बध्यमानं वाणीविलासरूपं वक्रोक्त्यादिनानाविधवाग्विलासरूपं अमृतं यस्मिन्। तथा तस्याः एव केलिभ्रमणार्हे लीलागमनयोग्ये गैरिकेण उक्तधातुविशेषेण सुधया धवलतया धवलसाधनचूर्णद्रव्येण च चित्रादिनिर्माणं यत्र तादृशं यत् हर्म्यं गृहं तद्रूपः तत्तुल्यः अधरः यस्मिन् तादृशे आस्ये पुरः दृश्यमाने ये दन्तस्रजौ द्वे दन्तमाले राजतः शोभेते। तद्रूपः अयं पुरः दृश्यमानः तस्याः भारत्याः मुक्तामणिरचितः हारः एव किं तद्वत्ते राजते इत्यर्थः। सरस्वतीवीणाक्वणिततुल्या तव वाणी इत्यर्थः। अत्र प्राधान्येन वाणीवर्णनम्, अन्यत् प्रासङ्गिकम्। पद्मगन्धादिभिः मुखे भारतीवासः अनुमीयते। ईश्वराणां गृहं गैरिकादिविचित्रं भवति गैरिकयुक्ता सुधा इति भावः॥ १४०॥

एतत्तीरमृदैव किं विरचिताः पूताः सिताश्चक्रिकाः
किं पीयूषमिदम्पयांसि किमिदन्तीरे तवैवाधरौ ॥ १४१ ॥
परभृतयुवतीनां सम्यगायाति गातुं
न तव तरुणि ! वाणीयं सुधासिन्धुवेणी ।
कति न रसिककण्ठे कर्त्तुमभ्यस्यतीऽसौ
भवदुपवविपिनाम्रे ताभिराम्रेऽडितेन ॥ १४२ ॥

---

वाणीति । हे भैमि ! वाणी का अपि वर्णयितुम् अशक्यत्वात् नोक्तानगा, अथवा निर्दिष्टमाना उज्ज्वलरसस्रोतस्वती शृङ्गाररससम्बन्धिनी वा नदी, अथच निर्मलजलसम्बन्धिनी वा नदी अतएव मन्मथस्य तीर्थं कामोद्दीपिका, तथा इदमीयस्याः अस्याः नद्याः सम्बन्धिनः पुलिनस्य सम्बन्धिनी वालुका एव इक्षुविकाररूपः खण्ड इति आलप्यते गीयते । तथा पूताः निर्मलाः सिताः शुभ्राः चक्रिकाः शर्कराकृतचक्राणि एतस्याः तीरस्य मृदा एव धवलमृत्तिकया एव रचिताः किम् ? तथा पीयूषं अमृतम् अस्याः सम्बन्धीनि पयांसि इदं पयांसि किम् ? अस्याः जलानि एव अमृतत्वेन आलप्यन्ते किम् ? तथा तव अधरौ एव इदन्तीरे अस्याः नद्याः तीरे उभौ तटौ किम् ? शृङ्गाररसप्रधाना कामोद्दीपिका भवद्वाणी मधुरतमा इति भावः ॥ १४१ ॥

परेति । हे तरुणि ! प्रादुर्भूतयौवने ! सुधासिन्धुवेणी सुधानदीप्रवाहरूपा तव इयं वाणी परभृतयुवतीनां सम्यक् यथार्थेन गातुं भाषितुं न आयाति । यस्मात् हेतोः ताभिः कोकिलाभिः असौ तद्वाणी भवत्याः उपवविपिने उपवने स्थितः यः आम्रवृक्षः तस्मिन् स्थित्वा रसालाङ्कुरास्वादेन रसिके अतिमधुरे, अथच ममापि एवं वाणी भवतु एवं साभिलाषे

ऊर्द्धस्ते रदनच्छदः स्मरधनुर्बन्धूकमालामयं
मौर्वी तत्र तवाधराधरतटाधःसीमलेखालता।
एषा वागपि तावकी ननु धनुर्वेदः प्रिये! मान्मथः
सोऽयं कोणधनुष्मतीभिरुचितं वीणाभिरारभ्यते॥१४३॥
स ग्राम्यः स विदग्धसंसदि सदा गच्छत्यपाङ्क्तेयतां
तच्च स्पृष्टमपि स्मरस्य विशिखा मुग्धे! विगानोन्मुखाः।

---

कण्ठे कर्त्तुं कण्ठस्थां कर्त्तुम् आम्रेड़ितेन पुनःपुनर्घोषणेन कतिवारान् न अभ्यस्यते, अपितु बहुवारम् अभ्यस्यते एव। तस्मात् अद्यापि तासां भवद्वाणी सम्यक् न आयाति इति ज्ञायते इत्यर्थः। कोकिलालापात् अपि त्वद्वाणी मधुरतमा इति भावः। भिक्षाटनेन विद्याभ्यासः सुकरः इति सूचनार्थं परभृतपदम्। पुमपेक्षया स्त्रीणां विशेषतः तरुणीनाम् इति सूचनार्थं युवतिपदम्॥ १४२॥

ऊर्ध्वं इति। हे प्रिये! ते ऊर्ध्वः रदनच्छदः ओष्ठः एव बन्धूकमालामयं स्मरधनुः तव अधराधरतटस्य अधःसीमा-पर्य्यन्तं मर्य्यादायां वर्त्तमाना लेखा सा एव दैर्घ्यात् लता तत्र कामचापे मौर्वी एषा। तावकी वाक् अपि मान्मथः काम-सम्बन्धी कामाद्वैतप्रतिपादकः धनुर्वेदः एव सः अयं विशिष्टः त्वद्वाणीरूपः मान्मथधनुर्वेदः उचितं योग्यं यथा तथा कोण-धनुष्मतीभिः वीणावादनसाधनधनुर्युक्ताभिः वीणाभिः आर-भ्यते अभ्यस्यते, परम् अद्यापि न आयाति इत्यर्थः। त्वद्वाणी वीणाक्वणितात् अपि मधुरतमा इति भावः। धनुर्वेदस्य धनुर्धरैः एव अभ्यस्यते इति औचित्यम्, अभ्यस्यते एतत् उचि-तम् इति वा। यत् स्वस्य न आयाति तदागमनार्थम् अभ्यासः अपि उचितः एव इत्यर्थः॥ १४३॥

यः किं मध्विति नाधरं तव कथं हेमेति न त्वद्वपुः
कीदृङ्नाम सुधेति पृच्छति न ते दत्ते गिरं चोत्तरम् ॥१४४॥
मध्ये बद्धाणिमा यत्सगरिममहिमश्रोणिवक्षोजयुग्मा
जाग्रच्चेतोवशित्वा जितदृढलघिमा मां प्रतीशित्वमेषि।

स इति। हे मुग्धे! सुन्दरि! यः पुरुषः मधु किं नाम इति पृच्छति प्रश्नं कुर्वाणे जने विषये तव अधरम् एव उत्तरं न दत्ते, सः ग्राम्यः पामरः अचतुरः, न तु तव नगरनिवासयोग्यः इत्यर्थः। तथा हेम किंप्रकारकम् इति प्रश्नं कुर्वाणे जने विषये यः तद्वपुः एव उत्तरं न दत्ते। सः विदग्धानां चतुराणां संसदि सभायां सदा अपाङ्क्तेयतां पङ्क्तिबहिर्भूतत्वं याति गच्छति तेषां पङ्क्तौ न उपवेश्यते सोऽपि अचतुरः इत्यर्थः। तथा सुधा नाम कीदृक् इति पृच्छति प्रश्नं कुर्वाणे जने यत् ते गिरश्च उत्तरं न दत्ते स्मरस्य विशिखाः तञ्च पुरुषं स्प्रष्टुम् अपि विगानोन्मुखाः जुगुप्सायै कृतोद्यमाः नीरसः अयम् इति जुगुप्सायां न स्पृशन्ति न भिन्दन्ति इति किं वाच्यं सोऽपि अचतुरः इत्यर्थः। त्वद्वाणी सुधायाः अपि मधुरतमा इति भावः। अधरादिवर्णनं तु प्रासङ्गिकम्। ग्राम्यः, ग्रामाद्यखञौ इति भावार्थे यः। पाङ्क्तेयः नद्यादित्वात् ढक् ॥ १४४ ॥

मध्य इति। हे भये! त्वं यत् यस्मात् हेतोः मध्ये उदरभागे बद्धः धृतः अणिमा सौक्ष्म्यातिशयो यया सा कृशोदरी, तथा गरिममहिमभ्यां गुरुत्वमहत्त्वाभ्यां सह वर्त्तमानं श्रोणिः नितम्बः वक्षोजयुग्मं स्तनयुगञ्च यस्याः सा गुरुस्थूलनितम्बा महोच्चकुचा च, तथा जाग्रत् स्फुरद्रूपं चेतसि वशित्वं जितेन्द्रियता यस्याः सा पतिव्रता। तथा जिते ईषद्वाय्वेऽपि

सूक्तौ प्राकाम्यरम्या दिशि विदिशि यशोलब्धकामावसाया
भूतीरष्टावपीशस्तददित मुदितः स्वस्य शिल्पाय तुभ्यम् ॥१४५॥
त्वद्वाचः स्तुतये वयं न पटवः पीयूषमेव स्तुम-
स्तस्यार्थे गरुडामरेन्द्रसमरः स्थाने स जानेऽजनि ।

---

भूतो लघिमा अल्पत्वं यया सा, अल्पहासेत्यर्थः । तथा मां प्रत्यहिंश्य ईशित्वं स्वामितामेषि, मम प्राणेश्वरी । तथा सूक्तौ वचनचातुर्य्यविषये प्राकाम्येन प्रकारबाहुल्येन रम्या वक्रोक्त्यादिनानाप्रकारां वाणीं वक्तुं यो यथा वाञ्छति तथा वक्तुं त्वमेव जानासि नाऽन्या । तथा दिशि प्राच्यादौ विदिशि आग्नेयादौ च यशसः सौन्दर्य्यादिविषयकीर्त्तेः यशसा वा कृत्वा लब्धः कामेन स्वेच्छया अप्रतिहतप्रसरोऽवसा यो गतिर्यया सा त्रैलोक्यप्रसरकीर्त्तिः, एवंविधा यस्मात् तस्मात् कारणात् मुदितो हृष्टः ईश ईश्वरः त्वां निर्माय सौन्दर्य्यादिना मुदितः परितुष्टः सन् अणिमादीः अष्टावपि भूतीः महासिद्धीः तुभ्यं स्वशिल्पाय त्वद्रूपाय निजनिर्माणाय अदित प्रायच्छत् । सन्तुष्टो हि पित्रादिः अपत्यादिभ्यः स्वयं घृतमल ङ्कारादि ददाति । तथेश्वरेण सन्तुष्टेन स्वयं घृतमणिमा महिमा गरिमा लघिमा वशित्वमीशित्वं प्राकाम्यं कामावसायिता चेत्येवमष्टविधमैश्वर्य्यं तुभ्यं दत्तं, अन्यथा एतत्त्वयि कथं स्यादित्यर्थः । एवं सूक्तिः कस्याश्चिदपि नास्तीति भावः । शब्दश्लेषशक्तिच्छलेनैतत् सर्वमुक्तमिति श्लेषम् । वाणीवर्णन एव तात्पर्य्यम् । मध्यादिवर्णनं प्रासङ्गिकम् । अणिमादौ गुणवचनत्वादिमनिच् । वश इन्द्रियाणां स्वाधीनत्वं तद-स्यास्तीति वशी तद्भावो वशित्वं जितेन्द्रियत्वं ईशनमीशः ऐश्वर्य्यं तदस्यास्तीति ऐशी तद्भावः ईशित्वम् ॥ १४५ ॥

द्राक्षापानकमानमर्दनसृजा क्षीरे दृढावज्ञया
यस्मिन्नाम धृतोऽनया निजपदप्रक्षालनानुग्रहः ॥ १४६ ॥
शोकश्चेत् कोकयोस्त्वां सुदति ! नुदति तद्व्याहराभ्राकरस्थे
गत्वा कुल्यामनस्तं व्रजितुमनुनये भानुमेतज्जलस्थम्।
बद्धे यद्यञ्जलावप्यनुनयविमुखः स्यान्ममैकग्रहोऽयं
दत्त्वैवाभ्यां तदम्भोऽञ्जलिमिह भवतीं पश्य मामिष्यमाणम्॥१॥

---

त्वदिति। हे प्रिये ! वयं त्वद्वाचः स्तुतये न पटवः, तस्मात् पीयूषममृतमेव स्तुमः तस्य अमृतस्यार्थे स पुराणादिप्रसिद्धः गरुडस्य अमरेन्द्रस्य च समरः अजनि स्थाने युक्तं तदित्यहं जानं मन्ये। नाम यस्मात् हेतोः अनया तव वाण्या यस्मिन्नमृते निजपादयोः प्रक्षालनेनैव अनुग्रहो धृतः कृतः। किम्भूतया द्राक्षापानकस्य पक्वद्राक्षासम्बन्धिनः संस्कृतरसविशेषस्य मानोऽहङ्कारस्तस्य मर्दनं खण्डनं सृजति तया। तथा क्षीरे दुग्धविषये दृढा अन्येन त्याजयितुम् अशक्या अवज्ञा यस्याः तया। अथ च यस्मिन् पीयूषे भवद्वाक्यभूतया वाण्या स्वीयसुप्तिङन्तरूपाणां पदानां प्रक्षालनात् अनु पश्चात् ग्रहाणां ग्रहः कृतोऽस्त्येव, अमृतक्षालिततयैव निर्दोषमधुरञ्च वदसीत्यर्थः। द्राक्षाक्षीरे तिष्ठतः पीयूषादपि तद्वाणी मधुरतमा इति भावः। प्रभोर्यस्मिन्ननुग्रहातिशयः स एव चरणक्षालनादि करोति इति भावः ॥ १४६ ॥

शोक इति ! हे सुदति ! दमयन्ति ! कोकयोः चक्रवाकयोः शोकः त्वां नुदति चेत् तर्हि व्याहर ब्रूहि, कुल्यां गत्वा एतस्याः कुल्यायाः जलस्थं भानुं सूर्यम् अनस्तं प्रापितुम् अहम् अनुनये अभ्यर्थये, मया अञ्जलौ बद्धेऽपि एकः ग्रहः अभिनिवेशः यस्य सः एकग्रहः चन्द्रादिषु मुख्यग्रहश्च, निबद्धो-

तदानन्दाय त्वत्परिहसितकन्दाय भवती
निजालीनां लीनां स्थितिमिह मुहूर्त्तं मृगयताम् ।
इति व्याजात् कृत्वाऽऽलिषु वलितचित्तां सहचरीं
स्वयं सोऽयं सायन्तनविधिविधित्सुर्बहिरभूत् ॥ १४८ ॥
श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
तस्यागादयमेकविंशगणनः काव्ये ति नव्ये कृतौ
भैमीभर्त्तृचरित्रवर्णनमये सर्गो निसर्गोज्ज्वलः ॥१४९ ॥

---

परागार्कादयो ग्रह इत्यमरः । अयं आनुः अनुनयात् विमुखः यदि स्यात् तत् तर्हि आभ्यां कोकाभ्याम् अभ्रः जलं दत्त्वैव इह प्रासादे भवन्तीं त्वाम् एष्यमाणम्, इण् गतावित्यस्य शानचि रूपम् । मां पश्य सायं सन्ध्योपासनानिमित्तं बहिर्गमनाभ्यनुज्ञां याचितवान् इति भावः ॥ १४७ ॥

तदिति । हे दमयन्ति ! तत् तस्मात् कारणात् निजानाम् आत्मीयानाम् आलीनाम् इह प्रासादे लीनां गूढ़ां स्थितिं त्वत्परिहसितस्य तव परिहासस्य कन्दाय मूलाय आनन्दाय भवती त्वं मुहूर्त्तं मृगयताम् अन्विष्यतु इति व्याजात् आलिषु सखीषु सहचरीं दमयन्तीं वलितचित्ताम् आसक्तमनस्कां कृत्वा सः अयं नलः स्वयं सायन्तनं विधिं कृत्यं विधित्सुः विधातुमिच्छुः सन् बहिः अभूत् ॥ १४८ ॥

श्रीहर्षमिति । भैमीभर्त्तुः नलस्य यत् चरित्रं तद्वर्णनमये काव्ये भव्ये नूतने यत्र यस्मिन् श्रीहर्षस्य कृतौ एकविंशतिः गणना यस्य सः अयं सर्गः अगात् समाप्तः । गतमन्यत् ॥१४९॥

---

# द्वाविंशः सर्गः ।

उपास्य सान्ध्यं विधिमन्तिमाशारागेण कान्ताधरचुम्बिचेताः ।
अवाप्तवान् सप्तमभूमिभागे भैमीधरं सौधमसौ नरेन्द्रः ॥१॥
प्रत्युद्व्रजन्त्या प्रियया विमुक्तं पर्य्यङ्कमङ्कस्थितसज्जशय्यम् ।
अध्यास्य तामप्यधिवास्य सोऽयं सन्ध्यामुपश्लोकयति स्म सायम्
॥२॥

---

इदानीं पूर्वसर्गान्तप्रस्तावितं सायंकालं वर्णयिष्यन् कविर्द्वाविंशं सर्गमुपक्रमते। उपास्येति। असौ नरेन्द्रः नलः सन्ध्याप्रान्तभावेन अन्तिमाशायाः प्रतीच्याः आशायाः दिशः रागेण रक्तवर्णेन हेतुना कान्तायाः अधरचुम्बि अधरोष्ठस्मारि चेतः यस्य तादृशः सन्ध्यारागसदृशभैम्यधरस्मारी सन् तद्विरहासहिष्णुतया बहिः अवस्थातुम् अशक्तः यत्र सा विद्यते तं सप्तमे भूमिभागे कक्षायां स्थितं भैम्याः धरं पर्वतरूपं सौधं हर्म्यं प्रासादस्य सप्तमीम् उपकारिकाम् अवाप्तवान् प्राप। किं कृत्वा? सान्ध्यं सन्ध्यासम्बन्धिनं सन्ध्याजपादिविधिम् उपास्य कृत्वा ॥ १ ॥

प्रतीति। सः अयं नलः सायङ्कालसम्बन्धिनीं सन्ध्यां रात्रिन्दिनसम्बन्धिनं मुहूर्त्तं भैम्याः पुरः उपश्लोकयति स्म श्लोकैः स्तौति स्म। किं कृत्वा? प्रत्युद्व्रजन्त्या सम्मुखम् आगच्छन्त्या प्रियया विमुक्तम् अङ्के मध्ये स्थिता सज्जा आस्तृता शय्या तूलिका यत्र तं पर्य्यङ्कम् अध्यास्य स्वयम् अधिष्ठाय तां भैमीम् अपि अधिवास्य तत्र उपवेश्य। पर्य्यङ्कम् अधिशीङ इति कर्मत्वम्। अधिवास्य इत्यत्रादस्ते ण्यप् तस्य धात्वन्तर-

विलोकनेनानुगृहाण तावद्दिशं जलानामधिपस्य दारान् ।
अचालि लाक्षापयसेव येयमपूरि पङ्कैरिव कुङ्कुमस्य ॥ ३ ॥
उच्चैस्तरादम्बरशैलमौलेश्च्युतो रविर्गैरिकगण्डशैलः ।
तस्यैव पातेन विचूर्णितस्य सन्ध्यारजोराजिरिहोज्जिहीते ॥४॥

---

त्वात् उपान्वध्याङ्वस इति कर्मत्वाप्राप्ते स्तामधिवास्ये त्यत्र सामर्थ्यात्तत्रैवेति ज्ञेयम्। उपश्लोकयति सत्यापपाशेति णिचि स्म योगे भूते लट् ॥ २ ॥

विलोकनेनेति। हे भैमि! त्वं जलानाम् अधिपस्य वरुणस्य दारान् भार्य्यां पश्चिमां दिशं विलोकनेन अनुगृहाण कृतार्थीकुरु तावदादौ विलोकनेन अनुगृहाण वर्णनया तु पश्चादित्यर्थः। यावत् चन्द्रोदयादिना प्राच्यां रामणीयकं भवति पश्चिमां दिशं विलोकयेति वा तावच्छब्दार्थः। जलाधिपस्य च भार्य्या दुःखिता विलोकनादिना अनुगृहीतुम् अर्हा भवतीत्युक्तिः। या इयं पश्चिमा दिक् लाक्षापयसा अलक्तरसेन कृत्वा केन अपि अचालि इव क्षालिता इव। तथा कुङ्कुमस्य पङ्कैः कृत्वा केन अपि अपूरि इव। एवंविधा रक्ता दृश्यते यतः तस्मात् रमणीयाम् एतां विलोकयेत्यर्थः ॥३॥

उच्चैरिति। हे प्रिये! रविरेव गैरिकाख्यधातुविशेषसम्बन्धी गण्डशैलः उच्चैस्तरात् अत्युन्नतात् अम्बरशैलस्य गगनगिरेः मौलेः शिखरात् सकाशात् च्युतः पतितः स्थूलपाषाणः एव अधः पतितः अयच सन्निहितः पातेन उच्चतरगिरिशिखरात् अधः पतनेन हेतुना विचूर्णितस्य विशेषेण सूक्ष्मचूर्णीकृतस्य तस्यैव गैरिकगण्डशैलस्य सम्बन्धिनी सन्ध्या एव रजोराजिः सन्ध्यासम्बन्धी रागः इत्यर्थः। इह सायङ्काले पश्चिमदिशि वा उज्जिहीते उपरिष्टात् प्रसरति। अस्तसमये सूर्य्यस्य

अस्ताद्रिचूडालयपक्कणालिच्छेकस्य किं कुक्कुटपेटकस्य ।
यामान्तकूजोल्लसितैः शिखौघैर्दिग्वारुणी द्रागरुणीकृतेयम् ॥५॥
पश्य द्रुतास्तङ्गतसूर्य्यनिर्य्यत्करावलीहैङ्गुलवेत्रयाऽत्र ।
निषिध्यमानाह्नि सन्ध्ययाऽपि रात्रिप्रतीहारपदेऽधिकारम् ॥६॥

---

रक्तत्वात् भग्नगिरिशिखरात् च्युतत्वाच्च गैरिकगण्डशैलत्वम् । उच्चतरात् प्रदेशात् पतितः गण्डशैलश्चूर्णीभवति । चूर्णीभूतस्य रजोराजिरूर्द्धं प्रसरति । तद्रजोराजिरेव सन्ध्यारागः प्रायेणोर्द्धं गच्छति प्रसरतीत्यर्थः ॥ ४ ॥

अस्तेति । हे प्रिये ! कुक्कुटानां पेटकस्य समूहस्य यामान्ते प्रहरान्ते या कूजा शब्दितं तद्वशात् उल्लसितैः प्रकाशमानैः किञ्चित् उच्चीभूतैः उत्फुल्लजपाकुसुमतुल्यैः शिखानां शिरसि रक्तचर्ममयकेसराणाम् ओघैः वृन्दैः किम् इयं वारुणी दिक् द्राक् अकस्मात् अरुणीकृता रक्तीकृता इत्युत्प्रेक्षा । किम्भूतस्य ? अस्ताद्रेः चूडा शिखरं सा एव लयः स्थानं यस्य सः च पक्कणः शबरगृहं तस्य आलिः समूहः तत्र छेकस्य गृहासक्तस्य शबरैः गृहेषु सङ्गृहीतस्य, कुक्कुटानां कूजने उदमितशिखत्वं जातिः, ते च यामान्ते कूजन्ति सायंसमये कूजनादुत्फुल्लशिखावृन्दसम्बन्धात् अरुणीभवनसम्भवार्थं यामान्तेत्याद्युक्तम् । पक्कणः शबरालयः । गृहासक्ताः पक्षिमृगाश्छेकास्ते इत्यमरः । पेटकं पुस्तकादीनां मञ्जूषायां कदम्बकमिति विश्वः ॥ ५ ॥

पश्येति । सन्ध्यया अत्र सायं समये चन्द्रस्य नायिका रात्रिः तत्सम्बन्धिनः प्रतीहारस्य दौवारिकस्य पदे अधिकारम् आस्पदम् अपि पश्य विलोकय । किम्भूतया ? द्रुतं शीघ्रं अस्तङ्गतस्य सूर्य्यस्य निर्यन्ती वहिर्निर्गच्छन्ती करावली किर-

महानटः किं नु स भानुरागे सन्ध्याय सन्ध्यां कुनटीमपीशाम् ।

णपरम्परा एव हैङ्गुलं हैङ्गुलाख्यं रञ्जकरक्तद्रव्यविशेषेण रक्तं वेत्रं दण्डविशेषः यस्याः तया। किम्भूते पदे? निषिध्यमानं निवार्य्यमाणप्रवेशं महः दिनं यस्मिन्। स्त्रिया हि दौवारिकी स्त्र्येव युक्तेति सन्ध्यैव रात्रेर्दौवारिकी जातेत्यर्थः। सूर्य्योऽस्तमितो दिनं गतं रात्रिरागतेति सायंसन्ध्यया ज्ञाप्यते इति भावः। दौवारिक्यपि हैङ्गुलवेत्रपाणिः सती प्रविशन्तं कमपि प्रतिषेधयति। तिर्य्यक्करावलीति पाठे तिर्य्यक् प्रसारिणश्च ते कराश्चेति। महनोत्यत्र तत्पुरुषत्वाभावाट्टजभावः ॥६॥

इदानीं सन्ध्यानक्षत्रयोगं वर्णयति। महानट इति। अङ्ग! हे भैमि! महान् सन्ध्योपासनादिविषये अतिप्रशस्तः तथा अटति गच्छतीति एवम्भूतः कालः-सः प्रकृतः सायन्तनः यद्वा महान् परमेश्वरः नटः नर्त्तकः यस्मिन्, सन्ध्याकाले हि ईश्वरो नृत्यति स प्रकृतः सायंसन्ध्यासमयः। भानोः सूर्य्यस्य रागे लौहित्ये सति अस्तमयानन्तरं सूर्य्यस्य रागमात्रे अवशिष्टे सति सन्ध्यां सन्ध्याकान्तिं किञ्चित् पीतरक्तवर्णत्वात् कुनटीं, नेपाली कुनटीगोलेत्याद्यभिधानात् मनःशिलारूपां तथा ईशामपि स्वकालस्वामिनीं वा अथ चिद्रूपब्रह्मरूपत्वात् देवतारूपां, अथच समृद्धिमतीं सन्ध्याय सम्यक् विचिन्त्य साम्प्रतम् इदानीं तन्वा किञ्चित् उद्गतया सन्ध्यारागतिरोहितकान्तितया वा कृशया किञ्चित् दृश्यया। तथा वियता अपि गगनरूपया लक्षणया यावद्गगनं विस्तीर्णया च। यद्वा आ सामस्त्येन व्याप्तं वियत्, यया गगनव्यापिन्या च तारश्रेण्या नक्षत्रपरम्परारूपया स्रजा पुष्पादिमालया हारं तनोति विरचयति किम्। यद्वा ताराणां शुद्धमौक्तिकानां श्रेणिः यत्र

तनोति तन्वा वियताऽपि तारस्रेणिस्रजा साम्प्रतमङ्गहारम् ॥७॥

ताडृश्या ग्रथितमौक्तिकमालया हारविरचनं युक्तमिति सन्ध्याकालः सन्ध्याम् एवंविधां सञ्चिन्त्य नक्षत्रपरम्परामेव विरचयति किमित्यर्थः। सन्ध्यारागः कियानवशिष्टोऽस्ति मुक्तातुल्यानि नक्षत्राणि च किञ्चिद्दृश्यानि जातानीति भावः। तथा तारस्रेणिस्रजा उपलक्षितेन तद्युक्तेन वियता गगनेनैव हारं तनोतीति वा। सन्ध्यामेवंविधां विज्ञाय तूष्णीभूतः इति न किन्त्वौचित्यादिविशिष्टया तारस्रेणिस्रजा हारमपि विरचयतीत्यर्थः इति वा अपिशब्दार्थः। अथच स प्रसिद्धः महानटस्ताण्डवनृत्यकर्त्ता शिवः भानोः सूर्य्यस्य रागे सति अस्तमितार्द्धे सूर्य्ये सतीति यावत्। तत्र सन्ध्यासमये मनःशिलातुल्यवर्णां अचिरस्थायित्वात् कुत्सितनर्त्तकीरूपां वा ईशां देवीं सन्ध्याय सम्यक् ध्यात्वा सायं सन्ध्यावन्दनं कृत्वाऽष्टमूर्त्तिषु मध्ये तारापरम्परैव माला यस्यां तया गगनरूपया अपि अमूर्त्तया अपि अकृत्या इदानीं सन्ध्यावन्दनानन्तरं अङ्गहारं सुखकरपार्श्वीयाङ्गानां विक्षेपं करोति किमिति वितर्के। अमूर्त्तस्य अङ्गहारकरणं विचित्रमिति विरोधार्थोऽपिशब्दः। न केवलं चन्द्रसूर्य्यभोगादिभूषितयैव तन्वाऽङ्गहारं करोति किन्तु वियताऽपि तन्वेति समु[illegible]यार्थो वा। ईश्वरोऽपि सायंसमये नृत्यति। भानुरागे [illegible]ःशिलातुल्यवर्णां सन्ध्यामपीशां सहचरीं पार्वतीं विचिन्त्य विशिष्टया वियद्रूपयाऽपि तन्वाऽङ्गहारं तनोति। पार्वतीसमीपेऽपीश्वरो नृत्यति। अथच महानतिप्रवीणो नटः कुत्सितां नटीं नृत्येऽनतिचतुरामपि सन्ध्यां वयःसन्धौ वर्त्तमानां तरुणीं रसभावसन्धौ वर्त्तमानां वा रसभावज्ञाम्। अतएव सभायां अनुरागे

भूषास्थिदास्नस्त्रुटितस्य नाथ्यात् पश्योडुकोटीकपटं वहद्भिः।

---

ईशां सन्ध्यानुरागजनने समर्थां सञ्चिन्त्य वियत्तुल्ययाऽतिविशालया शुद्धमौक्तिकपरम्परारूपया मालया उपलक्षितया तन्वा अङ्गहारं तनोति तदसाम्प्रतं किन्तु रसभावादिजनयन्त्या तया सन्ध्यानुरागे समुपपादितेऽपि नृत्यकर्मकौशलेनापि सन्ध्यानुरागार्थं स्वयमङ्गहारं तनोतीति युक्तमेवेत्यर्थः। अथच महान्नर्त्तको वयःसन्धौ रसादिसन्धौ वा वर्त्तमानां तथा समृद्धिमतीमपि स्त्रियं कुत्सितां नटीं नृत्यानभिज्ञां ज्ञात्वा सभानुरागे निमित्ते विशिष्टया तन्वा स्वयमङ्गहारं तनोति तदसाम्प्रतं किं नु अपि तु तस्या नृत्यकौशलाभावान्नृत्येन सभानुरञ्जने सामर्थ्याभावात् सभानुरञ्जनार्थं स्वयमेव निपुणं नृत्यतीति युक्तमेवेत्यर्थः। अथवा अन्योऽपि महानतिसन्नद्धो अटति सर्वत्र गच्छति तादृशोऽतिचञ्चलोऽतिप्रसिद्धो नटः कुनटीमपि नृत्यविद्यायामपि मया कान्त्या आकृत्याऽपि योऽनुरागस्तद्विषये ईशां सौन्दर्यातिशयेनैव रागमुत्पादयन्तीं तथा शैशवतारुण्ययोः सन्धौ वर्त्तमानां प्रादुर्भूतयौवनां रसभावसन्धिस्थत्वाद्रसभावज्ञां वा सञ्चिन्त्य आत्मकान्त्यनुरागे सति कुनटीमपि तरुणीं रसभावज्ञां वा तथेशां सम्पन्नाञ्च विचिन्त्य तन्वा तदीयशरीरस्यातिविशिष्टतया शुद्धमौक्तिकमालया हारं विरचयति तत्रानुरक्तः सन् तस्यै मुक्ताहारं वितरतीत्यर्थः। एवमन्या अपि योजनाः सुधियोऽह्नीयाः। सभानुरागैः सन्ध्यायेति पाठो बहुषु पुस्तकेष्वदृष्टत्वादुपेक्ष्यः। अटः पचाद्यच्। सन्ध्या दिगादित्वाद्यत्। तारशब्दस्य नक्षत्रकनीनिकाभिधायित्वं दशमसर्ग एवोक्तम् ॥ ७ ॥

भूषेति। हे भैमि! तारकराट् चन्द्रः किरीटे यस्य

**दिग्मण्डलं मण्डयतीह खण्डैः सायं नटस्तारकराट्किरीटः ॥८॥**
**कालः किरातः स्फुटपद्मकस्य वधं व्यधाद्यस्य दिनद्विपस्य।**
**तस्यैव सन्ध्यारुचिराऽस्रधारा ताराश्च कुम्भस्थलमौक्तिकानि ॥९॥**
**सन्ध्यासरागः ककुभो विभागः शिवाविवाहे विभुनाऽयमेव।**
**दिग्वाससा पूर्वमवैमि पुष्पसिन्दूरिकापर्वणि पर्य्यधायि ॥१०॥**

---

सः शम्भुः सायं नटति सायं नटनर्त्तकः सन् उद्धतात् नाट्यात् नृत्यात् हेतोः त्रुटितस्य भूषास्थिदाम्नः भूषणास्थिमालायाः उच्छलितैः खण्डैः शकलैः तैरेव उडुकोटीकपटं कोटिसङ्ख्य-नक्षत्रव्याजं वहद्भिः धारयद्भिः इह सायंसमये दिग्मण्डलं मण्डयति पश्य। एतानि नक्षत्राणि न, किन्तु ताण्डवत्रुटि-तास्थिमालोच्छलच्छकलान्येव दिक्षु शोभन्ते इत्यर्थः। अन्यो-ऽपि चन्द्रतुल्यकिरीटो नटो नृत्यत्रुटितहारखण्डैः स्थीवृन्दं मण्डयति। मण्डयतीवेति पाठे उत्प्रेक्षा ॥ ८ ॥

काल इति। हे प्रिये! कालः सन्ध्यासमयः एव किरातः अथच कृष्णवर्णः हिंसकत्वात् मृत्युरूपः वा कालः गिरिमहा-रण्यसञ्चारी शबरः स्फुटानि विकसितानि पद्मानि यस्मिन्, यद्वा स्फुटपद्मं विकसितकमलं कं जलं यस्मिन् अथच प्रकटीभूतशुण्डदण्डाग्रे प्रकाशमानं पद्मकं रक्तबिन्दु-वृन्दं यस्मिन् तादृशस्य दिनरूपस्य द्विपस्य वधं व्यधात् अक-रोत्। तस्यैवेह तस्य करिणो रुचिरा रम्या सन्ध्याऽस्रधारा रुधिरधारा। ताराश्च नक्षत्राणि विदारिततदीयकुम्भस्थल-मौक्तिकानि, सन्ध्यारागेण रक्तधारा ताराश्च स्थूलमुक्ता इव शोभन्ते इत्यर्थः। स्फुटपद्मकस्येति बहुव्रीहौ कप् ॥ ९ ॥

सन्ध्येति। विभुना प्रभुणा हरेण पूर्वं शिवायाः पार्वत्याः विवाहावसरे सन्ध्यया सरागः रक्तवर्णः अयमेव ककुभः पश्चि-

सतीमुमामुद्वहता च पुष्पसिन्दूरिकार्थं वसने सुनेत्रे !।
दृशौ द्विसन्ध्योमभि रागशोभे दिग्वाससोमे किमलम्भिषाताम्? ॥ ११ ॥

---

गाया: विभाग: प्रदेश: पुष्पवर्णयुक्ता सिन्दूरिका रक्तवस्त्रं तत्स-बन्धिनि तद्योगात् पुष्पसिन्दूरिकाख्ये पर्वणि उत्सवे पश्चि-शायि परिहित:। यत: दिग्वलयमेव वास: यस्य तेन रक्त-वस्त्रपरिधानावसरेऽपि दिग्वसनस्यौचित्यात् रक्तदिग्भाग: एव परिहित: इत्यवैमि शङ्के। विवाहस्य चतुर्थे दिने प्रथमदिन-परिहितानि वस्त्राणि प्रक्षालनार्थं परित्यज्य पुष्पसिन्दूरिका-ख्यपर्वणि कौसुम्भादिरक्तवस्त्राणि वधूवरेण परिधीयन्ते इति वृद्धाचार:। तत्रेशस्य दिग्वसनत्वात् रक्तपश्चिमभाग: एवानेन परिहित इत्यर्थ:। वर्णकभूतपुष्पस्थाने तारा: सिन्दूरिका-स्थाने सन्ध्यासराग: पश्चिमदिग्भाग: इति भाव: ॥ १० ॥

प्रात:सायंसन्ध्ययो: प्राचीप्रतीच्योर्द्वयोरपि तुल्यवर्णत्वात् सायंसन्ध्यारक्तपश्चिमदिश एव पुष्पसिन्दूरिकात्वं कथं वर्ण्यते इत्याक्षेपे तस्य परिहारार्थं प्राच्या अपि तद्भावमाह, सती-मिति। हे सुनेत्रे! सतीं दाक्षायणीम् उमां पार्वतीं च उद्व-हता परिणयता दिग्वाससा हरेण पूर्वोक्तपुष्पसिन्दूरिकार्थं द्विसन्ध्योम् अभि द्वे अपि प्रात:सायंसन्ध्ये लक्षीकृत्य द्वे प्राचीप्रतीच्यौ दिशौ एव रागेण रक्तवर्णेन शोभा ययो: ते रक्तवर्णेन शोभेते इति वा। तादृशे रक्ते उभे द्वे वसने अल-म्भिषातां प्राप्ते किम्? विवाहद्वये सन्ध्याद्वयरक्तदिग्द्वयमेव दिग्वसनत्वात् रक्तवस्त्रद्वयं शिवेन लब्धमित्यहं मन्ये इत्यर्थ:। शिवेन द्वे दिशावेव वस्त्रे द्वे सन्ध्ये लक्षीकृत्य रागेण रञ्जकद्रव्येण कृत्वा ये शोभे कर्मभूते ते प्रापिते किम्? विवाहे वस्त्रं रञ्जनाय कस्यचित् करे समर्प्यते तस्माच्छिवेन

आदाय दण्डं सकलासु दिक्षु योऽयं परिभ्राम्यति भानुभिक्षुः।
अब्धौ निमज्जन्निव तापसोऽयं सन्ध्याभ्रकाषायमधत्त सायम् १२
अस्ताचलेऽस्मिन्निकषोपलाभे सन्ध्याकषोन्मेषपरीक्षितो यः।
विक्रीय तं हेलिहिरण्यपिण्डं तारावराटानियमादित द्यौः ॥१३

---

दिग्द्वयरूपे मम वक्त्रे भवतीभ्यां रक्तशोभे प्रापणीये इति सन्ध्याद्वयम् आश्रमं स दिग्द्वयं रक्तशोभं चकारेत्यर्थः इति वा। सुनेत्रीति पाठे संयोगोपधादिति निषेधात् ङीष् चिन्त्यः। द्विसन्ध्यो समाहारे द्विगोरेकत्वे आवन्तो वेति स्त्रीत्वे च द्विगोरिति ङीपि सन्ध्याशब्दस्य तद्धितात्तपदत्वाद्यलस्तद्धितस्येति यलोपः, अभिरभागे इत्युभे कर्मप्रवचनीयत्वाद् तद्योगे द्वितीया। मत्वर्थत्वादणो कर्त्तुर्णौ कर्मत्वम् ॥११॥

आदायेति। यः अयं भानुरेव भिक्षुः परिव्राट् दण्डं पारिपार्श्विकमेव वैणवयष्टिम् आदाय सकलासु दिक्षु परिभ्राम्यति सः अयं तापसः परिव्राट् सायङ्काले अब्धौ निमज्जन् पातालं प्रविशन् अथच बहुजले जलाशये स्नानं कुर्वन् सन्ध्यायाम् अभ्रं गगनं तदेव काषायं रक्तवस्त्रम् अधत्त इव, उपरि अस्य ऊर्द्ध्वभागः अथच उच्चतटस्योपरि दण्डस्योपरि वा निजमस्तकोपरि वा धृतवानिव। एवं यतिरपि बहुकालावस्थानस्य निषिद्धत्वादुत्कलचणः सन् परिभ्रमन् काषायं वस्त्रं धारयति। काषाया इव सन्ध्या शोभते इत्यर्थः। माठरः पिङ्गलो दण्डः, भिक्षुः परिव्राट् कर्मन्दीति आमरः। काषायं तेन रक्तम् इत्यण् ॥ १२ ॥

अस्तेति। यः सूर्य्यः अस्मिन् प्रतीच्यां वर्त्तमाने निकषोपलाभे सुवर्णपरीक्षापाषाणतुल्ये अस्ताचले सन्ध्यारागः एव कषोन्मेषः घर्षणोन्मेषः तेन परीक्षितः इयं द्यौः तं हेलिं

पचेलिमं दाडिममर्कबिम्बमुत्ताय्य सन्ध्या त्वगिवोज्झिताऽस्य ।
तारामयं वीजभुजाऽदसीयं कालेन निष्ठ्यूतमिवास्थियूथम् ॥१४
ताराततिर्वीजमिवाऽदमादमियं निरष्ठीवि यदस्थियूथम् ।

---

सूर्य्यमेव हिरण्मयपिण्डं विक्रीय विनिमयेन कस्यचित् दत्त्वा तारारूपान् वराटकान् कपर्दकान् चादित जग्राह । उत्तमं सुवर्णं रक्तपीतं भवति तथा च रक्तपीतसुवर्णसूर्य्यगोलकस्य निकषपरीक्षितसुवर्णरेखेव सन्ध्या दृश्यते, ताराश्च वराटका एव दृश्यन्ते इत्यर्थः । द्यौरिति लोकव्यवहारानभिज्ञत्वद्योतनार्थं स्त्रीलिङ्गनिर्देशः । स्त्री हि सुवर्णं दत्त्वा मूर्खतया वराटकान् गृह्णाति, धूर्त्तेन वञ्च्यते च । वराटकस्य व्यवहारे देशे सुवर्णमपि दत्त्वा वराटकः एव गृह्यते ॥ १३ ॥

पचेलिममिति । दाडिमं वीजभुजा कालेन रक्तम् अर्कबिम्बम् एव पचेलिमं तरोः उपर्य्येव स्वयं पक्वं दाडिमफलम् उत्ताय्य गगनतरोः त्रोटयित्वा वीजग्रहणार्थं भित्त्वा वा सन्ध्या त्वगिव अस्य दाडिमस्य पक्वत्वात् रक्तत्वक्तिरेव उज्झिता परित्यक्ता, तद्वीजभक्षणार्थमुपरितनवीजकोशवत् सन्ध्या पृथक् कृता । तथा वीजभक्षणानन्तरं तारामयं तारारूपं अदसीयम् अमुष्य दाडिमस्य अमीषां वीजानां वा सम्बन्धि अस्थ्नां वीजमध्यस्थले श्वेतकणानां यूथं वृन्दं निष्ठ्यूतमिव उद्गीर्णमिव, वीजानि भक्षयित्वा गृहीतं रसमन्तर्गतश्वेतकणावृन्दं पुनः फूत्कृतमिव । न हि कालादृते सूर्य्यो दाडिमं भक्षितुं समर्थः । अन्योऽपि दाडिममुत्ताय्य तत्त्वचं परित्यज्य वीजान्यास्वाद्य गृहीतरसान् वीजकणान् फूत्कृत्य त्यजति इति भावः ॥ १४ ॥

तारेति । सामर्थ्यात् कालेन कर्त्रा रविमिव तत् पश्चिमं

तन्निष्कुलीकृत्य रविं त्वगीषा सन्ध्योज्झिता पक्कमदाडिमं वा ॥१५॥
सन्ध्यावशेषे कृततांडवस्य चण्डीपतेस्तत् चरणाभिघातात्।
कैलासशैलस्फटिकाश्मखण्डैरमण्डि पश्योत्पतयालुभिर्द्यौः ॥१६॥
इत्थं ह्रिया वर्णनजन्मनेव सन्ध्यामपक्रान्तवतीं प्रतीत्य।
तारातमोदन्तुरमन्तरिक्षं निरीक्षमाणः स पुनर्बभाषे ॥ १७ ॥

---

पचेलिमं दाडिमं निष्कुलीकृत्य निर्गतबीजकुलं कृत्वा बीज-रूपं सारं गृहीत्वा तदीया त्वगेव एषा सन्ध्या उज्झिता। वाशब्दः सम्भावनायामुज्झिता किम् ? इत्यर्थः। तत्किमित्या-शङ्क्याह। बीजानि आदमादं भक्षयित्वा अस्य सूर्यरूपस्य पक्कदाडिमस्य सम्बन्धि अस्थियूथमिव इयं तारातंतिः निर-ष्ठीवि निष्ठ्यूता। जग्ध्वा जग्ध्वा इति आदमादं अदेरा-भीक्ष्ण्येन द्विर्वचनञ्च। निरष्ठीवि कर्मणि चिण्, निष्कुलीकृत्य निष्कुलान्निष्कोषणे इति डाच्। क्षेपकोऽयं श्लोकः ॥१५॥

सन्ध्येति। हे प्रिये! सन्ध्यावशेषे सन्ध्यावन्दनान्ते कृतं ताण्डवं नृत्यं येन तस्य चण्डीपतेः चरणयोः दृढ़यत्नेन अभिघातात् हेतोः उत्पतयालुभिः उत्पतनशीलैः उच्छलितैः कैलासशैलसम्बन्धिस्फटिकाश्मनां खण्डैः शकलैः द्यौः अमण्डि अलङ्कृता इति तत् पश्य। कैलासस्फटिकखण्डा एव गगने ताराकरूपेण शोभन्ते इति भावः। उत्पतयालुभि' स्पृहिग्र-हीत्यालुच्प्रत्ययः ॥ १६ ॥

इत्थमिति। सः नलः पुनः भैमीं बभाषे। किम्भूतः ? इत्थम् उक्तप्रकारेण वर्णनजन्मना स्तुतिजातया ह्रिया इव अपक्रान्तवतीं निर्गतां सन्ध्यां प्रतीत्य नित्यं निश्चित्य अन्तरिक्षं गगनं तारातमोभ्यां दन्तुरितं मिश्रितं निरीक्षमाणः। अन्योऽ-प्युत्तमो निजवर्णनजातलज्जया अपक्रामति इति तात्पर्यम्॥१७

रामेषुमर्मव्रणनार्त्तिवेगाद्रत्नाकरः प्रागयमुत्पपात।
ग्राहौघकिर्मीरितमीनकम्बु नभो न भोः कामशरासनभ्रूः!
॥ १८ ॥

---

रामेति। भोः! हे कामशरासनभ्रूः! कामशरासनमेव भ्रुवौ यस्याः तत्सम्बुद्धिः,। भ्रूदर्शनमात्रेण कामोदयकारिणि! भैमि! रामस्य राघवस्य जामदग्न्यस्य वा इषुणा मर्मणः व्रणनात् भेदनात् हेतोः उत्पन्ना आर्त्तिः पीडा तस्याः वेगात् आधिक्यात् हेतोः निजस्थाने स्थातुम् अशक्तः सन् भीत्या रत्नाकरः एव अयं प्राक् तस्मिन् अवसरे उत्पपात ऊर्द्धम् अगात्। नेदं नभः यः पूर्वमुत्पपात सः श्यामजलः स्फुटरत्नगर्भो रत्नाकर एवायं न त्वेतन्नभ इत्यर्थः। कीदृशः? ग्राहाणां जलचारिणां जन्तूनाम् ओघैः किर्मीरिताः मिश्रिताः तत्सहिताः मीनाः कम्बवः शङ्खाश्च यस्मिन्। नभस्तु ग्रहसम्बन्धि ओघः शुक्रवृहस्पत्यादिताराग्रहसमूहः ध्रुवमण्डलग्रहसम्बन्धी समूहः वा, तेन मिश्रितः मीनाख्यः राशिः कम्बुः शङ्खाकारविशाखानक्षत्रञ्च यस्मिन्। रघुनाथेन किल सेतुबन्धसमये शरेण समुद्रो भेत्तुमारब्ध इति तावन्मात्रेण पीड़ातिशयात् उत्पतितः इत्युच्यते। परशुरामेणापि निजवसत्यर्थं समुद्रो वाणेन परास्तः समुत्पतितः, समुद्रजलस्यैवायं कालिमा न तु गगनस्येत्यर्थः। समुद्रस्याधोदेशे स्थितानि रत्नग्राहादीनि अधःस्थितेन जलेन सुखेन द्रष्टुं शक्यन्ते। मकरकर्कटादयः साक्षान्मीनादयः एव। न तु राश्यादिभूताः शिष्टाश्च ताराः समुद्रमौक्तिकानि एव न तु तारा इत्यादि ज्ञातव्यम्। शरासनभ्रूरित्युवङ्स्थानत्वात् नदीत्वाभावात् ह्रस्वत्वाभावः।.ह्रस्वपाठस्तु सद्दैव-

मोहाय देवाप्सरसां विमुक्तास्ताराः शराः पुष्पशरेण शङ्के।
पञ्चास्यवत् पञ्चशरस्य नाम्नि प्रपञ्चवाची खलु पञ्चशब्दः ॥१९॥
नभोनदीकूलकुलायचक्रीकुलस्य नक्तं विरहाकुलस्य।
दृशोरपां सन्ति पृषन्ति ताराः पतन्ति तत्सङ्क्रमणानि धाराः॥२०

---

वंशप्रभवन्नितिवत् समर्थनीयः। यद्वा शिष्टकविप्रयोगदर्शनात् ज्ञातव्यम् ॥ १८ ॥

मोहादेति। हे भैमि! पुष्पशरेण कामेन देवानाम् अप्सरसाञ्च मोहाय अन्योन्यम् अत्यन्तानुरागसञ्जननार्थं देवादीनाम् उपरि वर्त्तमानत्वात् विमुक्ताः ऊर्द्धं चिप्ताः, शुभ्रपुष्परूपाः शराः एव ताराः इति अहं शङ्के। ननु कामस्य पुष्पशरत्वेऽपि पञ्चबाणत्वात् ताराणां बहुतरत्वात् कथं कामबाणत्वमित्याशङ्क्य समर्थयते। खलु यस्मात् पञ्चशरस्य नाम्नि पूर्वपदत्वेन वर्त्तमानः पञ्चशब्दः प्रपञ्चवाची प्रकृष्टः पञ्चः विस्तारः तद्वाचकः, न तु सङ्ख्यावाचकः, पचि विस्तारवचने इति स्वार्थणिजन्ताद्धातोः पचाद्यचि पञ्चयन्ति विस्तृता भवन्ति पञ्चाः शराः यस्येति विग्रहः न तु पञ्चसङ्ख्यकाः शराः यस्येति, तस्मात् पुष्पबाणत्वं ताराणां युक्तमेवेत्यर्थः। कस्येव? पञ्चास्यवत् "सिंहो मृगेन्द्रः पञ्चास्यः" इति सिंहाभिधायिनि पञ्चास्यशब्दे सिंहस्य पञ्चसङ्ख्यमुखत्वाभावात् पञ्चयति विस्तृतं भवति पञ्चं विस्तृतमास्यं यस्य असौ पञ्चास्यः इति व्युत्पत्त्या पञ्चशब्दो यथा विस्तारवाची तथेति व्यासः। प्रपञ्चो विस्तार इति हलायुधः ॥ १९ ॥

नभ इति। नक्तं विरहेण आकुलस्य पीड़ितस्य नभोनद्याः मन्दाकिन्याः कूलमेव कुलायः स्थानं यस्य तस्य चक्रीकुलस्य चक्रवाकीसमूहस्य दृशोः नेत्रयोः अपाम् अश्रुजलानां पृषन्ति

अमूनि मन्ये सुरनिर्झरिण्या यादांसि गोधा मकरः कुलीरः ।
तत्पूरखेलत्सुरभीतिदूरमग्नान्यधः स्पष्टमितः प्रतीमः ॥२१॥
स्मरस्य कम्बुः किमयञ्चकास्ति दिवि त्रिलोकीजयवादनीयः ।

---

विन्दवः सन्ति, ते एव तारकाः अधःस्थितैः जनैः दृश्यन्ते । तथा तासां ताराणां सङ्क्रमणानि पुण्यक्षयवशात् भूमिं प्रति आगमनानि गलद्बाष्पजलानां धाराः एव पतन्ति । दृशोः सन्ति चिरस्थितिमन्ति यानि वाष्पपृषन्ति तानि ताराः इति वा । तत्सङ्क्रमणानि स्थितताराप्रतिविम्बभूतानि तत्तुल्यानि पतन्ति अधःपातीनि यानि पृषन्ति तानि धाराः अश्रुप्रवाहाः तासां ताराणां सङ्क्रमणानि वीथयः मेघादिसङ्क्रान्तयः वा । धाराः अश्रूणां प्रवाहाः इति वा । स्त्रियो हि विरहमसहमाना रुदन्ति । पतन्तीति तिङन्तम् । पृषद्विशेषणं वा ॥ २० ॥

अमूनीति । हे प्रिये ! गोधाख्याः ताराः गोधाः मकरराशिसम्बन्धिन्यः ताराः मकरः कुलीरः कर्कटराशिः तत्सम्बन्धिन्यः ताराः अमूनि प्रत्यक्षदृश्यानि अमरनिर्झरिण्याः मन्दाकिन्याः यादांसि जलजन्तवः एव इति अहं मन्ये । गोधाः मत्स्याः कर्कटाः अपि जले वर्त्तन्ते उपरि च दृश्यन्ते तस्मात् देवनद्याः यादांसि एव एतानीत्यर्थः । तर्हि उपरिवर्त्तमानेन द्रष्टुं योग्या न त्वधःस्थितेनेत्यत आह—तस्याः नाकनद्याः पूरे प्रवाहे खेलन्तः क्रीडन्तः सुराः तेभ्यः सकाशात् भीत्या दूरतलपर्य्यन्तमग्नानि, अतएव जलतलगामित्वात् अधोभागे इतः भूदेशात् अपि स्पष्टं सुखेन जानीमः । भूभागे स्थिताः अपि जलगामित्वात् गोधादियादांसि व्यक्तं जले पश्यामः इत्यर्थः । गोधाकारं भुवमण्डलं, गोधा ज्येष्ठा वा ॥ २१ ॥

स्मरस्येति । त्रिलोकीविजये वादनीयः वादनार्हः स्मरस्य

कस्यापरस्योडुमयैः प्रसूनैर्वादित्रसृष्टिर्घटते भटस्य ॥ २२ ॥

किं योगिनीयं रजनी रतीशं
याऽजीजिवत् पद्ममम्ममुहच्च।
योगर्द्धिमस्या महतीमलम्ब-
मिदं वदत्यम्बरचुम्बि कम्बु ॥ २३ ॥

---

सम्बन्धी अयं प्रत्यक्षदृश्यः विशाखानक्षत्ररूपः कम्बुः शङ्खः दिवि चकास्ति किम्? उच्चतरदेशे वादितवाद्यं सर्वत्र आकर्ण्यते इति गगने स्थापितः लोकत्रयविजयवादनार्हः कामस्यैव कम्बुः किमित्यर्थः। यस्मात् अपरस्य कस्य भटस्य उडुमयैः ताराकृपैः प्रसूनैः कृत्वा वादित्रसृष्टिः वाद्यनिर्माणं घटते, स्मरस्यैव धनुषः पुष्परूपत्वदर्शनात् तदीयस्यैव वाद्यस्य पुष्परूपत्वसम्भावनायुक्तत्वात्। ताराकुसुमरूपः कामशङ्खः एवायं गगने शोभते न तु अन्यदीयः इत्यर्थः ॥ २२ ॥

किमिति। इयं रजनी योगिनी स्त्रीपुंसयोगवती, अथच शाक्तमन्त्रसिद्धा मारणोच्चाटनाद्यभिज्ञा स्त्री किम्? या रतीशं दिवा निर्जीवमिव जीवसन्निधेः अजीजिवत् सञ्जीवं चक्रे, पद्मम् अमूमुहत् पद्मानि च समकोचयत्। रात्रौ च स्त्रीपुंसयोगे कामः उदितः भवति पद्मानि च सङ्कुचन्ति। अलम्बं निराधारं अम्बरचुम्बि आकाशवासि ता[illegible]ात्मकत्वात् अलम्बम् अराशिभूतं वा इदं प्रत्यक्षरूपं कम्बुताराः रूपः शङ्खः अस्याः रात्रियोगिन्याः महतीं योगर्द्धिं वदति, दिवा दर्शनाभावात् इदानीं दृश्यमानः शङ्खः रात्रिः आतेति कथयति। योगशक्तिं विना निराधारं वस्तु कथं स्थापयेत्। योगिनी अपि मृतमपि जीवयति किञ्चिच्च मोहयति मूर्च्छां प्रापयति भ्रान्तं करोति वा, तस्मात् योगिनी किम्? इत्यु

प्रबोधकालेऽहनि बाधितानि
तारा: खपुष्पाणि निदर्शयन्ती ।
निशाऽऽह शून्याध्वनि योगिनीयं
मृषा जगद्दृष्टमपि स्फुटाभम् ॥ २४ ॥
एणः स्मरेणाङ्कमयः सपत्नी-
कृतो भवद्‌भ्रूयुगधन्वना यः ।
मुखे तवेन्दौ लसता स तारा-
पुष्पाणि बाणानुगतो गतोऽयम् ॥ २५ ॥

---

त्प्रेक्षा । कम्बुशब्दस्य नपुंसकत्वमप्यस्तीति पूर्वमेवोक्तं स्मर्त्तव्यम् । अजोजिवत् अमूमुहत् इति णौचङ्गीत्युपधाह्रस्वः ॥ २३ ॥

प्रबोधेति । हे प्रिये ! प्रबोधकाले जागरणसमये अथ सम्यग्ज्ञानोत्पत्तिसमये अहनि दिवा बाधितानि सूर्य्यदीप्तिध्वस्तकान्तीनि तारा: नक्षत्ररूपाणि खपुष्पाणि गगनसम्बन्धीनि कुसुमानि नितरां दर्शयन्ती प्रकाशयन्ती, अथच दृष्टान्तीकुर्वती शून्याध्वनि बौद्धाध्वनि शून्यादिदर्शने विषमयोगिनी काचित् प्रव्रजिता एव इयं निशा स्फुटाभम् अतितरां दृष्टम् अपि प्रत्यक्षेण प्रतीयमानम् अपि स्थावरजङ्गमात्मकं सकलं जगत् मृषा असत्यम् आह ब्रूते । बौद्धादिदर्शने हि ज्ञानस्यैव घटाद्याकारस्यानातिरिक्तं सर्वं मिथ्येति बोध्यते । योगिन्यपि प्रपञ्चो मिथ्येति दर्शयति तथेयमपि रात्रि: अहन्यपि पुष्पतुल्यानि नक्षत्राणि निजयोगात् गगने दर्शयतीति भाव: । निदर्शनं करोति वा इति प्रतीयमानोत्प्रेक्षा ॥२४॥

एण इति । हे भैमि ! तव मुखे एव इन्दौ आह्लादकत्वादिगुणयोगात् चन्द्रे लसता प्रकाशमानेन, तथा भवद्‌भ्रू-

लोकाश्रयो मण्डपमादिसृष्टि-
ब्रह्माण्डमाभात्यनुकाष्ठमस्य ।
स्वकान्तिरेणूत्करवान्तिमन्ति
घुणव्रणद्वारनिभानि भानि ॥ २६ ॥

---

युगम् एव धनुः यस्य तेन स्मरेण तव मुखेन्दौ किम् अतः मृग-
वान् चन्द्रत्वात् सम्प्रतिपन्नवत् इत्यनुमानप्रसिद्धः यः अङ्कमयः
कलङ्करूपः एणः मृगः सपत्रीकृतः मुखे, तच्चापदर्शनात् जठ-
रावस्थितपत्रस्यैव बाणस्य अपरपार्श्वे निर्गमनं यथा भवति
तथा व्यथितः, सः एव मृगः तारापुष्पालिः नक्षत्ररूपपुष्पप-
ङ्क्तिः तल्लक्षणः बाणः तेन अनुगतः सन् सहितः एव पलाय्य
गतः अयं गगने दृश्यते किम् ? चन्द्रे मृगेण भाव्यं स चात्र
नास्ति चापः कामस्य मुखे लसति, गगने च मृगशिरोनक्षत्रं
मृगाख्यबाणाकारपुष्पतुल्यतारानुगतं दृश्यते, तर्हि कामेन
विद्धान्तर्गतपत्रपार्श्ववहिर्निर्गतबाणसहितः व्यथितः पलाय्य
गतः सः एणः अयं मृगः दृश्यते किम् ? इति प्रतीयमा-
नोत्प्रेक्षा । सपत्रनिष्पत्रादतिव्यथन इति डाच् ॥ २५ ॥

लोकेति । हे भैमि ! ब्रह्माण्डं आदौ सर्वस्मात् अपि
पूर्वं सृष्टिर्निर्माणं यस्य, अथच चिरकालनिर्मितं पुराणं मण्ड-
पम् इति आभाति तत्र दिवि शोभते इत्यर्थः । यतः त्रया-
णाम् अपि लोकानाम् आश्रयः ब्रह्माण्डाधारत्वात् जगतां
मण्डपः अपि लोकानाम् आश्रयः तच्छायानिवासित्वात्
लोकानाम् आश्रयणात्वाच्च तस्य । अतएव अस्य ब्रह्माण्ड-
मण्डपस्य अनुकाष्ठं दिशि दिशि एतत्सम्बन्धिनीषु सर्वासु
दिक्षु, अथच एतत्सम्बन्धीनि काष्ठानि दारूणि लक्षीकृत्य
तेषु भानि नक्षत्राणि स्वकान्तिरूपस्य उत्खातरेणूत्करस्य

शचीसपत्न्यां दिशि पश्य भैमि!
शक्रेभदानद्रवनिर्झरस्य।
पोप्लूयते वासरसेतुनाशात्
उच्छृङ्खल: पूर इवान्धकार:॥ २७॥
रामालिरोमावलिदिग्विगाहि
ध्वान्तायते वाहनमन्तकस्य।

सम्बन्धीनि वान्ति: उद्गार: तद्वान्तिमन्ति घुणाख्यकीटनिर्मित: व्रण: छिद्रं तस्य द्वारं मुखं तन्निभानि तत्तुल्यानि घुणोत्कीर्ण-दारुरजोयुक्तानि दारुच्छिद्रमुखानि इव दृश्यन्ते इत्यर्थ:। जनाश्रयनामा मण्डप: अपि अतिजीर्ण: यदा भवति तदा तदीयकाष्ठेषु घुणा: पतन्ति, घुणोत्कीर्णगलद्रजोयुक्तानि घुणकृतच्छिद्रमुखानि वृत्तानि च दृश्यन्ते, तानि इव भानि इति भाव:। मण्डपोऽस्त्री जनाश्रय इत्यमर:। अनुकाष्ठम् इति वीप्सायामव्ययीभाव:॥ २६॥

इदानीं सर्वदिग्व्यापि तमोवर्णनं प्राच्यादिक्रमेणोपक्रमते, शचीति। हे भैमि! अन्धकार: शच्या: सपत्नी दिक् प्राची तस्या: वासररूपस्य सेतो: सूर्यस्य प्रभामर्य्यादाया: नाशात् उच्छृङ्खल: निरर्गल: शक्रेभस्य दानद्रव: दानोदकं तस्य निर्झर: प्रवाह: तस्य श्याम: पूर: इव पोप्लूयते भृशं प्रसरति प्राचीं प्राप्नोति इत्यर्थ:। त्वं पश्य प्राच्यामेव च ऐरावतदानजलप्र-वाहपूरसम्भव: जलपूर: अपि बन्धोपगमात् अप्रतिहतप्रसर: सन् नितरां प्रसरति। प्लुङ् सर्पण इत्यस्मात् भृशार्थे यङ् द्विर्वचनम्॥ २७॥

दक्षिणदिग्व्यापि तमो वर्णयति, रामेति। श्रीरामस्य आलि: सेतु: सेतुबन्ध: एव श्यामत्वात् रोमावलि: यस्या:

यद्वीक्ष्य दूरादिव बिभ्यतः स्वान्
अश्वान् गृहीत्वाऽपसृतो विवस्वान् ॥ २८ ॥
पक्वं महाकालफलं किलासीत्
प्रत्यग्गिरेः सानुनि भानुबिम्बम्।
भिन्नस्य तस्यैव दृषन्निपातात्
वीजानि जानामितमां तमांसि ॥ २९ ॥

---

तस्याः दक्षिणस्याः दिशः विगाहि नितरां व्यापकम् अन्तकस्य दिक्पतित्वात् दक्षिणदिक्स्थं तद्वाहनं महिषः एव ध्वान्तायते कज्जलनीलः अन्धकारः इव आचरति। विवस्वान् सूर्य्यः यत् यमवाहनं दूरात् वीक्ष्य सहजाश्वमहिषवैरस्मरणात् बिभ्यतः सभयान् स्वान् अश्वान् गृहीत्वा अपसृतः पलायितः इव। दक्षिणदिशि तिमिरं यममहिषवत् शोभते इत्यर्थः। अन्तकपदेन तद्वाहनस्य दारुणत्वं सूचितम्, अतएव ततः अपि अश्वानां भयं युक्तम्। ध्वान्तायते इति उपमानात् आचारे कर्त्तुः क्यङिति क्यङत्वात् तङ्। सेतुरालौ स्त्रियां पुमानित्यमरः ॥ २८ ॥

प्रतीच्यापि तमो वर्णयति, पक्वमिति। भानुबिम्बं प्रत्यग्गिरेः प्रतीच्यां वर्त्तमानस्य अस्ताचलस्य सानुनि कालवशात् पक्वं महाकालस्य ऐन्द्रवारुण्याः फलम् आसीत् किल [illegible] अहं मन्ये इत्यर्थः। तथा अहम् अतिपक्वत्वात् अतिश्लथत्वात् उच्चतरदेशात् अधस्तात् दृशदि शिलायां निपातात् तदभिघातात् हेतोः भिन्नस्य विदीर्णस्य तस्य भानुबिम्बरूपस्य महाकालफलस्य कृष्णतमानि वीजानि एव तमांसि इति जानामितमां नितरां मन्ये। पर्वतादिकठिनभूसमुद्भवं जम्बीरवर्त्तुलं पक्वं सदतिरक्तकृष्णवीजं महाकालफलं गृहोपसर्गनिवारणार्थं गृहद्वारे

पत्यु र्गिरीणामयश: सुमेरु-
प्रदक्षिणाज्ञास्वदनादृतस्य ।
दिशस्तमश्चैत्ररथान्यनाम-
पत्रच्छटाया मृगनाभिशोभि ॥ ३० ॥
ऊर्द्धं धृतं व्योम यदुष्णरश्मे:
दिवासहस्रेण करैरिवासीत् ।
पतत्तदेवांशुमता विनेदं
नेदिष्ठतामिति कुतस्तमिस्रम् ? ॥ ३१ ॥

---

द्रक्ष्यते। अस्तमयसम्बन्धात् परिणतकालं रक्तं महत: कालस्य फलभूतञ्च भानुविम्बं महाकालफलमिव। तमांसि विदीर्णस्य तस्य कृष्णतमानि वीजानि इव प्रसरन्ति इत्यर्थ:। अन्यदिगपेक्षया प्रतीच्यां सायंसमये सूर्य्यसन्ध्यासम्बन्धिन: प्रकाशस्य आसन्नत्वात् अन्धान्धकारसूचनार्थं तमसां वीजत्वेन निरूपणम् ॥ २८ ॥

उदीचीव्यापि तमो वर्णयति, पत्युरिति। चैत्ररथं कुबेर-वनं तत् एव अन्यनाम यस्या: तादृशी पत्रच्छटा पत्रवल्ली यस्या: चैत्ररथाख्यवनरूपपत्रवल्लिकाया: उत्तरस्या: दिश: मृगनाभि: पत्रवल्लीरचनासाधनभूता कस्तूरी तद्वत् शोभते. एवं शोलं कृष्णतमं तम: गिरीणां पत्यु: हिमाचलस्य अयश: एव यत: सुमेरो: प्रदक्षिणीकरणात् भास्वता सूर्य्येण अनादृतस्य अव-ज्ञातस्य। हिमाद्रि: यद्यपि गिरीणां पति: तथापि सूर्य्येण अनादृतत्वात् हीन: एव। मेरुरेव महान्। अस्य उद्यानं चैत्ररथमित्यमर: ॥ ३० ॥

ऊर्द्धदिग्व्यापि तमो वर्णयति, ऊर्द्धमिति। तमालश्यामञ्च यत् व्योम दिवा सहस्ररश्मे: सहस्रसङ्ख्यै: करै: किरणै: अथच

ऊर्द्धार्पितन्युब्जकटाहकल्पे
यद्व्योम्नि दीपेन दिनाधिपेन।
न्यधायि तद्भूमिलदगुरुत्वं
भूमौ तमः कज्जलमस्खलत् किम्? ॥ २२ ॥

---

हस्तैः ऊर्द्धं दूरोच्चप्रदेशे धृतम् इव आसीत्, तत् नभः एव इदं तमालश्यामलम् अंशुमता विना सायंसमये सूर्य्यविनाशात् धारकेण अनेन विना अधः पतत् सत्, नेदिष्ठताम् अतितमां मंकव्यम् एति, तमिस्रं कुतः कस्मात् अकस्मात् आगतम् अपि तिमिरं नाम किमपि नास्ति, किन्तु निकटीभवत् गगनम् एव तमिस्रम् इत्यर्थः। पतत् व्योमैव तमिस्रं कुतः भूमौ निकटताम् एति, न तु तदतिरिक्तं नभः अस्तीति वा। अन्यत् अपि यत् कस्यचित् कराभ्याम् ऊर्द्धं धार्य्यते तदभावे अधः पतति एव। नेदिष्ठताम् अतिशयेन इष्ठनि, अन्तिकवाढयोरिति नेदादेशः। कुतः इति पत्ते सार्वविभक्तिकस्तसिः ॥२१॥

अधोदिग्व्यापि तमो वर्णयति। ऊर्द्धेति। सामर्थ्यात् विधिना ऊर्द्धं सूर्य्यदीपस्य एव उपरिभागे अर्पितः न्युब्जः कज्जलधारणार्थम् अधोमुखः अतितमां महाकटाहः कर्परं तत्कल्पे तत्तुल्ये कृष्णतमे व्योम्नि अधिकरणे प्रकाशकारिणा कज्जलधारणार्थेन दिनाधिपेन एव दीपेन करणेन [illegible] कज्जलं न्यधायि न्यस्तं तत् कज्जलम् एव तमः भूत्वा क्रमसञ्जातबाहुल्येन लात्वा मि तत् युक्तं भवत् पतनाख्यकर्मकारणं गुरुत्वं यस्य तादृशं सत् भूमौ अस्खलत् किम्, अतिभारेण पतितं किम्? गुरुत्वात् हि पतनं युक्तम्। तत् कज्जलमेव भूमौ पतितं किम्? अपितु तमो नाम न किञ्चिदित्यर्थः इति वा। कज्जलम् अपि कर्परे धृतं क्रमेण बहु भवत् गुरुत्वात्

ध्वान्तैणनाभ्या शितिनाऽम्बरेण
दिशः शरैः सूनशरस्य तारैः।
मन्दाक्षलक्ष्या निशि मामनिन्दौ
सेर्ष्या भवायान्त्यभिसारिकाभाः॥ ३३॥

---

अधः पतति। कटाहः कर्परे तथेति निघण्टुः। ईषदसमाप्तौ कल्पप्रत्ययः॥ ३२॥

ध्वान्तेति। ध्वान्तेन एव एणनाभ्या कस्तूर्य्या तथा शितिना नीलेन अम्बरेण गगनेन अथच वस्त्रेण। यद्वा, ध्वान्तैणनाभ्या कृत्वा नीलेन गगनेन उपलक्षिताः तथा निर्मलत्वात् पुष्पतुल्यरूपत्वाच्च उज्ज्वलैः तारैः नक्षत्रैः एव सूनशरस्य कामस्य शरैः उपलक्षिताः, अथच तारैः उज्ज्वलैः पुष्पैः उपलक्षिताः तथा प्रकाशाभावात् मन्दाक्षैः मन्दनयनैः नरैः लक्ष्याः लक्षणीयाः, अथच मन्दाक्षस्य लज्जायाः विषयभूताः सलज्जाः अतएव अभिसारिकाभाः स्वैरिणीतुल्याः दिशः, अनिन्दौ चन्द्ररहितायां अनुदितचन्द्रत्वात् छायायां निशि माम् आयान्ति प्रत्यागच्छन्ति तस्मात् सपत्नीभ्रान्त्या त्वं सेर्ष्या भव। अभिसारिका अपि शुभ्रायां रात्रौ शुभ्रवस्त्राद्याभरणाः, कृष्णायाञ्च रात्रौ कृष्णवस्त्राद्याभरणाः समायान्तीति भावः। ता अपि कस्तूरीकृताङ्गरागा नीलवसनाः प्रच्छन्नधृतपुष्पाः कामबाणपीडिताः सलज्जाः सत्यः कामुकं प्रति समायान्ति तदीयनायिकाश्च सेर्ष्या भवन्ति, तथा दिशोऽपि इत्यर्थः। सर्वा अपि दिश एकत्र मिलिता इति प्रतीतिः। तिर्य्यग्व्यापि तमो वर्णितमनेन। कान्तार्थिनी तु या याति सङ्केतं साऽभिसारिकेत्यमरः। मन्दाक्षमन्दा इति पाठे मन्दनयनानाम् अलक्ष्याः तमोबाहुल्यात्। अथच तमोबाहुल्यात् मन्दाक्षाः अत-

भास्वन्मयीं मीलयतो दृशं द्राक्
मिथोमिलद्दृग्द्वलमादिपुंसः ।
आचक्ष्महे तन्वि ! तमांसि पक्ष्म-
श्यामत्वलक्ष्मीविजितेन्दुलक्ष्म ॥ ३४ ॥
विवस्वताऽनायिषतेव मिश्राः
स्वगोसहस्रेण समञ्जनानाम् ।
गावोऽपि नेत्रापरनामधेयाः
तेनेदमान्ध्यं खलु नान्धकारैः ॥ ३५ ॥

---

एव मन्दगमनाः, लज्जया वा मन्दगमनाः इत्यर्थः । तारशब्दः पूर्ववत् ॥ ३३ ॥

भास्वदिति । हे तन्वि ! कृशाङ्गि ! भास्वन्मयीं रविरूपां दक्षिणां दृशम् अस्तमयव्याजेन द्राक् शीघ्रं मीलयतः सङ्कोचयतः आदिपुंसः श्रीविष्णोः मिथः अन्योन्यं मिलन्तौ द्वौ अपि अञ्चलौ ऊर्द्ध्वाधःपुटे यस्य निमीलनवशात् अन्योन्यसंलग्नपुटत्वात् निविडरोमकं, अतएव श्यामत्वलक्ष्म्या विजितं नितरां पराभूतं इन्दुलक्ष्म येन तादृशं पक्ष्म नेत्रसम्बन्ध्यूर्द्ध्वाधः पुटे पुनर्घनीभूतरोमाणि एव तमांसि वयम् आचक्ष्महे ब्रूमः, न तु ततः अन्यानि तमांसि इत्यर्थः । तिमिरश्यामत्वात् किमपि न दृश्यते इति भावः । पक्ष्मेति जातौ वचनम् ॥ ३४ ॥

विवस्वतेति । विवस्वता नेत्रमित्यपरनामधेयं यासां ताः चक्षूरूपाः जनानां गावः अपि स्वस्य गवां किरणानां सहस्रेण समं सह मिश्राः दिने निमीलिताः सत्यः अनायिषतेव नीता इव यस्मात् तेन खलु तेनैव इदम् आन्ध्यं प्रकाशाभावात् नेत्रापगमाच्च रूपाग्रहणं, न तु अन्धकारैः कृत्वा इदम्

ध्वान्तस्य वामोरु! विचारणायां
वैशेषिकं चारु मतं मतं मे।
औलूकमाहुः खलु दर्शनं तत्
क्षमं तमस्तत्त्वनिरूपणाय ॥३६॥

---

आन्ध्यं, तमोवशात् किमपि न दृश्यते इति भावः। अन्येनापि गोपालेन स्वगोसहस्रेण मिश्रिताः परेषामपि गावो नीयन्ते इति तात्पर्य्यम् ॥ ३५ ॥

ध्वान्तस्येति। हे वामोरु! अतिसुन्दरोरु! ध्वान्तस्य विचारणायां तमःस्वरूपनिरूपणे विषये वैशेषिकं मतं षट्पदार्थसाधर्म्यवैधर्म्यनिरूपणात्मकं काणाददर्शनं चारु सदुपपत्तिकं न त्वन्यत् इति मे मतं सम्मतम्। खलु यस्मात् कारणात् सम्प्रदायविदः तत् दर्शनं वैशेषिकं शास्त्रम् औलूकम् आहुः वदन्ति। अतएव तमसः तत्त्वनिरूपणाय अनारोपितस्वरूपनिरूपणाय क्षमं समर्थम् उलूकस्य घूकस्य सम्बन्धि, दृश्यते अनेनेति दर्शनं, चारु सदुपपत्तिकं न त्वन्यत् इति मे मतं सम्मतम्। खलु यस्मात् कारणात् तत् दर्शनं वैशेषिकं शास्त्रम् औलूकम् आहुः वदन्ति। वैशेषिकमपि उलूकापरनाम्ना काणादमुनिना प्रोक्तमिति औलूकदर्शनं, ततश्च तदपि तमस्तत्त्वनिरूपणाय समर्थमिति युक्तमित्यर्थः इति शब्दच्छलम्। वैशेषिकदर्शने च किमिदं तमः भावरूपं अभावरूपं वेति सन्देहे भासाम् अभाव एव तम इति सूत्राविरोधेन व्योमशिवाचार्य्यादयः षट्पदार्थवैधर्म्येण अभावरूपमेव तमः न्यरूपयन्। श्रीधराचार्य्यास्तु आरोपितं भूरूपमेव तमः इति निर्वर्ण्य भाभावे सत्येव तमःप्रतीतिर्भाभाव एव तम इत्युक्तमिति सूत्रविरोधं पर्य्यहार्षुः। एतत् असहमानाः श्रीमदुदयनाचार्य्यादयः

ध्वानिस्पृशः सर्वनिषेधभूमिः
सेयं त्रिशङ्कोरिव सम्पदस्य।
न किञ्चिदन्यत् प्रति कौशिकीये
दृशौ विहाय प्रियमातनोति ॥३७॥

---

पुनर्भासाम् अभावमेव तमस्त्वेन निरनैषुः, यस्मात् तत् औलूकं दर्शनं वैशेषिकशास्त्रं तमस्तत्त्वनिरूपणाय क्षममाहुः इति वाऽन्वयः। महति अन्धकारे सत्यपि घटादिपदार्थं को वा पश्यतीति ध्वान्तविचारणायां क्रियमाणायां घूकनेत्र-मेव चारु सर्वेभ्योऽपि अधिकमिति मे मतं पुनः पुनः सम्मत-मित्यर्थः। उलूकनेत्रमेव महान्धकारे घटादि विलोकयितुं समर्थं, अन्यदीयनेत्राणां तु आन्ध्यमेव जातमिति भावः। यतो वैशेषिकं घटादीन् विशेषान् वा इति तादृशं महान्धकारे घूकनेत्रमेव घटादीन् भेदेन जानाति न तु अन्यदीयं नेत्रं, तस्मात् तदेव चारु इत्यर्थः। तत्र हेतुमस्मत्यर्थम् उत्तरार्द्धम्। उलूकवृत्त्या कणान् अत्तीति कणादस्यैव उलूक इति नाम तेन प्रोक्तत्वात् औलूकम्। वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे इति विश्वः। वामोरु इति संहितशफेत्यादिना ऊङ् नदीत्वात् ह्रस्वः। औलूकं तेन प्रोक्तं इत्यण् पक्षे तस्येदमिति च ॥ ३६ ॥

ध्वानीति। ध्वानिस्पृशः कालिमस्पर्शिनः श्यामस्य अथच वैडालत्वात् मालिन्ययुक्तस्य निःश्रीकस्य तथा अभावरूपत्वात् सर्वगुणनिषेधस्य भूमेः ध्वानस्य अथच चण्डालत्वादेव अस्पृश्यस्य अस्य तमसः राज्ञः त्रिशङ्कोरिव सा इयं प्रसिद्धा प्रत्यक्षेण दृश्यमाना च सम्पत् आढ्यत्वेन स्वरूपलाभः अथच राज्यसमृद्धिः कौशिकीये औलूके अथच वैश्वामित्रदृशौ नेत्रे

मूर्द्धाभिषिक्तः खलु यो ग्रहाणां
त्राससमास्कन्दितऋक्षशोभाम्।
दिवाऽन्धकारं स्फुटलब्धरूपम्
आलोकतालोकमुलूकलोकः ॥३८॥

---

विहाय अन्यत् किञ्चित् प्रति अपरं किमपि वस्तु लक्षीकृत्य प्रियं हितं न आतनोति, किन्तु तदीये एव नेत्रे लक्षीकृत्य हितं करोति। अन्यत् प्रति किञ्चित् अल्पमपि प्रियं न आतनोति इति वा। अन्धकारे हि उलूकनेत्रे एव पदार्थान् पश्यत इति तत्सम्पत्तयोः प्रियाः। विश्वत्रोपि सम्पत् विश्वामित्रस्यैव नेत्रयोः प्रिया नान्यस्य। एतदुपाख्यानं रामायणादौ प्रसिद्धम्। कौशिकीये इति इत्थाच्छः ॥३७॥

मूर्द्धेति। यः रविः नवानां ग्रहाणां मध्ये खलु निश्चितं मूर्द्धाभिषिक्तः राजा, उलूकानां लोकः सङ्घः तस्य रवेः भयात् दीप्त्या समास्कन्दिता नितरां पराभूता ऋक्षशोभा नक्षत्रकान्तिः यस्मिन् तत्तथा स्फुटं उपलब्धानि अन्यजनेन दृष्टानि घटादिस्वरूपाणि यस्मिन् तादृशमपि दिवा कर्मीभूतं दिनम् अन्धकारमेव अवलोकत अपश्यत् दिने तस्य दर्शनाशक्तेः दिनम् अन्धकाररूपत्वेनैव मेने इत्यर्थः। तथा स्फुटं व्यक्तं लब्धानि घटादिरूपाणि यत्र तादृशम् अन्धकारमेव आलोकम् अपश्यत् दर्शनसहकारिप्रकाशरूपत्वेनैव मेने, अर्थात् रात्रौ इत्यर्थः। अन्धकारं स्फुटलब्धरूपमित्यावृत्त्या योऽन्यं तेन तमसा विपरीतदृशः एव भवन्तीति व्यज्यते। एवं विधम् अन्धकारस्य स्फुटम् अतिप्रसिद्धं शुक्लभास्वरात्मकं लब्धं रूपं येन तादृशम् आलोकमेव अपश्यत्। कृष्णरूपमपि तमः शुक्लभास्वरालोकत्वेन अपश्यदिति विरुद्धमित्यर्थः।

दिने मम द्वेषिणि कीदृगेषां
प्रचार इत्याकलनाय चारीः।
छाया विधाय प्रतिवस्तुलग्नाः
प्राविशयत् प्रष्टुमिवान्धकारः॥ ३८॥

---

अथच यः ग्रहराजः सूर्य्यः, आक्रान्तनचत्रलक्ष्मीकां तद्भासं सूर्य्यदीप्तिमेव अयम् उलूकलोकः दिवा दिने अन्धकारम् अपश्यत्, रात्रौ चान्धकारम् आलोकम् अपश्यत्, दिने सूर्य्यलोक एव तमो रात्रौ च तम एव सूर्य्यलोक इति ददर्श इत्यर्थः। कीदृशीं तद्भासं कीदृगन्धकारं स्फुटमुपलब्धानि घटादिरूपाणि यस्यामन्यजनेन तादृशीं स्फुटं सञ्जातस्वरूपलाभञ्च इत्यन्धकारस्य नपुंसकत्वात् नपुंसकैकशेषैकवद्भावेन वा व्याख्येयं सूर्य्यदीप्त्या असमास्कन्दिता अपराभूता नचत्रलक्ष्मीः यत्र तम्, अन्धकारविशेषणं वा। रात्रौ सूर्य्यदीप्तेः अभावात् अतिरस्कृतनचत्रशोभम् इत्यर्थः। सूर्य्यदीप्तेः एव समास्कन्दनसामर्थ्यात् तमसैव रात्रौ यत् तिरस्करणं तेनैव नचत्रशोभा यस्मिन् इति वा, इत्यादि व्याख्यानानि ज्ञातव्यानि। लक्ष्मीमिति पाठे नदीत्वेऽपि समासान्तविधेः अनित्यत्वात् कबभावः। मूर्द्धाभिषिक्तो राजन्यः अन्धकारोऽस्त्रियाञ्च इत्यमरः॥ ३८॥

दिने इति। अन्धकारः इति आकलनाय सामस्त्येन ज्ञानार्थं प्रतिवस्तुलग्नाः पदार्थमात्रसम्बद्धाः प्रतिच्छायाः एव चारीः गूढार्थवेदिकाः चारनारीः विधाय चारपदं ताभ्यः दत्त्वा दिनं प्रति सम्प्रेष्य समागताः ताः तत्रत्यवृत्तान्तं प्रष्टुमिव पुनः प्राविशयत्, निजनैकट्यम् इत्यर्थात्। इति किम्। मम अन्धकारस्य द्वेषिणि माम् असहमाने दिने विषये एषां

ध्वान्तस्य तेन क्रियमाणयेत्थं
द्विषः शशी वर्णनयाऽथ रुष्टः।
उद्यन्नुपास्लोकि जपारुणश्रीः
नराधिपेनानुनयेच्छयेव ॥४०॥

---

वस्तूनां कीदृक् प्रचारः विहरणं स्नेहादिव्यवहारश्चेति। दिवा प्रतिपदार्थसम्बद्धाः छायाः एव रात्रौ समागत्य मिलिताः निजस्वामिनम् अन्धकारं प्राविशन्। रात्रौ हि प्रकाशाभावे छाया अन्धकारेण सह एकीभवतीति तत्सम्बन्धादेव महान्धकारः प्रतीयते इति भावः। एतेन प्रतिच्छायाऽपि तमः एवेति वर्णितम्। अन्योऽपि रात्रौ लोकस्थितिं ज्ञातुकामः स्त्रीणां सर्वत्र प्रवेष्टुं शक्यत्वात् चारनारीः सम्प्रेष्य तत्रत्यवृत्तान्तं विचार्य्य समागतास्ताः प्रष्टुमात्मसविधं प्रवेशयति। छायाः एव चारीः प्रतिवस्तुलग्नाः विधायेति वा। चारपदं दत्त्वा यद्दिनं प्रत्येव प्रेषयामास, अतएव ताः दिने प्रतिवस्तुलग्नाः दृश्यन्ते इति वा। चारी पुंयोगात् ङीष्॥ ३९॥

इदानीं चन्द्रोदयं वर्णयितुमुपक्रमते। ध्वान्तस्येति। तेन नराधिपेन नलेन इत्थं क्रियमाणया द्विषः शत्रुभूतस्य ध्वान्तस्य वर्णनया रुष्टः क्रुद्धः इव जपाकुसुमवत् अरुणा श्रीः यस्य सः उद्यन् उदयं प्राप्नुवम् शशी तेनैव राज्ञा अथ अनन्तरम् अनुनयेच्छया इव प्रसादनवाञ्छया इव उपाश्लोकि श्लोकैः स्तोतुम् आरब्धि। अन्योऽपि वैरिवर्णनया रुष्टः सन् अरुणो भवति, तत्परिहारार्थमुदितः सन् वर्णकेन प्रसादनार्थं स्तूयते इति प्रतीयमानोत्प्रेक्षा। इव शब्दस्य उभयत्र योजना वा। उपाश्लोकि सत्येति णिजन्तात् कर्मणि चिण्॥ ४०॥

पश्याहृतोऽप्येष निमेषमद्रेः
अधित्यकाभूमितिरस्करिण्या ।
प्रवर्षति प्रेयसि ! चन्द्रिकाभिः
चकोरचञ्चूचुलुकान् मतोऽन्दुः ॥ ४१ ॥
ध्वान्ते द्रुमान्तानभिसारिकास्त्वं
शङ्कस्व सङ्केतनिकेतमाप्ताः ।
छायाच्छलादुज्झितनीलचेला
ज्योत्स्नानुकूलैश्चलिता दुकूलैः ॥ ४२ ॥

---

पश्येति । हे प्रेयसि ! प्राणप्रिये ! एषः इन्दुः चन्द्रिकाभिः चकोराणां चन्द्रिकास्रवदमृतपायिनां पक्षिणां चञ्चुः एव चुलुकाः तान् प्रति पूरयित्वा प्रकर्षेण वर्षति सुधाम् इत्यर्थात् । यावता चकोरचञ्चूपूरणं भवति तावत्प्रमाणं वर्षतीत्यर्थः । त्वं पश्य । किम्भूतः ? अद्रेः उदयाचलस्य अधित्यकाभूम्योर्द्ध्वशिखरैरेव तिरस्करिण्या जवनिकया निमेषलक्षणम् अत्यल्पकालम् आहृतोऽपि सन् सम्पूर्णानुदितः अपि प्रथमचन्द्रिकाभिरेव चकोराणाम् आनन्दं करोति किं पुनः उदितः सन्निति भावः । अन्योऽप्युपकारी दूरस्थोऽपि उदयोन्मुखोऽन्येषामुपकरोति इति तात्पर्य्यम् ॥ ४१ ॥

ध्वान्ते इति । हे प्रिये ! त्वं चन्द्रोदयात् पूर्वं ध्वान्ते सति द्रुमान्तान् तरुनिकटदेशान् एव वृक्षाधोभागान् एव सम्भोगार्थं कामुकदत्तसङ्केतनिकेतं प्राप्ताः ताः अभिसारिकाः स्वैरिणीः शङ्कस्व सम्भावय । तथा इदानीं चन्द्रोदये सति वृक्षाधोभागवर्त्ति च्छायाच्छलात् उज्झितं पूर्वधृतं तमोऽनुकूलं चेलं वस्त्रं याभिः तादृशीः सखीः सवर्णत्वात् ज्योत्स्नानुकूलैः

त्वदास्यलक्ष्मीमुकुरं चकोरैः
स्वकौमुदीमादयमानमिन्दुम् ।
दृशा निशेन्दीवरचारुभासा
पिबोरु रम्भातरुपीवरोरु ! ॥ ४३ ॥

---

चन्द्रिकानुगुणैः धवलतरैः दुकूलैः उपलक्षिताः सतीः चलिताः सम्भोगं कृत्वा स्वगृहं प्रति पुनः परावृत्ताः त्वं सम्भावय। तमसि सति एव केनापि न ज्ञातव्यम् इति बुद्धा नीलं वस्त्रं परिधाय सङ्केतस्थानम् आगताः, चन्द्रोदये पुनः नीलवस्त्र-परिधाने पूर्ववत् भीत्या तत् तत्रैव विहाय श्वेतं दुकूलं सवर्ण-त्वात् परिधाय केनापि न ज्ञाताः इति तात्पर्य्यम्। नील-चोलाः इति पाठे चोलः कुर्पासः ॥ ४२ ॥

त्वदिति । हे रम्भातरुपीवरोरु ! रम्भातरुवत् अतिपीवरौ ऊरू यस्याः तत्सम्बुद्धिः। त्वं निशायाम् इन्दीवरं नीलोत्पलं तद्वत् चारुः भाः यस्याः तया दृशा ऊरु सादरम् इन्दुं पिब विलोकय। किम्भूतम् ? तव आस्यलक्ष्म्याः मुखशोभायाः अवलोकनार्थं मुकुरं दर्पणम् इव। तथा चकोरैः प्रयोज्यैः स्वकौमुदीम् आदयमानं निजकौमुदीं चकोरान् पाययमानम्। उदिते चन्द्रे चकोराः सानन्दा जाताः, नीलोत्पलानि च विकसितानीति भावः। एतेन इन्दोः परोपकारित्वं सूचितम्। विकसितेन्दीवरतुल्यया दृशा पिब इत्यनेन चन्द्रोदये हि इन्दीवरं विकसति त्वं चैवम्भूतया दृशा यदा चन्द्रम् अवलोक-यिष्यसि तदा जनः त्वद्दृशं चन्द्रावलोकनविकसितमिन्दीवर-मेवैतत् इति ज्ञास्यतीति सूचितम्। दिवासङ्कोचात् असादृ-श्यमिति भावः। इन्दीवरस्य विकसितत्वद्योतनार्थं निशा-पदम्। चकोरैः गतिबुद्धीति कर्मत्वप्राप्तावपि, आदिखाद्योर्न

असंशयं सागरभागुदस्थात्
पृथ्वीधरादेव मथः पुराऽयम्।
अमुष्य यस्मादधुनाऽपि सिन्धौ
स्थितस्य शैलादुदयं प्रतीमः॥ ४४॥

निजानुजेनातिथितामुपेतः
प्राचीपतेर्वाहनवारणेन।
सिन्दूरसान्द्रे किमकारि मूर्ध्नि
तेनारुणश्रीरयमुज्जिहीते॥ ४५॥

---

इति प्रतिषेधात् कर्त्तरि तृतीया। आदयमानं निगरणार्थत्वात् परस्मैपदप्राप्तावपि अदेः प्रतिषेधो वक्तव्यः इति निषेधात्, णिचश्चेति तङ्॥ ४३॥

असंशयमिति। पुरा पूर्वं सागरभाक् समुद्रगर्भस्थः अयं चन्द्रः मथः दण्डभूतात् पृथ्वीधरात् पर्वतात् मन्दराद्रेः एव हेतोः उदस्थात् उत्पन्नः इति असंशयं निश्चितं पुराणादौ यत् एवं श्रूयते तत् सत्यमित्यर्थः। पुरा उदस्थात् प्रथमसम्भवावसरे तस्मादेव समुत्थितः इति वा। तत्र हेतुमाह— यस्मात् हेतोः अधुनाऽपि सम्भवान्तरावसरेऽपि सिन्धौ स्थितस्य सागरगर्भस्थस्यापि अमुष्य चन्द्रस्य शैलात् उदयाचलात् एव उदयम् उत्पत्तिं प्रतीमः जानीमः। प्रत्यहं सागरस्थस्याप्यस्य अचलोत्पत्तिशीलत्वरूपलिङ्गदर्शनात् समुद्रमथने प्रथमसम्भवावसरेऽप्ययम् अचलादेवोत्पन्नः इति निश्चिनुमः इत्यर्थः। उदयाचलशिखरं चन्द्रोऽतिक्रामतीति भावः॥ ४४॥

निजेति। निजानुजेन एकस्मात् सिन्धोः उत्पन्नतया अस्मात् चन्द्रात् पश्चात् जातेन कनीयसा भ्रात्रा प्राचीपतेः

यत् प्रीतिमद्भिर्वदनैः स्वसाम्यात्
अचुम्बि नाकाधिपनायिकानाम्।
ततस्तदीयाधरयावयोगात्
उदेति बिम्बारुणबिम्ब एषः॥ ४६॥
विलोमिताङ्गोल्किरणाद् दृगुह्य-
दृगादिना दृश्यविलोचनादि।

---

न्द्रस्य वाहनवारणेन प्राच्यां स्थितेन ऐरावतेन अतिथिताम्
पेतः प्राप्तः प्राच्याम् उदितत्वात् तत्सविधं प्राप्तः सन् अयं
न्द्रोऽग्रजत्वात् सिन्दूरेण सान्द्रे मूर्ध्नि अकारि कृतः किम्?
रवात् नमस्कारपूर्वं शिरसि आरोपितः किमित्यर्थः। तेन
न्द्रसिन्दूरशिरःस्थापनेन हेतुना लग्नसिन्दूरवशात् अयम्
रुणश्रीः आरक्तशोभः उज्जिहीते उदयते किम्? इति वा।
दयन् चन्द्रः सिन्दूररक्तः दृश्यते इत्यर्थः॥ ४५॥

यदिति। वृत्तत्वादिगुणयोगेन स्वसाम्यात् प्रीतिमद्भिः
ाकाधिपस्य इन्द्रस्य नायिकानां वदनैः यस्मात् स्वमविधम्
ागतः एषः चन्द्रः अचुम्बि तस्मात् हेतोः तस्मात् चुम्बनात्
तदीयानां देवेन्द्रनायिकानाम् अधरेषु न्यस्तः यावः अलक्त-
ः तस्य योगात् सम्बन्धात् हेतोः बिम्बवत् पक्वबिम्बीफलवत्
रुणं बिम्बं मण्डलं यस्य तादृशः उदेति। अन्योऽपि समानः
सविधम् आगतः सन् सख्या प्रीत्या चुम्ब्यते इति भावः।
नैरिति बहुवचनेन तत्र प्रदेशे युगपदेव चुम्बनात् बहुलया-
कयोगात् सकलस्य अपि चन्द्रबिम्बस्य रक्तत्वं युक्तमिति
ूचितम्॥ ४६॥

विलोमितेति। विधिः विधुना चन्द्रेण एव काञ्चनस्य

विधिर्विधत्ते विधुना वधूनां
किमाननं काञ्चनसञ्चकेन ॥ ४७ ॥
अनेन वेधा विपरीतरूप-
विनिर्मिताङ्गोल्किरणाङ्कितेन ।
त्वदाननं दृश्यदृगाद्यलक्ष्य-
दृगादिनैवाकृत सञ्चकेन ॥ ४८ ॥

---

सञ्चकेन विम्बकेन कृत्वा वधूनाम् अतिरमणीयम् आननं विधत्ते किम् ? किम्भूतेन ? विलोमितः पराङ्मुखः कृतः स्वप्रभया जितः पङ्कः कलङ्कः येन एतादृशात् उत्कृष्टात् अतितेजस्विनः किरणात् हेतोः दुरूहः दुस्तर्क्यः दृश्यादिः नेत्राद्यवयवः यस्य, अथच विपरीतीकृतानाम् अङ्गानां नेत्रादिनिर्माणार्थं निम्नोन्नतांशचिह्नस्थानानाम् उल्किरणं सङ्घट्टनं तस्मात् हेतोः, साक्षादलक्ष्यनेत्रकर्णनासिकाद्यवयवेन आननञ्च साक्षात् दृश्याः विलोचनादयः नासाकर्णाद्यवयवाः यस्य तादृशं, तस्मिन् ब्रह्मा स्त्रीमुखं चन्द्ररूपेण महाराष्ट्रभाषया ठसा इत्याख्येन स्वर्णस्य सञ्चकेन निर्ममे, सञ्चके हि निष्पाद्यस्य वस्तुनः निम्नोन्नतभागाः विपरीताः एव उत्कीर्य्यन्ते, तत्र च नेत्राद्यवयवाः दुर्ज्ञेयाः भवन्ति, भवन्निर्मितमुखादौ च दृश्याः भवन्ति, तस्मात् एवं तर्कः इत्यर्थः। उदितमात्रः चन्द्रः अल्पतमसुवर्णसञ्चकवत् रक्तः दृश्यते इति भावः। उत्तमं सुवर्णं रक्तवर्णं भवति इति तात्पर्य्यम्। आननमिति जात्येकवचनम् ॥ ४७ ॥

अनेनेति। वेधाः विपरीतरूपं यथा तथा विनिर्मितम् उक्तविधम् अङ्गोल्किरणं यत्र तादृशम् अङ्कं यस्य तेन तथा

अस्याः सुराधीशदिशः पुराऽऽसीद् यद् अम्बरं पीतमिदं रजन्या।
चन्द्रांशुचूर्णव्यतिचुम्बितेन तेनाधुना नूनमलोहितायि ॥४९॥
तानीव गत्वापितृलोकमेनमरञ्जयन् यानि स जामदग्न्यः।
छित्त्वा शिरोऽस्राणि सहस्रबाहोर्विस्राणि विश्राणितवान्
पितृभ्यः॥ ५० ॥

---

अलक्ष्यदृगादिना अनेन चन्द्रेणैव सत्त्वकेन दृश्यं सुन्दरम् अथच प्रत्यक्षदर्शनयोग्यं दृगादि यस्य तादृशं त्वदाननम् अकृत त्वदाननमेव कृतं, न तु अन्याननम् इति वा, अयमेव अत्र लोके विशेषः। अयं श्लोकः क्षेपकः॥ ४८ ॥

अस्या इति। हे भैमि! अस्याः सुराधीशस्य इन्द्रस्य दिशः यत् अम्बरं गगनं वस्त्रञ्च पुरा चन्द्रोदयात् पूर्वं रजन्या रात्र्या हरिद्रया च पीतं तमोव्याप्तत्वात् अदृश्यं पीतवर्णं वा आसीत्, तेन गगनेन वस्त्रेण वा अधुना चन्द्रोदये चन्द्रांशूनां चूर्णैः अल्पसूक्ष्मतेजोलेशैः कर्त्तृभिः व्यतिचुम्बितेन अतितरां स्पृष्टेन सता चन्द्रांशुवत् शुभ्रतरेण चूर्णेन ताम्बूलसाधनचूर्णद्रव्येण स्पृष्टेन सता नूनम् अलोहितायि आरक्तीभूतम्। यत् तमसा पूर्वं नीलमभूत् तदेव इदानीम् उद्यच्चन्द्रलोहितकरसंस्पर्शात् रक्तं जातमित्यर्थः। हरिद्रया पीतवर्णं वस्त्रं चूर्णेन युक्तं सत् रक्तं भवति इति भावः। देवेन्द्रस्त्रियाश्च वस्त्राणि नानावर्ण-युक्तानि। चन्द्रांशव एव चूर्णमिति वा। अलोहितायि इति लोहितादिडाज्भ्य इति क्यषन्ताद्भावे चिण्॥ ४९ ॥

तानीति। सः अतिवीरः जामदग्न्यः सहस्रबाहोः शिरः छित्त्वा विस्राणि आमगन्धीनि यानि अस्राणि रक्तानि पितृभ्यः जमदग्न्यादिभ्यः विश्राणितवान् दत्तवान्, यैः रक्तैः

अकर्णनासस्त्रपते मुखं ते पश्यन्न सीतास्यमिवाभिरामम्।
रक्तोस्रवर्षी वत लक्ष्मणाभिभूतः शशी सूर्पणखामुखाभः॥५१॥

---

प्रतिज्ञातं पितृतर्पणं कृतवान्, तानि एव रक्तानि मन्त्रबलात् पितृलोकं गत्वा प्राप्य पितृलोकाधीशम् एनं चन्द्रम् अरञ्जयन् रक्तं चक्रुः इव। "चन्द्रो वै पितृलोकः" इति श्रुतेः। चन्द्रो रक्तवर्णो दृश्यते इति भावः। परशुरामः सहस्रार्जुनं हत्वा तदीयैः रक्तैः पितृतर्पणं कृतवान् इति इतिहासः। विस्रं स्यादामगन्धि यदित्यमरः॥५०॥

अकर्णेति। हे प्रिये! शशी सीतास्यम् इव अभिरामं कर्णादिकृतशोभनं ते मुखं पश्यन् न त्रपते लज्जते, वत चित्रम्। किम्भूतः? न विद्यते कर्णनासं स्वभावात् एव यस्य सः। तथा रक्ताः आरक्ताः उस्राः किरणाः तद्वर्षणशीलः रक्तः शोणः चासौ किरणवर्षी च तादृशः वा। तथा लक्ष्मणा कलङ्केन अभिभूतः आक्रान्तमध्यः अतएव सूर्पणखायाः रावणभगिन्याः मुखवत् आभा यस्य सः, तद्वदनतुल्यः, एषु लज्जाकारणेषु सत्सु अपि न लज्जते, तच्चित्रम् इत्यर्थः। त्वन्मुखं पश्यन्नपि उदयति एव स्वं प्रकाशयति च, तस्मात् एव न लज्जते इत्यपि चित्रमेव। सूर्पणखामुखमपि लक्ष्मणेन पराभूतं छिन्नकर्णनासत्वात् रुधिरवर्षि सत् रामम् अभिलक्षीकृत्य वर्त्तमानम्, अतएव अतिभयरहितञ्च सीतामुखं पश्यत् अपि न लज्जते? तदनन्तरमपि प्रौढिवादप्रदर्शनात्। अभिशब्दस्य आवृत्तिः कार्या। लक्ष्मशब्दो नान्तः, पक्षे अकारान्तः॥५१॥

आदत्त दीप्रं मणिमम्बरस्य दत्त्वा यदस्मै खलु सायधूर्त्तः।
रज्यत्तुषारद्युतिकूटहेम तत् पाण्डु जातं रजतं क्षणेन ॥ ५२ ॥
बालेन नक्तं समयेन मुक्तं रौप्यं लसड्डिम्बमिवेन्दुबिम्बम्।
भ्रामिक्रमादुज्झितपट्टसूत्रनेत्रावृतिं मुञ्चति शोणिमानम् ॥ ५३ ॥

---

आदत्तेति। हे भैमि! सायङ्कालरूपः धूर्त्तः यत् रज्यत् उदयकाले रक्तीभवत् तुषारद्युतिः चन्द्रः एव लेपवशात् रज्यत् कूटहेम कृत्रिमं सुवर्णम् अस्मै गगनाय मूल्यरूपेण दत्त्वा दीप्रं प्रकाशमानम् अम्बरस्य मणिं सूर्य्यम् आदत्त जग्राह, तत् अलीकं हेम क्षणमात्रेण पाण्डु शुभ्रं रजतं खलु रूप्यम् इव जातम्। धूर्त्तो हि रूप्यं लेपादिभिः उपलिप्तं सुवर्णीकृत्य ददाति, वस्त्रान्तरस्थमपि प्रसरद्दीप्तिकं रत्नञ्च गृह्णाति। उदयानन्तरमतिक्रान्तकियत्कालत्वाद्रक्तिमानं परित्यज्य चन्द्रो रूप्यवत् धवलो जातः इति भावः। घञलोऽत्र सायशब्दः सायंशब्दसमर्थनार्थः ॥ ५२ ॥

बालेनेति। हे प्रिये! रौप्यं रजतं रजतमयं लसत् विलसमानं डिम्बं बालक्रीडासाधनं भ्रमरकम् इव इन्दुबिम्बं कर्तृ भ्रमिक्रमात् भ्रमणपरिपाट्या अथच ऊर्द्धदेशगमनक्रमणेन उज्झिता त्यक्ता या पट्टसूत्रस्य नेत्रं दोरकं तत्कृता आवृतिः वेष्टनं तद्रूपम्, अथच पट्टसूत्रजालिकावत् चन्द्रावरणं येन तं शोणिमानं रक्तिमानं मुञ्चति। किम्भूतमुभयम्? नक्तं समयरूपेण बालेन अथच बालेन प्रदोषरूपेण रात्रिसमयेन मुक्तं भ्रामणार्थं करात् कृतमोचनम्, अथच उद्गीर्णं जनितोदयम्। शिशुक्रीडासाधनं हि भ्रमरकं काष्ठमयं भवति, ईश्वराणां च डिम्बं समृद्ध्यतिशयात् राजतं पट्टसूत्रवलितदोरकसंसर्गात् तत्सम्बन्धजातं रक्तिमानं मुञ्चति। तथेदं चन्द्रबिम्बमपी-

ताराक्षरैर्यामसिते कठिन्या
निशाऽलिखद् व्योम्नि तमःप्रशस्तिम्।
विलुप्य तामल्पयतोऽरुणेऽपि
जातः करे पाण्डुरिमा हिमांशोः॥ ५४॥

त्यर्थः। इदानीं चन्द्रो धवलो जातः इति भावः। नेत्राहते रिति पाठे भ्रमिक्रमात् हेतोः उज्झिता पट्टसूत्रनेत्राहतिः यत्र ताहशात् भ्रमिक्रमात् हेतोः इति वा। डिम्बं लाटिम् इति वा गौडदेशभाषायां भ्रमरकस्य संज्ञा। महाराष्ट्रभाषायां कान्यकुब्जभाषायाञ्च भ्रमरा इति संज्ञा। रौप्यमिति सम्बन्धे विकारे वा अण्। नेत्रं मन्थगुणे वस्त्र इत्यभिधानात् नेत्रशब्दो यद्यपि मन्थवेष्टनगुणे मुख्यः तथापि अत्र गुणमात्रपरः इति ज्ञेयम्॥ ५३॥

तारेति। निशा असिते श्यामे व्योम्नि गगने एव कज्जलादिलिप्तश्यामलपट्टिकायां कठिन्याः शुभ्रधातुविशेषस्य सम्बन्धिभिः ताराक्षरैः शुभ्रैः अक्षरैः इव नक्षत्ररूपैः अक्षरैः कृत्वा यां तमःप्रशस्तिं तमोवर्णनश्लोकादिलिपिम् अलिखत्, ताराक्षरैः उपलक्षितां तमःप्रशस्तिं रात्रिः कठिन्या अलिखत् इति वा, तां लिपिं विलुप्य प्रोञ्छ्याल्पयतः परिमितनाशाक्षरं कुर्वतः हिमांशोः अरुणे अपि करे किरणे अथच पाणौ पाण्डुरिमा जातः। प्ररूढकिरणे हि चन्द्रे नक्षत्राणाम् अल्पता भवतीति खटिकालिखिताक्षराणि मार्जयतश्चारुणोऽपि करः खटिकासङ्गात् धवलो भवतीति भावः। तमसि नक्षत्राणि बहूनि उज्ज्वलतराणि च दृष्टानि, चन्द्रे तु उदिते ऽल्पानि निष्प्रभाणि च जातानि, चन्द्रश्च धवलो जातः इति भावः॥ ५४॥

सितो यदाऽवेष तदाऽन्यदेशे चकास्ति रक्तच्छविरुज्जिहानः ।
तदित्थमेतस्य निधेः कलानां को वेद वा रागविरागतत्त्वम् ॥५५॥
काश्मीरजैरश्मिभिरोपसन्ध्यं सृष्टं धृतध्वान्तकुरङ्गनाभि ।
चन्द्रांशुना चन्दनचारुणाऽङ्गं क्रमात् समालम्भि दिगङ्गनाभिः
॥ ५६ ॥

---

सित इति । एषः चन्द्रः यदा यस्मिन् काले अत्र देशे सितः धवलः चकास्ति तदा तस्मिन् एवम् काले अन्यदेशे रक्तच्छविः रक्तकान्तिः उज्जिहानः उदयन् शोभते । एव अत्र उदयन् रक्तः अन्यत्र च श्वेतः इत्यपि सामर्थ्यात् लभ्यं, एतद्देशस्थं प्रति इदानीं सितो दृश्यते द्वीपान्तरस्थं प्रति तु उदयन् इदानीमेव दृश्यते यस्मात् तस्मात् कलानां निधेः पूर्वस्य चन्द्रस्य रागविरागयोः लोहितत्वालोहितत्वयोः तत्त्वं याथार्थ्यम् इत्थम् अमुना उक्तप्रकारेण कः वा वेद ? अपितु कोऽपि निश्चेतुं न शक्नोतीत्यर्थः । उदयास्तमययोरतात्त्विकत्वात् व्यवहितस्य यत्र तदा प्रथमदर्शनं तदा तत्रोदयः इति दूरस्थस्य रक्तत्वप्रत्ययः क्रमसामीप्यात् तु धावल्यप्रत्ययः इति तत्त्वम् । अन्यस्यापि चतुःषष्टिकलाभिज्ञस्य अनुरागाननुरागयोः याथार्थ्यं कुत्र अनुरक्तः कुत्र वा नेति कोऽपि न जानाति इति भावः
॥ ५५ ॥

काश्मीरजैरिति । दिग्भिः एव अङ्गनाभिः सन्ध्यायाः समीपं उपसन्ध्यं तत्र जातैः अरुणैः रश्मिभिः एव काश्मीरजैः कुङ्कुमैः कृत्वा सृष्टं पूर्वं कृतोद्वर्त्तनं ततः सन्ध्यायाम् अपगतायां धृता ध्वान्तरूपा कुरङ्गनाभिः कस्तूरी येन तादृशम् अङ्गं, क्रमात् कस्तूरीलेपनानन्तरं चन्द्रांशुनैव चन्दनेषु मध्ये चारुणा उत्तमेन चन्दनेन कृत्वा समालम्भि अलेपि । अन्याः

विधिस्तुषारर्त्तुदिनानि कर्त्तं कर्त्तं विनिर्माति तदन्तभिन्नैः।
ज्योत्स्नीर्न चेत् तत्प्रतिमा इमा वा कथं कथं तानि च
वामनानि ॥ ५७ ॥
इत्युक्तिशेषे स वधूं बभाषे सूक्तिस्नुतासक्तिनिबद्धमौनाम्।

---

अपि अङ्गनाः कुङ्कुमादिक्रमेण अङ्गम् अनुलिम्पन्ति, चन्दनधवलैः चन्द्रकरैः सर्वाः अपि दिशः वितमस्काः कृताः इति भावः। औपसन्ध्येररिति सामीप्येऽव्ययीभावात् भवार्थे अण् ॥५६॥

विधिरिति। विधिः तुषारर्त्तोः शिशिरर्त्तोः दिनानि कर्त्तं कर्त्तं छित्त्वा छित्त्वा तेषां दिनानाम् अन्तभिन्नैः मध्यसम्बन्धिभिः सारभूतैः शकलैः शुभ्रैः खण्डैः कृत्वा ज्योत्स्नीः निशाः विनिर्माति न चेत् एवं न अङ्गीक्रियते यदि तदा इमाः चन्द्रिकायुक्ताः रात्रयः तत्प्रतिमाः तैः दिनैः तुल्याः शीतलत्वप्रकाशत्वाभ्यां तत्सदृश्यः कथम्। तानि च दिनानि वामनानि न्यूनपरिमाणानि न्यूनशीतलत्वादिगुणानि कथं वा, अपितु दिनवामनताराविदीर्घताऽन्यथानुपपत्तेः शिशिरर्त्तोर्दिनापेक्षया च ज्योत्स्नीनाम् अतितमां शीतलप्रकाशवत्त्वानुपपत्तेश्च। शिशिरर्त्तुदिनानि छित्त्वैव तत्सारभूतैश्च शकलैः चन्द्रिकान्विताः रात्रयो ब्रह्मणा वर्द्धिताः इत्यर्थः। चन्द्रिकया रात्रिः शीतला धवलतरा च कृता इति भावः। कर्त्तं कर्त्तमिति कृती छेदन इत्यस्मादाभीक्ष्ण्ये णमुल् द्विर्वचनञ्च। ज्योत्स्नी इति ज्योत्स्ना यस्यामस्ति इत्यर्थे ज्योत्स्नातमिस्रेति साधुकृतात् ज्योत्स्नाशब्दादण् प्रकरणे ज्योत्स्नादिभ्यः उपसङ्ख्यानमित्यर्थे अणि ङीप्। ५७ ॥

इतीति। सः नलः इत्युक्तिशेषे एव चन्द्रवर्णनावसाने

मुखाभ्यसूयानुशयादिवेन्दौ केयं तव प्रेयसि! मूकमुद्रा? ॥५८॥
शृङ्गारभृङ्गारसुधाकरेण वर्णस्रजाऽनूपय कर्णकूपौ।
त्वच्चारुवाणीरसवेणितीरे तृणानुकारः खलु कोषकारः॥ ५९ ॥

---

सूक्तीनां प्रसादादिगुणयुक्तानां शोभनवचनानां श्रुते श्रवणे विषये आसक्त्या रसातिशयात् तदेकतानतया बद्धं स्वीकृतं मौनं यया तां तूष्णीम्भावम् आस्थितां वधूं भैमीं प्रति इदं बभाषे। इति किम्। हे प्रेयसि! इन्दौ विषये तव इयं मूकस्य इव मुद्रा वाङ्निरोधरीतिः का किङ्कारणिका, त्वमपि किमिति न चन्द्रं वर्णयसीत्यर्थः। मौने स्वयमेव हेतुमुत्प्रेक्षते। मुखस्य चन्द्रकृतवदनसाम्यस्य अभ्यसूया स्पर्द्धा तज्जन्यात् महतः अनुशयात् मनोद्वेषात् इव स्पर्द्धाकारिणः हि वर्णने अन्येन क्रियमाणे अन्योऽपि कोपात् तूष्णीं तिष्ठति नानुमोदते स्वयञ्च न तं वर्णयति, तथा त्वन्मुखस्पर्द्धाकरणे सञ्जातकोपादिवेन्दुं न वर्णयसि नानुमोदसे च किमिति प्रश्नः। नलसूक्तिश्रवणादरकृतं मौनं कोपादिवेत्युत्प्रेक्षितम्॥ ५८॥

शृङ्गारेति। हे प्रिये! त्वं शृङ्गारसम्बन्धी भृङ्गारः स्वर्णकलशः तद्रूपेण सुधाकरेण चन्द्रेण हेतुना वर्णस्रजा कृत्वा मम कर्णकूपौ अनूपय जलपूर्णौ कुरु, वर्णस्रजः सरसत्वात् कर्णकूपयोः जलपूर्णत्वकरणं युक्तम्। अथच शृङ्गारसम्बन्धिसुवर्णकलशरूपस्य भवन्मुखस्य सम्बन्धि यत् पीयूषं तस्य आकरेण खनिभूतया सरसया वर्णस्रजा कर्णकूपौ अनूपय। खलु यस्मात् कोषकारः इक्षुविशेषः तव चारुवाण्याः वक्रोक्त्यादिरूपायाः वाचः सम्बन्धिनः शृङ्गारादयः रसाः तेषां वेणिः

अत्रैव वाणीमधुना तवापि श्रोतुं समीहे मधुनः सनाभिम्।
इति प्रियप्रेरितया तयाऽथ प्रस्तोतुमारम्भि शशिप्रशस्तिः ॥६०॥
पूरं विधुर्वर्द्धयितुं पयोधेः शङ्केऽयमेणाङ्कमणिं कियन्ति।
पयांसि दोग्धि प्रियविप्रयोगात् सशोककोकीनयने कियन्ति
॥ ६१ ॥

---

प्रवाहः तस्याः तीरे समुद्यत् यत् तृणं तस्य अनुकारः तत्स-दृशः। अतिस्वादुरसोऽपि इक्षुविशेषो यदीयसरस्वाणी-तीरतृणम् अनुकरोति न तु समो जातः, तां वाणीं श्रावय चन्द्रं वर्णयेति भावः। कोषकाराद्या इक्षुविशेषा इति क्षीरस्वामी। अनूपय इति अनूपशब्दात् तत्करोतीति णिचि लोट् ॥ ५९ ॥

अत्रैवेति। प्रियेण इति प्रेरितया भैम्या अथ अनन्तरं शशिनः प्रशस्तिः माहात्म्यं प्रस्तोतुम् आरम्भि आरब्धा। इति किम्। हे भैमि! अहम् अत्रैव चन्द्रवर्णने एव विषये मधुनः अमृतस्य सनाभिं तुल्यां तवापि वाणीम् अधुना श्रोतुं समीहे इच्छामि इत्यर्थः ॥ ६० ॥

पूरमिति। हे प्रिय! अयं विधुः पयोधेः पूरम् आग-न्तुकजलप्रवाहं वर्द्धयितुम् एणाङ्कमणिं चन्द्रकान्तं कियन्ति पयांसि दोग्धि तस्मात् गृह्णाति, तथा प्रियस्य चक्रवाकस्य विप्रयोगात् सशोकायाः कोक्याः नयने अपि कियन्ति जलानि दोग्धि, ताभ्याम् अपि सकाशात् गृह्णाति इति अहं शङ्के मन्ये, इति भैमी प्रियम् अवदत्। उदिते चन्द्रे सागरपूरो वृद्धिं प्राप्तश्चन्द्रकान्ताः स्रवन्ति चक्रवाकी च भृशं रोदितीति भावः। दुहिर्द्विकर्मा ॥ ६१ ॥

ज्योत्स्नामयं रात्रिकलिन्दकन्यापूरानुकारेऽपसृतेऽन्धकारे।
परिस्फुरन्निर्मलदीप्तिदीपं व्यक्तायते सैकतमन्तरीपम्॥ ६२॥
हासत्विषैवाखिलकैरवाणां विश्वं विशङ्केऽजनि दुग्धमुग्धम्।
यतो दिवा बद्धमुखेषु तेषु स्थितेऽपि चन्द्रे न तथा चकास्ति॥ ६३॥

---

ज्योत्स्नेति। हे प्राणेश! तमोऽवसरे अतिश्यामा रात्रिरेव कलिन्दकन्या यमुना तस्याः पूरः आगन्तुकातिनील-जलप्रवाहः तदनुकारे तत्सदृशे तद्वत् अतिकृष्णे अन्धकारे अपसृते सति परिस्फुरन्ती निर्मला दीप्तिः यस्य प्रकाशमानश्चासौ धवलद्युतिश्च तादृशः वा यः चन्द्रः सः एव दीपः यत्र तादृशं चन्द्रिकारूपसैकतं धवलतरवालुकामयं रात्रियमुनायाः एव जलमध्यस्थितम् अन्तरीपं व्यक्तायते स्फुटमिव भवति प्रकटं दृश्यते। पूरावसरेऽस्फुटमपि इदानीं स्फुटीभवतीति शङ्के। चन्द्रचन्द्रिकया सकलं धवलीकृतम् इति भावः। व्यक्तायते, व्यक्तमिव भवतीत्यर्थे कर्त्तुः क्यङोति क्यङ्। अव्यक्तं व्यक्तं भवतीत्यर्थः। सैकतमिति सिताशर्कराभ्याञ्च इत्यस्यर्थेऽण्॥ ६२॥

हासेति। अखिलकैरवाणां सकलकुमुदानां हासत्विषा एव विकासदीप्त्या एव विश्वं सकलं जगत् दुग्धवत् मुग्धं शीतलं धवलञ्च अजनि जातं न तु चन्द्रेण इति अहं विशङ्के विशेषेण मन्ये। यतः हेतोः दिवा तेषु सकलकैरवेषु बद्धमुखेषु सङ्कुचितेषु अविकस्वरेषु सत्सु चन्द्रे स्थिते विद्यमाने अपि सकलकुमुदविकासाभावात् सकलं जगत् तथा रात्रौ इव शीतलधवलतया न चकास्ति तस्मात् इदं जगत् कुमुदहासत्विषा एव शीतलं धवलञ्च कृतं न तु चन्द्रेण इत्यर्थः।

मृत्युञ्जयस्यैष वसन् जटायां न चीयते तद्भयदूरमृत्युः।
न वर्द्धते च स्वसुधाप्तजीवस्रङ्मुण्डराहूद्भवभीरतीव॥ ६४॥
त्विषं चकोराय सुधां सुराय कलामपि स्वावयवं हराय।

---

कुमुदवत् दुग्धवच्च शीतला धवला चन्द्रिका अस्तीति भावः ॥ ६३॥

मृत्युमिति। मृत्युञ्जयस्य मृत्युं जितवतः शिवस्य जटायां वसन् एषः चन्द्रः षोड़शांशभूतः न चीयते न अल्पपरिमाणः भवति। कलामात्रस्वरूपेणैव तत्र सदा वसन् ततोऽपि न्यूनपरिमाणो न भवतीत्यर्थः। अथच न चीयते न म्रियते यस्मात् तस्मात् मृत्युञ्जयात् सकाशात् भयेन दूरः मृत्युः मरणहेतुः देवता यस्य सः, मृत्युञ्जयजटाजूटनिवासात् मृत्युना स्प्रष्टुमपि न शक्यते तस्मान्न चीयतेऽयमित्यर्थः। तर्हि तत्र वसन् वर्द्धते किं नेत्याशङ्काह। वर्द्धते च न उपचितोऽपि न भवतीत्यर्थः। यतः स्वस्य सुधया आप्तः जीवः चैतन्यं यैः तानि स्रजः मुण्डानि भूषणीभूतशिरोमालायाः शिरः कपालानि तानि एव राहवः तेभ्यः उद्भवा समुत्पन्ना भीः यस्य, कथम्, अतीव, नितरां भीतः इत्यर्थः। सजीवमुण्डेषु बहवो राहव एवैते इति धिया भिया न वर्द्धते। भीतो हि सौख्याभावात् कृशतर एव भवति, अथच पूर्णस्य राहोः सकाशात् भयम् अतः कारणात् भूयान्न चीयते न च वर्द्धते इत्येककल एव शिवशिरश्चन्द्रः इत्यर्थः। एतेन चन्द्रस्य षोडशी कला वर्णिता। शिवशिरसि वर्त्तमानत्वात् अस्य माहात्म्यमपि वर्णितम्। मृत्युञ्जयेति सञ्ज्ञायां भृत्वृजीति खश्, अरुर्द्विषेति मुम्॥ ६४॥

त्विषमिति। एषः चन्द्रः जयति सर्वोत्कर्षेण प्रकाशते

ददत्यथत्वेष समस्तमस्य कल्पद्रुमभ्रातुरथाल्पमेतत्॥ ६५॥
अङ्केणनाभेर्विषकृष्णकण्ठः सुधाभशुद्धेः कटभस्मपाण्डुः।
अर्हन्नपीन्दोर्निजमौलिधानान्मृडः कलामर्हति षोडशीं न॥ ६६

---

यतः। किम्भूतः? चकोराय स्वावयवं त्विषं निजांशभूतां चन्द्रिकां ददत्,* तथा सुराय अग्न्यादिदेवेभ्यः निजांशभूतां सुधां ददत्, तथा हराय निजांशभूतां कलामपि ददत्, अथापि अस्य चन्द्रस्य एतत् समस्तं परोपकारकरणमल्पमेव अतिचमत्कारि न भवति, यतः समुद्रोत्पन्नत्वात् कल्पद्रुमस्य भ्रातुः। कल्पद्रुमस्तु कल्पितं सर्वं सर्वेभ्यो ददाति, अयन्तु न तथेत्यल्पमेवेत्यर्थः। एवंविधः परोपकारी न कोऽपीति भावः। चकोराय सुरायेति जात्यैकवचनम्॥ ६५॥

अङ्केति। मृडः शिवः निजमौलौ धारणात् स्थापनात् हेतोः षोड़शीं कलाम् अर्हन् प्राप्नुवन्, अथच पूजयन्नपि षोड़शीं कलां न अर्हति न प्राप्नोति, न पूजयति वा। निज-शिरसि धारणादेव तस्याः प्राप्तिः पूजा च सम्भावनीया, अति-तरां पूज्यते स्वशिरसि धार्य्यते च। तथाच एतस्य षोड़शीं कलां मृड़ः प्राप्नुवन्, पूजयन्, अपि च तां प्राप्नोतीति विरो-धपरिहारो यतः। किम्भूतस्येन्दोः? किम्भूतश्च मृड़ः? अङ्क-भूतः यः एणः हरिणः तद्युक्ता नाभिः मध्यभागः यस्य, अथच अङ्करूपा कलङ्करूपा एणनाभिः कस्तूरी यत्र, मृड़स्तु विषेण कृष्णकण्ठः तथा सुधया अमृतेन आभा शुद्धिः धावल्यं येन, मृड़स्तु कटभस्मना चिताभस्मना पाण्डुः, तस्मात्, चन्द्रस्य अल्पमपि साम्यं शिवः न प्राप्नोति। किञ्च चन्द्रात् अभिन्नः चेत् शिवोऽभविष्यत् तर्हि तदीयकलां मौलौ न अधा-

पुष्पायुधस्याखिभिरर्द्धदग्धैः सितासितश्रीरघटि द्विजेन्द्रः ।
स्मरारिणा मूर्द्धनि यद्धृतोऽपि तनोति तत्तौष्टिकपौष्टिकानि ६७
मृगस्य लोभात् खलु सिंहिकायाः सुतुर्मृगाङ्कं कवलीकरोति ।
स्वस्यापि दानादसुमङ्कुलं गौरक्षमुदा तेन च मुच्यतेऽसौ ॥६८

रयिष्यत्, सा तु मौलौ धृता तेन, तस्माच्चन्द्र एव शिवादधिक इत्यर्थः। शुभस्याशुभस्य च महदन्तरमिति भावः। षोड़शीमपि कलां नार्हतीत्यनेन पूर्णचन्द्रं नार्हतीति वाच्यम् इत्यपि सूचितम्। हरस्य अपकर्षे विषं चिताभस्म च हेतुः। चन्द्रोत्कर्षे मृगमदः अमृतञ्च ॥ ६६ ॥

पुष्पेति। ब्रह्मणा द्विजेन्द्रः पुष्पायुधस्य कामस्य अर्द्धदग्धैः अस्थिभिः कृत्वा अघटि निर्मितः, अतएव सितासितश्रीः, उपान्तधवलमध्यश्यामलकान्तिभिः स्मरास्थिभिरिव निर्मितः इत्यत्र हेतुमाह। स्मरारिणा मूर्द्धनि धृतः अपि अथच कृतसम्मानः अपि तस्य स्मरस्यैव तौष्टिकानि हर्षकारीणि पौष्टिकानि अभिवृद्धिकारीणि च यत् यस्मात् तनोति, कामारिणा पूज्यमानोऽपि कामहितमेव यस्मात् करोति, तस्मात् तदस्थिभिरेव घटितः इत्यर्थः। एतादृक्कामोद्दीपकं किमपि नास्तीति भावः। अस्थिभिरिवेति प्रतीयमानोत्प्रेक्षा। अन्याश्रितोऽपि तदीयशत्रुहितं यः करोति स तदस्थिभिर्घटित इति लौकिकी उक्तिः। तौष्टिकपौष्टिकानि इति प्रयोजनमिति ठञ् ॥ ६७ ॥

मृगस्येति। सिंहिकायाः सुतः राहुः मृगाङ्कं यत् कवलीकरोति तदङ्कमृगस्य लोभात् खलु ग्रासाभिलाषात् इव सिंहिकायाः सुतः सिंहो मृगैः अहितं स्वल्पं मृगग्रासाभिलाषादेव स्वाधीनं करोति। तर्हि किमयं मुञ्चतीत्यत आह। असुमुक्तं

सुधाभुजो यत् परिपीय तुच्छमेतं वितन्वन्ति तदर्हमेव।
पुरा निपीयास्य पिताऽपि सिन्धुरकारि तुच्छः कलशोद्भवेन ६९
चतुर्दिगन्तीं परिपूरयन्ती ज्योत्स्नेव शतप्ता सुरसिन्धुबन्धुः।
क्षीरोदपूरोदरवासनाशवैरस्यमेतस्य निरस्यतीयम् ॥ ७० ॥

---

मध्यवर्त्तिनम् अथच उत्सङ्गे विश्वासात् सुखेन निद्रितम् अमुं मृगं स्वस्यापि दानात् राहुकृतदन्तखण्डनादपि न औज्झत् न अत्यजत्, अथच स्वशरीरस्यापि वितरणात् न अत्यजत्, अयं चन्द्रः तेन राहुणा तेन पुण्येन च हेतुना मुदा शरणागतरक्षणनिमित्तहर्षेण कृत्वा मुच्यते त्यज्यते। अन्योऽपि शरणागतं मृगं जिघांसोः सिंहात् रक्षितम् आत्मानमपि ददानो हि तेन पुण्येन सिंहात् मुच्यते, अतएव स्वस्यापि दानात् अङ्कस्थम् अमुं यतो न अमुञ्चत् तेन हेतुना अयं विमुच्यते, अर्थात् राहुणा इत्यर्थः ॥ ६८ ॥

सुधेति। सुधाभुजः देवाः एनं चन्द्रं परिपीय साकल्येन पीत्वा तुच्छं रिक्तं यत् वितन्वन्ति कुर्वन्ति तत् अर्हं उचितमेव। यतः अस्य पिता सिन्धुरपि कलशोद्भवेन अगस्त्येन पुरा निपीय तुच्छः रिक्तः अकारि तस्मात् कुलक्रमागततुच्छत्वम् इत्यर्थः। एतस्य पूर्वेऽपि परोपकारनिरताः तस्मात् अयमपि तथैव इति भावः। कलशात् उत्पन्नेनापि सागरस्य पानम् इत्याश्चर्य्यम् ॥ ६९ ॥

चतुरिति। चतुर्णां दिगन्तानां समाहारः तां चतुर्दिक्प्रान्तान् इत्यर्थः, तां परिपूरयन्ती सामस्त्येन व्याप्नुवती। तथा श्वैत्यात् सुरसिन्धोः मन्दाकिन्याः अम्बुः सदृशी। तथा क्षतप्ना पूर्णा इयं ज्योत्स्ना एका क्षीरोदरपूरोदरे वासः

पुत्री विधोस्ताण्डविकाऽस्तु सिन्धोराश्या चकोरस्य दृशोर्वयस्या
तथाऽपि सेयं कुमुदस्य काऽपि ब्रवीति नामैव हि कौमुदीति ७१

---

स्थितिः तस्य नाशात् बहुकालं परित्यागात् हेतोः एतस्य चन्द्रस्य वैरस्यं चीरसागरविरहजनितं दुःखं निरस्यति नाशयति। असौ चन्द्रिकायामेव चीरसागरबुद्धा पितृवियोगदुःखं परित्यजति इत्यर्थः। सकलदिगन्तव्यापिधवलचन्द्रिकामध्यवर्त्ती चन्द्रः चीरसागरमध्यस्थः इव शोभते इति भावः। गङ्गावत् दुग्धवच्च इयं कौमुदी इति भावः। चतुर्दिगन्तीम् इति समाहारे द्विगोर्ङीप् ॥ ७० ॥

पुत्रीति। इयं चन्द्रिका यद्यपि चन्द्रात् प्रसुतत्वात् विधोः पुत्री अस्तु, सिन्धोः समुद्रस्य ताण्डविका नृत्योपदेशिका अपि नटयित्री अस्तु। चन्द्रिकया हि सिन्धुः उच्छ्वसते, सा च तस्य नप्त्री भवति, यद्वा इयं विधोः पुत्री सिन्धोः ताण्डविका भवतु, तथा चकोरस्य आश्या पेया भवतु, सकललोकस्य दृशोः प्रेमपात्रतया वयस्या सखी भवतु, तथाऽपि सेयं चन्द्रिका कुमुदस्य काऽपि अनिर्वचनीया सम्बन्धिनी भवतु, पूर्वनिर्दिष्टसर्वापेक्षया कुमुदस्यैव निरतिशयानन्दकारित्वात् केनापि अनिर्वचनीयेन सम्बन्धिनी भवतु इत्यर्थः। हि यस्मात् कौमुदी इति नाम एव काट्टं ब्रवीति सर्वेषां तत्र तत्सम्बन्धसम्भवेऽपि कुमुदानाम् इयं कौमुदीति तस्येदमिति सम्बन्धेऽणि कुमुदानामेव प्रीत्यतिशयेन सम्बन्धं वदति इत्यर्थः। कौमुदीति नामैव हि स्पष्टं ब्रवीतीति च चन्द्रिकया सर्वेषामपि आनन्दः कृतः, कुमुदानान्तु विशेषतः इति भावः। अत्र कार्य्येण कारणानुमानम्। ताण्डविका,

ज्योत्स्नापयःक्ष्मातटवास्तुवस्तुच्छायाच्छलच्छिद्रधरा धरायाम्।
शुभ्रांशुशुभ्रांशकराः कलङ्कनीलप्रभामिश्रनिभा विभान्ति॥७२॥
कियान् यथाऽनेन वियद्विभागस्तमोनिरासाद्विशदीकृतोऽयम्।

---

अर्गोष्यजन्तात्मतुवन्ताद्वा ताण्डवशब्दात् तत्करोतीति ण्यन्तात् ठक्। अशनमपि दण्डादित्वात् यत्। अश्येति च पाठः॥७१॥

ज्योत्स्नेति। शुभ्रांशोः चन्द्रस्य शुभ्रांशाः धवलभागाश्च ते कराः किरणाश्च धरायां भूम्यां कलङ्कस्य नीलीभिः प्रभाभिः मिश्रा निभा कान्तिः येषां ते कलङ्कनीलकान्तिच्छुरिताः इव विभान्ति। यतः ज्योत्स्ना एव पयः जलं दुग्धं वा यस्मिन् तादृशं क्ष्मातटं दुग्धधवलचन्द्रिकाधवलीकृतभूतलं तदेव वास्तु वसतिगृहं येषां तानि वस्तूनि वृक्षादिपदार्थाः तेषां छाया छलं येषां तादृशानि छिद्राणि प्रकाशेन रिक्तत्वात् विलानि पदार्थप्रतिच्छायारूपाणि तानि धरन्तीति तादृशाः। चन्द्रिकाधवलिताः पदार्थाः चन्द्ररश्मयः इव वृक्षादिप्रतिच्छायाः चन्द्रकलङ्कनीलरश्मयः एवेति धरायामपि निपतिताः चन्द्रकिरणाः नीलधवलाः एव शोभन्ते इत्यर्थः। अन्यस्य कराः हस्ताः कलङ्कवत् नीलस्य नीलमणेः प्रभया मिश्रकान्तयः नीलमणियुक्ताङ्गुलीयकप्रभामिश्राः विभान्ति। शुभ्रांशुशुभ्रांशव इति पाठेऽपि अंशुर्लेशे रवे रश्माविव्यविधानात् अंशुशब्दस्य लेशवाचित्वात् सः एव अर्थः। ज्योत्स्ना एव पयः जलं तस्य क्ष्मा भूमिः तस्याः तटं तदेव वास्तु निवासस्थानं येषां तेषां वस्तूनां छायाव्याजेन छिद्राणि धरन्ति इति वा॥७२॥

कियानिति। उदितमात्रेण अनेन चन्द्रेण तमोनिरासात् हेतोः कियान् किञ्चिन्मात्रः अयं वियद्विभागः पूर्वा-

अद्भिस्तथा लावणसैन्धवीभिरुल्लासिताभिः श्यितिरप्यकारि ॥७३॥
गुणौ पयोधेर्निजकारणस्य न ह्रासवृद्धी कथमेतु चन्द्रः।
चिरेण सोऽयं भजते तु यत् ते न नित्यमम्भोधिरिवात्र चित्रम्
॥ ७४ ॥
आदर्शदृश्यत्वमपि श्रितोऽयमादर्शदृश्यां न बिभर्त्ति मूर्त्तिम्।

---

काशादेशः यथा विशदीकृतः तथा चन्द्रकिरणैः उल्लासिताभिः वृद्धिं प्रापिताभिः लावणसैन्धवीभिः अद्भिः कियान् अयं वियद्विभागः श्यितिः श्यामः अपि अकारि। अप्रौढ़प्रभे चन्द्रे पूर्वाकाशदेशः तिमिरनिरासात् धवलो भवति, ततो निरस्तस्य च तमसः प्रतीच्यां घनीभूतत्वात् पश्चिमाकाशदेशः श्यामलो भवतीति तत्र एवम् उत्प्रेक्षा। समुद्रजलञ्च नीलं पूर्वाकाशदेशः एव नीलैः समुद्रजलैः पुनर्नीलोऽपि अकारि इति वा। लावणसैन्धवीभिः इति लवणसिन्धोः इमाः तस्येदं इत्यणि हृद्भगेति उभयपदवृद्धिः ॥ ७३ ॥

गुणाविति। चन्द्रः निजकारणस्य पयोधेः ह्रासवृद्धी ह्रासवृद्धिरूपौ गुणौ कथम् एतु प्राप्नोतु, अपितु कार्य्यगुणानां कारणगुणपूर्वकत्वनियमात् अवश्यम् अपचयोपचयौ चन्द्रं प्राप्नुतः इति युक्तमेव इत्यत्र न किञ्चित् चित्रम् इत्यर्थः। तर्हि कुत्र चित्रमित्याशङ्क्याह। सः अयं चन्द्रः ते ह्रासवृद्धी यत् चिरेण पक्षान्तपरिमितेन बहुना कालेन भजते न तु अम्भोधिः इव नित्यं प्रत्यहं भजते अत्र विषये चित्रम् आश्चर्य्यम्। समुद्रः यथा प्रत्यहं ह्रासवृद्धी भजते तथा पुत्रोऽपि चन्द्रो न इत्याश्चर्य्यम् इत्यर्थः ॥ ७४ ॥

आदर्शेति। अयं चन्द्रः आदर्शवत् दृश्यत्वं वृत्तत्वादिना रमणीयत्वं श्रितः भजमानोऽपि आदर्शवत् दृश्यां रमणीयां

त्रिनेत्रभूरप्ययमत्रिनेत्रादुत्पादमासादयति स्म चित्रम्॥ ७५॥
इत्येव देवव्रजभोज्यऋद्धिः शुभ्रा सुधादीधितिमण्डलीयम्।
हिंसां यथा सैव तथाऽङ्गमेधा कलङ्कमेकं मलिनं बिभर्त्ति॥ ७६॥

---

मूर्त्तिं न बिभर्त्ति इति चित्रम्। यो हि आदर्शवत् दृश्यो भवति सः एव आदर्शवत् दृश्यां मूर्त्तिं न बिभर्त्ति तद्वत् दृश्यो न भवतीति विरोधात् आश्चर्य्यम् इत्यर्थः। अथच दर्पणवत् दृश्यत्वं श्रितोऽपि आदर्शं दर्शम् अभिव्याप्य दृश्याम् अमावास्यायां दर्शनयोग्यां मूर्त्तिं न बिभर्त्ति, इदानीं पूर्णत्वे न दृश्यमानोऽपि दर्शे लेशेनापि न दृश्यते इत्यर्थः, इति विरोधपरिहारः। दर्पणवत् दृश्यत्वं श्रितोऽपि आदर्शं दर्शं मर्य्यादीकृत्य कृष्णचतुर्दशीम् अभिव्याप्य दृश्यां मूर्त्तिं न बिभर्त्ति, अपितु तावत्पर्य्यन्तं दृश्यो भवत्येव इति वा। तथा अयं चन्द्रः, त्रिनेत्रात् भवति यः तादृशः त्रिनेत्रात् उत्पन्नोऽपि, न त्रिनेत्रः अत्रिनेत्रः तस्मात् त्रिनेत्रव्यतिरिक्तात् सकाशात् उत्पादम् उत्पत्तिम् आसादयति स्म प्राप इत्यपि चित्रम्। त्रिनेत्रात् उत्पन्नोऽपि त्रिनेत्रात् उत्पन्नो न भवतीति आश्चर्य्यम् इत्यर्थः। अथच त्रिनेत्रादुत्पन्नोऽपि अत्रेः नेत्रात् उत्पत्तिम् आप इत्येतदपि विरुद्धम्। अथच त्रिनेत्रः भूः वसतिस्थानं यस्य तादृशः, तथा अत्रेः मुनेः नेत्रात् चित्रम् आश्चर्य्यरूपम् उत्पादं प्राप इति विरोधपरिहारः। सहजसौन्दर्य्यम् आश्चर्य्यमाहात्म्यं, कुलस्य माहात्म्यञ्च अनेन चन्द्रस्य वर्णितम्। चन्द्रस्य अत्रिनेत्रसमुद्भवत्वं पुराणप्रसिद्धम्। ७५।

इत्येति। देवानां व्रजैः समूहैः भोज्या पेया ऋद्धिः सम्पत्तिः यस्याः सा शुभ्रा धवला इयं सुधादीधितेः अमृतक-

एकः पिपासुः प्रवहानिलस्य च्युतो रथाद्वाहनरङ्कुरेषः।
अस्त्यम्बरेऽनम्बुनि लेलिहास्यः पिबन्नमुष्यामृतविन्दुवृन्दम् ॥७७

रस्य मण्डली इज्या इव यागः इव शोभते इति शेषः। इज्या अपि देवव्रजभोज्यचरुपुरोडाशादिसमृद्धिशुद्धा पवित्रा च भवति। तथा एषा चन्द्रमण्डली कलङ्काख्यम् एकं मध्यवर्त्तिनम् अङ्कम् अवयवं मलिनाकारं तथा बिभर्त्ति। यथा सा एव इज्या एव पूर्वोक्तगुणविशिष्टा सती अपि एकं हिंसां पशुहिंसात्मकम् अङ्गं कर्मसाधनं मलिनं पातकहेतुभूतं बिभर्त्ति। परोपकारशीलायाः सर्वात्मना शुद्धायाः अपि चन्द्रमण्डल्या दैवात् एकमङ्गं मलिनं जातम् इत्यर्थः। यागे हि हिंसामात्रमेव मालिन्यम्। सुधाऽङ्गमिति पाठे कलङ्करूपमेकमङ्गं मलिनं सुधा वृथैव बिभर्त्ति, शुद्धायाः मालिन्ययोगस्य अनौचित्यात् इत्यर्थः। शुद्धस्यापि श्वेतधर्मस्य साङ्ख्यैः दोषारोपणात् मालिन्यं मुधा एव इवेत्यर्थः। इज्या इति पदं व्रजयजोः इति क्यप् ॥ ७६ ॥

एक इति। एषः मृगाङ्कः दृश्यमानः प्रसिद्धः एकः पिपासुः तृष्णाक्रान्तः सप्तवायुस्कन्धमध्यवर्त्तिनः प्रवाहाख्यस्य अनिलस्य मृगवाहनस्य गगनचारिणः रथच्युतः वा[..]नभूतः रङ्कुः मृगः अनम्बुनि निर्जले अम्बरे लेलिहास्यः नितरां पौनःपुन्येन वा स्वादनकारि मुखं यस्य तादृशः भवन् अमुष्य चन्द्रस्य अमृतविन्दुवृन्दं पिबन् सन् अस्ति। तृष्णाक्रान्तः रथं परित्यज्य पतितः निर्जलेऽपि गगने चन्द्रामृतविन्दुम् आस्वादयन् वायुवाहनमृगः एव अयं, न तु क्वचित् कलङ्कमृगः नामेत्यर्थः। अस्तीति वर्त्तमानप्रत्ययेन अमृतास्वाद-

अस्मिन् शिशौ न स्थित एव रङ्कुर्यूनि प्रियाभिर्विहितोपदाऽयम् ।
आरण्यसन्देश इवौषधीभिरङ्केस ग्रहे विधिना न्यधायि ॥७८॥

नेन चन्द्रं परित्यज्य गन्तुम् अशक्तः अधुनाऽपि वर्त्तते इति सूचितम्। एवमन्योऽपि तृष्णाक्रान्तो निर्जले देशे प्रस्रवणादेः पतज्जलविन्दुवृन्दं पिबन् अनुपशान्तपिपासः लेलिह्वास्यः सन् तत्रैव चिरं तिष्ठति। ससवायुस्कन्धाः पुराणप्रसिद्धाः। लेलिहेति नितरां पुनःपुनर्वा लेढि इत्यर्थे यङि पचाद्यचि यङोऽचि चेति यङो लुक्॥ ७७॥

अस्मिन्निति। शिशौ बाले एककलात्मके अस्मिन् चन्द्रे रङ्कुः मृगः न स्थितः न आसीत् एव तस्यां दशायाम् अदर्शनात्, किन्तु प्रियाभिः ओषधीभिः यूनि तरुणे पूर्णावयवे अस्मिन् चन्द्रे अयं रङ्कुः उपदा इव विहिता प्रेषिता। कीदृशी। अरण्ये भवः सन्दिश्यते प्रख्याप्यते सन्देशः तद्रूपा। अरण्यभवानां सन्देशरूपा वा। वयं भवत्प्रिया निर्जने वने मृगैः सह वसामः त्वं तु स्वर्गे विजयी सुखेन वर्त्तसे इति गूढार्थोपलम्भसूचिका इति यावत्। अनन्तरं विधुना प्रेयसीसन्देशरूपः सः रङ्कुः अङ्के मध्ये अथच उत्सङ्गे प्रियाप्रेमभरेण न्यधायि स्थापितः इति अहं शङ्के। अन्याऽपि प्रिया तरुणं प्रियं प्रति कश्चित् सन्देशम् उपदारूपेण प्रेषयति, सः च तत् हृदयादौ धारयति। ओषध्यः हि वनवासिन्यः तदनुरूपम् एव सन्देशं मृगं स्वप्रिये चन्द्रे प्रेषितवत्यः। आरण्यसन्देशः इव अयम् उपदा प्रहिता इति वा। यदेति पाठे, यदाप्रभृति प्रेषितः तदाप्रभृति तारुण्यदशायां चन्द्रेण अयम् अङ्के न्यधायि, न तु पूर्वमित्यर्थः। आरण्येति भवार्थेऽण्॥ ७८॥

अस्यैव सेवार्थमुपागतानामास्वादयन् पल्लवमोषधीनाम् ।
धयन्नमुष्यैव सुधाजलानि सुखं वसत्येष कलङ्करङ्कुः ॥ ७९ ॥
रुद्रेषुविद्रावितमार्त्तमारात्तारामृगं व्योमनि वीक्ष्य बिभ्यत् ।
मन्येऽयमन्यः शरणं विवेश मत्वेशचूडामणिमिन्दुमेणः ॥ ८० ॥
पृष्ठेऽपि किं तिष्ठति नाथ ! नाथ रङ्कुर्विधोरङ्क इवेति शङ्का ।
तत्त्वाय तिष्ठस्व मुखे स एव यद् दैरथे पृष्ठमपश्यदस्य ॥ ८१ ॥

---

अस्येति। एषः कलङ्करङ्कुः विरहपीड़ितत्वात् अस्यैव चन्द्रस्य सेवार्थम् उपगतानाम् ओषधीनां पल्लवम् आस्वादयन् तथा अमुष्यैव सुधारूपाणि जलानि धयन् पिबन् सुखम् अनायासलब्धवृत्तिरिव वसति, आहारलोभात् अत्रैव वसति इत्यर्थः। अन्योऽपि मृगः जलकिशलययुते देशे सुखेन वसति कदाचित् अपि न त्यजति। पल्लवमिति जात्येकवचनम् ॥७९॥

रुद्रेति। दक्षयज्ञे वीरभद्रावतारस्य रुद्रस्य इषुणा विद्रावितम्, अतएव आर्त्तं तारारूपं व्योमनि आरात् समीपे दूरे वा वीक्ष्य बिभ्यत् त्रस्यन् अयम् अन्यः अपरः मृगः इन्दुम् ईशस्य चूड़ामणिं मत्वा शरणं विवेश, शिवेन शिरसि स्थापितत्वात् अयं मान्यः इत्येतदाश्रयेण रुद्रात् माम् अयं रक्षिष्यत्येव इत्याशयेन अन्यः मृगः चन्द्रं शरणं प्रविष्ट इत्यर्थः, इति अहं मन्ये। अन्यः सजातीयं कस्माच्चित् भीतं दृष्ट्वा स्वयमपि भीतः सन् कमपि शरणं याति इति भावः। गत्वेत्यपि पाठः। तारामृगस्य रुद्रेषु द्रावणं काशीखण्डादौ ज्ञातव्यम् ॥८०॥

पृष्ठे इति। हे नाथ ! विधोः अङ्कः इव यथा चन्द्रस्य उत्सङ्गे कलङ्कमृगः वर्त्तते तथा रङ्कुः पृष्ठेऽपि पश्चाद्भागेऽपि

उत्तानमेवास्य वलक्षकुक्षिं देवस्य युक्तिः शशमङ्कमाह।
तेनाधिकं देवगवेष्वपि स्यां श्रद्धालुरुत्तानगतौ श्रुतायाम् ॥८२॥

किं तिष्ठति, अथ न तिष्ठति इति तव आशङ्का चेत् वर्त्तते इति शेषः, तर्हि त्वं तत्त्वाय याथार्थ्यज्ञानार्थं स्वे निजे मुखे एव विषये तिष्ठस्व निजमुखमेव निर्णयं पृच्छ इत्यर्थः। यत् त्वन्मुखद्वैरथे समानशोभाभिलाषात् द्विरथसम्बन्धिनि द्वन्द्व-युद्धे अस्य त्वन्मुखात् भज्यमानत्वात् पलायमानस्य चन्द्रस्य पृष्ठं पश्चाद्भागम् अपश्यत् तस्मात् तत् स्वमुखमेव निर्णेतृत्वेन पृच्छ इत्यर्थः। त्वन्मुखचन्द्रात् अधिकमिति भङ्ग्या नलमुख-वर्णनं कृतम्। तत्त्वाय तत्त्वं ज्ञातुं क्रियार्थोपपदेति ताद-र्थ्यमात्रे वा चतुर्थी। तिष्ठस्व इति स्थेयाख्यायां तङ्। स्वे वैकल्पिकत्वात् स्मिन्नभावः ॥ ८१ ॥

उत्तानमिति। युक्तिः अर्थापत्तिः अनुमानं वा अस्य देवस्य चन्द्रस्य मध्यवर्त्तिनम् अङ्कं कलङ्करूपं शशम् उत्तानं स्वर्गसम्मुखम् अस्मदादिदृश्यमानपृष्ठभागम् आह ब्रूते, यतः वलक्षकुक्षिं धवलोदरम्। यद्ययं शशकः अस्मत्सम्मुखोदरः अनुत्तानः अभविष्यत् तर्हि मध्यवर्त्तिशशकोदरस्य धवलत्वात् चन्द्रमध्यभागोऽपि धवलः अभविष्यत्, न च तथा दृश्यते, किन्तु मलिनः, तस्मात् उत्तानः एव शशकः चन्द्रेऽस्तीति युक्तिः आह इत्यर्थः। तेन चन्द्रशशकनिश्चितोत्तानत्वेनैव हेतुनाऽहं देवगवेष्वपि सुरभीप्रभृतिषु विषये वेदे श्रुतायाम् उत्तानगतौ सुरलोकसम्मुखचरणतया गमने विषये पूर्वापेक्षया अधिकम् अतितरां श्रद्धालुः आस्तिक्ययुक्ता स्याम् "उत्ताना वै देवगवाः चरन्ति" इति श्रुतिः न्यायोपपन्नार्थतया सत्या एव इति अहम् इदानीम् अधिकं मन्ये इत्यर्थः। देवगवेषु गोर-

दूरस्थितैर्वस्तुनि रक्तनीले विलोक्यते केवलनीलिमा यत्।
शशस्य तिष्ठन्नपि पृष्ठलोम्नां नः परोक्षः खलु रागभागः ॥८३॥
भङ्क्तुं प्रभुर्व्याकरणस्य दर्पं पदप्रयोगाध्वनि लोक एषः।
शशो यदस्यास्ति शशी ततोऽयमेवं मृगोऽस्यास्ति मृगीति
नोक्तः ॥ ८४ ॥

---

तद्धितलुकीति टच्। देवगवोष्वित्ति पाठे टित्वात् ङीप् ॥ ८२ ॥

उक्तरीत्योत्तानगतौ सिद्धायामपि शशकस्य रक्तपृष्ठत्वान्नीलत्वेन प्रतीतिः कथमित्यत आह। दूरेति। दूरस्थितैः द्रष्टृभिः रक्तनीले मिश्रितोभयवर्णे वस्तुनि केवलत्यक्तरागभागो नीलिमैव यत् यस्मात् विलोक्यते तत् तस्मात् कारणात् शशस्य पृष्ठवर्त्तिरोम्णां तिष्ठन् अपि रागभागः रक्तिमांशः नः अस्माकम् अतिदूरस्थितानां खलु निश्चितं परोक्षः दृग्गोचरः न भवति, किन्तु नीलिमैव दृश्यते इत्यर्थः। तिष्ठन् वर्त्तमानोऽपि परोक्ष इति विरोधाभासः। दूरस्थत्वान्न दृश्यते इति तत्परिहारः। खलु उत्प्रेक्षायां वा ॥ ८३ ॥

भङ्क्तुमिति। एषः कविलोकः पदानां सुप्तिङन्तानां प्रयोगाध्वनि विषये व्याकरणस्य प्रकृतिप्रत्ययविभागपूर्वं शब्दव्युत्पादनकारिणः शास्त्रस्य मदधीनः एव सकलश[ब्द]प्रयोगः इति दर्पं गर्वं यद्वा लक्षणया वैयाकरणस्य व्याकरणाधीनः एव सकलशब्दप्रयोगः इति गर्वं भङ्क्तुं त्याजयितुं प्रभुः समर्थः। यत् यस्मात् हेतोः अयं चन्द्रः शशः अस्यास्तीति ततः हेतोः शशी यथा उक्तः, लोकेनेति शेषः। एवम् अमुना एव प्रकारेण मृगः अस्यास्तीति मृगीति न उक्तः। शशोऽस्यास्तीति मतुवर्थेऽत इनिठनौ इतीनौ यथायं शशीत्युच्यते तथा तेनैव

यावन्तमिन्दुं प्रतिपत् प्रसूते प्रासावि तावानयमब्धिनाऽपि।
तत्कालमीशेन धृतस्य मूर्ध्नि विधोरणीयस्त्वमिहास्ति लिङ्गम्
॥ ८५ ॥

आरोप्यते चेदिह केतकत्वमिन्दौ दलाकारकलाकलापे।
तत् संवदत्यङ्कमृगस्य नाभिकस्तूरिका सौरभवासनाभिः ॥८६॥

---

सूत्रेण मृगोऽस्यास्तीत्यत्र इनः प्राप्तौ सत्यामपि मृगीति नोक्तः, तस्मादतिव्याप्त्यादिदोषात् व्याकरणमूलः एव लोकप्रयोगः इति नियमः न युक्तः, किन्तु कृत्तद्धितसमासानामभिधानं नियामकमिति। लक्ष्यमुद्दिश्य लक्षणप्रवृत्तिर्न तु लक्षणमुद्दिश्य लक्ष्यप्रवृत्तिरिति, तस्मात् प्रयोगमूलं व्याकरणमिति व्याकरणात् लोके प्रयोगः एव बलीयानिति भावः। अप्रस्तुतप्रशंसा ॥ ८४ ॥

यावन्तमिति। शुक्ला प्रतिपत् यावन्तं यत्प्रमाणम् एककलम् इन्दुं प्रसूते, अब्धिना अपि तावान् तत्प्रमाणः एककलः एव अयं प्रासावि न तु पूर्णः इत्यर्थः। एतत् कथं ज्ञातमित्यत आह। तत्कालं तस्मिन् काले समुद्रात् उत्पत्तेः अवसरे एव ईशेन मूर्ध्नि धृतस्य विधोः अणीयस्त्वं नितरां कार्श्यम् एव इह एककलत्वे लिङ्गं ज्ञापकम् अनुमापकः हेतुः अस्ति। यदि समुद्रेण सम्पूर्णोऽयम् अजनयिष्यत् तर्हि शिवेनापि तदानीमिव शिरसि तावानेव अधास्यत्, न तु तथा तस्मात् प्रतिपदा एककलप्रसूतः तावान् समुद्रेणापि इति। प्रतिपदुत्पन्नोऽप्ययमेककलत्वादेव न दृश्यते इति भावः ॥८५॥

आरोप्यते इति। केतकत्वम् इह इन्दौ चेत् यदि आरोप्यते किम्भूते दलाकारः केतकोपत्रसदृशः धवलः कलानां कलापः समूहः यस्य तस्मिन् केतकदलवत् शुभ्रकलापत्वात्

आसीद् यथाज्योतिषमेव गोलः शशी समचं चिपिटस्ततोऽभूत्
स्वर्भानुदंष्ट्रायुगयन्त्रकृष्टपीयूषपिण्याकदृशावशेषः॥ ८७॥

---

चन्द्रः केतकमेवेति यदि रूप्येत तत् तर्हि अङ्कमृगस्य मृगत्वेन नाभिकस्तूरिका कर्त्री आरोपितं तत् केतकत्वं कर्मीभूतं सौरभवासनाभिः कृत्वा संवदति। चन्द्रे केतकत्वं युक्तम् इत्यनुमन्यते इत्यर्थः। नाभिरिति पाठे, अङ्कमृगस्य नाभिः कर्त्री कस्तूरिकासम्बन्धीभिः सौरभवासनाभिः कृत्वा संवदतीति वा। केतक्यां कस्तूरीपरिमलो वर्त्तते, चन्द्रे च कलङ्कमृगनाभिरूपा कस्तूरी वर्त्तते, तस्मात् चन्द्रे केतकत्वम् आरोपयितुं युक्तमित्यर्थः। तत् केतकत्वम् अङ्कमृगस्य नाभिकस्तूरिकायाः परिमलस्य वासनाभिः सङ्क्रमणैः कृत्वा संवदति युक्त्या संवादं प्राप्नोति इति वा। ताभिरिति पाठे, अतिप्रसिद्धाभिः वासनाभिः इत्यर्थः॥ ८६॥

आसीदिति। एषः शशी यथा ज्योतिषं गर्गादिप्रणीतग्रहगणितशास्त्रानतिक्रमेण गोलः नारिकेलफलवत् वर्त्तुलोपरितनभागः एव पूर्वमासीत्, तर्हि इदानीं कथमन्यथा दृश्यते इत्याशङ्क्याह। ततः अनन्तरं कालक्रमेण स्वर्भानोः राहोः ऊर्द्ध्वाधोभागस्थितदंष्ट्रायुगमेव यन्त्रं निष्पीड़नचक्रं तेन कृष्टं निष्कृष्य गृहीतं पीयूषम् अमृतं यस्य यस्मात् वा सः चासौ पिण्याकदृशः गृहीतरसनीरसतिलादिपिण्डीमात्ररूपः अवशेषः उद्धृतः भागः यस्य एवम्भूतः सन् चिपिटः पर्पटप्रायः अभूदिति समक्षम् इदानीं प्रत्यक्षेण अनुभूयते एवेत्यर्थः। ज्योतिः अधिकृत्य कृतो ग्रन्थः ज्योतिषम्, अधिकृत्य कृते ग्रन्थे इत्यण्। ततो याथार्थ्येऽव्ययीभावः। ज्योतिःशास्त्रे त्रयोदशा-

असावसाम्याद्वितनोः सखा नो कर्पूरमिन्दुः खलु तस्य मित्रम्।
दग्धौ हि तौ द्वावपि पूर्वरूपाद् यद्वीर्य्यवत्तामधिकां दधाते॥८८
स्थाने विधोर्वा मदनस्य सख्यं स शम्भुनेत्रे ज्वलति प्रलीनः।
अयं लयं गच्छति दर्शभाजि भास्वन्मये चक्षुषि चादिपुंसः॥८९॥

---

ङ्गलः चन्द्रः षोड़शाङ्गुलसूर्य्यस्य अधोभागस्थः जलपूर्णकाच-कूपिकाप्रायः यथोदितः तथैव पूर्वम् आसीत् इत्युक्तम्॥८७॥

असाविति। असौ चन्द्रः वितनोः अनङ्गस्य सखा नो भवति। कुतः? असाम्यात् असादृश्यात्। "विवाहमैत्रवैराणि भवन्ति समशीलयोः" इति शास्त्रात् अनयोः साङ्गानङ्गयोः सादृश्याभावात् मैत्री न सङ्गच्छते इत्यर्थः। तर्हि अनयोः लोकप्रसिद्धा मैत्री कथमित्यत आह। खलु निश्चितं कर्पूरापरनामा एव इन्दुः तस्य अनङ्गस्य मित्रं तावतैव लोकप्रसिद्धिविरोधाभावः इत्यर्थः। तत्र हेतुमाह। यत् यस्मात् तौ द्वावपि कामकर्पूरौ दग्धौ सन्तौ पूर्वरूपात् दग्धदशायाः सकाशात् अधिकां वीर्य्यवत्तां हि स्पष्टं दधाते। पक्को हि कर्पूरो वीर्य्यवत्तरो भवति। कामोऽपि दाहानन्तरम् अधिकं वीर्य्यवान् अनुभूयते। तदुक्तं, "कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने। नमोऽस्त्ववारवीर्य्याय तस्मै कुसुमधन्वने॥" इति। तस्मात् कामकर्पूरयोः मैत्री युक्ता। घनसारश्चन्द्रसंज्ञ इति निघण्टुः। कर्पूरमस्त्रियामित्यमरवचनात् कर्पूरशब्दो नपुंसकोऽपि॥ ८८॥

स्थाने इति। वा अथवा विधोः मदनस्य सख्यं स्थाने युक्तमेव इत्यर्थः। तत्रायं हेतुः। सः कामः ज्वलति दीप्यमाने शम्भुनेत्रे प्रलीनः प्रकर्षेण लीनः एकतां गतः प्रलयं गतः विनष्टः इत्यर्थः। अयं चन्द्रश्च दर्शभाजि दर्शनं दर्शः तद्व्यापार-

नेत्रारविन्दत्वमगान्मृगाङ्कः पुरा पुराणस्य यदेष पुंसः ।
अस्याङ्क एवायमगात् तदानीं कनीनिकेन्दीन्दिरसुन्दरत्वम् ॥९०
देवेन तेनैष च काश्यपिश्च साम्यं समीक्ष्योभयपक्षभाजौ ।
द्विजाधिराजौ हरिणाश्रितौ च युक्तं नियुक्तौ नयनक्रियायाम्
॥ ९१ ॥

---

युक्ते अथच अमावास्यां गते भास्वन्मये सूर्य्यरूपे आदिपुंसः. विष्णोः चक्षुषि लयम् एकतां गच्छति। दर्शे हि चन्द्रः सूर्य्यं गच्छति अतएव दर्शस्य सूर्य्येन्दुसङ्गमः इति नाम। सूर्य्यः विष्णोः दक्षिणचक्षुः तथाच तुल्ययोः हरिहरयोः नेत्रयोः द्वयोरपि चन्द्रकामयोः प्रलीनत्वात् दर्शे चन्द्रस्यापि अनङ्गतया च समशीलत्वात् उचितैव मैत्रीत्यर्थः। तथा च कामस्य चन्द्रसखिताप्रसिद्धिर्मुख्यैवमुक्तेति भावः ॥ ८९ ॥

नेत्रेति। पुरा पूर्वं यदा यस्मिन् काले एषः मृगाङ्कः पुराणस्य पुंसः श्रीविष्णोः नेत्रारविन्दत्वं नयनकमलत्वम् अगात्, तदानीं तस्मिन् काले अस्य विष्णुनेत्रारविन्दभूतस्य अस्य चन्द्रस्य अयम् अङ्कः कलङ्कः एव कनीनिकायाः इन्दीन्दिरस्य भ्रमरस्य सुन्दरम् अगात् प्रायात्। अदादिति पाठे, अयं श्रीविष्णुः अस्य चन्द्रस्य अङ्के विषये कनीनिकेन्दीन्दिरसुन्दरत्वम् अदात्। नेत्रे हि कनीनिकया भाव्यम्. अरविन्दे च भ्रमरेण, तथाच अस्य नेत्रारविन्दरूपत्वात् अङ्कमेव उभयं श्रीविष्णुः कृतवान् इत्यर्थः। अङ्कः एव कनीनिका कर्त्री भ्रमरेण सुन्दरत्वमस्य अदात् इति वा। इन्दीन्दिरालिषट्चरणचञ्चरीकालिनो द्विरेफाः स्युरिति हलायुधः ॥ ९० ॥

देवेनेति। तेन देवेन श्रीविष्णुना एव चन्द्रः काश्यपिः गरुडः एतौ द्वौ अपि साम्यं समानधर्मतां समीक्ष्य तुल्यायां

येरन्वमायि ज्वलनस्तुषारे सरोजिनीदाहविकारहेतोः ।
तदीयधूमौघतया हिमांशौ शङ्के कलङ्कोऽपि समर्थितस्तैः ॥८२॥
खेदस्य धाराभिरिवापगाभिर्व्योम्ना जगद्भारपरिश्रमार्त्ता ।
छायापदेशाद्वसुधा निमज्ज्य सुधाम्बुधावुज्झति खेदमत्र ॥८३॥

---

नयनक्रियायां क्रमेण नेत्रव्यापारे वाहनव्यापारे च यत् नियुक्तौ तत् युक्तम् उचितम् इत्यर्थः। चावन्योन्यसमुच्चये साम्यमेवाह। उभयपक्षौ शुक्लपक्षकृष्णपक्षौ भजति चन्द्रः। गरुडस्तु द्वौ पक्षौ छदौ भजति। तादृशौ द्वावपि। तथा द्विजानां ब्राह्मणानां राजा चन्द्रः। गरुडस्तु पक्षिणां राजा तादृशौ। तथा हरिणेन कलङ्कमृगेण आश्रितः चन्द्रः। गरुडस्तु हरिणा विष्णुना वहनार्थम् आश्रितः। तादृशौ एवम् उभयोः साम्यात् समे एव व्यापारे नियुक्तौ। तत् उचितं कृतम् इति भावः। काश्यपिः इति बाह्वादित्वात् इञ् ॥ ८१ ॥

येरिति। यैः पण्डितैः सरोजिन्याः दाहरूपात् विकारात् हेतोः तुषारे हिमे ज्वलनः अग्निः अन्वमायि, तुषारः साग्निः भवितुम् अर्हति सम्बन्धे सति दाहकारित्वात् साग्निभूदेशवत् तप्तोदकवद्वेति हिमे विषये वह्निः अनुमितः इत्यर्थः, तैः पण्डितैः अहिमांशौ तुषारमये चन्द्रे वर्त्तमानः कलङ्कोऽपि तदीयधूमौघतया हिमाग्निसम्बन्धिधूमसमूहरूपत्वेन समर्थितः इति अहं शङ्के। वह्नौ हि धूमेन भाव्यं चन्द्रस्य तुषारमयत्वात् उक्तरीत्या वह्निमान्, तथाच कलङ्कः धूमसमूहः एवेति तैः समर्थितम् इत्यहं सम्भावयामि इत्यर्थः ॥ ८२ ॥

खेदस्येति। वसुधा छायापदेशात् स्वीयप्रतिबिम्बव्याजेन सुधाम्बुधौ अत्र चन्द्रे निमज्ज्य अन्तः प्रविश्य खेदं जग-

ममानुमैवं बहुकालनीलीनिपातनीलः खलु हेमशैलः।
इन्दोर्जगच्छायमयेऽन्यथाऽङ्के पीतो विभागः प्रतिबिम्बितः स्यात्
॥ ८४ ॥

माऽवापदुन्निद्रसरोजपूजाश्रियं शशी पद्मनिमीलितेजाः।
अलिद्वयेनैव निजाङ्करङ्कोरलङ्कृतस्तामयमेति मन्ये ॥ ८५ ॥

---

ङ्गारपरिश्रमपीडाम् उज्झति इव। किम्भूता? जगङ्गारवहननिमित्तः परिश्रमः तेन आर्त्ता नितरां पीडिता अतएव खेदस्य धाराभिः इव आपगाभिः व्याप्ता समन्तात् पूरिता। अमृतसमुद्रनिमज्जने हि खेदो गच्छत्येव यस्याश्च तत्तन्नदीरूपः खेदः तस्याः श्रमहरणे सुधासमुद्रः एव उचितः। एतेन कलङ्कस्य मृगशशभूच्छायप्रभृतिमतभेदाः वर्णिताः ॥ ८३ ॥

ममेति। हेमशैलः मेरुः खलु निश्चितं सर्गम् आरभ्य अद्य यावत् अतिक्रान्तेन बहुना कालेन कृत्वा नीलीनिपातः श्यामिकालगनं तेन कृत्वा नीलः बहुकालीनत्वात् नीलमलसम्बन्धात् नीलवर्णः सः जातः एवम्प्रकारा मम अनुमा अनुमानम् एवम् अहं सम्भावयामि इत्यर्थः। अन्यथा यदि स्वर्णाचलः कालभूयस्त्वे न न नीलीभूतः किन्तु हेममयत्वात् पीतः एव स्यात्, तर्हि इन्दोः जगच्छायमये जगत्प्रतिबिम्बभूते कलङ्करूपे प्रतीके अवयवे मेरोः पीतोऽपि भागः प्रतिबिम्बितः स्यात् पीतोऽंशो दृश्येत, तस्मात् स्वर्णाचलो नील एव जातस्तथाच सकलायाः अपि भूमेः नीलवर्णत्वात् तत्प्रतिबिम्बरूपः कलङ्कोऽपि नीलः एव युक्तः इत्यर्थः। जगच्छायेति विभाषासेनेति षण्डत्वम् ॥ ८४ ॥

मेति। शशी उन्निद्रैः विकसितैः सरोजैः कृत्वा या पूजा तज्जनितां श्रियं मा अवापत् मा स्म लभत, यतः पद्मनिमीलि

य एष जागर्त्ति शशः शशाङ्के बुधो विधत्ते क इवात्र चित्रम् ।
अन्तः किलैतत् पितुरम्बुराशेरासीत् तुरङ्गोऽपि मतङ्गजोऽपि॥८६

गौरे प्रिये भातितमां तमिस्रा
ज्योत्स्नी च नीले दयिता यदस्मिन् ।
शोभातिलोभादुभयोस्तयोर्वा
सितासितां मूर्त्तिमयं बिभर्त्ति ॥ ८७ ॥

---

कमलसङ्कोचकं तेजः यस्य सः । विकसितानामपि कमलानां पूजार्थं चन्द्रसविधे क्रियमाणानां चन्द्रतेजसां सङ्कोचस्यैव सम्भवात् उन्निद्रसरोजपूजाश्रियं कथं प्राप्नोति । प्रकारान्तरेण प्राप्नोतीत्याह—निजाङ्गभूतस्य रङ्कोः मृगस्य अक्षिद्वयेनैव अलङ्कृतः अयं चन्द्रः ताम् उन्निद्रपूजाश्रियम् एति प्राप्नोति, तन्नयनयोः अनिद्रकमलरूपत्वात् इति अहं मन्ये । अङ्कमृगनेत्राभ्यां कृत्वा अयं चन्द्रः विकसितकमलाभ्यां पूजाम् इव शोभां प्राप्नोतीति भावः इति वा ॥ ८५ ॥

य इति । यः एषः प्रत्यक्षदृश्यः शशः शशाङ्के जागर्त्ति स्फुरति, अत्र विषये कः इव बुधः चित्रम् आश्चर्य्यं विधत्ते, अपितु न कोऽपि इत्यर्थः । किल यस्मात् एतत्पितुः अम्बुराशेः अन्तः मध्ये उच्चैःश्रवःसंज्ञकः तुरङ्गोऽपि आसीत् ऐरावताख्यो मतङ्गजोऽपि आसीत् । यदीयपितुर्मध्ये अश्वगजादिकं भवति तदीयपुत्रमध्ये शशमात्रसम्भवे किमाश्चर्य्यम् इत्यर्थः ॥ ८६ ॥

गौर इति । तमिस्रा तमोबहुला अस्य दयिता रात्रिः गौरे प्रिये चन्द्रे विषये भातितमां, तथा ज्योत्स्नी च चन्द्रिकायुक्ता धवला अस्य दयिता रात्रिः नीले प्राणेशे अस्मिन् चन्द्रे नितरां शोभते भिन्नवर्णे हि शोभेत इत्यर्थः । तस्मात्

वर्षातपानावरणं चिराय काष्ठौघमालम्ब्य समुत्थितेषु।
बालेषु ताराकवकेष्विहैकं विकस्वरीभूतमवैमि चन्द्रम्॥ ९८॥
दिनावसाने तरणेरकस्मान्निमज्जनाद्विश्वविलोचनानि।
अस्य प्रसादादुडुपस्य नक्तं तमोविपद्वीपवतीं तरन्ति॥ ९९॥

---

हेतोः तयोः तमिस्राज्योत्स्नयोः उभयोरपि विषये स्वस्य शोभाप्राप्तेः विलोभात् अभिलाषात् तयोरेव पक्षयोः या शोभाप्राप्तिः तदभिलाषात् धवलश्यामलसम्बन्धात् तमिस्राज्योत्स्नयोः शोभया भवितव्यम् इत्यर्थः। अयं चन्द्रः सितासितां धवलां श्यामलाञ्च मूर्त्तिं कायं बिभर्त्ति इव। वा इवार्थे। शोभातिलोभात् इव इत्यन्वयः। नीलभागे ज्योत्स्नीं प्रियां धारयितुं, धवले च तामसीमिति यथासङ्ख्यम्॥ ९७॥

वर्षेति। अहं बालेषु तनुषु अविकसितेषु च इह प्रत्यक्षदृश्येषु तारासु नक्षत्रेषु एव कवकेषु छत्राकेषु मध्ये चिरकालोत्पन्नत्वात् विकस्वरीभूतं विकसितम् अतिस्थूलम् एकं छत्राकमिव चन्द्रम् अवैमि मन्ये। किम्भूतेषु ताराकवकेषु? चिराय बहुकालं वर्षार्त्तौ आतपे ग्रीष्मर्त्तौ च वर्षेषु जलवृष्टिषु आतपेषु उष्णेषु च सत्सु अनावरणम् अनाच्छादितं काष्ठौघं दिक्समूहमिव दारुसमूहम् आलम्ब्य समुत्थितेषु उत[illegible]षु, वर्षाकाले हि अनावृतेषु जलस्तिमितेषु पश्चादुष्णातपेषु च। काष्ठेषु सूक्ष्मस्थूलानि छत्राकानि भवन्ति, तथाच तारा अल्पकवकानि भवन्ति, चन्द्रस्तु स्थूलकवकमिव इत्युत्प्रेक्षा॥९८॥

दिनेति। विश्वस्य जगतः विलोचनानि दिनावसाने तरणेः सूर्य्यस्य अकस्मात् असम्भावितहेतोः निमज्जनात् प्रतीचीसागरनीरप्रवेशात् हेतोः नक्तं रात्रौ तमोनिमित्तां

किं नाक्ष्णि नोऽपि क्षणिकोऽणुकोऽयं
भानोऽस्ति तेजोमयविन्दुरिन्दुः।
अत्रेस्तु नेत्रे घटते यदासीत्
मासेन नाशी महतो महीयान्॥ १००॥

स्खलनादिरूपां विपदमेव द्वीपवतीं महानदीम् अस्य उडुपस्य चन्द्रस्य प्रकाशरूपात् प्रसादात् तरन्ति, चन्द्रेण निरस्य सर्वं प्रकाशितमिति भावः। अन्येऽपि रात्रौ तरणेः नौकायाः अकस्मात् मज्जनात् हेतोः वुडनरूपामापन्नदीं उडुपस्य अकस्मादागतस्य अल्पस्य यानपात्रस्य प्रसादात् तरन्ति इति तात्पर्य्यम्॥ ९९॥

किमिति। नः अस्माकम् अमहतां पामराणाम् अपि अक्ष्णि नेत्रे विषये तेजोमयः तेजोरूपः विन्दुरेव अयम् इन्दुः अङ्गुल्या नयनप्रान्तचिपिटीकरणे धवलवर्त्तुलाकारेण भानः शोभमानः किं नास्ति अपि तु अस्मदादिनेत्रेऽपि इन्दुवर्त्तत एव। अणुकः अल्पीयान् तथा क्षणिकः क्षणमात्रावस्थायी यावच्चिपिटीकरणमेव दृश्यते इत्यर्थः। तर्हि अस्मात् चन्द्रात् तस्य वैलक्षण्यं कथमित्यत आह। अत्रेः मुनेः नेत्रे तु पुनः तेजोमयविन्दुः अयमिन्दुर्महीयानितरापेक्षया नितरां महापरिमाणः आसीत्। तथा मासेन कृत्वा नाशी मासावसानप्राप्तविनाशश्च अभूदिति यत् तत् घटते, एतत् युज्यते इत्यर्थः। यतः महतः महानुभावस्य। सर्वं हि महतां महत् इति न्यायेन महतोऽत्रेः नेत्रतेजोमयविन्दुरपि अयमिन्दुर्महापरिमाणश्चिरकालस्थायी चेति अस्मन्नेत्रतेजोमयविन्दोरिन्दोर्वैलक्षण्यं युक्तमेवेति भावः। अणुकः, अल्प इति कन्। नाशी इति अस्त्यर्थे इनिः॥ १००॥

त्रातुं पतिं नौषधयः स्वशक्त्या मन्त्रेण विप्राः क्षयिणं न शेकुः ।
एनं पयोधिर्मणिभिर्न पुत्रं सुधाप्रभावैर्न निजाश्रयं वा ॥१०१॥
मृषा निशानाथमहःसुधा वा हरेदसौ वा न जराविनाशौ ।
पीत्वा कथं नाऽपरथा चकोरा विधोर्मरीचीनजरामराः स्युः
॥१०२॥

---

त्रातुमिति। मृतसञ्जीविन्यादयः ओषधयः स्वशक्त्या स्वसामर्थ्येन निजरसवीर्य्यविपाकाभ्यां कृत्वा ओषधीशत्वात् पतिम् एनं चन्द्रं क्षयिणं प्रतिदिनं कलाक्षयवन्तम् अथच क्षयरोगिणं सन्तं त्रातुं रक्षितुं न शेकुः। तथा विप्राः द्विजराजत्वात् निजं स्वामिनं क्षयिणं मन्त्रेण श्रुतिसामर्थ्येन कृत्वा रक्षितुं न शेकुः। तथा पयोधिः अपि पुत्रं क्षयिणम् एनं मणिभिः अनेकप्रभावैः अन्तरस्थैः रत्नैः कृत्वा रक्षितुं न शशाक इति वचनविपरिणामः। तथा सुधा अपि स्वाधारभूतं क्षयिणम् एनम् अजरामरत्वजनकैः प्रभावैः कृत्वा त्रातुं न शशाक, वा समुच्चये। ओषध्यादयः स्वशक्त्यादिरक्षणसाधने सति अपि पतित्वात् प्रभुत्वात् पुत्रत्वात् निजाश्रयत्वाच्च क्षयात् रक्षितुम् अर्हम् अपि एनं रक्षितुं समर्थाः न बभूवुः इति विशेषोक्त्या पूर्वकर्मजः रोगः महानुभावैः अपि अपनेतुं न शक्यते इति व्यज्यते। अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावः इति ओषध्यादीनां सामर्थ्यं प्रसिद्धम् इति भावः ॥ १०१ ॥

मृषेति। निशानाथस्य चन्द्रस्य महः तेजः सुधा वा पीयूषरूपमेवेति लोकवादः मृषा असत्यः एव भवेत्। वा अथवा यदि चन्द्रतेजः सुधैव इति लोकप्रवादः सत्यः एव

वाणीभिराभिः परिपक्तिमाभिर्नरेन्द्रमानन्दजड़श्चकार ।
मुहूर्त्तमाश्चर्य्यरसेन भैमी हैमीव वृष्टिस्तिमितञ्च तं सा ॥१०३॥

---

तर्हि असौ चन्द्रतेजोरूपा सुधा जराविनाशी जरामरणे न हरेत् विनाशयेत् चन्द्रतेजः सुधा नैव इत्यङ्गीकार्य्यम् । अथच एतद्रूपा सुधा अपि जरामरणे नाशयतीति अङ्गीकार्य्यमित्यर्थः । अपरथा अन्यथा यदि चन्द्रतेजः सुधा इति प्रवादः सत्यः तद्रूपा सुधा जरामरणे विनाशयेत् तर्हि चकोराख्याः पक्षिणः विधोः मरीचीन् पीत्वा अपि कथं किमिति न अजरामराः स्युः जरामरणरहिताः भवेयुः । चन्द्रतेजःसुधात्वे एतस्याश्च सुधायाः जरामरणविनाशे सामर्थ्यसद्भावे तत्पाने चकोरैरपि अजरामरैर्भाव्यं, न च ते तथा, तस्मात् तत्तेजसः सुधात्वं वा मृषा भवेत् । सुधाभूतस्यापि जरामरणापहारे सामर्थ्यं नास्तीत्येतत् अङ्गीकर्त्तव्यं, तथा सुधाप्रभावैः न निजाश्रयं वेति पूर्वश्लोकांशसमाधानम् इत्याशयः । अजरामरौस्युरिति पाठे च्विः ॥ १०२ ॥

वाणीभिरिति । सा भैमी आभिः पूर्वोक्ताभिः परिपक्तिमाभिः परिपाकेन निर्वृत्ताभिः परिणतकवित्वशक्तितया प्रसादादिगुणयुक्ताभिः वाणीभिः कृत्वा तं नरेन्द्रम् आनन्दजडं हर्षपरवशं चकार । तथा मुहूर्त्तम् अद्भुतापरनाम्ना आश्चर्य्येण रसेन अथच तद्रूपेण जलेन हैमी तुषारसम्बन्धिनी वृष्टिरिव भैमी स्तिमितम् अतिस्नेहात् प्राप्तस्तम्भं वा अथच आर्द्रं चकार, हिमवृष्टिर्यथा अन्यं जडम् आर्द्रञ्च करोति तथेयमपि आनन्दजडं सातिस्नेहञ्च चकार इत्यर्थः । परिपक्तिमाभिः डित्वान्निवृत्तेऽर्थे क्त्रिः, क्त्रेर्मम् ॥ १०३ ॥

इतो मुखाद्वागियमाविरासीत् पीयूषधारामधुरेति जल्पन्।
अचुम्बदस्याः स मुखेन्दुबिम्बं संवावदूकश्रियमम्बुजानाम्॥१०४

प्रियेण साऽथ प्रियमेवमुक्ता विदर्भभूमीपतिवंशमुक्ता।
स्मितांशुजालं वितताम तारा दिवः स्फुरन्तीव कृतावतारा॥१०५

इत इति। इति एवं जल्पन् वदन् सः नलः अम्बुजानां संवावदूका नितरां संवादिनी श्रीः यस्य तादृशं कमलतुल्यसौरभम् अस्याः मुखेन्दुबिम्बम् अचुम्बत्, चन्द्रकमलतुल्यं भैमीमुखं प्रीत्यतिशयात् अचुम्बत् इत्यर्थः। इति किम्। हे भैमि! इयम् उक्तप्रकारा पीयूषधारावत् मधुरा वाक् इतः प्रत्यक्षदृश्यात् भवन्मुखात् आविरासीत् निःसृता इति भावः। इतः इत्यनेन सामीप्याभिनयकारिणा करेण भैमीमुखं चिबुके धृतम् इति ध्वन्यते। मुखस्य इन्दुबिम्बत्वेन च पीयूषधारासम्बन्धौचिती सूच्यते। तथाच पीयूषधारया मधुरा इत्यपि व्याख्येयम्। संवावदूकेत्यादिना च भैम्याः पद्मिनीत्वं प्रसिद्धम्। चन्द्रबिम्बस्य कमलैः सह विसंवादः विरोधित्वात्। एतन्मुखचन्द्रबिम्बस्य तु कमलैः सह संवादः कमलसौभाग्यभाक्त्वात् इत्यर्थः। प्रसिद्धचन्द्रबिम्बात् एतन्मुखचन्द्रबिम्बम् अधिकमिति सूच्यते। भृशार्थं संवदति संवावदूका सम्पूर्वोऽयं मैत्रीं वर्त्तते॥ १०४॥

प्रियेणेति। प्रियेण, इतो मुखादित्यादिपूर्वोक्तरूपं प्रियवचनमुक्ता भाषिता विदर्भभूमीपतेः वंशेन कुलेन मुक्ता जनिता, तथा स्फुरन्ती दीप्यमानकान्तिः सोल्लासा सा भैमी, अथ नलवचनानन्तरं स्मितांशुजालं वितताम, तदेव नलाय प्रीतिदानमिव ददौ इत्यर्थः। का इव? दिवः सकाशात् क्षीणपुण्यतया स्वेच्छया वा कृतावतारा भूलोकम् आगता

स्ववर्णना न स्वयमर्हतीति नियुज्य मां त्वन्मुखमिन्दुरूपम्।
स्थानेऽत्युदास्ते शशिनः प्रशस्तौ धरातुरासाहमिति स्म साऽऽह
॥१०६॥

तयेरितः प्राणसमः सुमुख्या गिरं परीहासरसोक्तिरां सः ।

---

रोहिणी तारा इव। स्फुरन्ती किरणजालं वितताार इति उत्प्रेक्षा, उपमा वा। वंशः कुलम् एव वंशः वेणुः तत्र जाता देवधार्य्या मुक्ता मौक्तिकरूपा। कृतावतारित्यत्र तरणं तारः, ऋदोरप् तदन्तात् प्रज्ञादित्वात् स्वार्थेऽणि, पश्चादवशब्देन सह सुपा इति समासः॥ १०५॥

स्वेति। सा धरातुरासाहं भूमीन्द्रम् इति आह स्म। इति किम्? हे प्रिय! इन्दुरूपं त्वन्मुखम् इति हेतोः चन्द्ररूपत्वेन आत्मस्तुतौ मां नियुज्य आज्ञाप्य शशिनः प्रशस्तौ वर्णनविषये अत्युदास्ते अतितराम् उदासीनः भवति, एतत् स्थाने युक्तम्। हेतुमेवाह। इति किं "सतामेतदकर्त्तव्यं परनिन्दाऽऽत्मनः स्तुतिः" इत्यादिवचनात् स्वयम् आत्मना एव स्ववर्णना आत्मनः स्तुतिः न अर्हति न युक्ता इति भावः। इयत्पर्य्यन्तं मया चन्द्रः वर्णितः इदानीं त्वया वर्णनीयः तूष्णीम्भावः युक्तः इत्याशयेन भैमी चन्द्रस्तुतौ तं सोत्प्रासं प्रावर्त्तयत् इति भावः। तुरासाहमित्यत्र तृतीयसर्गे धरातुरासाहित्येतच्छ्लोकस्याऽशङ्का ज्ञातव्या। तत्रोत्तरम्। इन्दुरूपं त्वन्मुखं चन्द्ररूपात्मस्तुतौ मां नियुज्य शशिनः प्रशस्तौ अत्युदास्ते सा अहं धरावदतुरा अनुत्तानवेगा वा पृथ्वीवत् गम्भीरेत्यर्थः। अर्थात् तमाह स्वेति ज्ञातव्यम्॥ १०६॥

तयेति। स भूलोके सारः श्रेष्ठतमः नलः स्मितवाक् तुषारभानुं चन्द्रं भणिष्यन् वर्णयिष्यन् सन् सुभगां सौभाग्य-

भूलोकसारः स्मितवाक् तुषारभानुं भणिष्यन् सुभगां बभाण ॥ १०७ ॥

तवानने जातचरीं निपीय गीतिं तदाकर्णनलोलुपोऽयम् ।
हातुं न जातु स्पृहयत्यवैमि विधुं मृगस्त्वद्वदनभ्रमेण ॥१०८॥
इन्दोर्भ्रमेणोपगमाय योग्ये जिह्वा तवास्ये विधुवास्तुमन्तम् ।
गीत्या मृगं कर्षति वश्यता किं पाशीबभूवे नयनद्वयेन ॥ १०९

---

वतीं भैमीं बभाण। किम्भूतः? तया सुमुख्या भैम्या परीहासरसस्य उक्तिराम् उद्भावयित्रीं गिरम् ईरितः उक्तः। तथा प्राणसमः अतिप्रेयान्, तथा चन्द्रवर्णने प्रेरितः सन् परीहासरसोक्तिरां गिरं बभाण इति वा। उक्तिरामिति इगुपधेति कः, पूर्वेण षष्ठीसमासः। भणिष्यन् हेतौर्लटः शता ॥ १०७ ॥

तवेति। हे प्रिये! अयं मृगः तव आनने जातचरीं भूतपूर्वां गीतिं स्वरमाधुरीं निपीय सादरम् आकर्ण्य इदानीम् अपि तस्याः भवद्गीतेः आकर्णनाय लोलुपः अतितरां लुब्धः अतिसादृश्यात् त्वद्वदनभ्रमेण विधुं हातुं जातु कदाचित् अपि न स्पृहयति इति अहम् अवैमि। मृगाः हि गानप्रियाः भवन्तीति चन्द्रं त्वन्मुखभ्रान्त्या त्यक्तुं नेच्छति इत्यहं शङ्के इत्यर्थः। जातचरो इति भूतपूर्वे चरट्। लोलुपः इति यङन्तात् पचाद्यचि, यङोऽचि चेति यङो लुक् ॥ १०८ ॥

इन्दोरिति। अतिसादृश्यात् इन्दुरेवेदम् इति इन्दोः भ्रमेण मृगस्य उपगमाय योग्ये प्राप्तुम् अर्हे तव आस्ये वर्त्तमाना जिह्वा कर्त्री गीत्या वर्णस्वरमाधुर्य्या कृत्वा विधुरूपं वास्तु वसतिस्थानं तत् विद्यते यस्य तं विधुवास्तुमन्तं चन्द्र-

आप्यायनाद्वा रुचिभिः सुधांशोः शैत्यात्तमःकाननजन्मनो वा।
यावन्निशायामथ घर्मदुःस्थस्तावद् व्रजत्यह्नि न शब्दपान्थः
॥ ११० ॥

---

मध्यस्थम् अपि मृगं कर्षति। गीतेः मधुरतरत्वात् मृगस्य च प्रियगानत्वात् स्वसमीपम् आनयति इत्यर्थः। तदाकर्षणसाधनमुत्प्रेक्षते—वत्स्यता आगमिष्यतः मृगस्य वासार्थं बन्धनं करिष्यता, नेत्रद्वयेन पाशीबभूवे किं तद्रूपया बन्धनरज्ज्वा समाकर्षति इत्यर्थः। अन्याऽपि शवरी गीत्या मृगम् आकृष्य पाशेन बध्नाति। भवन्मुखं निष्कलङ्कम् अमृताधिकं गीतियुक्तञ्च, चन्द्रस्तु सकलङ्कः इति भावः। चन्द्रवर्णनावसरेऽपि मध्ये मध्ये भैमीमुखवर्णना अनुरागातिशयसूचनार्था। अयं श्लोकः क्षेपकः इति केचित् ॥ १०९ ॥

गगनस्थोऽपि मृगो भैमीमुखगीतिं कथमशृणोदित्याशङ्काह। आप्यायनादिति। शब्दरूपः पान्थः नित्यपथिकः निशायां यावत् व्रजति तावत् अथ पश्चात् साकल्येन वा अह्नि न गच्छति यस्मात् दिने घर्मेण आतपेन दुःस्थः सन्तप्तः तस्मात् दिने अल्पमेव गच्छतीत्यर्थः। रात्रौ दूरगमने हेतुमाह। सुधांशोः अमृतरूपाभिः रुचिभिः आप्यायनात् उज्जीवितबलत्वात् वा तमः एव काननं वनं तस्मात् जन्म यस्य गाढान्धकारजातात् शैत्यात् वा तेजसः अभावे तमसः सम्भवात् औष्ण्याभावात् शैत्यम् अतएव रात्रौ बहु गच्छति दिने चोष्णे न श्रान्तः एव बहु न गच्छति। शब्दाः हि स्वभावात् अतिदूरेऽपि श्रूयन्ते दिवा तु न तथा, पथिकोऽपि रात्रौ शैत्यात् दूरं गच्छति, दिने चाल्पम् इति भावः। दूरश्रवणप्रतिपादकोऽयं श्लोकः ॥ ११० ॥

दूरेऽपि तत्तावकगानपानाल्लब्धावधिः स्वादुरसोपभोगे।
अवज्ञयैव क्षिपति क्षपायाः पतिः खलु स्वान्यमृतानि भासः ॥ १११ ॥

अस्मिन्न विस्मापयतेऽयमस्मांश्चक्षुर्बभूवैष यदादिपुंसः।
तदत्रिनेत्रादुदितस्य तन्वि! कुलानुरूपं किल रूपमस्य ॥ ११२॥

आभिर्मृगेन्द्रोदरि! कौमुदीभिः क्षीरस्य धाराभिरिव क्षणेन।

---

दूरेऽपीति। हे प्रिये! खलु निश्चितं क्षपायाः पतिः चन्द्रः भासः चन्द्रिकाः एव स्वानि अमृतानि क्षिपति अधः मुञ्चति। किम्भूतः? दूरे अपि अतितरां देशव्यवधाने अपि तत् प्रसिद्धं मधुरतरं तावकं गानं तस्य पानात् सादरश्रवणात् हेतोः स्वादुरसोपभोगे माधुर्य्यातिशयानुभवे विषये लब्धावधिः प्राप्तमर्य्यादः। उक्तं स्वतेः। अवज्ञया इव अनुभूतभवद्गीतमाधुर्य्यापेक्षया अल्पमाधुर्य्यतया अवमाननयैव इत्यर्थः। अयं श्लोको भिन्नः एव न तु युग्मम् ॥ १११ ॥

अस्मिन्निति। हे तन्वि! एषः चन्द्रः आदिपुंसः श्रीविष्णोः यत् वामं चक्षुः बभूव इति अस्मिन् नेत्रीभवने विषये अयं नेत्रभूतः चन्द्रः अस्मान् न विस्मापयते आश्चर्य्यं न प्रापयति। अत्रार्थे अस्माकम् आश्चर्य्यं न भवति इत्यर्थः। किल यस्मात् हेतोः अत्रिनेत्रात् उद्गितस्य उत्पन्नस्य अस्य तत् चक्षुर्भवनं कुलानुरूपं कुलोचितं स्वरूपं नेत्ररूपात् कारणात् जातस्य नेत्रीभवनम् उचितम् एव तस्मात् अस्य पुराणपुरुषनेत्रीभवने न किञ्चित् अस्माकं चित्रम् इत्यर्थः। विस्मापयते नित्यं स्मयतेः इत्यात्वं, भीस्म्योर्हेतुभये इति तङ्। अस्मात् जनान्तरापेक्षया बहुत्वम् ॥ ११२ ॥

आभिरिति। हे मृगेन्द्रोदरवत् क्षामम् उदरं यस्याः

अचालि नीलीरुचिरम्बरस्था तमोमयीयं रजनीरजक्या ॥११३॥
पयोमुचां मेचकिमानमुच्चैरुच्चाटयामास ऋतुः शरद्या।
पपारि वामोरु! तयाऽपि किञ्चिन्न प्रोञ्छितुं लाञ्छनकालिमाऽस्य
॥ ११४ ॥
एकादशैकादशरुद्रमौलीनस्तं यतो यान्ति कलाः किमस्य।

---

तादृशि ! रजनी एव रजकी तया चीरस्य दुग्धस्य धाराभिः एव दृश्यमानाभिः धवलतराभिः कौमुदीभिः कृत्वा अम्बरस्था तमोमयी इयं नीली कज्जलवत् कालीरुचिः क्षणमात्रेण अचालि निरस्ता। रजक्या वसनस्था काली कान्तिर्दुग्धधाराभिः क्षणेन चाल्यते। तदुक्तं कलाकोशे। तैलं घृतेन तच्चोष्णजलैर्दुग्धेन कज्जलम्। नाशयेदम्बरस्थं तु मलं क्षारेण सोष्मणा ॥” इति ॥

चन्द्रिकादिभिः गगनं निर्मलीकृतम् इति भावः। ऋगौन्द्रोदरी इति नासिकोदरेति ङीष्। ओषधी इति प्राणिवाचित्वाभावान्नीलीति ङीप् समर्थनीयः। रजकीं ष्वुनः षित्वात् ङीप् ॥ ११३ ॥

पय इति। हे वामोरु! या शरत् ऋतुः पयोमुचां मेघानां वर्षाकालीनम् उच्चैः अतिशयितम् अपि मेचकिमानं कालिमानम् उच्चाटयामास। तया कालिमापनयने दृष्टसामर्थ्यया शरदा यस्य चन्द्रस्य लाञ्छनरूपः कालिमा किञ्चित् अल्पम् अपि प्रोञ्छितुं स्फोटयितुं न अपारि। शरदच्छे चन्द्रे मलिनः कलङ्कः अतितरां शोभते इति भावः। मेचकिमानमिति वर्णवाचित्वादिमनिच् ॥ ११४ ॥

एकेति। अस्तं यतः गच्छतः अस्य चन्द्रस्य एकादश

प्रविश्य शेषाश्च भवन्ति यत्र पञ्चेषु तूणीमिषवोऽर्द्धचन्द्राः ॥११५
निरन्तरत्वेन विधाय तन्वि ! तारासहस्राणि यदि क्रियेत।
सुधांशुरन्यः स कलङ्कमुक्तस्तदा त्वदास्यश्रियमाश्रयेत ॥११६॥
यत् पद्ममादित्सु तवाननीयां कुरङ्गलक्ष्मा च मृगाक्षि ! लक्ष्मीम्
एकार्थलिप्साकृत एव शङ्के शशाङ्कपङ्केरुहयोर्विरोधः ॥११७॥

---

कलाः एकादशानां रुद्राणां मौलीन् प्रतियान्ति, किल गच्छन्तीव। शेषाः पञ्च कलास्तु पुनः पञ्चेषोः कामस्य तूणीम् अल्पम् इषुधिं प्रविश्य अर्द्धचन्द्राकारत्वात् अर्द्धचन्द्राख्या इषवः भवन्ति, विनाशसमये अपि अयं परापकारनिरतः इति ध्वन्यते। तूणी अल्पत्वविवक्षया स्त्रीत्वे गौरादित्वात् ङीप् प्रत्ययः ॥ ११५ ॥

निरन्तरेति। हे तन्वि ! ताराणां नक्षत्राणां सहस्राणि निरन्तरत्वेन अन्योन्यसम्बन्धतया विधाय एकीकृत्य यदि अन्यः सुधांशुः क्रियेत निर्मीयेत, तदा तर्हि सः चन्द्रः ताराणाम् अकलङ्कत्वात् तन्मयत्वाच्च कलङ्केन मुक्तः सन् त्वदास्यस्य श्रियं शोभाम् आश्रयेत। क्रियानियतेः अविवक्षितत्वात् लृङभावः। ११६ ॥

यदिति। हे मृगाक्षि ! यत् पद्मं तव आननीयां मुखसम्बन्धिनीं लक्ष्मीम् आदित्सु ग्रहीतुकामं कुरङ्गलक्ष्मा चन्द्रश्च तव मुखशोभां ग्रहीतुकामः तयोः शशाङ्कपङ्केरुहयोः एषः विरोधः सः त्वन्मुखशोभालक्षणः एकः अर्थः तस्य लिप्साकृतः प्राप्तिवाञ्छानिमित्तः एव इत्यहं शङ्के। एकद्रव्याभिलाषित्वेन विरोधः सुप्रसिद्धः। चन्द्रपद्मयोरपि विरोधः प्रसिद्धः एव। चन्द्रपद्माभ्यां सकाशात् ते मुखम् अधिकमिति भावः।

लब्धं न लेखप्रभुणाऽपि पातुं पीत्वा मुखेन्दोरधरामृतं ते ।
निपीय देवैर्विवशीकृतायां घृणां विधोरस्य दधे सुधायाम् ॥११८
एनं स बिभ्रद्विधुमुत्तमाङ्गे गिरीन्द्रपुत्रीपतिरोषधीशम् ।
अश्नाति घोरं विषमब्धिजन्म धत्ते भुजङ्गं च विमुक्तशङ्कः ॥११९॥
नास्य द्विजेन्द्रस्य बभूव पश्य दारान् गुरोर्यातवतोऽपि पातः ।

---

आदित्य, चन्द्रपक्षे लिङ्गविपरिणामः । लक्ष्मीम् इति न लोकेति षष्ठीनिषेधः ॥ ११७ ॥

लब्धमिति । हे प्रिये ! अहं सर्वैः अपि देवैः विवशीकृतायां निःशेषं पीत्वा भुक्तशेषीकृतायाम् अस्य विधोः चन्द्रस्य सुधायां घृणां जुगुप्सां दधे धारयामि । किं कृत्वा ? लेखानां देवानां प्रभुणा इन्द्रेणापि पातुं न लब्धं कृतप्रयत्नस्य अपि तस्य आवरणात् तेन दुष्प्रापं, केनापि अनुच्छिष्टमित्यर्थः । ते मुखेन्दोः अधररूपम् अमृतं निपीय पीत्वा । चन्द्रसुधायाः सकाशात् त्वदधरामृतं स्वादुतरम् इति भावः । अन्योऽपि उच्छिष्टभोजने जुगुप्सां धारयति इत्यर्थः ॥ ११८ ॥

एनमिति । सः गिरीन्द्रपुत्रीपतिः शम्भुः एनम् ओषधीशं विधुम् उत्तमाङ्गे शिरसि बिभ्रत् धारयन् सन्, अब्धिजन्म समुद्रोत्पन्नं घोरं दारुणम् अपि विषम् अश्नाति, मुक्तशङ्कः भुजङ्गं सर्पं वासुकिञ्च धत्ते इत्यर्थः । शम्भोरपि उपकारकत्वेन पूज्यः श्रेष्ठः अयमिति भावः । ओषधिस्वामिनः अस्य शिरसि धारणादेव निःशङ्कं विषं भक्षयति सर्पान् च धारयति इत्युत्प्रेक्षा । भुजङ्गमिति जात्यभिप्रायेणैकवचनम् ॥ ११९ ॥

नेति । हे प्रिये ! द्विजेन्द्रस्य अस्य चन्द्रस्य गुरोः बृहस्पतेः दारान् भार्य्यां यातवतः अपि गुरुतल्पगामिनः अपि इत्यर्थः पातः स्वर्गात् भ्रंशः, अन्य च पातित्यं न बभूव पश्य ।

प्रवृत्तयोऽप्यात्ममयप्रकाशान् नघ्नन्ति न ह्यन्तिमदेहमाप्तान्
॥ १२० ॥

स्वधाकृतं यत् तनयैः पितृभ्यः श्रद्धापवित्रं तिलचित्रमम्भः ।
चन्द्रं पितृस्थानतयोपतस्थे तदङ्करोचिः खचिता सुधैव ॥१२१॥

---

चित्रमेतत् विलोकय इत्यर्थः । अथवा युक्तम् एतत् । प्रवृत्तयः धर्माधर्महेतुकर्मारम्भा अपि आत्ममायः आत्मस्वरूपमेव प्रकाशः येषां तान् प्रकाशान्तरनिरपेक्षान् प्रकाशस्वरूपान्, अथच परमात्मा एव प्रकाशः येषां तान् परमात्मस्वरूपातिरिक्तप्रकाशान् अभिज्ञान् स्वप्रकाशात्मवादिनः ब्रह्मज्ञानिनः अन्तिमदेहं तेजोरूपशरीरं पूर्णतां वा प्राप्तान्, अथच अनन्तरभाविमोक्षत्वात् प्रवीणशरीरप्रवाहापेक्षया शेषशरीरं प्राप्तान् जीवन्मुक्तान् पुरुषान् हि यस्मात् नघ्नन्ति शुभाशुभफलसम्बन्धेन न संबध्नन्तीत्यर्थः । तेषां तेजोविशेषेण प्रत्यवायो न विद्यते इति प्रामाणिकवचनात् तेजोरूपस्य अस्य चन्द्रस्य पातो न अभूदिति युक्तमेव, नात्र चित्रमिति भावः । चन्द्रोऽपि आत्ममयप्रकाशः अन्तिमदेहं सम्पूर्णतां प्राप्तः इति तात्पर्य्यम् ॥ १२० ॥

स्वधेति । तनयैः पुत्रैः श्रद्धया परलोकास्तित्वबुद्ध्या वितीर्णत्वात् पवित्रं कृष्णतिलैः चित्रं मिश्रितं पितृभ्यः स्वधाकृतं यत् अम्भः पितृस्थानतया "चन्द्रो वै पितृलोकः" इति श्रुतेः । पितृलोकतया चन्द्रम् उपतस्थे चन्द्रेण सङ्गतम् अभूदित्यर्थः । यत् कृष्णतिलमिश्रजलमेव अङ्कस्य कलङ्कस्य या रोचिः कान्तिः तया खचिता मिश्रिता सुधा पीयूषम् । कृष्णतिला एव कलङ्कः तत्संलग्नं जलमेव पीयूषं न तु अन्यः,

पश्योच्चसौधस्थितिसौख्यलक्ष्ये त्वं केलिकुल्याम्बुनि बिम्बमिन्दोः।
चिरं निमज्ज्येह सतः प्रियस्य भ्रमेण यच्चुम्बति राजहंसी ॥१२२

सौवर्गवर्गैरमृतं निपीय कृतोऽक्षि तुच्छः शशलाञ्छनोऽयम्।
पूर्णोऽमृतानां निशि तेऽत्र नद्यां मग्नः पुनः स्यात् प्रतिमाच्छलेन
॥ १२३ ॥

---

कलङ्को न चान्यत् पीयूषमित्यर्थः। अत्रेति पितृलोकप्राप्तौ हेतुगर्भविशेषणम्। उपतस्थे सङ्गतकरणे तङ्॥ १२१ ॥

पश्येति। हे प्रिये! त्वम् उच्चसौधस्थित्या कृत्वा सौख्येन निरन्तरायं लक्ष्ये दृश्ये केलिकुल्यायाः अम्बुनि तदिन्दोः बिम्बं पश्य। तत् किम्? राजहंसी इह कुल्याजले निमज्ज्य चिरं सतोः अन्तर्वर्त्तमानस्य प्रियस्य राजहंसस्य भ्रमेण यत् चन्द्रबिम्बं चुम्बति। सौख्यं स्वार्थे सुखिनः भावः इति भावे वा ष्यञ्। सौक्ष्म्येति पाठे सूक्ष्मत्वेन लक्ष्ये। उच्चतरदेशस्थितं प्रत्यधोदेशस्थितं वस्तु सूक्ष्मं प्रतिभाति इत्यर्थः॥१२२॥

सौवर्गेति। स्वर्गे भवाः सौवर्गाः देवाः तेषां वर्गैः वृन्दैः अमृतं निपीय अक्षि तुच्छः रिक्तः कृतः अयं शशलाञ्छनः निशि ते तव अत्र क्रीडानद्यां प्रतिमाच्छलेन प्रतिबिम्बव्याजेन मग्नः सन् पुनः अमृतानां जलैः अथच पीयूषैः पूर्णः स्यात् भवेत् इति अहं सम्भावयामि इत्यर्थः। एतेन नदीजलस्य अमृतत्वं सूचितम्। अक्षि तुच्छः कृतोऽपि पुनः क्रमेण अमृतैः पूर्णः सन् रात्रौ तव क्रीडानद्यां प्रतिमाव्याजेन मग्नः पुनः पानभयात् इव पलाय्य निलीनः स्यात् इति अहं शङ्के इति वा। पूर्णोऽमृतानां तृप्त्यर्थत्वात् करणे षष्ठी ॥ १२३ ॥

समं समेते शशिनः करेण प्रसूनपाणाविह कैरविण्याः।
विवाहलीलामनयोरिवाह मधुच्छलत्यागजलाभिषेकः ॥१२४॥
विकासिनीलायतपुष्पनेत्रा मृगीयमिन्दीवरिणी वनस्था।
विलोकते कान्तमिहोपरिष्टान्मृगेन्त्वदेवाऽऽननचन्द्रभाजम् १२५

---

सममिति। इह तव क्रीडानद्यां कैरविण्याः कुमुदिन्याः प्रसूनरूपे पाणौ शशिनः करेण रश्मिना अथच पाणिना समं सह समेते सङ्गते सति मधु पुष्परसः एव छलं यस्य तस्य त्यागजलस्य कन्यादानसम्बन्धिसङ्कल्पोदकस्य अभिषेकः कर्त्ता अनयोः चन्द्रकुमुदिन्योः विवाहलीलाम् आह इव सूचयति इव। चन्द्रकरस्पर्शमात्रेण कुमुदानि विकसितानि मकरन्दपूर्णानि च जातानीति भावः। विवाहे उभयोः पाणिमेलनं, पाणौ दानजलाभिषेकोऽपि भवति इति तात्पर्य्यम् ॥ १२४ ॥

विकासीति। हे प्रिये! इह तव केलिनद्यां वनस्था जलनिवासिनी अथच काननस्था, तथा विकासि नीलम् आयतं विस्तृतञ्च पुष्पम् एव नेत्रं यस्याः तत्तुल्यनेत्रा च इयं प्रत्यक्षदृश्या इन्दीवरिणी यस्मात् मृगी वनस्थत्वात् विकासिनीलायतपुष्पनेत्रत्वाच्च हरिणी तत् तस्मात् इन्दीवरिणीरूपा मृगी आननम् इव यः चन्द्रः सामर्थ्यात् त्वदाननम् यः चन्द्रः तद्भाजं तत्स्थं कान्तं सुन्दरम् अथच तुल्यजातीयं स्वप्रियं मृगम् उपरिष्टात् विलोकते। विकसितकुसुमनेत्राणि ऊर्द्ध्वप्रसारितानि दृश्यन्ते तर्हि प्रायेण चन्द्रस्थम् उपरि वर्त्तमानं निजभर्त्तारं मृगं मृगी पश्यति इत्यर्थः। त्वदाननम् एव यः चन्द्रः तत्रस्थं चन्द्रत्वात् अनुमेयमृगम् उपरिष्टात् पश्यति। त्वं प्रासादोपरि वर्त्तसे, इयञ्च अधोदेशे वर्त्तते

तपस्यतामम्बुनि कैरवाणां समाधिभङ्गे विबुधाङ्गनायाः ।
अवैमि रात्रेरमृताधरोष्ठं मुखं मयूखस्मितचारु चन्द्रम् ॥१२६॥
अल्पाङ्कपङ्का विधुमण्डलीयं पीयूषनीरा सरसी स्मरस्य ।
पानात् सुधा नाम जलेऽप्यनल्पं चिह्नं बिभर्त्त्यब्रभवं स मीनम्
॥ १२७ ॥

---

नवेति पदच्छेदं कृत्वा चन्द्रभाजं निजप्राणेशं मृगम् उपरि-ष्टान्न पश्यतीति न किन्तु पश्यत्येवेति व्याख्येयम्। वनस्था मृगी हि नीलायतनेत्रा सती स्वकान्तं मृगम् इतस्ततः विलो-कयति इत्यर्थः। अशम् इति अपपाठः। मृगपर एव वा व्याख्येयम् ॥ १२५ ॥

तपस्यतामिति। हे प्रिये! अम्बुनि सदा निवासात् तत्र तपस्यतां कैरवाणां कुमुदानां समाधेः दिवासङ्कोचस्यैव ध्यानस्य भङ्गे त्याजने विषये निमित्ते वा विबुधाङ्गनायाः अप्सरोरूपायाः रात्रेः चन्द्रं मुखम् एव अहम् अवैमि मन्ये। किम्भूतं मुखम्? अमृतम् एव अधरोष्ठं यस्याः अथच अमृत-तुल्यम् अधरोष्ठं यस्य यद्वा अमृतम् अधरं यस्मात् पीयूषात् अधिकरसः ओष्ठः यस्य, तथा मयूखाः एव स्मितम्। अथच तत्समाधिभङ्गात् एव चन्द्रकरवत् उज्ज्वलं यत् स्मितं तेन वा चारु। चन्द्रविशेषणे लिङ्गविपरिणामः। देवाङ्गनानाम् अपि एवंविधं मुखं रात्रौ जले तपस्यतां दुश्वरं तपश्चरतामपि मुनीनां समाधिभङ्गं करोति। तपस्यतामिति तपश्चरत्नी-त्यर्थे कर्मणो रोमन्थतपोभ्यामिति क्यप्, तपसः परस्मैपदञ्चेति शता ॥ १२६ ॥

अल्पेति। अल्पः अङ्कः एव पङ्कः यस्यां तथा पीयूषमेव नीरं यस्यां सा इयं विधुमण्डली स्मरस्य सरसी विशालं सरः

ताराखिभूषा शशिजह्नुजाभृच्चन्द्रांशुपांशुच्छुरितद्युतिर्द्यौः।
छायापथाश्लिष्टफणीन्द्रहारा: स्वं मूर्त्तिमाह स्फुटमष्टमूर्त्तेः
॥ १२८ ॥

एकैव तारा मुनिलोचनस्य जाता किलैतज्जनकस्य तस्य।
ताताधिका सम्पदभूदियं तु सप्तान्विता विंशतिरस्य ताराः॥ १२९ ॥

---

एव, अतएव सः स्मरः अत्र भवम् अस्यां चन्द्रसरस्यां समुत्पन्नं सुधानामितदीयामृतपानीयजले जलरहिते अपि स्थले जलाभावे अपि वा अमृत्युं मरणरहितं मीनं चिह्नम् अथच सुधासरोजातत्वात् अनुमापकं लिङ्गं बिभर्त्ति। मीनाः हि जलात् वहिर्भूताः म्रियन्ते एव अयं तु न म्रियते, तस्मात् चन्द्रामृतसरसि भवत्वात् सदामृतपानात् जलाभावेऽपि मृत्युरहितः इति सर्वं युक्तमित्यर्थः॥ १२७॥

तारेति। द्यौः स्वम् आत्मानम् अमूर्त्तेः हरस्य मूर्त्तिं शरीरं स्फुटं व्यक्तम् आह ब्रवीति, यतः तारा: एव अस्थीनि तद्रूपा भूषा यस्याः, तथा शशिनम् एव जह्नुजां गङ्गां बिभर्त्तीति तद्भृत्, तथा चन्द्रांशवः एव पांशवः भस्मानि तैः छुरिता कृताङ्गरागा द्युतिः यस्याः सा, तथा छायापथा गगने दण्डाकाराः दक्षिणोत्तरस्थाः धवला रेखा छद्म यस्य छायापथरूपः फणीन्द्रः वासुकिः सः एव मुक्ताहारः यस्याः सा हरमूर्त्तिः अपि उक्तविशेषणविशिष्टा, द्यौरपि एतादृशीति मूर्त्त्यन्तरापेक्षया व्यक्तमेव महेशस्य मूर्त्तिः गगनं कथयतीव इत्यर्थः॥ १२८॥

एकेति। एतस्य चन्द्रस्य जनकस्य तस्य प्रसिद्धस्य अत्रिमुनिलोचनस्य तारा कनीनिका किल एका एव जाता अभूत् किल पुराणादौ। अस्य तत्पुत्रस्य तु पुनः इयं दृश्यमाना

मृगाक्षि ! यन्मण्डलमेतदिन्दोः स्मरस्य तत्पाण्डुरमातपत्रम् ।
यः पूर्णिमानन्तरमस्य भङ्गः स छत्रभङ्गः खलु मन्मथस्य ॥१३०॥
दशाननेनापि जगन्ति जित्वा योऽयं पुराऽपारि न जातु जेतुम् ।
ग्लानिर्विधोर्मानिनि ! सङ्गतेयं तस्य त्वदेकाननिर्जितस्य १३१

---

सम्पत् तातात् निजपितुः अत्रिनेत्रात् सकाशात् अधिका, यत् यस्मात् अस्य ताराः कनीनिकाः, अथच नक्षत्राणि सप्तभिः अन्विता विंशतिः अभूत् इति छलम् । पितुः सकाशात् अधिकसम्पत्तित्वात् सभाग्योऽयमिति भावः । "सप्तविंशतिमिन्दवे" इति दक्षः सप्तविंशतिकन्याः अश्विन्यादिकाश्चन्द्राय ददौ इति पुराणम् ॥ १२९ ॥

मृगाक्षीति । हे मृगाक्षि ! हरिणीनेत्रे ! यत् एतत् प्रत्यक्षदृश्यम् इन्दोः मण्डलं तत् स्मरस्य पाण्डुरं श्वेतं साम्राज्यसूचकम् आतपत्रमेव । श्वेतच्छत्रदर्शने सति सम्राजः वश्याः भवन्ति पूर्णधवलचन्द्रमण्डलस्य चोद्दीपकत्वात् तद्दर्शने सर्वेऽपि कामस्य वश्या भवन्ति, तस्मात् एतत् कामस्य श्वेतातपत्रमेव इति भावः । यश्च पूर्णिमानन्तरम् एतस्य छत्रभूतस्य इन्दुमण्डलस्य भङ्गः मोटनं कलाक्षयश्च सः मन्मथस्य छत्रभङ्गः खलु, छत्रस्य मोटनं राज्यक्षयं सूचयति इत्यर्थः । कृष्णपक्षे चोद्दीपकमित्रचन्द्रक्षये कामः क्षीणः एव, तस्मात् कृष्णपक्षे यः अस्य भङ्गः सः कामस्य छत्रभङ्गः इव सः एव वा इति भावः । खलु उत्प्रेक्षायां, निश्चये वा ॥ १३० ॥

दशेति । दिग्विजयोद्यतेन दशाननेन अपि जगन्ति जित्वा अपि यः अयं चन्द्रः पुरा पूर्वं जातु कदाचित् अपि जेतुं न अपारि, हे मानिनि ! स्वमुखस्पर्द्धिनं चन्द्रम् असहमाने ! नैमित्तस्य अस्य विधोः इयं प्रत्यक्षदृश्यकलङ्करूपा

दृष्टो निजां तावदियन्त्यहानि जयन्नयं पूर्वदशां शशाङ्कः।
पूर्णस्त्वदास्येन तुलां गतश्चेदनन्तरं द्रक्ष्यसि भङ्गमस्य॥ १३२॥
त्वत्राणि रामः परिभूय रामात् त्वत्राय्यथाऽभज्यत स द्विजेन्द्रः।

ग्लानिः लज्जा सङ्गता लब्धा, अथच युक्ता एव। यतः तव एकेन आननेन नितरां जितस्य। यो हि दशाननेन दशभिरपि मुखैर्जेतुं नाशकि तस्य स्त्रियास्तव एकेन मुखेन निर्जितत्वे लज्जया मालिन्यम् उचितमेव इत्यर्थः। त्वन्मुखम् एतस्मात् अधिकम् इति भावः। लज्जया ग्लानिर्भवतीति प्रतीयमानोत्प्रेक्षा। रावणश्चन्द्रं जेतुं प्रवृत्तः तुषाराग्निना दह्यमानः कम्पमानतनुः तम् अजित्वैव परावृत्तः इति उत्तरकाण्डे कथा ॥ १३१॥

दृष्ट इति। अयं शशाङ्कः इयन्ति एतावन्ति अहानि शुक्लपक्षदिनानि तावत् अवधीकृत्य निजां पूर्वदशां पूर्वपूर्वदिनावस्थां जयन् निकामम् उत्तरोत्तरदिनेषु कलावृद्ध्या अधिकीभवन् त्वया दृष्टः, इयन्ति दिनानि जयन् तावत् जयन्नेव दृष्टः इति अवधारणार्थो वा तावच्छब्दः, अनया एव परिपाट्या पूर्णविम्बः अयं त्वदास्येन सह तुल्यं साम्यम् अथच तोलनकाष्ठं गतः आरूढः चेत् तर्हि अनन्तरं निकटं तदैव वा: प्रभृत्येव अस्य भङ्गं पराजयं कलाक्षयञ्च द्रक्ष्यसि, उत्तमेन सह स्पर्द्धमानो हि भङ्गं प्राप्नोत्येव इत्यर्थः। तुलादिव्येन हि हीनस्य पराजयः सर्वैर्दृश्यते इति भावः। अहानि इति अत्यन्तसंयोगे द्वितीया। त्वदास्येनेति तुल्यार्थैः अतुलोपमाभ्यामिति निषेधेऽपि सहयोगे तृतीया। तथाच कालिदासः "तुलां यदारोहति दन्तवाससा" इत्यादि ॥ १३२॥

त्वत्राणीति। द्विजेन्द्रः जमदग्न्यपत्यत्वात् सः अतिप्रसिद्ध-

तथैव पद्मानभिभूय सर्वांस्त्वदास्यपद्मं परिभूतिमेति ॥१३३॥
अन्तः सलक्ष्मीक्रियते सुधांशो रूपेण पश्ये! हरिणेन पश्य ॥
इत्येष भैमीमदर्शदस्य कदाचिदन्तं स कदाचिदन्तः ॥१३४॥

---

पराक्रमः रामः परशुरामः सर्वाणि क्षत्राणि परिभूय अपि क्षत्रात् एव रामात् दाशरथेः सकाशात् यथा अभजत पराभवं प्राप तथा तेनैव प्रकारेण एषोऽपि द्विजराजः सर्वान् पद्मान् अभिभूय सङ्कोचकरणात् पराभूय अपि तद्वक्त्रपद्मात् सकाशात् परिभूतिं पराभवम् एति सकलक्षत्रियाधिक्यं यथा श्रीरामस्य तथा सर्वपद्माधिक्यं त्वन्मुखपद्मस्य इति भावः। वा पुंसि पद्ममित्यमरः॥ १३३॥

अन्तरिति। हे पश्ये! चन्द्रदर्शनप्रवृत्ते! भैमि! हरिणेन पाण्डुरेण रूपेण वर्णेन कर्त्रा सुधांशोः अन्तः प्रान्तभागः पूर्वम् अश्रीकः अपि इदानीं सलक्ष्मीक्रियते सलक्ष्मीकः क्रियते त्वं पश्य। अथच चन्द्रस्य मध्यं हरिणेन मृगेण कर्त्रा रूपेण स्वीयनीलवर्णेन कृत्वा असलक्ष्म सलक्ष्म क्रियते सलक्ष्मीक्रियते सकलङ्कं क्रियते इत्यर्थः। पश्य एषः सः नलः इति अमुना प्रकारेण अस्य चन्द्रस्य अन्तं पर्य्यन्तभागं कदाचित् ईक्षमाणां भैमीम् अदर्शत् दर्शयामास, कदाचिच्च अन्तः मध्यभागं दर्शयामास। अङ्गुल्यादिना चन्द्रश्वेतनील-प्रान्तमध्यभागदर्शनपूर्वश्लिष्टपदैः तया सह क्रीडां चकारेति भावः इति मध्ये कवेरुक्तिः। हरिणः पाण्डुरः पाण्डुरित्व-मरः। अन्त इत्यकारान्तमेकत्र अन्तरित्यव्ययमपरत्र मध्य-वाचि। लक्ष्मीशब्दस्य समासान्तविधेः अनित्यत्वात् कवभावे सलक्ष्मीशब्दात् च्विः, पक्षे सलक्ष्मशब्दात् च्विः। पश्ये इति

सागराम्बुनिविलोचनोदरात्
यद्द्वयादजनि तेन किं द्विजः ।
एवमेव च भवन्नयं द्विजः
पर्य्यवस्यति विधुः किमत्रिजः ॥ १२५ ॥
ताराविहारभुवि चन्द्रमयीं चकार
यन्मण्डलीं हिमभुवं मृगनाभिवासाम् ।

पाघ्राधे त्यादिना कर्त्तरि एव शः। दृशेर्बुध्यर्थत्वात् गतिबुद्धीति अणौ कर्त्तुर्णौ कर्मत्वात् भैमीमिति द्वितीया ॥ १२४ ॥

सागरादिति। अयं चन्द्रः सागरात् मुनिविलोचनोदराच्च एतद्रूपात् द्वयात् सकाशात् यत् यस्मात् अजनि उत्पन्नः तेन कारणेन द्वाभ्यां जातत्वात् द्विजः किं, एवमेव चानयैव रीत्या द्वाभ्यां जातत्वादेव द्विजो भवन् अपि अयं विधुः अत्रेः मुनेः जातः किं कथं पर्य्यवस्यति, द्वाभ्यां जातत्वे सति अपि अत्रि-मुनेः एव जातः इति तात्पर्य्यवृत्त्या कथमुच्यते इत्यर्थः। अथ चैवम् एव यथा अनेन प्रकारेण द्विजत्वं तथैव अत्रिमुनिजः भवन् अयं द्विजः पर्य्यवस्यति। किं द्वाभ्यां जातत्वात् यथा द्विज उच्यते तथा द्विजात् अत्रिमुनेः जातत्वादपि द्विजः उच्यते, द्विजोत्पन्नः हि द्विजः एव भवतीत्यर्थः। अथ न द्वाभ्यां जातत्वात् द्विजोभवन्नेवं न त्रिभ्यो जातः इति अत्रिज इति तात्पर्य्यवृत्त्या कथ्यते। यो हि द्वाभ्यां जायते सः त्रिजः न भवति, एवमेवायम् अत्रिजः कथ्यते किमित्यर्थः। द्विजस्त्रिजो न भवत्येव इति भावः ॥ १२५ ॥

तारेति। हे तन्वि! क्षमाङ्गि! धाता ताराणां नक्षत्राणां विहारभुवि गगने चन्द्रमयीं मण्डलीं विम्बं जिनस्य पुराणपुरुषस्य श्रीविष्णोः मते अनुमतौ सत्यां तदादिष्टः

तेनैव तन्वि ! सुकृतेन मते जिनस्य
स्वर्लोकलोकतिलकत्वमवाप धाता ॥ १३६ ॥
इन्दुं मुखाद् बहुलघुं तव यद् गृणन्ति
नैनं मृगस्त्यजति तन्मृगतृष्णयेव ।
अत्येति मोहमहिमा न हिमांशुबिम्ब-
लक्ष्मीविडम्बिमुखि ! वृत्तिषु पामरीषु ॥१३७॥

---

सन् यत् चकार निर्ममे तेनैव सुकृतेन शोभनेन लोकोत्तर-व्यापारेण कृत्वा स्वर्लोकः स्वर्गभुवनं तत्सम्बन्धिनां लोकानां सुराणां मध्ये तिलकत्वं श्रेष्ठत्वम् आप। किंभूतां मण्डलीं ? हिमस्य तुषारस्य भुवं स्थानभूताम् अतिशीतलां, तथा मृगस्य नाभौ मध्ये वासः यस्याः तां, यस्याः मध्ये मृगोऽस्तीति यावत् तादृशीम्, अन्येषां सुराणाम् एतादृक्व्यापारकरणे सामर्थ्या-भावात् ब्रह्मैव श्रेष्ठोऽभूत् इत्यर्थः। अथच ताराया: बुद्धदेव्याः विहारस्थाने हिमभुवं शीतलां शुभ्रत्वात् हिमाचलरूपां वा, तथा मृगनाभेः कस्तूर्य्याः वासः परिमलः अवस्थानं वा यस्यां तां, कस्तूरीमिश्रितां चन्द्रमयीं कर्पूरमयीं कर्पूरराशिं यत् चकार तेनैव पुण्येन जिनमते बौद्धदर्शने ब्रह्मा सुरश्रेष्ठत्व-मधत्त। बौद्धा हि बुद्धदेवप्रासादे यः तत्पूजार्थं कस्तूरीराशिं करोति स लोकमध्ये श्रेष्ठो भवतीति स्वदर्शने प्रत्यपादयन्। ब्रह्मा चैवमकृत तस्मादेव सर्वश्रेष्ठो जातः इत्यर्थः। तेनैवेति पाठे उत्प्रेक्षा। बुद्धदेव्यां मता तारा इति भावः॥ १३६॥

इन्दुमिति। हे हिमांशुबिम्बस्य लक्ष्म्या: शोभायाः विडम्बि स्वस्मात् न्यूनत्वात् परिहासकारि ततोऽपि अधिक-शोभं मुखं यस्याः तादृशि भैमि ! पण्डिताः इन्दुं तव मुखात्

स्वर्भानुना प्रसभपानविभीषिकाभिः
दुःखाकृतैनमवधूय सुधा सुधांशुं
स्वं निह्नुते सितिमचिह्नममुष्य रागैः
ताम्बूलताम्रमवलम्ब्य तवाधरोष्ठम् ॥ १३८ ॥

---

सकाशात् त्वन्मुखम् अपेक्ष्य वा बहुतृणम् ईषदसमाप्तं तृणं तृणत्वम् अपि यस्य पूर्णं न सम्पन्नं तृणादपि निःसारम् इति यावत्। अथच बहु अधिकं तृणं यस्मात् तृणादपि निःसारं यत् यस्मात् तृणम्ति, तत् तस्मात् हेतोः मृगः एनं चन्द्रं मृगसम्बन्धिन्या तृष्णया कोमलतृणकवलनाभिलाषेणैव अथवा चन्द्रे प्रयुक्तस्य बहुतृणशब्दस्य बहु च तत् तृणञ्च बहूनि तृणानि यस्मिन् तादृशम् इत्येव रूपार्थग्रहणरूपया भ्रान्त्या एव न त्यजति। मृगो हि बहु च तृणं बहुतृणं देशं वा न मुञ्चति। ननु अनुभवे सत्यपि आसंसारं कथं भ्रान्तिबाहुल्य-मित्याशङ्क्य अर्थान्तरन्यासमाह। पाशवीषु पशुसम्बन्धिनीषु वृत्तिषु व्यापारेषु विषये मोहमहिमा भ्रान्तिबाहुल्यं न अत्येति, बहुकालातिक्रमे न अपयाति। पशवो हि सर्वदा मूढा एवेति अद्यापि मृगस्य भ्रान्तिर्नापयाति तस्मा[illegible]मं न त्यजतीति युक्तमित्यर्थः। मुखात् इति ल्यब्लोपे [illegible]मी। बहुतृणम् इति ईषदसमाप्तौ विभाषासुपो बहुजिति बहुच् ॥१३७॥

स्वर्भानुरिति। हे प्रिये! सुधा एनं सुधांशुम् अवधूय त्यक्त्वा तव अधरोष्ठम् अवलम्ब्य अमुष्य रक्तस्य ओष्ठस्य रागैः रक्तवर्णैः कृत्वा, सितस्य भावः सितिमा धावल्यमेव चिह्नं यस्य तादृशं धवलरूपमपि स्वम् आत्मानं निह्नुते पुनः स्वर्भा

इर्य्यक्षीभवतः कुरङ्गमुदरे प्रक्षिप्य यद्वा शशं
जातस्फीततनोरमुष्य हरिता सूतस्य पद्मा हरेः।

नुपानभिया तिरोदधाति। यतः स्वर्भानुना वारंवारं प्रसभपानेन विभीषिकाभिः भयोत्पादनैः कृत्वा दुःखाकृता प्रातिलोम्याचरणोत्पादितदुःखा। किम्भूतम् अधरोष्ठम्? प्रसिद्धस्य ताम्बूलस्येव ताम्रः वर्णः यस्य ताम्बूलेनैव वा ताम्रं रक्तवर्णम्। पुरा राहुपानभिया त्वदधरमेव स्थानान्तरम् आश्रित्य रूपान्तरेण आत्मानं गोपायति इत्यर्थः। अन्योऽपि सभयं स्थानं हित्वा स्थानान्तरमाश्रित्य तत्रापि रूपान्तरं धृत्वा स्वं निह्नुते। सुधया चन्द्रस्य परित्यागात् त्वन्मुखाश्रयणात् त्वन्मुखं चन्द्रात् अधिकम् इति भावः। ताम्बूलताम्रम् इति उत्प्रेक्षया उपमोत्प्रेक्षा वा। दुःखाकृता इति दुःखात् प्रातिलोम्ये इति डाच्॥ १३८॥

हर्य्यक्षीति। हे प्रिये! मतभेदेन कलङ्करूपं कुरङ्गं यद्वा शशम् उदरे मध्ये प्रक्षिप्य जाता स्फीता पूर्णा तनुः यस्य हरेः इन्द्रस्य पद्मा हरिता प्राच्या दिशा सूतस्य तव उदितस्य पूर्णस्य अतएव हरेः श्रीविष्णोः वामाक्षीभवतः। यद्वा सञ्जातपूर्णशरीरस्य मृगं यद्वा शशं कलङ्कं मध्ये निक्षिप्य मध्यस्थितकलङ्कस्य कनीनिकातुल्यत्वात् श्रीविष्णोः वामनेत्रीभवतः अमुष्य चन्द्रस्य तद्वदनाम्बुजात् सकाशात् यत् भङ्गः पराजयः अजनि तत् एकाकिनः सर्वदा असहायात् एकस्मात् पद्मात्, न तु अन्यस्मात् कमलात्, न हि अन्यैः पद्मैः अयं पराजीयते प्रत्युत अयमेव पद्मानि पराजयति इत्यर्थः। अथवा अम्बुजतुल्यात् त्वद्वदनादेव पद्मात् अयञ्च पद्मसहा-

भङ्गस्त्वद्वदनाम्बुजादजनि यत् पद्मात्तदेकाकिनः
स्यादेकः पुनरस्य स प्रतिभटो यः सिंहिकायाः सुतः॥ १३८॥

---

कात् त्वद्वदनरूपात् अम्बुजात् यत् अस्य भङ्गः जातः तत् एकाकिनः असहायस्य स्यात् भवेत्, बहुभिः एकः पराजीयते इति युक्तमेव इत्यर्थः। यः सिंहिकायाः सुतः राहुः सः पुनः एकः अन्यः अस्य प्रतिभटः प्रतिमल्लः पराभावुकः राहुरेव न तु अन्य इति भावः। सम्प्रतीति पाठे, अद्य पुनः अस्यैकः भटः प्रतिभटः सिंहिकायाः सुतः स्यात् एकाकिनः अस्य त्वन्मुखपद्मः प्रतिद्वन्द्वी न भवति अतुल्यत्वात्, किन्तु एकाकी राहुरेव अस्य प्रतिभटो युक्तः इत्यर्थः। किञ्च, स्वशत्रुभूतात् राहोः अपि अस्य अन्यः पराजयः इति महत् अस्य कष्टं प्राप्तमित्यर्थः। अथच हरिद्वर्णया हरेः सिंहस्य पत्न्या सिंहिकया प्रसूतस्य तथा मृगं शशं वा यं कञ्चन पशुं जठरे निक्षिप्य भक्षयित्वा स्थितस्य अतएव सञ्जातपुष्टशरीरस्य अतएव हर्य्यक्षीभवतः सिंहतां प्राप्नुवतः अस्य त्वन्मुखात् यः पराजयः अजनि सः एकाकिनः केवलात् पद्माम्बुजात् एव पराजयः। सिंहस्य गजात् भङ्गः यथा तद्वत् एतत् महत् चित्रमित्यर्थः। अथच पद्मसङ्ख्यकात् एकस्य पराजयः। सिंहोऽपि एको बहुसंख्यैः पराजीयते एव इत्यर्थः। अथच पद्मात् शरभात् अष्टपदात् एव भङ्गः सिंहस्य केवलम् अष्टपदात् एव भङ्गः, पद्मचन्द्राभ्यां सकाशात् त्वन्मुखम् अधिकमिति भावः। हर्य्यक्षः केशरी हरिरित्यमरः। शशाङ्क-शरभाः अष्टपदा इति अनेकार्थभाजः। प्रथमपक्षे हर्य्यक्षि-शब्दात् च्विः, द्वितीयपक्षे हर्य्यक्षशब्दादेव॥१३८॥

यत्पूजां नयनद्वयोत्पलमयीं वेधा व्यधात् पद्मभू:
वाक्पारीणरुचि: स चेन्मुखमयं पद्म: प्रिये तावकम्।
क: शीतांशुरसौ तदा मखमृगव्याधोत्तमाङ्गस्थल-
स्थास्नु स्वस्तटिनीतटावनिवनीवानीरवासी वक:॥ १४०॥

---

यदिति। हे प्रिये! वेधा:, नयनद्वयमेव उत्पलं तन्मयीं तद्रूपां तदुचितां यस्य पद्मस्य पूजां व्यधात् व्यरचयत्। यत: असौ श्रीविष्णो: नाभौ वर्त्तमानात् पद्मात् भवतीति पद्मभू:। स हि स्वजनकस्य पद्मस्य पितृभक्त्या नेत्रद्वयेनैव नीलोत्पलयुगेन महतीं पूजामकृतेति भाव:। वाक्पारीणा वाच: परतीरे भवा: वाचा वर्णयितुम् अशक्या रुचि: यस्य स: अयं पद्म: चेत् तावकं मुखं स: एव भवन्मुखरूप: जात: इत्यर्थ:। अनन्तरं ब्रह्मणा स्वपितृबुद्ध्या नेत्रनीलोत्पलाभ्यां कृतपूजनत्वात् अत्र तव मुखे नीलोत्पलं दृश्यते इत्यर्थ: इति चेत् तर्हि असौ शीतांशु: को नाम? अपितु न कश्चित्, त्वन्मुखस्य पुरस्तात् अयं क:? स्मरणार्होऽपि न इत्यर्थ:। तर्हि असौ क:? इति चेत् तत्राह। अयं वक:, किम्भूत:? मख: दक्षमख: एव मृग: तस्य व्याध: हरस्य उत्तमाङ्गं शिर: तल्लक्षणे स्थले स्थास्नु: स्थितिशीला स्वस्तटिनी स्वर्गङ्गा तस्या: तटावन्यां तीरभूम्यां या वनी महत् अल्पं वा यत् काननं तत्र ये वानीरा: वेतसा: तन्मध्यवासी। चन्द्रस्य हरजटाजूटवासो इति प्रसिद्धम्। वाक्पारीणरुचि: इति ब्रह्मविशेषणं वा। अत्र यदपत्यस्य ब्रह्मणोऽपि सौन्दर्य्यं वागगोचरं तत्पितु: पद्मस्य सौन्दर्य्यं मनसोऽपि गोचरं न भवति इत्यर्थ:। त्वन्मुखस्य चन्द्रस्य च महत् अन्तरं साम्यसम्भावना अपि नास्ति इति भाव:।

जातं शातक्रतव्यां झरिति विहरतः काकतालीयमस्याम्
अश्यामत्वैकमत्यस्थितसकलकलानिर्मितेर्निर्मलस्य ।
इन्दोरिन्दीवराभं बलविजयिगजग्रामणीगण्डपिण्ड-
द्वन्द्वापादानदानद्रवलवगलनादङ्कमङ्के विशङ्के ॥ १४१ ॥

---

एतेन चन्द्रादिसुन्दरवृन्दं ब्रह्मणा सृष्टं, भवदीयमुखपद्मं तु ब्रह्मणोऽपि स्रष्टृत्वात् सर्वाधिकमिति सूचितम्। मखमृगेत्यादिना चन्द्रस्य अतिदैन्यं सूचितं, त्वन्मुखसाम्यप्राप्त्यर्थं तपश्चरणं सूचितम्। अन्योऽपि विशिष्टवस्तुप्राप्तये शिवस्थानयुक्तनदीतीरवासी तपस्यति। नदीतीरवानीरवासित्वं वकजातिः। वाक्पारीणा इति भवार्थे राष्ट्रावारपाराद् घखौ इत्यत्रापि विगृहीतादपीति वचनात् खः ॥१४०॥

जातमिति। अहं इन्दोः अङ्के बलविजयिनः इन्द्रस्य गजग्रामणीः हस्तिषु मध्ये प्रधानं प्राच्यामेव वर्त्तमानः यः ऐरावतः तस्य गण्डयोः कपोलयोः पिण्डयोः शिरःस्थितकुम्भस्थलयोश्च ये द्वे द्वन्द्वे गण्डद्वन्द्वञ्च पिण्डद्वन्द्वञ्च ते एव अपादानं निर्गमनस्थानं येषां ते च ते दानद्रवलवाः मदजललेशाश्च तेषां गलनात् सम्पर्कात् काकतालीयम् आकस्मिकं दैवसिद्धम् इन्दीवराभं नीलोत्पलतुल्यं जातम् एकं कलङ्कं विशङ्के मन्ये। किम्भूतस्य इन्दोः? अस्याम् अङ्गुलीनिर्दिष्टायां पुरोदृष्टायां शतक्रतोः इयं शातक्रतवी तस्यां हरिति दिशि विहरतः उद्गच्छतः, तथा अश्यामत्वे विषये ऐकमत्यं सर्वसंवादः तेन तत्र वा स्थिताभिः वर्त्तमानाभिः सकलाभिः पञ्चदशभिः अपि कलाभिः कृत्वा निर्मितिः यस्य, अश्यामत्वैकमत्येन स्थिता सकलकलानिर्मितिः यस्य सः तादृशस्य वा। अतएव निर्मलस्य प्रत्येकं

अंशं षोडशमामनन्ति रजनीभर्त्तुः कलां हृत्तय-
न्त्येनं पञ्चदशैव ताः प्रतिपदाद्याराकवर्द्धिष्णवः ।
या शेषः पुनरुद्धृता तिथिमृते सा किं हरालङ्कृतिः
तस्याः स्थानविलं कलङ्कमिह किं पश्यामि सश्यामिकम् ॥१४२॥

---

कलानां धावल्यस्य दृष्टत्वात् धवलसकलकलानिर्मितत्वात् कारणधावल्यात् धवलस्य, अश्यामत्वैकमत्येन स्थिताः याः सकलाः कलाः ताभिः या निर्मितिः तस्या वा हेतोः धवलस्य पूर्वकारणधावल्यात् सकलोऽपि अयं धवलः एव अभूत्, पश्चात् तु पूर्वदिगभ्रमणवशात् तत्रैव भ्रमतः ऐरावतस्य कपोलकुम्भ-स्थलगलन्मदजलं दैववशात् लग्नं तेन अयं मध्ये कालः प्रति-भाति इत्यर्थः। तालतरुतले यदैव काकस्य उपवेशनं तदैव दैवात् काकस्योपरि तालफलपातः इति काकतालमिव काक-तालीयं समासान्तात् छः। निर्मितेः इति पक्षे हेतौ पञ्चमी ॥ १४१ ॥

अंशमिति। हे प्रिये! लोकाः रजनीभर्त्तुः षोडशम् अंशं कलाम् आमनन्ति सत्यं कथयन्ति, ताश्च षोडशांशरूपाः प्रतिपत् आदिः यस्मिन् कर्मणि राकां पूर्णिमाम् अभिव्याप्य वर्द्धिष्णवः प्रतितिथि एकैकाभिवृद्धया वर्द्धमानाः पञ्चदशस-ङ्ख्याकाः एव कलाः एनं चन्द्रं वृत्तयन्ति वर्त्तुलं कुर्वन्ति, तिथि-सङ्ख्यासाम्यात् पूर्णमण्डलं कुर्वन्ति इत्यर्थः। या पुनः कला षोडशीं तिथिम् ऋते उद्धृता प्रयोजनाभावात् चन्द्रात् वहि-ष्कृता सा षोड़शी कला शेषा पञ्चदशकलाभ्यः अवशिष्टा सती, यद्वा षोड़शीं तिथिं विना प्रयोजनाभावात् या अव-शिष्टा, सा निष्प्रयोजनत्वात् उद्धृता चन्द्रात् वहिर्निष्काशिता

ज्योत्स्नामादयते चकोरशिशुना द्राघीयसी लोचने
लिप्सुर्मूल्यमिवोपजीवितुमितः स्वतर्पणात्मीकृतात्।
अङ्के रङ्कुमयं करोति च परिष्वङ्क्तुं तदेवाहृतः
त्वद्वक्त्रं नयनश्रियाऽप्यनधिकं मुग्धे! विधित्सुर्विधुः॥ १४३॥

---

सती हरालङ्कृतिः शिवशिरोभूषणं जाता किं, चन्द्रे प्रयोजनाभावात् धरालङ्कृतिरिव अभूत् किमित्यर्थः। अहं तस्याश्च उद्धृतायाः षोड़श्याः कलायाः सश्यामिकं नभोनीलिम्ना सह वर्त्तमानं स्थानस्य पूर्वावस्थितेः सम्बन्धि विलं विवरं तत्कालानवस्थित्या कृत्वा शून्यं नीलं नभोभागम् एव इह चन्द्रमण्डलमध्ये कलङ्कं पश्यामि किं? मध्यवर्त्ति नीलं तत् स्थानं विलमेव अहं कलङ्कत्वेन शङ्के इत्यर्थः। शेषशब्दस्य अभिधेयलिङ्गत्वं पूर्वमेव दर्शितम्। पूर्णे राका निशाकर इत्यमरः। हृत्तयन्ति इति तत् करोतीति णिच्। वर्द्धिष्णवः इति अलङ्कृञिति इष्णुच्। तिथिसृते ऋतेन पाशमितिवत्। श्यामिकेति मनोज्ञादेः आकृतिगणत्वात् भावे वुञ्॥ १४२॥

ज्योत्स्नामिति। हे मुग्धे! सुन्दरि! त्वद्वक्त्रं वृत्तत्वादिगुणैः समानम् अपि नयनश्रिया अपि कृत्वा अनधिकं समानमेव, विधित्सुः अतएव स्वस्य द्राघीयसी अतिदीर्घे लोचने लिप्सुः लब्धुमिच्छुः विधुः चकोरशिशुना प्रयोज्येन स्वीयां ज्योत्स्नाम् आदयते भक्षयति। तत्रोत्प्रेक्षते। चन्द्रिकामृतपानकृतसम्यक्तर्पणेन आत्मीकृतात् स्ववशीकृतात् इतः चकोरबालकात् सकाशात् मूलं स्वचन्द्रिकापानहेतुभूतम् एतदीयातिदीर्घनेत्रद्वयमध्येषु उपजीवितुम् आदातुम्

लावण्येन तवास्यमेव बहुना तत्पात्रमात्रस्पृशा
चन्द्रः प्रोञ्छनलब्धतावमलिनैर्नारम्भि शेषेण तु।
निर्माय द्वयमेतदस्य विधिना पाणी खलु क्षालितौ
तच्छेषैरधुनाऽपि नीरनिलयैरम्भोजमारभ्यते ॥ १४४ ॥

---

इव। यद्वा किञ्चित् स्वचन्द्रिकां पाययित्वा ततः नेत्रद्वय-लक्ष्मीप्राप्त्या मूलं चन्द्रिकारूपमूलधनं वर्द्धयितुम् इव। अन्योऽपि उत्तमर्णः अधमर्णस्य किञ्चित् दत्त्वा तं वशीकृत्य उत्तमम् इष्टं वस्तु ततः गृह्णाति तथा अयं चन्द्रः आदृतः आद-रयुक्तः सन् अङ्के मध्ये अथच उत्सङ्गे रङ्कुं करोति, उत्सङ्ग-धारणेन लालयति इत्यर्थः। किमर्थम् इत्याशङ्क्याह। तन्मूल-भूतम् अतिविशालं तदीयनयनयुगलं परिप्रष्टुम् इव संलग्नं कर्त्तुम् इव। त्वन्मुखसाम्यनिमित्तरमणीयनेत्रद्वयं सम्पाद-नीयम्। चन्द्रः चकोरहरिणौ वञ्चयति इत्यर्थः। चन्द्रात् उत्कृष्टं त्वन्मुखमिति भावः। परिप्रष्टुमिति पाठे एतन्नेत्र-रामणीयकप्राप्त्युपायं प्रष्टुमिव इत्यर्थः। शिशुः सुप्रतार्य्य इति सूचयितुं शिशुपदम्। आदयते इति अदेर्निगरणार्थ-त्वेऽप्यदेः प्रतिषेधो वक्तव्यः इति वक्तव्यात् निगरणादिपरस्मै-पदाभावे णिचश्चेति तङ्। शिशुना आदिखाद्योर्नेति अणौ कर्मत्वाभावः। द्राघीयसी अतिशायने इयसुनि प्रियस्थिरेति द्राघादेशः, लिप्सुः विधित्सुः इति च नलोकेति षष्ठीनिषेधः ॥ १४३ ॥

लावण्येति। हे प्रिये! बहुना क्वचित् पात्रे सञ्चितेन अखिलेन लावण्येन कृत्वा तव आस्यमेव आरम्भि निर्मितं, चन्द्रस्तु पुनः तस्य लावण्यस्य आधारपात्रं स्पृशतीति तत्पात्र-

लावण्येन तवाखिलेन वदनं तत्पात्रमात्रस्पृशा
चन्द्रः प्रोञ्छनलब्धतार्द्रमलिनेनारम्भि शेषेण यः।

मात्रस्पृक् तेन लावण्यस्यानपात्रमात्रलग्नेन अतएव प्रोञ्छनेन पात्रनिघर्षणेन कृत्वा लब्धता उपार्जितत्वं येन अर्द्धं कियत् खण्डं मलिनं यस्य तेन किञ्चिन्मलिनेन शेषेण भवन्मुखनिर्माणावशिष्टेन अंशेन कृत्वा आरम्भि निर्मितः। अतएव शेषमक्लोऽयं शोभते इत्यर्थः। शेषेण तु निर्मित इति वा। विधिना एतत् त्वन्मुखमृगाङ्कलक्षणद्वयं निर्माय स्रष्टा अस्य पाणी प्रक्षालितौ खलु लावण्यलेपक्षालनजलक्षालनैः इव, तस्मात् तस्य क्षालनरजोमिलितलावण्यलेपस्य लेशैः अल्पैः अंशैरेव कर्तृभिः अधुनाऽपि नीरनिलयैः जलस्थायिभिः सद्भिः अम्भोजम् आरभ्यते निर्मीयते, कमलनिर्माणे ब्रह्मणः कोऽपि प्रयासो न इत्यर्थः। कमलाच्चन्द्रोऽधिकः तस्मादपि त्वन्मुखलावण्यं साकल्येन निर्मितत्वात् अधिकमिति भावः। अम्भोजमिति जात्या एकवचनम् ॥ १४४ ॥

लावण्येति। अखिलेन लावण्येन तव वदनम् आरम्भि, ततः भवद्वदनकामनीयवर्णनाचिन्ता अपि दूरे तिष्ठतु अशक्यकरत्वादित्यर्थः। उक्तरीत्या तत्पात्रमात्रस्पृशा प्रोञ्छनलब्धतार्द्रमलिनेन शेषेण यः चन्द्रः विधिना निरमायि तस्य लेशोऽपि लावण्यनिर्मितस्य चन्द्रस्य षोड़शांशरूपकलामात्रत्वादेव निष्कलङ्कत्वात् सुषमया परमशोभया कृत्वा अहङ्कृत्य अस्यापेक्षया अहमेव रमणीयेति दर्पम् अवलम्ब्य शम्भोः शिखामणिः शिरोभूषणम् अभूत् शिवशिरः अध्यारोहत् इत्यर्थः। अन्यदपि सदर्पम् उत्तमशिरः अधिरोहति इति

यल्लेखाऽपि शिखामणिः सुषुमयाऽलङ्कृत्य शम्भोरभूत्
अब्जं तस्य पदं यदस्पृशदतः पद्मञ्च सद्म श्रियः ॥ १४५ ॥
सपीतिः सम्प्रीतिरजनि रजनीशः परिषदा
परीतस्ताराणां दिनमणिमणिग्रावमणिकः ।

---

भावः । अब्जं कुमुदं कर्त्तृ यत् यस्मात् तस्य चन्द्रस्य पदं प्रतिबिम्बस्थानं जलम् अस्पृशत्, अतः श्रियः सद्म अभूत्, चन्द्र-करसंस्पर्शादेव हि कुमुदं सश्रीकं भवति पद्मञ्च श्रियः सद्म अभूत्, जलस्य चन्द्रकिरणस्पर्शात् पद्मस्य तत्रोत्पन्नत्वात् वर्त्त-मानत्वात् कुमुदसाहचर्य्याच्च पद्ममपि लक्ष्म्याः स्थानमभूत् । यद्वा पद्मञ्च अतः कुमुदात् हेतोः श्रियः सद्म अभूत् अब्जत्व-जातियोगात् कुमुदाधारजलयोगाच्च कुमुदादेव परम्परया पद्मानां लक्ष्मीगृहत्वमभूदित्यर्थः । यद्वा या लेखा शम्भोः शिखामणिरभूत् तस्य शिखामणिभूतस्य चन्द्रस्य पदं स्थानं शिवमस्तकपूजासमये यस्मात् कुमुदं पद्मञ्च अस्पृशत्, अतस्त-दुभयं श्रियः सद्म अभूत्, चन्द्रस्य बहुशिरःसम्बन्धात् उभयं श्रीगृहमभूत् इत्यर्थः । यद्वा तस्य शम्भोः पदं चरणं पूजावशात् यस्मात् कुमुदं पद्मञ्च अस्पृशत् तस्मात् उभयं श्रीसद्म अभूत् । तस्य लावण्यस्थानं विधिहस्त-लावण्यलेपक्षालनजलं यस्मात् कुमुदं पद्मञ्च अस्पृशत्, यद्वा पद्ममेव अस्पृशत्, यतोऽब्जं तस्मात् कुमुदं पद्मञ्च पद्ममेव वा श्रीसद्माभूदिति वा । त्वन्मुखलावण्यलेशपरम्प-रासंस्पर्शप्राप्तशोभानि चन्द्रादीनि इत्यर्थः । त्वन्मुखलावण्यं वाङ्मनसगोचरं न भवतीति भावः । अर्थान्तरस्य स्पष्टत्वात् पूर्वार्द्धस्य तु अर्थान्तरप्रतिपादनार्थमनुवादत्वात् नायं श्लोकः पुनरुक्तः । अह्नमिति विभक्तिप्रतिरूपकमव्ययम् ॥ १४५ ॥

प्रिये ! पश्यैषोऽयं कविभिरभिधानाय सुशकः
सुधामभ्युद्धर्त्तुं धृतशशकनीलाश्मचषकः ॥ १४६ ॥

---

सपीतेरिति। हे प्रिये ! सम्प्रीतेः ताराणामन्योऽन्यं सम्यक् या प्रीतिः सौहार्दं तस्मात् हेतोः या सपीतिः सहपानं सुहृदो हि सहपानं कुर्वन्ति इति भावः तस्मात् हेतोः यद्वा सहपानात् हेतोः या सम्यक् प्रीतिः रुच्यभिवृद्धिः तस्मात् हेतोः ताराणां परिषदा सङ्घेन परीतः समन्तात् व्याप्य रजनीशः दिनमणिः सूर्य्यकान्तमणिः तस्य ग्रावा शिला तेन घटितः अतिधवलः स्थूलः पेयद्रव्याधारभूतः मणिकः अलिञ्जरः एव अजनि सम्भूतः। विधिना तारापरिषदा वा व्यरचि इति पश्य। कीदृशः ? सादृश्येन वस्त्वन्तरसम्भावनारूपायाम् उत्प्रेक्षायां विषये कविभिर्विशिष्टसम्भावनाचतुरैः श्रीहर्षादिभिर्महाकविभिस्तारापरिषदैव सुधामभ्युद्धर्त्तुं धृतो यो मध्यस्थितः शशकः कलङ्कः स एव नीलाश्मा नीलमणिस्तेन घटितं चषकं पानपात्रं यस्मिन् एवम्भूतः इव अयमिति अभिधानाय वर्णयितुं सुशकः सुखेन शक्यः। चन्द्रो धावल्यात् पीयूषपूर्णः सूर्य्यकान्तमणिकः इव, कलङ्कस्य नीलमणिघटितं चषकमिव दृश्यते तत् पश्येत्यर्थः। यथा मणिकस्योदकाद्युद्धरणाय मणिकमुखे चषकः स्थाप्यते तथा ताराभिः परस्परं मिलित्वा सुधापानं कर्त्तुं परिवेष्टितस्य सुधापूरितस्य अस्यापि चन्द्रमणिकस्य मुखे सुधोद्धरणाय शशनामनीलमणिचषको निक्षिप्तः इत्युत्प्रेक्षितुं शक्यते इत्यर्थः। चषकोऽस्त्री पानपात्रमित्यमरः। सपीतेः इति वोपसर्जनस्येति वा सहस्य इति योगविभागाद्वा सहस्य सः। कविभिः खलर्थयोगात् न षष्ठी। सुशकः इति खल्। १४६ ॥

आस्यं शीतमयूखमण्डलगुणानाकृष्य ते निर्मितं
शङ्के सुन्दरि! शर्वरीपरिवृढस्तेनैष दोषाकरः।
आदायेन्दुमृगादपीह निहिते पश्यापि सारे दृशौ
त्वद्दत्ते सति वा विधौ धृतिमयं दध्यादनन्धः कुतः? ॥१४७॥
शुचिरुचिमुडुगणमगणनममुमति-
कलयसि कृशतनु! न गगनतटमनु।

---

आस्यमिति। हे सुन्दरि! विधिना शीतमयूखस्य मण्डलं विम्बं तस्य वृत्तत्वाह्लादकत्वादिगुणान् आकृष्य गृहीत्वा ते आस्यं यतः निर्मितं तेन गुणगणोत्कर्षेण हेतुना शर्वर्याः परिवृढः प्रभुः चन्द्रः दोषाणाम् आकरः उत्पत्तिस्थानं न तु दोषा रात्रिः तत्कारित्वात् दोषाकरः इत्यहं शङ्के। तथा अहम् इन्दोः मृगात् सकाशात् सारे दृशौ आदाय अतिश्रेष्ठे नेत्रे गृहीत्वा इह भवन्मुखे निहिते स्थापिते इत्यहं शङ्के। तेन कुतो ज्ञातमित्यत आह—सुन्दरतरे त्वद्वक्त्रे जागरूके सति अनन्धः चक्षुष्मान् उभयतारतम्यविचारचतुरः अयं मृगः विधौ चन्द्रे धृतिं स्थितिम् अथच समीचीनाधारपरितोषं कुतो वा दध्यात् धारयेत् अपितु न कथञ्चित्, तस्मात् नेत्रो-द्धरणात् अन्धत्वेनैव त्वन्मुखरामणीयकादर्शनात् अन्यत्र गन्तुम् अशक्तेश्च त्वन्मुखं त्यक्त्वा अत्रैव अयं स्थितः इत्यर्थः। त्वन्मुखं चन्द्राधिकं, नेत्रे च मृगनेत्राभ्यामधिके इति भावः। सारमिति क्वचित् पाठः ॥ १४७ ॥

शुचीति। हे कृशतनु! त्वं गगनतटं नभःस्थलम् अनु लक्षीकृत्य शुचिरुचिं श्वेतकान्तिं, तथा बहुत्वात् अगणनं सङ्ख्यातुम् अशक्यम् अमुम् अङ्गुल्या निर्देश्यं प्रत्यक्षगम्यम्

प्रतिनिशमशिततलविगलदमृतभृत-
रविरथहयचयखुरविलकुलमिव ॥ १४८ ॥
उपनतमुडुपुष्पजातमास्ते
भवतु जनः परिचारकस्तवायम्।
तिलतिलकितपर्पटाभमिन्दुं
वितर निवेद्यमुपास्व पञ्चबाणम् ॥ १४९ ॥

---

उडुगणं प्रतिनिशं रात्रौ शशितलात् चन्द्राधोभागात् विगलता स्रवता अमृतेन भृतं पूर्णं रविरथस्य हयचयः तस्य खुराणां यानि विलानि न्यासस्थानविवराणि तेषां कुलं वृन्दमिव न अतिशयेन कलयसि, अपितु तदिव अतितरां जानीहि इत्यर्थः। प्रतिनिशं चन्द्रात् गलता धवलेन अमृतेन पूर्णाः सूर्याश्वखुरगर्त्ताः इव तारकाः शोभन्ते इति भावः। गगन-तटमिति कर्मप्रवचनीययोगे द्वितीया। प्रतिनिशमिति वीप्सायामव्ययीभावः। सर्वं लघु ॥ १४८ ॥

उपनतमिति। हे प्रिये! "रक्तो भौमः शनिः कृष्णो गुरुः पीतः सितः कविः" इत्यादिज्योतिःशास्त्रादिप्रामाण्यात् नानावर्णाकृतीनि उडूनि नक्षत्राणि एव पुष्पजातम् उपनतं सम्पन्नम् आस्ते। अयं मल्लक्षणः जनः प्रारब्धकामदेव...यां तव परिचारकः चन्दनाद्युपचारोपनायकः अथच सम्भोग-कारी भवतु, त्वं तिलैः तिलकितः सञ्जाततिलकः तिलैः एव वा तिलकवान् कृतः यः पर्पटः शालितण्डुलपिष्टरचितः चिपिटः तिलशष्कुलीसंज्ञः उपदंशविशेषः तद्वत् आभा यस्य तत्तुल्यं सकलङ्कमध्यत्वादिविशिष्टपर्पटसदृशम् इन्दुमेव निवेद्य कामाय वितर, एवं पञ्चबाणं कामदेवम् उपास्व पूजय।

स्वर्भानुप्रतिवारपारणमिलद्दन्तौघयन्त्रोद्भव-
श्वभ्रालीपतयालुदीधितिसुधासारस्तुषारद्युतिः।
पुष्पेष्वासनतत्प्रियापरिणयानन्दाभिषेकोत्सवे
देवः प्राप्तसहस्रधारकलशश्रीरस्तु नस्तुष्टये ॥१५०॥

---

अन्योऽपि देवपूजकः पुष्पादिसामग्रया देवं पूजयति, कश्चित् परिचारकोऽपि तस्य भवति, एवमत्रापि सर्वाणि नक्षत्राणि उदितानि, कामोद्दीपकः चन्द्रोऽपि उदितः, सुरताकार्य्यकारी निषिद्धः सन्ध्यासमयः अतिक्रान्तः, तस्मात् कामम् उपास्व सुरतेच्छुः अस्मीति भावः। पञ्चबाण इत्यनेन कामस्य अतिपीडाकारित्वं सूच्यते। सामान्यमित्यभिधानाज्जातशब्दः सामान्यवाची पुष्पमात्रे पर्य्यवस्यति। तिलकितेति तारकादित्वात् तत्करोतीति वा ण्यन्तात् निष्ठा ॥१४९॥

इदानीं काव्यसमाप्तिं चिकीर्षुः श्रीहर्षो नायकमुखेन आशिषमाशास्ते। स्वर्भानुरिति। हे प्रिये! देवः प्रकाशमानः तुषारद्युतिः हिमकरः अथच हिमकरः एव देवः वर्णनां पूजाञ्च कुर्वतां नः अस्मदादीनाम् आवयोः वा तुष्टये, परमानन्दाय अस्तु। किम्भूतः? स्वर्भानोः राहोः प्रतिवारं पौनःपुन्येन यत् पारणं चन्द्रस्यैव गिलनं तेन तत्र वा मिलन् संलग्नः यः दन्तौघः तद्रूपं यन्त्रं छिद्रकरणसाधनं तस्मात् उद्भवः यस्याः सा श्वभ्राली दन्तदंशनक्षतविवरपरम्परा तया तस्याः सकाशात् वा पतयालुः पतनशीला दीधितिसुधा किरणामृतं तद्रूपः सारः श्रेष्ठः भागः यस्य दीधितिसुधायाः वा। यद्वा दीधितिसुधायाः आसारः धारासम्पातः दीधितिसुधारूपः वा आसारः यस्य सः अतएव पुष्पेष्वासनस्य पुष्प-

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
द्वाविंशो नवसाहसाङ्कचरिते चम्पूकृतोऽयं महा-
काव्ये तस्य कृतौ नलीयचरिते सर्गो निसर्गोज्ज्वलः ॥ १५१॥

---

धनुषः तत्प्रियायाः रतेश्च परिणयानन्दः विवाहरूपः आनन्दः तत्सम्बन्धिनि अभिषेकोत्सवे महाभिषेकार्थं प्राप्ता सहस्रधारस्य सहस्रच्छिद्रगलज्जलधारस्य कलशस्येव श्रीः शोभा येन सः। महोत्सवे हि सहस्रधारेण सुवर्णकलशेन महाभिषेकः क्रियते तथा च राहुदन्तकृतच्छिद्रपरम्परागलदमृतधारः चन्द्रः गलज्जलधारसहस्रच्छिद्रसुवर्णकलशः इव शोभमानः पूर्वोक्तवर्णनयोक्तविधत्वत्कृतपूजया च सुरतप्रवृत्तयोः आवयोः उद्दीपकतया परमानन्दं कुर्य्यात् इति भावः। एतेन तत्समयोचितरतिकामविवाहोत्सवाभिधानेन चन्द्रोऽस्तु नः तुष्टये इत्यनेन च विलासिना नलेन स्वनिर्वर्त्त्य तृतीयपुमर्थपयोधिपीयूषरसास्वादनलालसः अभिव्यज्यते। सुधाधार इत्यपि पाठे दीधितिसुधायाः धारा यस्य सुधायाः आधारः इति वा, आनन्दपदेन तुष्टये अस्तु इत्याशिषा च ग्रन्थसमाप्तिं द्योतयति। महाभारतादौ वर्णितस्यापि उत्तरनलचरितस्य नीरसत्वात् नायकानुदयवर्णने रसभङ्गसद्भावाच्च काव्यस्य च सहृदयहृदयाह्लादनफलत्वाच्चात्र उत्तरचरितं श्रीहर्षेण न वर्णितम् इत्यादि ज्ञातव्यम्। न इति पक्षे अस्मदोर्द्वयोश्चेति द्वित्वेऽपि बहुवचनम् ॥ १५०॥

श्रीहर्षमिति। पूर्वार्द्धार्थः स्पष्टः। द्वाविंशतेः पूरणः सर्गः गतः समाप्तिं प्राप। किम्भूतस्य श्रीहर्षस्य ? नवः यः साह-

यथा यूनस्तद्वत् परमरमणीयाऽपि रमणी
कुमाराणामन्त:करणहरणं कैव कुरुते।
मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधिय:
किमस्या नाम स्यादरसपुरुषानादरभरै:॥ १५२॥

---

साङ्क: नाम राजा तस्य चरिते विषये चम्पू गद्यपद्यमयीं कथां करोतीति चम्पूकृत् तस्य विनिर्मितवत: स: अपि ग्रन्थ: येन कृत: इति सूच्यते। नृपसाहसाङ्केति पाठे नृपश्च असौ साहसाङ्कश्च तस्य गौडेन्द्रस्य चरिते विषये, चम्पूकृत: भोजराजस्य विक्रमार्कस्य वा इति केचित्। द्वाविंश: इति पूरणे डटि टिलोप:॥ १५१॥

यथेति। यथा परमरमणीया अपि रमणी यून: तरुणस्य कामिन: अन्त:करणं कुरुते तद्वत् तथा कुमाराणां बालिशानां स्त्रीरलाभमात्रेण परमपुरुषार्थप्राप्तिम् अभिमन्यमानाम् अनुभूतकामसुखानां चित्तं स्ववशं का एव कुरुते? अपितु न का अपि, तथा इयं काव्यरचनारूपा परमरमणीया मदुक्ति: अपि अवणमननादिवशात् सुधीभूय अमृतत्वं प्राप्य सुधिय: सकलदर्शनरहस्यवेदिन: अतिसरसस्य पण्डितस्य चेत: चेत् यदि मदयति आनन्दयति तर्हि अस्या: सुधिय: अत्यादृताया: मदुक्ते: अरसानां नीरसानां सर्वथैव असंस्पृष्टरसशब्दानाम् अपि चलदुपलप्रायाणाम् अतृणाद्यपुच्छपशूनां पुरुषाणाम् अनादरभरै: तत्कृतावज्ञासमूहै: किं नाम स्यात्? अपितु न किञ्चिदप्यस्या: तै: अपकर्त्तुं शक्यते। सुधीभि: आदरे कृते सति नीरसै: अकृते वाप्यादरे न किञ्चिदित्यर्थ:। सुधीभि: आदृतत्वात् सकलगुणपूर्णातिसरसा इयं मदुक्ति:

दिशि दिशि गिरिग्रावाणः स्वां वमन्तु सरस्वतीं
तुलयतु मिथस्तामापातस्फुरद्ध्वनिडम्बराम् ।
स परमपरः क्षीरोदन्वान् यदीयमुदीर्य्यते
मथितुरमृतं खेदच्छेदि प्रमोदनमोदनम् ॥ १५३ ॥

इति भावः । मदुक्तेः सुधारूपत्वाभावात् क्षोदानन्तरञ्च सरसत्वप्रतीतेः सुधात्वात् । सुधीभूयेति च्विः । सुधिय इति जात्यभिप्रायेणैकेनापि सुधायाः आदरे कृते महत् गौरवं, बहुभिरपि अज्ञैः अनादरेषु कृतेषु अपि न किञ्चित् लाघवम् इत्यभिप्रायेण वा । यूनः इति प्रतियोगिनः एकवचनान्तत्वाच्च एकवचनम् । कवेः स्वग्रन्थमुद्दिश्येयम् उक्तिः ॥१५२॥

कविरर्थान्तरोक्त्या स्वीयामुक्तिं वर्णयति । दिशीति । गिरिग्रावाणः अद्रिपाषाणाः दिशि दिशि स्वां निजां सरस्वतीं नदीं अन्तर्गतजलप्रस्रवणां वमन्तु मुञ्चन्तु, आपातेन समन्तात् ऊर्द्धदेशात् अधःपतनेन स्फुरन् प्रकाशमानः ध्वनिडम्बरः शब्दाडम्बरः यस्याः ताञ्च नदीं मिथः तुलयतु, अन्यनद्या समीकरोतु जनः इत्यर्थः । अथवा आपाते प्रथमारम्भे एव स्फुरद्ध्वनिडम्बरां स्फुरत्प्रशान्तघोषां तां जनः मिथः तुलयतु, उभयव्याख्यानेऽपि परिणामे तु न नदी न च तस्याः शब्दाडम्बरः चिरस्थ इत्यर्थः । सः क्षीरोदन्वान् परं केवलम् अपरः न विद्यते परः उत्कृष्टः यस्मात् अत्युत्कृष्टः अथवा अन्यः एव यतः यस्य क्षीरोदस्य इदं यदीयम् अमृतं एतादृशम् उदीर्य्यते उत्पद्यते । कीदृशं ? मथितुः देवादेः खेदच्छेदि मथनजनितक्लेशापहम् । तथा प्रमोदनं नितराम् आनन्ददायि, तथा ओदनं भक्तम् आस्वाद्य सिद्धान्नरूपम् अथच एवम् तं परम् उत्कृष्टम् अमृतं

ग्रन्थग्रन्थिरिह क्वचित् क्वचिदपि न्यासि प्रयत्नान्मया
प्राज्ञं मन्यमना हठेन पठितो माऽस्मिन् खलः खेलतु।
श्रद्धाराद्धगुरुश्लथीकृतदृढग्रन्थिः समासादय-
त्वेतत्काव्यरसोर्मिमज्जनसुखव्यासज्जनं सज्जनः ॥१५४॥

---

यदीयम् उदीर्य्यते सः क्षीरोदन्वान् अपरः परः अन्यो नास्ति किन्तु एकः एव। अथच प्रतिदिशं सर्वदेशेषु गिरिवाणीं विषये पाषाणतुल्याः जडाः अन्ये कवयः स्वीयां वाणीम् उद्गिरन्तु, आपातेन प्रतिभामात्रेण स्फुरन् ध्वन्याख्यकाव्यविशेषस्य डम्बरः यस्यां प्रथमारम्भः एव स्फुरन् शब्दाडम्बरः अनुप्रासः यत्र वा तां वाणीं मिथः अन्योऽन्यं जनः समीकरोतु तस्य कवेः उक्तिः अस्यैव अस्य च तस्यैव इत्येव तुलयतु। आपातः इति विसर्जनीयान्तपाठे आपातः प्रतिभासः तां तुलयतु इत्यर्थः। एवंविधं परं काव्यामृतं यदीयम् उत्पद्यते सः क्षीरसमुद्रतुल्यः श्रीहर्षकविः, अपरः नास्ति किन्तु एकः एव, अन्ये कवयः पर्वतग्रावतुल्याः, अहं श्रीहर्षस्तु क्षीरसमुद्रतुल्यः इत्यर्थः। यथा क्षीरसागरः नीरार्थिनोऽपि नीरमात्रस्थान् क्षीरेण तर्पयति लक्ष्मीकौस्तुभामृतादिभिः परमानन्ददैर्य्यभिः कृतार्थयति, मदीयकाव्यविचारकस्यैव खेदच्छेदि प्रमोदनवाचनामृतम् उत्पद्यते नान्यकाव्यविचारकस्य इति अन्ये ग्रावतुल्याः क्षीरोदतुल्यश्च अहम् इति भावः॥ १५३॥

इदानीं प्रसादरूपमुख्यगुणाभावात् अतिदुर्बोधत्वात् अकाव्यमिति ये वदन्ति तच्छङ्काम् अपनुदन् खलदर्पदलनार्थं गुरुसम्प्रदायेन विना दुर्बोधम् इति अतिगाम्भीर्य्यप्रतिपादनार्थञ्च बुद्धिपूर्वमेव मया इदं काव्यं तत्र दुर्बोधं व्यरचि

ताम्बूलद्वयमासनञ्च लभते यः कान्यकुब्जेश्वरात्
यः साक्षात् कुरुते समाधिषु परं ब्रह्म प्रमोदार्णवम् ।

इत्याह। ग्रन्थेति। आत्मानं प्राज्ञं मन्यते प्राज्ञंमन्यं मनः यस्य एवंविधः अस्मिन् काव्ये हठेन स्वीयप्रज्ञाबलेन पठितमस्यास्तीति पठिती इदं काव्यस्य पाठकः खलो मा खेलतु किमत्र अस्ति अश्रुतमेव व्याकर्त्तुं शक्यते इति अवज्ञापूर्वं दर्पाभिव्यक्तिं मा कार्षीत् इत्येवमर्थः। इह काव्ये क्वचित् क्वचित् अपि तत्र तत्र स्थले मया प्रयत्नात् बुद्धिपूर्वं ग्रन्थग्रन्थिः ग्रथ्यमानशब्दार्थकुटिलिका अन्यासि विन्यस्ता खलमुखभङ्गार्थं बुद्धिपूर्वं मया इदं काव्यं दुर्बोधं व्यरचि न तु प्रसन्नकाव्यकरणाशक्तेः इत्यर्थः। क्वचित् क्वचित् अपि इत्यनेन तत्र प्रसन्नता अप्यस्तीति न काव्यत्वहानिः इति सूच्यते। सज्जनस्य तु ग्रन्थविवेचनोपायमाह। श्रद्धेति। श्रद्धया गुरौ दैवतैकबुद्ध्या राद्धेन पूजितेन गुरुणा पूर्वमश्लथाः अपि श्लथाः कृता व्याख्यया सुबोधाः कृताः दृढ़ाः स्वरूपतः दुर्बोधाः ग्रन्थयः अस्मै स गुरुसम्प्रदायावगतार्थः अतएव दर्पराहित्यात् सज्जनः साधुः एतत् काव्यस्य रसोर्मिः अमृतलहरी तस्यां मज्जनं तज्जनितसुखेषु विशेषेण आ समन्ताद्भावेन च मज्जनम् अवस्थानं समासादयतु प्राप्नोतु, गुरुपरम्परया अपि विना एकस्यापि पद्यस्य अर्थो बोद्धुं न शक्यते तस्मात् गुरुपरम्परया एव अध्येयमिदं काव्यमित्यर्थः। यश्च इदं गुरुपरम्परया अधीते सः सततं सुखी भवति इति महाकविः तस्य आशिषं ददाति। अस्मिन् पठितीति अस्य च विषयस्येति कर्मणि सप्तमी। आराद्धेति राधेरनुदात्तत्वात् इडभावः॥ १५४॥

इदानीं पण्डितानन्दजननद्वारा स्वकृतेरभ्युदयमाशास्ते।

यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः
श्रीश्रीहर्षकवेः कृतिः कृतिमुदे तस्याभ्युदीयादियम् ॥१५५॥

---

ताम्बूलेति। यः कान्यकुब्जेश्वरात् सकाशात् सकलपण्डिताधिक्यव्यञ्जनं ताम्बूलद्वयं विद्वद्योग्यम् आसनञ्च लभते। न केवलं राजपूज्यः एव किन्तु यः समाधिषु अष्टाङ्गयोगेषु ध्यानेषु वा विषये प्रमोदार्णवं परमानन्दस्वरूपं परं वागाद्यगोचरं ब्रह्म साक्षात् कुरुते। न परं पूर्वोक्तगुणविशिष्टः ब्रह्मविदेव किन्तु यदीयं काव्यं मधुवर्षि अतिसरसत्वात् अमृतवर्षि। न परं पूर्वोक्तगुणविशिष्टः अतिसरसः महाकविरिव, किन्तु तर्कशास्त्रेषु अपि यस्य उक्तयः धर्षिताः पराभूताः परे प्रतिवादिनः याभिः तादृश्यः। तस्य विद्वच्चक्रचूडामणेः श्रीहर्षकवेः इयं काव्यरचनारूपा कृतिः सुकृतिनां सुधियां मुदे आनन्दाय अभ्युदीयात्, कृतिनाम् आनन्दं कुर्वतो सती आकल्पम् अतिवृद्धिं प्राप्नुयात् इत्याशीः। सर्वत्र यच्छब्दनिर्वाह्यः गुणः एव अभ्युदीयादिति इणगवावित्यस्य रूपम् ॥ १५५ ॥

उत्तरनैषधव्याख्या समाप्ता।

---